"एकस्मान् ङ ञ ण वटा द्वाभ्यां ष स्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ॥१॥

इति महाभाष्यम् । (Z)

१ । वृद्धिरादैच् (१।१।१) ।

संज्ञारूपेणार्थवत्त्वमिति प्रातिपदिकत्वे वृद्धिशब्दात् स्युः । स्वरूपमपि हि शब्दार्थ एव । आदिति ऐजिति च पृथगेव पदे । ... ... ... ...
... ... ... ... ... ... ...

From the end, that is, from the end of the चतुर्थपाद of the अष्टमाध्याय ।

६५ । झरो झरि सवर्णे (८।४।६५) ।

झरः किम् ? शार्ङ्गम् । रेफात् परस्य ङकारस्य गकारे न लोपः । झरि किम् ? प्रियपञ्चनाम् । प्रियाः पञ्च येषां तेषाम् । अल्लोपोऽन (६।४।१३४) इत्युपधालोपः । श्चुत्वं नकारस्य ञकारः । पूर्वत्रासिद्धीये न स्थानिवदिति (१।१।५८, वा) अल्लोपो न स्थानिवत् । अत्र चकारस्य ञकारे न लोपः स्यात् । हल इत्येव । वाग्ग्मी । अत्र गस्य गकारे लोपो न भवति । प्रत्तमिति । अच उपसर्गात्तः (७।४।४७) इति द्वितकारः । स वादेशः । तत्कारे तस्यान्त्यस्य लोपः । शिणढीति । शिषधातो र्हुधिः । ष्टुत्वेन धस्य ढः । झलाञ्जश् झशीति (८।४।५३) ढकारस्य डकारः । शम् । श्नसोरल्लोपः (६।४।१११) अनुस्वारपर-

(Z) "इति महाभाष्यम्" indeed ! ! The supporters of Sristidhara, if attempting to verify this statement, will surely be as successful as was once an admirer of the military, who was determined to have an interview with and therefore in search of *Captain Towers*, whom he had heard of in :—

> "Our revels now are ended ; these our actors,
> As I foretold you, were all spirits and
> Are melted into air, into thin air :
> And like the baseless fabric of this vision,
> The cloud-*Capt towers*, the gorgeous palaces,
> The solemn temples, the great glove itself,
> Yea, all which it inherit, shall dissolve ;
> And, like this insubstantial pageant faded,
> Leave not a rack behind. We are such stuff
> As dreams are made of, and our little life
> Is rounded with a sleep."—The Tempest, Act IV., Scene i.

The stanza एकस्मान् ङ ञ &cc.. occurs in the Kasika Vritti ( काशिका वृत्ति ).

सवर्णौ। चकारात् परस्य डकारस्य ढकारे वा लोपः। रुन्धीति। रुधिर् आवरणे। रेधिः। धातुधकारस्य झलाञ्जश् झशीति (८।४।५३) दकारः। तस्यापि धकारे वा लोपः। बन्धुमिति। बन्ध बन्धने। अनिट्। तुमुन्। धातुधकारस्य जश्त्वेन दकारः। तस्य वा लोपः। तप्तेति। तृप प्रीणने। लघूपधगुणः (७।३।८६)। तकारो दन्त्यः। पकार ओष्ठ्य इति सावर्ण्याभावान्न लोपः। अत्र स्वरसूत्रे द्वे इति।

६६। उदात्तादनुदात्तस्य स्वरितः (८।४।६६)।

६७। नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्। (८।४।६७)

अत्र नोदात्तस्वरितोदयसूत्रे उदयग्रहणं मङ्गलार्थम्। व्याकरणं त्रिमङ्गलमिदम्। आदौ वृद्धिरादैजिति (१।१।१) वृद्धिशब्दः। मध्ये शिवशमरिष्टस्य कर इति (४।४।१३३) शिवशब्दः। अत्रोदयशब्द इति।

६८। अ अ इति (८।४।६८)।

आद्यो विवृतो द्वितीयः संवृतः। विवृतोऽकारः प्रयोगेषु संवृतो भवतीति। तत्तत्कार्य्यार्थं विवृतः। ननु तस्य तथा प्रयोगः। अपितु विवृतत्वेनाद्येनाकारेण ह्रस्वेनात्र दीर्घप्लुतयोर्ग्रहणं नेष्यते। विशिष्टगुणवत उच्चारणसामर्थ्यात् उदयग्रहणानुवर्त्तमानाद्वा। अकाररूपेणोदयो यः स संवृतो भवतीति वा। त्रिपाद्यामसिद्धाधिकारे संवृतत्वविधानं तस्यासिद्धत्वाद् दीर्घत्वादिकार्य्यार्थमिति ज्ञेयः। वृत्त इति। विसर्गनिकटेऽपि संवृतोऽयमकारः। सिद्धिरिति। अनेन वृत्तिकृता मङ्गलं सूचितम्। अशब्दो विष्णुवाचक इत्युच्चारणादेव सर्वं सम्पन्नम्। काशिकेति। काशयति प्रकाशयति सूत्रार्थमिति काशिका जयादित्यविरचिता वृत्तिः। काश्यां भवा वा। भागवृत्तिर्भर्तृहरिणा श्रीधरसेननरेन्द्रादिष्टा विरचिता। तयोर्वृत्त्योर्मतं व्याख्यातुं प्रतिपादयितुं यदि धीः प्रतिभा वर्त्तते तदेयं भाषावृत्तिः विचिन्त्यतामिति श्लोकार्थः। विलोक्यतामिति च क्वचित् पाठः। क्वचित् काशिकार्थः क्वचिद् भागवृत्त्यर्थो मया प्रकाशितः। न स्वमतिचापल्यादेवाभ्यामन्यत् किमपि विवृतमिति भाव इति

भाषावृत्त्यर्थविवृतावष्टमाध्यायसङ्गतः।
चतुर्थो विवृतः पादः श्रीसृष्टिधरशर्मणा ॥ १ ॥

इति श्रीसृष्टिधरचक्रवर्त्तिकृता भाषावृत्त्यर्थविवृतिः समाप्ता। श्रीरामः। श्रीः।

The so-called quotations in the commentary "from the Maha-bhasya" will often be found either wrong or altogether non-existent and hence probably given on hearsay (AA). If they were not the foolish manipula-

---

(AA) Sristidhara's attempt to explain षड्किपाध्याय in षड्किपाध्यायः शिष्याय कर्णचपेटामदात्, probably in immitation of खण्डिकोपाध्याय शिष्यो चपेटां ददाति (महाभाष्य, 1.1.1-) is curious (vide our note on 1. 4. 32). He had, it seems, no महाभाष्य

tions of the Scribes, the conclusion is irresistible that the acquaintance of Sristidhara's countrymen with the Mahabhasya had dwindled at the period to nothing. In fact a few centuries back the king Lakshmana-sena had been, if Sristidhara is to be believed, tired of the Vedic portions of Panini's Grammar. Purushottama too helped him in keeping them away from the people as much as he could. Thus the Bengalis generally neglected and ceased from studying the Astadhyayi (BB) and the Mahabhashya. The Vedic Sutras of the former were unknown to them. This state continued for a pretty long time. Even a few decades ago, the Bengali pundits were unable to

---

by him, while composing his Vivriti. In fact he based his book on the Nyasa (or the काशिकाविवरणपञ्जिका by जिनेन्द्रबुद्धि ) । So he says—

न्यासग्रन्थार्थतात्पर्यपर्यालोचनशालिभिः ।
बोध्योऽयं करुणावद्भिः कृतिभिर्मे परिश्रमः ॥ १ ॥ इति ।

Some read here शोध्यः for बोध्यः । The Nyasa was most likely the first of the commentaries on the Kasika Vritti. (*Vide* the Introduction of our edition of the Nyasa published by the V. R. Society, Rajshahi ).

(BB) There were of course some exceptions e.g. Brihaspati ( बृहस्पति ) the celebrated Rayamukuta (रायमुकुट), Raghunatha Siromani ( रघुनाथशिरोमणि ) of the Didhiti ( चिन्तामणिदीधिति ), Kulluka-Bhatta (कुल्लूकभट्ट) the commentator of the Manu-Samhita ( मनुसंहिता ) &c.. . The Raya-Mukuta wrote a commentary, entitled the Padachandrika on the Amarakosha. He had shown in it a profound knowledge of the Astadhyayi, though some subsequent writers on Amarasimha occasionally carped at him. That the Raya-Mukuta was a Bengali is clear from the following statements quoted from the Padachandrika.

"ज्योतिष्मन्मणिपुञ्जमञ्जुलरुचं हारं ज्वलत्कुण्डले
रत्नौघच्छुरिता दशाङ्गुलिजुषः श्रीचित्रितोर्म्मिकाः ।
यः प्राप्य बिरुदोऽपरौ छत्रकनकस्नानैरविन्दन् नृपा-
च्छत्रेभे स्फुरगैश्च रायमुकुटाभिख्यामभिख्यावतीम् ॥६॥
यत्पुत्रा नृपमन्त्रिमौलिमणयो विश्वासरायादयः
ख्याता दिग्जयिनामपीह जयिनो लोके कवीन्द्राश्च ये ।
सत्याख्यामरपादपादिसहितं येऽदुस्तुलापूरुषं
तत्तद्ग्रन्थविशेषनिर्मितलसत्कीर्त्तेषु शास्त्रेषु ते ॥ ७ ॥

construe and explain the hymns of the Rig-Veda and the Aphorisms of Panini's Grammar, especially those on accents. This retrogression dated probably from the 16th century A.D. Oh ! for its utter vanishment from Bengal.

SRISH CHANDRA CHAKRAVARTI.

---

पुण्यां पण्डितसार्वभौमपदवीं गौड़ावनीपार्थिवाद्
यः प्राप्तः प्रथितो बृहस्पतिरिति ख्यातोकवाचस्पतिः।
कोषव्यामरनिर्मितस्य विविधव्याख्यानदीक्षागुरुः
सानन्दं पदचन्द्रिकां स कुरुते टीकामिमां कीर्त्तये ॥८॥
इयं षोड़शटीकार्थसारमादाय निर्मिता।
अतोऽभिलिखितोऽर्थोऽस्यां न हेयः सहसा बुधैः ॥९॥"

And again—"इति महिन्तापनीय-कविचक्रवर्त्ति-राजपण्डित-पण्डितसार्वभौम-पण्डितचूड़ामणि-महाचार्य्य-रायमुकुटमणि-श्रीमद्बृहस्पतिकृतायाममरकोषपञ्जिकायां पदचन्द्रिकायां लिङ्गादिसंग्रहवर्गः समाप्तः। समाप्ता चेयममरकोषपञ्जिकेति ॥"

The age of the Pada-Chandrika is ascertained from the incidental mention of a date viz : year 4532 of the Kali-Juga ( कलियुग ), that is, 1353 Saka which corresponds with 1431 A.D. There is a complete MS. of it, in the Varendra Research Society, Rajshahi, which appears to have been copied out within fifty years of its composition, viz : in 1396 Saka, i.e. 1474 A.D. The गौड़ावनीपार्थिव mentioned by the Raya-Mukuta appears to have been Jadu ( यदु ) or Jalaluddin Mahammed Shah who reigned over Bengal from about 1414 A.D. to 1431 A.D. He was a son to Raja Gonesha ( राजा गणेश or कंसनारायण ) who was called Kanas ( कंस ) by the Mahomedan Historians. Raja Gonesa reigned from 1409 A.D. to 1414 A.D. Jadu was succeeded by his son Samas-uddin Ahmedsha who reigned from about 1431 A.D. to 1442 A.D.

---

अथ

महामहोपाध्यायश्रीपुरुषोत्तमदेवकृता

# भाषावृत्तिः ।

नमो बुद्धाय भाषायां यथाविमुनिलक्षणम् ।
पुरुषोत्तमदेवेन लघ्वी वृत्तिर्विधीयते ॥ १ ॥

अथ शब्दानुशासनम् । लौकिकानां प्रकृतिप्रत्ययविभागपरिकल्पनया सामान्यविशेषवता च लक्षणेन । गत्यन्तराभावात् । वर्णानामुपदेशः क्रमसन्निवेशानुबन्धासञ्जनार्थः । तदुभयं संज्ञार्थम् । संज्ञा च (1) लाघवेन शास्त्रप्रवृत्त्यर्था । अकारस्य विवृतोपदेश आकारग्रहणार्थः ।

अथ प्रत्याहारसूत्राणि ।

१ । अइउण् । २ । ऋ ऌ क् । ३ । एओङ् । ४ । ऐऔच् । ५ । हयवरट् । ६ । लण् । ७ । ञमङणनम् । ८ । झभञ् । ९ । घढधष् । १० । जबगडदश् । ११ । खफछठथचटतव् । १२ । कपय् । १३ । शषसर् । १४ । हल् इति प्रत्याहाराः ।

अकारादीनेतान् वर्णान् क्रमेणोपदिश्यान्ते णकारादीनित्संज्ञकाननुबध्नाति । प्रत्याहारार्थम् । तत्र णकाराद्यैश्चतुर्दशभिरनुबन्धैर्यथाक्रमम्—

एकं त्रीणि पुनश्चैकं चत्वार्य्येकं त्रयं त्रयम् ।
एकं द्वे षट् तथैवैकं चतुः पञ्च षड़ेव च ॥ १ ॥ इति ।

अण् । अक् इक् उक् । एङ् । अच् इच् एच् ऐच् । अट् । अण् इण् यण् । अम् यम् ङम् । यञ् । झष् भष् । अश् हश् वश् झश् जश् पुनर्वश् । छव् । यय् मय् झय् खय् । यर् झर् खर् चर् शर् । अल्

(1) सा च लाघवेन शास्त्रप्रवृत्त्यर्थेति पाठान्तरम् । तत्र संज्ञार्थमित्यत्र गुणीभूतः संज्ञाशब्दः सेत्यनेन प्रत्यवमृश्यते । गुणीभूतस्यापि प्रत्यवमर्शस्य न्यासादौ समर्थनात् ।

हल् वल् रल् झल् शल् इत्येकचत्वारिंशत् प्रत्याहारा भवन्ति । उरण् रपरः (१।१।५१) । चयो द्वितीयाः शरि पौष्करसादेः (८।४।४८, वार्त्तिकम्) । अमन्ताड्ड (उणादि, १।१११) इत्येतैश्चतुश्चत्वारिंशदिति ।

---

## अथ प्रथमोऽध्यायः ।

### प्रथमः पादः ॥ १।१ ॥

#### १ । वृद्धिरादैच् ।

आदैकार औकारश्च वृद्धिसंज्ञकाः स्युः ।

#### २ । अदेङ् गुणः ।

अदेकार ओकारश्च गुणसंज्ञकाः स्युः ।

#### ३ । इको गुणवृद्धी ।

अनुक्तस्थाने ये गुणवृद्धी ते इक एव स्थाने वेदितव्ये । सार्वधातुकार्धधातुकयोरित्यङ्गस्य (७।३।८४) गुणो भवति । चेता । होता । स्तोता । भविता । तरिता । सिचि वृद्धिः (७।२।१) परस्मैपदेषु । अचैषीत् । अहौषीत् । अस्तावीत् । अलावीत् । अकार्षीत् । कथं द्यौः पन्थाः सः ? गुणवृद्धिशब्देनानभिधानात् ।

#### ४ । न धातुलोप आर्धधातुके ।

धात्वेकदेशो धातुः । धातुलोपनिमित्त आर्धधातुके ये गुणवृद्धी प्राप्नुतस्ते न स्तः । लोलुवः । पोपुवः । मरीमृजः । पचाद्यचि यङो लुक् । इक इत्येव । अभाजि । रागः ।

#### ५ । क्ङिति च ।

किति ङिति च निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न स्तः । किति चितम् । स्तुतम् । भुक्तम् । कृतम् । सृष्टः । ङिति चिनुतः । चिन्वन्ति । कुरुतः । कुर्वन्ति ।

मृष्टः। मृजन्ति। ममृजुः। कथं मार्जन्ति ममार्जुः? मृजे रजादौ संक्रमे विभाषा वृद्धिरिष्यते (2)। व्यवस्थितविभाषया नित्यं तुन्दपरिमृजः (3)।

## ६। दीधीवेवीटाम्।

दीधीवेव्यौ छान्दसौ। इटो गुणो न स्यात्। अकणिषम्। अरणिषम्। लुङि सिपि लघूपधगुणो (७।३।८६)ऽत्र निषिद्धः।

## ७। हलोऽनन्तराः संयोगः।

संलग्ना हलः संयोग इत्युच्यन्ते। अग्निरिति गनौ। स्तौति सतराः।

## ८। मुखनासिकावचनोऽनुनासिकः।

मुखसहितया नासिकया यो वर्ण उच्चार्यते सोऽनुनासिकसंज्ञकः स्यात्। अँ। आँ। ओँ। ङञणनमाः। दधिँ। (4)

## ९। तुल्यास्यप्रयत्नं सवर्णम्।

तुल्यमास्यं ताल्वादिस्थानं प्रयत्नः स्पृष्टतादिश्च येषां तेऽन्योन्यं सवर्णसंज्ञकाः स्युः। वर्ग्यो वर्ग्येण सवर्णः। अचः सस्थानाः। अनुस्वारस्य ययि परसवर्णः (८।४।५८)। शङ्किता। कुण्ठिता। अकः सवर्णे दीर्घः (६।१।१०१)। दण्डाग्रम्। खट्वाग्रम्।

(क) ऋकार ऌकारयोः सवर्णसंज्ञा वक्तव्या। (5)

---

(2) एतत्तु भाष्यकारेणान्यदीयमतत्वेनेको गुणवृद्धी (१।१।३) इत्यत्रोपन्यस्तम्। तथाच—"इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते परिमृजन्ति परिमार्जन्ति परिमममृजतुः परिममार्जतुरित्याद्यर्थम्।" इति। संक्रामतो गुणवृद्धी अस्मादिति संक्रमः क्ङित्प्रत्यय इत्यर्थः।

(3) दुर्घटवृत्तावप्यत्र व्यवस्थितविभाषाश्रिता। मैत्रेयरक्षितस्तु धातुप्रदीपे तुन्दपरिमृज स्तुन्दपरिमार्ज इत्युभावेव दर्शितवान्। वस्तुतस्तूभावेव स्तः। अतएवात्रेयो मृजेति भिदादिपाठादङ् गणपाठादेव वृद्ध्यभाव इत्याह।

(4) अणोऽप्रगृह्यस्यानुनासिक (८।४।५७) इत्यनेनात्रावसानेऽप्रगृह्यस्य दधिशब्दस्याणोऽनुनासिकत्वं वा भवति।

(5) Instead of attaching star marks to the *vartikas*, we have numbered them under the aphorisms to which they belong, with letters (क), (ख), (ग).

ह्वोॡ ऌकारो ह्वोतृकारः । ऌकारो दीर्घो नास्तीति ऋकारः ।

## १० । नाज्झलौ ।

अज्हलौ परस्परं सवर्णसंज्ञकौ न स्तः । दण्डहस्तः । दधि शीतम् । वैपाशो मत्स्यः । आनडुहं चर्म । यस्येति चेति (६।४।१४८) लोपो न भवति ।

## ११ । ईदूदेद् द्विवचनं प्रगृह्यम् ।

ईदूदेकारान्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । अग्नी इमौ । वायू अत्र । खट्वे इह । पचेते इह । मणीवादीनां प्रतिषेधो वक्तव्य इत्येके । इवार्थे वकारोऽयमित्यन्ये । (6) मणीव । दम्पतीव ।

## १२ । अदसो मात् ।

अदसो मकारात् परमीदूदेत् प्रगृह्यसंज्ञं स्यात् । अमी अत्र । अमू आसाते । मादिति किम् ? अमुकेऽत्र । अदसः किम् ? शम्यत्र ।

## १३ । शे ।

शे इति सूत्रं छन्दोभागः सुपामादेशः (७।१।३९) ।

## १४ । निपात एकाजनाङ् ।

एको योऽज् निपातः स प्रगृह्यसंज्ञकः स्यात् । अ अपकर्ष । उ उत्तिष्ठ । आ एवं मन्यसे । आ एवं किलैतत् । अनाङ् किम् ? आ उष्णमोष्णम् ।

ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥ १ ॥

---

&c...The students are to understand that they come from कात्यायन and when quoting them, they are to supply after those vartikas, either the words इति वाच्यम् or इति वक्तव्यम् or इत्युपसंख्यानम् if not already supplied, to show that they belong to him.—The गण sutras are marked here as (1,) (2), (3), &c...

(6) तथाहि कादम्बखण्डितदलानिव पङ्कजानीति प्रशस्तिलिखितानिव केशिदन्तचतानीति श्रीपतिधृतम् । कुचौ गिरीवाचलकन्यकाया इति छत्तिधरधृतम् । नैषधे च—

'स्फुटोत्पलाभ्यां मलिदम्पतीव तदविलोचनाभ्यां कुचकुड्मलाश्रया ।
निपत्य बिन्दू हृदि कज्जलाविलौ मणीव नीलौ तरलौ विरेजतुः' ॥ १ ॥ इति ।

## १५। ओत्।

ओदन्तो यो निपातः स प्रगृह्यसंज्ञः स्यात्। अहो अहम्। (7) उताहो इति।

## १६। सम्बुद्धौ शाकल्यस्येतावनार्षे।

सम्बुद्धावोदन्तं शाकल्यस्य मतेन प्रगृह्यसंज्ञं स्यादितौ परे। भानो इति। अन्येषां भानविति। सम्बुद्धौ किम्? गवित्ययमाह। अनार्षे इत्येकवृत्ता-(8) वुपयुक्तम्।

## १७। उञः।

उञ् इतौ शाकल्यस्य मतेन प्रगृह्यसंज्ञः स्यात्। उ इति। अन्येषां विति।

## १८। ऊँ।

उञ इतौ ऊँ (9) चादिश्यते शाकल्यस्य मतेन। ऊँ इति। उइति। अन्येषां विति।

## १९। ईदूतौ च सप्तम्यर्थे।

ईदूतौ चेति सूत्रञ्छन्दोभागः। (10) उक्तं प्रगृह्यम्।

---

(7) "अहो अहं नमो मह्यं यदवृत्त्य सुमध्यया।
उल्लास्य नयने दीर्घे साकाङ्क्षमहमीक्षितः" ॥ १ ॥
इति जाम्बवतीविजयकाव्ये जाम्बवतीदर्शनोत्तरं कृष्णस्योक्तिः।
अहो अहोभिर्महिमा हिमागमेऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम्।
तपर्तुपूर्त्तावपि मेदसाभरा विभावरीभिर्बिभराम्बभूविरे ॥ १ ॥ इति नैषधीये।

(8) एकवृत्तौ साधारणवृत्तौ वैदिके लौकिके च विवरणे इत्यर्थः। "एकवृत्ताविति काशिकायां वृत्तावित्यर्थः। एकशब्दस्य मुख्यार्थत्वात् काशिकायां मुख्यवृत्ती। छन्दस्यपि व्याख्यानादिति भावः। भागवृत्तेरन्यस्यां वा। सा हि द्वयो विवरणकर्त्री"ति भाषावृत्त्यर्थविवृतौ सृष्टिधरचक्रवर्त्ती।

(9) अनुनासिकफलन्तु यरोऽनुनासिकेऽनुनासिको (८।४।४५) वेति पाक्षिकानुनासिकत्वम्। यथा यदेतन्ँ इति पठसि। पक्षे यदेतद्ँ इति पठसीति। एवं वाग्ँ इति वाङ्ँ इति वा। अज्ँ इति अञ्ँ इति वा। डिड्ँ इति डिण्ँ इति वा। ककुब्ँ इति ककुम्ँ इति वा। प्रगृह्यत्वे त्वचि परत एव संहिता-प्रतिषेधः।

(10) अन्ये त्वेतन्न मन्यन्ते। तथाहि भट्टोजि:—"न चायं योगश्छान्दसस्तथाविधानामेवोदाहरणानां दृष्टत्वादिति वाच्यम्। मुनित्रयोक्तिं विनास्मदिच्छया छान्दसत्वकल्पनेऽतिप्रसङ्गात्। लोके प्रगृह्यत्वं न

## २० । दाधा घ्वदाप् ।

दाप्दाण्दोदेङो धाञ्धेटौ च घुसंज्ञकाः स्युः । प्रणिददाति । प्रणिदधाति । अदाविति किम् ? दाप्दैपो मा भूत् । दातं धान्यम् । अवदातं वस्त्रम् ।

## २१ । आद्यन्तवदेकस्मिन् ।

असहाये आद्यन्तवत् कार्य्यमतिदिश्यते । वलादेरिट् । अलाविषुः । अजादावियङुवङौ । श्रियौ । भ्रुवौ । अन्तवत्त्वेऽजन्ताद् यत् । अध्येयम् । व्यपदेशिवदेकस्मिन्निति (11) वक्तव्यम् । एकाचो द्वे प्रथमस्येति (६।१।१) बहुव्रीहिं वक्ष्यति । स यथेह जजागार तथा इयाय । आर । आदेशप्रत्यययोरिति (८।३।५९) षत्वं वक्ष्यति । यथेह पक्ष्यति तथाऽपाक्षीत् ।

## २२ । तरप्तमपौ घः ।

एतौ घसंज्ञकौ स्याताम् । कुमारितरा । कुमारितमा । गौरितमा । घरूपेति (६।३।४३) ह्रस्वः ।

## २३ । बहुगणवतुडति संख्या ।

बहुगणौ प्रचुरार्थौ । वतुडतौ प्रत्ययौ । एते संख्यासंज्ञाः स्युः । बहुकृत्वः । गणकृत्वः । गणशः । तावत्कृत्वः । कतिधा ।

## २४ । ष्णान्ता षट् ।

## २५ । डति च ।

षकारनकारान्ता संख्या डतिप्रत्ययान्ता च षट्संज्ञा स्यात् । षट् सन्ति पश्य वा । पञ्च सप्त नव दश पुरुषाः । एकादश । अष्टादश । कति सन्ति । कति पश्य । षड्भ्यो लुगिति (७।१।२२)जश्शसो र्लुक् ।

---

भवतीत्यस्मिन्नर्थे प्रमाणानुपलम्भाच्च ।" इति (शब्दकौस्तुभे)। यन्न निषिद्धं तदनुमतमेवेति ययौ आसक्तौ वातप्रमी आपतति शरः पपी उदिते पठिष्यति शिष्य इत्यादौ भवितव्यमेव प्रकृतिभावेन। यान्त्यनेनेति ययो मुक्तिपथोऽश्वो वा। पिबति रसान् पाति वा लोकमिति पपीः सूर्य्यः। वातं प्रमिमीत इति वातप्रमीर्मृगविशेषः। यापो किद्द्वेति (उण्, ४।४२९) वातप्रमीरिति (उण्, ४।४४१) माङश्च ईप्रत्ययेन ययीः पपीर्वातप्रमीरिति। तस्य ङौ सवर्णदीर्घाद् ययी पपी वातप्रमी इति स्युः। तत्प्रयोगे ऽपि भाषायामप्यनेन प्रकृतिभाव इत्यर्थः।

(11) व्यपदेशो विशिष्टकथनं तादृप्येण निर्देश इति यावत्। तत इनिरस्त्यर्थे। व्यपदेशी। तद्वत्।

२६। क्तक्तवतू निष्ठा।

एतौ निष्ठेत्युच्येते। भिन्नः। भिन्नवान्।

२७। सर्वादीनि सर्वनामानि।

सर्वप्रभृतीनि सर्वनामसंज्ञकानि स्युः। सर्वस्मै सर्वस्मात्। विश्वस्मै विश्वस्मात्। उभशब्दो नित्यद्विवचनटाब्विषयः। उभयोऽन्यत्र। डतर डतम इतर अन्य अन्यतर। अन्यपर्य्यायस्त्वत् त्व। नेम अर्द्धपर्य्यायो नेमभिन्नः। सम सिम पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर् त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्।

२८। विभाषा दिक्समासे बहुव्रीहौ।

दिग्बहुव्रीहौ सर्वनामसंज्ञा वा स्यात्। उत्तरपूर्वस्यै। उत्तरपूर्वायै।

२९। न बहुव्रीहौ।

बहुव्रीहौ सा संज्ञा नास्ति। प्रियविश्वाय देहि। स्मैभावो न भवति। त्वत्कपितृको मत्कपितृकः। कुत्साद्यर्थे प्राक् टेरकच् न भवति (५।३।७१)। प्रागिवात् क (५।३।७०) एव भवति।

३०। तृतीयासमासे।

अत्र सर्वनामसंज्ञा नास्ति। मासपूर्वाय देहि। पुनः समासग्रहणाद् वाक्येऽपि। मासेन पूर्वाय।

३१। द्वन्द्वे च।

द्वन्द्वे सा संज्ञा नास्ति। पूर्वापराणाम्। कतरकतमानाम्।

३२। विभाषा जसि।

द्वन्द्वे जसि सा संज्ञा वा स्यात्। कतरकतमे कतरकतमाः।

३३। प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च।

एते जसि वा सर्वनामानि स्युः। प्रथमे प्रथमाः। चरमे चरमाः। तयप्। द्वितये द्वितयाः। द्वये द्वयाः। (12) अल्पे अल्पा इत्यादि।

---

(12) उभयशब्दस्य तु नित्या संज्ञा। नानेन विभाषा। उभये देवमनुष्याः। एतच्च व्यवस्थित-

३४ । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।

इमानि जसि वा सर्वनामानि स्युः । पूर्वे पूर्वाः । परे पराः । व्यवस्थायां किम् ? दक्षिणाग्छात्राः । प्रवीणा इत्यर्थः । असंज्ञायां किम् ? उत्तराः कुरवः ।

३५ । स्वमज्ञातिधनाख्यायाम् ।

जसि स्वं वा सर्वनाम स्यात् । स्वे गावः । स्वा गावः । अज्ञातिधनाख्यायाम् किम् ? स्वा ज्ञातयः । प्रभूताः स्वा दीयन्ते ।

३६ । अन्तरं वहिर्योगोपसंव्यानयोः ।

अन्तरं जसि वा सर्वनामसंज्ञं स्यात् । वहिर्योगे । अन्तरे अन्तरा वा गृहाः । ग्रामवाह्या इत्यर्थः । उपसंव्यानमधोवस्त्रम् । अन्तरे अन्तरा वा शाटकाः । परिधेया इत्यर्थः ।

(क) अपुरीति वक्तव्यम् । अन्तरायां पुरि वसति । सर्वादित्वात् प्राप्तेः ।

(ख) वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्त्तव्यम् । द्वितीयस्मै द्वितीयाय ।

३७ । स्वरादिनिपातमव्ययम् ।

स्वरादयो निपाताश्चाव्ययमित्युच्यन्ते । स्वर् । प्रातर् । अन्तर् । उच्चैस् । नीचैस् । दिवा । वहिस् । स्वयम् । मृषा । हे । है । स्वाहा । स्वधा । अद्धा । कम् । शम् । सार्द्धम् । समम् । सह । शुभम् । स्वस्ति । अस्ति । आभीक्ष्ण्ये निपाताः । च । वा । इव । वै । एव । इह । इति । इह स्वरादयो वाचकाश्चादयो द्योतका इति भेदः ।

> सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
> वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

३८ । तद्धितश्चासर्वविभक्तिः ।

सर्वा विभक्तिर्यतो नोत्पद्यते स तद्धितोऽव्ययं स्यात् । ततः । यत्र ।

---

विभाषात्वादिति न्यासकारः । व्यवस्थितविभाषाविज्ञानात् पूर्वविप्रतिषेधादेति हरदत्तः । विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वादिति भट्टोजिः ।

विना। नाना। तसिलादिरेधाच्पर्य्यन्तः। कृत्वसुच् सुचौ। शस्तसी। डाच्। थमुथालौ। दार्हिलौ। च्व्यर्थाः। किमेत्तिङव्ययघादाम्बद्रव्यप्रकर्षे(५।४।११)। किन्तराम्। वतिः। ब्राह्मणवत्।

३९। कृन् मेजन्तः।

मान्तः कृदव्ययं स्यात्। कर्त्तुम्। स्वादुंकारम्। स्वपोषम् पुष्टः। ईहाञ्चक्रे। एजन्तः कृच्छान्दसः।

४०। क्त्वातोसुन्कसुनः।

क्त्वान्तमव्ययं स्यात्। कृत्वा। प्रकृत्य। तोसुन्कसुनौ छान्दसौ।

४१। अव्ययीभावश्च।

अव्ययीभावो नाम समासोऽव्ययं स्यात्। उपाग्नि प्रत्यग्नि। इह लुगेव संज्ञाप्रयोजनम्। नाकजादिरिति स्मृतिः। उक्तमव्ययम्।

४२। शि सर्वनामस्थानम्।

४३। सुडनपुंसकस्य।

जश्शसोः शि (७।१।२०) रनपुंसकस्य सुट् च सर्वनामस्थानमुच्यते। शि। कुण्डानि। दधीनि। सुट्। राजा। राजानौ। राजानः। राजानम्। राजानौ। सीमा। सीमानौ। अनपुंसकस्य किम्? सामनी। धामनी।

४४। नवेति विभाषा।

नवाशब्दयोरर्थौ विभाषासंज्ञः स्यात्। निषेधेन समीकृते विषये विकल्पः प्रवर्त्तते। उभयत्र विभाषाप्रयोजनम्। यथा विभाषा श्वेः (६।१।३०) संप्रसारणम्। शुशाव शिश्वाय। शुशुवतुः शिश्वियतुः।

४५। इग् यणः संप्रसारणम्।

यणः स्थाने भूतो भावी वा य इक् स संप्रसारणमुच्यते। इष्टम्। उक्तम्। गृहीतम्। औह्यत। औयत। अथ षष्ठीनिर्द्देशमधिकृत्याह—

४६। आद्यन्तौ टकितौ।

षष्ठीनिर्दिष्टस्य आदिष्टिद् भवति। अन्तः किद् भवति। लविता। भीषयते।

### ४७ । मिदचोऽन्त्यात् परः ।

अचां मध्येऽन्त्यादचः परो मित् भवति । पयांसि । सिञ्चति । रुणद्धि ।

(क) मस्जेरन्त्यात् पूर्वं नुममिच्छन्ति । अनुषङ्गसंयोगादिलोपार्थम् । मङ्क्ता । मग्नः ।

### ४८ । एच इग् ह्रस्वादेशे ।

एचः स्थाने ह्रस्वादेश इगेव भवति । अतिरि कुलम् । अतिनु कुलम् । उपगु ।

### ४९ । षष्ठी स्थानेयोगा ।

अयोगा अव्यक्तसम्बन्धा षष्ठी स्थाने वेदितव्या । अस्तेर्भूः (२।४।५२) । भविता । ब्रुवो वचिः (२।४।५३) । वक्ता । अयोगा किम् ? ऊदुपधाया गोहः (६।४।८९) । उपगूहयति । निगूहयति ।

### ५० । स्थानेऽन्तरतमः ।

स्थाने प्राप्यमाणानां सदृशतम आदेशः स्यात् । अकः सवर्णे दीर्घः (६।१।१०१) । लताग्रम् । कण्ठ्ययोः कण्ठ्य एव दीर्घः । अर्थतः । तरुणयुवतिः । तरुण्यर्थएव पुंवदुच्यते । गुणतः पाकस्त्यागो रोगः । अल्पप्राणयोरघोषघोषवतोस्तादृगेव कुलम् । प्रमाणतः । अमुष्मै । अमूभ्याम् । ह्रस्वदीर्घयो स्तत्प्रमाण एवोकार ऊकारश्च स्यात् । स्थानग्रहणं स्थानार्थगुणप्रमाणेषु स्थानान्तर्यं बलीयो यथा स्यात् । चेता स्तोता । प्रमाणान्तर्यादकारो मा भूत् । तमब्ग्रहणं बहुष्वन्तरेष्वन्तरतमो यथा स्यात् । वाग्घसति । त्रिष्टुब् भसति ।

### ५१ । उरण् रपरः ।

ऋवर्णस्य स्थानेऽण् रपरो भूत्वा प्रसजति । कर्त्ता । किरति । द्वैमातुरः । कारकः । खट्वर्श्यः । तवल्कारः ।

### ५२ । अलोऽन्त्यस्य ।

आदेशोऽन्तस्यालः स्थाने वेदितव्यः । इद् गोण्याः (१।२।५०) । पञ्च-

गोघ्नः । हन स्त च (३।१।१०८) । ब्रह्महत्या । राज्ञः क च (४।२।१४०) । राजकीयः । रुहः पः (७।३।४३) । रोपयति ।

## ५३ । ङिच्च ।

ङिच्चादेशोऽन्त्यस्यालः स्थाने स्यात् । आनङृतो द्वन्द्वे (६।३।२५) । मातापितरौ । अनङ् सौ (७।१।९३) । सखा । कर्त्ता । तातङो ङित्त्वसामर्थ्यान् नायमन्तविधिः स्मृतः । कुरुतात् ।

## ५४ । आदेः परस्य ।

परस्य कार्य्यमुच्यमानमादेरलः प्रत्येतव्यं यत्र पञ्चमीनिर्देशः । ईदासः (७।२।८३) । आसीनः । अलोऽन्त्यस्या-(१।२।५२) पवादोऽयं योगः परत्वाद-नेकाल्शिदित्यनेन (१।१।५५) बाध्यते । अतो भिस ऐस् (७।१।९) । वृक्षैः ।

## ५५ । अनेकाल्शित् सर्वस्य ।

अनेकालादेशः शिच्च सर्वस्यैव स्थाने स्यात् । अस्तेर्भूः (२।४।५२) । भविता । लिट स्त्भयोरेशिरेच् (३।४।८१) । पेचे पेचिरे । जश्शसोः शिः (७।१।२०) कुण्डानि । उक्ताः षष्ठीनिर्देशाः ।

## ५६ । स्थानिवदादेशोऽनल्विधौ ।

आदेशाः स्थानिवद् भवन्ति । ब्रूञ् । वक्ता । वक्तुम् । वक्तव्यम् । धातोरिति (३।१।९१) तव्यदादयः । आवधिष्ट । आङो यमहन इत्यात्मनेपदम् (१।३।२८) । अनल्विधौ किम् ? वर्णविधौ मा भूत् । द्यौः पन्थाः सः ।हलिति (६।१।६८) न सुलोपः ।

(क) आह्भुवोरीट्प्रतिषेधो वक्तव्यः । आत्थ । अभूत् । ब्रुव ईड़िति । (७।३।९३) अस्तिसिचोऽपृक्त इति (७।३।९६) च मा भूत् ।

## ५७ । अचः परस्मिन् पूर्वविधौ ।

अल्विध्यर्थोऽयमारम्भः । नियमार्थो वा । अजादेशः परनिमित्तकः पूर्वस्मिन् विधौ कर्त्तव्ये स्थानिवत् स्यात् । पटयति । लघयति । अवधीत् । टिलोपस्यातो लोपस्य च स्थानिवद्भावाद् वृद्धि र्न भवति ।

५८ । न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।

एषु विधिष्वजादेशो न स्थानिवत् । पदान्ते कौ स्तः । आवादेशः स्यात् । द्विर्वचने दद्ध्यत्र मद्ध्वत्र । अनचि चेति (८।४।४७) द्विर्वचनं न स्यात् । वरे वरच्यतो लोपे (६।४।४८) यायावरः । आतो लोप इटि चेति (६।४।६४) स्यात् । सवर्णविधौ श्नसोरल्लोपः (६।४।१११) । शिण्टि पिण्टि । अनुस्वारस्य ययि परसवर्णो (८।४।५८) न स्यात् । अनुस्वारे शिंषन्ति । पिंषन्ति । नश्चापदान्तस्य झलीत्यनुस्वारो (८।३।२४) न स्यात् । जश्विधौ । अभ्यस्तस्याकारलोपः । धद्धे । धद्धम् । जश्त्वं न स्यात् । चर्विधौ । गमहनेत्युपधालोपः (६।४।४८) । जक्षतु जक्षुः । खरि चेति (८।४।५५) चर्त्वं न स्यात् । अतः स्थानिवत्त्वं निषिध्यते ।

(क) स्वरदीर्घयल्लोपेषु लोपाजादेशो न स्थानिवत् ।

तल्लेह स्वरो नोदाक्रियते । दीर्घविधौ । अल्लोपोऽनः (६।४।१३४) । प्रतिदीव्ना । हलि चेति (८।२।७७) दीर्घो न स्यात् । यल्लोपे क्तिच्यतो लोपः (६।४।४८) । कण्डूतिः । वलि यल्लोपो न स्यात् । लोपः किम् ? वाय्वोः । यणादेशः स्थानिवदेव । अतो वलि यल्लोपो न भवति ।

(ख) क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वषत्वेषु न स्थानिवत् ।

लावयतेः पावयतेश्च क्विप् । लौः । पौः । क्वौ लुग्मं न स्थानिवदिति णिलोपस्य स्थानिवत्त्वनिषेधादूट् (13) । लुकि—आमलकं फलम् । मयट् । फले लुक् (४।३।१६३) । लुक् तद्धितलुकीति (१।२।४९) स्त्रीप्रत्ययनिवृत्तौ तस्य स्थानिवत्त्वनिषेधाद् यस्येति चेति (६।४।१४८) लोपो न भवति । उपधात्वे—पारिखीयम् । चातुरर्थिकाणन्ताद् यस्येति चेति (६।४।१४८) लोपस्य स्थानिवत्त्वात् खोपधाच्छः (४।२।१४१) । चङ्परह्रस्वत्वे । अवीवदद् वीणां परिवादकेन । प्रथमस्य णिचोऽस्थानिवत्त्वाण् णौ चङीति (७।४।१) ह्रस्वत्वम् । एवं पापच्यतेः पापक्तिः । पाचयतेः पाक्तिः । यायज्यतेर्यायष्टिः ।

---

(13) ऊडिति ठकारान्त आदेशः ।

याजयते र्याष्टिरिति। अल्लोपणिलोपयोः स्थानिवत्त्वनिषेधाज् झलीति कुत्वषत्वे भवतः।

## ५९। द्विर्वचनेऽचि।

द्विर्वचननिमित्तेऽच्यजादेशः स्थानिवद् भवति। स्थानिरूपेणावतिष्ठते। क्व ? द्विर्वचन एव कर्त्तव्ये। कृते द्विर्वचने पुनरादेशरूपं नटवद् गृह्णाति। पपतुः पपुः। जघ्नतु र्जघ्नुः। जक्षतु र्जक्षुः। अतो लोपस्य (६।४।१४८) गमहनेत्युपधालोपस्य (६।४।९८) च स्थानिवत्त्वादेकाचो द्विर्वचनं सिध्यति। निनाय लुलाव। आयावोः स्थानिवत्त्वान् नैलौशब्दौ द्विरुच्येते। अचीति किम् ? जेघ्नीयते। यङीत्त्वं न स्थानिवत्। उक्तः स्थानिवद्भावः।

## ६०। अदर्शनं लोपः।

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्। राजा। भवान्। पचेरन्।

## ६१। प्रत्ययस्य लुक्श्लुलुपः।

प्रत्ययादर्शनस्य तद्भावितस्य संज्ञात्रयं स्यात्। अदिप्रभृतिभ्यः शपः (२।४।७२) अत्ति। जुहोत्यादिभ्यः श्लुः (२।४।७५)। जुहोति। जनपदे लुप् (४।२।८१)। अङ्गा वङ्गाः। द्व्यञ्मगधेत्यण् (४।१।१७१)।

## ६२। प्रत्ययलोपे प्रत्ययलक्षणम्।

लुप्तेऽपि प्रत्यये तद्धेतुकं कार्य्यं स्यात्। गोमान्। सर्वनामस्थाने नुम्। अहन्। अग्निचित्। अधोक्। सुप्तिङन्तं पदम् (१।४।१४)। अदोट्। हलादौ लुणह इमितीम् (७।३।९२)। इह प्रत्ययस्येत्यनुवृत्तौ पुनः प्रत्ययग्रहणं कृत्स्नप्रत्ययलोपे यथा स्यात्। प्रत्ययैकदेशलोपे मा भूत्। आघ्नीयेत्यत्र सीयुट्सकारलोपे प्रत्ययलक्षणाभावाज् झलादित्वं नास्तीत्यनुनासिकलोपो न स्यात्। तल्लक्षणमिति च वाच्ये पुनः प्रत्ययग्रहणं वर्णाश्रयनिवृत्त्यर्थम्। तेन गवे हितं गोहितम्। रायः कुलं रैकुलमिति। अचीति प्रत्ययलक्षणाभावाद् वर्णाश्रया अवादयो न भवन्ति।

## ६३। न लुमताङ्गस्य।

लुक्श्लुलुप्शब्दैर्लुप्तेऽङ्गस्य तत् कार्य्यं न स्यात्। मृष्टः। जुहुतः। गर्गाः।

अपि यञि च गुणवृद्धी न भवतः। राजपुरुषः। ङसो भत्वं न भवति। अहर्ददाति। अहर्भुङ्क्ते। रोऽसुपीति (८।२।६९) प्रतिषेधो न भवति। अङ्गस्य किम्? पञ्च। साम। पयः। समुदायस्य पदत्वं भवत्येव।

(क) उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणं नास्तीति। परमवाचौ परमश्वलिहौ परमगोदुहौ परमदण्डिनौ। समासेऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वे कुत्वढत्वघत्वनलोपाः प्राप्ता न स्युः। अपदादिविधौ किम्? दधिसेचौ। मधुसेचौ। सात्पदाद्यो (८।३।१११) रिति षत्वनिषेधो भवत्येव। सेचयतीति सेक्।

## ६४। अचोऽन्त्यादि टि।

अचां सन्निविष्टानां मध्येऽन्त्यो योऽच् तदादि टिसंज्ञं स्यात्। आताम्। आथाम्। आम्शब्दः। पटत्। दमत्। अच्छब्दः। पचे पचेते इत्यत्रान्तादिवत्त्वं व्यपदेशिवद्भावात्।

## ६५। अलोऽन्त्यात् पूर्व उपधा।

उपान्त्यो वर्ण उपधोच्यते। पाचकः। शिष्टः। भेत्ता। नर्त्तकः।

## ६६। तस्मिन्निति निर्द्दिष्टे पूर्वस्य।

सप्तम्या निर्द्दिष्टे पूर्वस्य कार्य्यं स्यात्। दध्युदकम्। मध्विदम्।

## ६७। तस्मादित्युत्तरस्य।

पञ्चम्या निर्द्दिष्टे परस्य कार्य्यं स्यात्। पदात् परस्य। ग्रामो वः। पुत्रो नः। न पूर्वस्य। युष्माकं ग्रामः। अस्माकं पुत्रः।

## ६८। स्वं रूपं शब्दस्याशब्दसंज्ञा।

शास्त्रे शब्दस्य स्वं रूपं ग्राह्यम्। नार्थः। अग्नेर्ढक् (४।२।३३) आग्नेयम्। पावकादेर्न भवति। राज्ञः क च (४।२।१४०)। राजकीयः। नृपादेर्न भवति। अशब्दसंज्ञा किम्? टि घु भः। अर्थ एव गृह्यते। इह तु विभाषा वृक्षमृगेति (२।४।१२) प्लक्षन्यग्रोधं रुरुपृषतं स्वे पुषः (३।४।४०) स्वपोषं रैपोषं गोपोषमित्यादौ विशेषग्रहणे पर्य्यायग्रहणे च यत्न आस्थेयः।

## ६९ । अणुदित् सवर्णस्य चाप्रत्ययः ।

अण् उदिच्च गृह्यमाणः सवर्णस्य स्वरूपस्य च ग्राहकः स्यात् । अस्य च्वौ (७।४।३२) । खट्वीस्यात् । यस्येति च (६।४।१४८) । चौड़िः । स्वरूपस्य च । शुक्लीकरोति । दाक्षिः । उदित् कु चु टु तु पु । अप्रत्ययः किम् ? सनाशंसभिक्ष उः (३।२।१६८) । अ सांप्रतिके (४।३।९) । इह प्रतीयते विधीयते भाव्यत इति प्रत्ययः । तन्निषेधाद् भाव्यमानोऽण् सवर्णान् न गृह्णातीत्ययमर्थं इत्याहुः । तेन इदम इश् (५।३।३) अम् सम्बुद्धौ (७।१।९९) वलादेरित्यादौ (७।२।३५) च सवर्णाग्रहणम् ।

## ७० । तपरस्तत्कालस्य ।

तपरो वर्ण आत्मना तुल्यकालं ग्राहयति । अतो भिस ऐस् । (७।१।९) । वृक्षैः । नेह । खट्वाभिः । ऋत इद् धातोः (७।१।१००) । किरति । गिरति ।

## ७१ । आदिरन्त्येन सहेता ।

आदिर्वर्णोऽन्त्येनेता इत्संज्ञकेन सह मिलितो मध्यपतितानां वर्णानां ग्राहकः स्यात् स्वरूपस्य च । अण् । अक् । हल् । अच् । सुप् । तिङ् । सुट् । आप् । ल्यन् । क्तञ् ।

## ७२ । येन विधिस्तदन्तस्य ।

येन विशेषणेन विधिरुच्यते स तदन्तस्य ग्राहकः स्यात् । एरच् (३।३।५६) । इकारेण धातोरज्विधिरितीकारस्तदन्तं ग्राहयति । चयो जयः ।

(क) यस्मिन् विधिस्तदादावल्ग्रहणे । अचीत्यजादावियङुवङौ । श्रियौ । भ्रुवः । उक्तं ग्रहणकशास्त्रम् ।

## ७३ । वृद्धिर्यस्याचामादिस्तद् वृद्धम् ।

अचां मध्ये यस्यादिर्वृद्धिस्तद् वृद्धसंज्ञं स्यात् । वृद्धाच्छः (४।२।११४) । पाणिनीयम् । शैवीयम् । बौद्धीयं मतम् ।

(क) वा नामधेयस्य वृद्धसंज्ञा वक्तव्या । देवदत्तीयाश्छात्रा देवदत्ता वा ।

(ख) गोत्रान्तादसमस्तवत् प्रत्ययो वक्तव्यः । वृद्धभारद्वाजीयाः । वृद्ध-काश्यपीयाः । अजातौल्वलीयाः ।

## ७४ । त्यदादीनि च ।

त्यदादीनि वृद्धसंज्ञकानि स्युः । तदीयम् । इदमीयम् । अदसीयम् । युष्मदीयम् । मदीयम् । अस्मदीयम् । किमीयम् ।

## ७५ । एङ् प्राचां देशे ।

एङ् यस्याचामादिस्तद्वृद्धसंज्ञं स्यात् प्राग्देशे (14) । एणीपचनीयो ग्रामः । भोजकटीयो देशः । देशे किम् ? गोमत्यां भवा गौमता मत्स्याः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

प्रथमाध्यायस्य प्रथमःपादः ॥१।१॥

समाप्तश्च प्रथमः पादः ।

---

(14) इदं व्याख्यानं जयादित्यमतानुसारि । भाष्यविरुद्धञ्च । प्राचामित्यनेन प्राचामाचार्य्याणामभिधानमिति कुणिवृत्तिसमाश्रयेण भाष्यकारस्य व्याख्यानात् । तथाच कैयटः—"कुणिना प्राग्ग्रहणमाचार्य्यनिर्देशार्थं व्यवस्थितविभाषार्थञ्चेति व्याख्यातम् । अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातम् । भाष्यकारस्तु कुणिदर्शनमशिश्रियत् ।" इति । जयादित्येनानयोरपरं मतं गृहीतम् । श्रूयमाणदेशविशेषणत्वे सम्भवाद-ध्याहर्त्तव्येन मतेनेत्यनेनान्वयो न कल्पनीय इति तस्याशयः ।

अथ श्रीपुरुषोत्तमदेवकृता

# भाषावृत्तिः।

## प्रथमाध्यायस्य द्वितीयः पादः।

### १। गाङ्कुटादिभ्योऽञ्णिन् ङित्।

एभ्योऽञ्णितः प्रत्यया ङिद्वद् भवन्ति। इङादेशो गाङ्। अध्यगीष्ट। अध्यगीष्ठाः। "नाध्यगीढ्वं ध्रुवं स्मृतीः।" कुटादेः। कुटिता। पुटिता। कुटितुम्। पुटितुम्। संकुटितव्यम्। अञ्णित् किम्? णिच्। कोटयति। घञ्। कोटः।

(क) व्यचेः कुटादित्वमनसीति वक्तव्यम्। विचिता विचितुम्। अनसि किम्? असुन्। उरुव्यचाः।

### २। विज इट्।

विजेरिडादिप्रत्ययो ङित् स्यात्। उद्विजिता। उद्विजितुम्। "नायमुद्विजितुं कालः।" उद्विजितव्यम्। "पुरुषादुद्विजितव्यमीदृशः"। कथ "मुद्वेजिता वृष्टिभिराश्रयन्ते?" ण्यन्तात्।

### ३। विभाषोर्णोः।

ऊर्णोतेरिडादिप्रत्ययो वा ङित् स्यात्। प्रोर्णविता प्रोर्णुविता। प्रोर्णवितुम् प्रोर्णुवितुम्।

### ४। सार्वधातुकमपित्।

अपित् सार्वधातुकं ङित् स्यात्। कुरुतः। कुर्वन्ति। चिनुतः। चिन्वन्ति। अपिदिति किम्? करोति। करोषि। चिनोति। इह

पूर्वमपिदिति योगं विभज्य ङिच्च पिन्न भवतीत्यर्थमाहुः । तेन स्तुयादित्यत्र यासुटो ङित्त्वेन पित्त्वनिषेधात् स्तौतीत्येतद्वदुतो वृद्धिर्लुकि हलीति (७।३।८९) पिति न वृद्धिः । ब्रूतात् भवानित्यत्र ब्रुव ईण् न भवति ।

## ५ । असंयोगाल्लिट् कित् ।

असंयोगान्ताद् धातो र्लिट् कित् स्यात् । चक्रतुश्चक्रुः । बिभिदतुर्बिभिदुः । दुद्रुवतुर्दुद्रुवुः । जुहुवतु र्जुहुवुः । जचतु रूचुः । असंयोगात् किम् ? "वलिर्बबन्धे जलधिर्ममन्थे ।" अपिदित्येव । बिभेद ।

## ६ । इन्धिभवतिभ्याञ्च ।

आभ्यां लिट् कित् स्यात् । समीधे । बभूव । अत्रेन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वादाभ्यां किद्वचनानर्थक्यमिति भाष्यम् (15) । भाषायान्त्विन्धेर्लिंट्याम् । समिन्धाञ्चक्रे । अत्रेष्टिः—श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति जयादित्यः । श्रेथतुः । श्रेथुः । ग्रेथतुः । ग्रेथुः । देभतुर्देभुः । परिषस्वजे ।

## ७ । मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।

एभ्यः सेडपि क्त्वा कित् स्यात् । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा ।

## ८ । रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।

एभ्यः सेडपि क्त्वा कित् स्यात् । संश्च । रुदित्वा रुरुदिषति । विदित्वा विविदिषति । मुषित्वा मुमुषिषति । गृहीत्वा जिघृक्षति । स्वपिप्रच्छोः सन्नर्थं वचनम् । सुषुप्सति । पिपृच्छिषति ।

## ९ । इको झल् ।

इगन्ताद् धातो र्झलादिः सन् कित् स्यात् । चिकीर्षति । चिचीषति । झलिति किम् ? शिशयिषते । इकः किम् ? पिपासति । झलादेर्विधिर्नवसूत्राम् ।

(15) वस्तुतस्त्वत्र सूचे वार्त्तिकमेतत् कात्यायनस्य ।

१० । हलन्ताच्च ।

हलन्तादिगुपधाज् झलादिः सन् कित् स्यात् । बिभित्सति । बुभुत्सते । दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम् । धीप्सति । धिप्सति ।

११ । लिङ्सिचावात्मनेपदेषु ।

हलन्तादिगुपधादात्मनेपदविषयौ लिङ्सिचौ कितौ स्याताम् । भित्सीष्ट । भुत्सीष्ट । अभित्त । अबुद्ध । तङनुवृत्तिः षट्सूत्र्याम् ।

१२ । उश्च ।

ऋवर्णान्तात् तौ कितौ स्याताम् । कृषीष्ट । हृषीष्ट । अकृत । अहृत । तीर्षीष्ट नदी । अतीर्ष्ट नदी स्वयमेव ।

१३ । वा गमः ।

गमे स्तौ वा कितौ स्याताम् । कित्त्वादनुनासिकलोपः । संगसीष्ट संगंसीष्ट वा । त्वं युद्धे विजयेन सङ्गसीष्ठाः संगंसीष्ठा वा । समगत समगंस्त वा भ्रमरः सरोरुहेण ।

१४ । हनः सिच् ।

हन्तेस्तङि सिच् कित् स्यात् । आहत । आहसाताम् ।

१५ । यमो गन्धने ।

यमस्तङि सिच् कित् स्यात् । उदायत सूचितवानित्यर्थः । "नोपायध्वं भयं सीताम् ।" गन्धने किम् ? आयंस्त पादम् ।

१६ । विभाषोपयमने ।

स्वीकारे यमस्तङि सिच् किद्वा स्यात् । उपायत कन्याम् । "उपायंस्त महास्त्राणि ।" "सौमित्रे मामुपायंस्थाः ।"

१७ । स्थाघ्वोरिच्च ।

स्थाघ्वोस्तङि सिच् कित् स्यात् । इकारश्चान्तादेशः । स्था । उपास्थित

करेणुः । प्रास्थितानेकः । घु । अदित । अदिथाः । अधित । अधिथाः । अधिषातां गावी वत्सेन ।

### १८ । न क्त्वा सेट् ।

सेट् क्त्वा किन्न स्यात् । देवित्वा । वर्त्तित्वा । मृडित्वादौ कित्त्वमुक्तम् । सेडनुवृत्तिर्नवसूत्र्याम् ।

### १९ । निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।

एभ्यः सेण् निष्ठा किन्न स्यात् । शयितः शयितवान् । प्रस्वेदितः प्रस्वेदितवान् । प्रक्ष्वेदितः प्रक्ष्वेदितवान् । प्रमेदितः प्रमेदितवान् । प्रधर्षितः प्रधर्षितवान् । स्विदादेर्विभाषा भावादिकर्मणोरिट् ( ७.२।१७ ) । धातुपारायणे तु भौवादिकस्य डीङोऽपि निष्ठायामकित्त्वमुक्तम् । उड्डयित उड्डयितवान् ।

### २० । मृषस्तितिक्षायाम् ।

मृषेः क्षमायां निष्ठा किन्न स्यात् । मर्षितः । मर्षितवान् । तितिक्षायां किम् ? अपमृषितं वाक्यमाह ।

### २१ । उदुपधाद् भावादिकर्मणोरन्यतरस्याम् ।

उदुपधाद् धातोर्भावारम्भयोर्निष्ठा किन्न स्याद्वा । द्योतितं द्युतितं वानेन । "प्रद्योतितं तावदुडुप्रतानैर्दिवाकरः प्रद्युतितो न यावत् ।" एवं मुदप्रभृतिः । शब्विकरणानान्तु नेष्यते । निगुधितम् ।

### २२ । पूङः क्त्वा च ।

पूङः क्त्वा निष्ठा च किन्न स्यात् । पवितः पवितवान् । पवित्वा । पूङश्चेतीट् (७।२।५१) । क्त्वाग्रहणमुत्तरार्थम् ।

### २३ । नोपधात् थफान्ताद्वा ।

थकारान्तान्नोपधाद् धातोः फकारान्ताच्च क्त्वा किद्वा स्यात् । श्रथित्वा श्रन्थित्वा । ग्रथित्वा ग्रन्थित्वा । गुफित्वा गुम्फित्वा । नोपधात् किम् ? रेफित्वा । थफान्तात् किम् ? स्रंसित्वा ।

## २४ । वञ्चिलुञ्च्यृतश्च ।

एभ्यः क्त्वा किद्वा स्यात् । वचित्वा वञ्चित्वा । लुचित्वा लुञ्चित्वा । ऋतित्वा अर्त्तित्वा ।

## २५ । तृषिमृषिकृशेः काश्यपस्य ।

एभ्यः क्त्वा किद्वा स्यात् । तृषित्वा तर्षित्वा । मृषित्वा मर्षित्वा । कृशित्वा कर्शित्वा । काश्यपग्रहणं पूजार्थम् ।

## २६ । रलो व्युपधाद्धलादेः संश्च ।

उ इ वी । तदुपधाद् रलन्ताद् हलादेः धातोः क्त्वा संश्च कितौ वा स्याताम् । लिखित्वा लेखित्वा । लिलिखिषति लिलेखिषति । एवं द्युतमुदादेः । द्युतित्वा द्योतित्वा । दिद्युतिषते दिद्योतिषते । रलन्तात् किम् ? देवित्वा दिदेविषति । हलादेः किम् ? एषित्वा एषिषिषति । सेड़ित्येव । भुक्त्वा बुभुक्षते । उक्तं कित्त्वम् ।

## २७ । ऊकालोऽज्झ्रस्वदीर्घप्लुतः । (16)

उकाल एकमात्रिक ऊकालो द्विमात्रिक ऊ३कालस्त्रिमात्रिकोऽच् क्रमेण ह्रस्वदीर्घप्लुतसंज्ञकः स्यात् । अग्निचित् । क्रौञ्छति । प्लुतो नोदाह्रियते । भाषायां व्यवहारादर्शनात् ।

## २८ । अचश्च ।

तद्भाविता ह्रस्वादयोऽच एव स्थाने वेदितव्याः । ह्रस्वः । अतिरि । अतिखट्वम् । दीर्घः । स्तूयते । पटूभवति । अत्र च्छन्दःसूत्राणि द्वादश । (17)

---

(16) Why ऊकालः is put and not अकालः or इकालः &c...? They say

"निरन्तराः क्रमस्थाश्च ह्रस्वदीर्घप्लुता स्वयः ।

उवर्णे कुक्कुटरुते प्रसिद्धा इत्युवर्णभाक्" ॥ १ ॥ इति ।

(17) These twelve Sutras, though omitted by the author, are cited here for reference and completion of the सूत्रपाठ. In cases of such other omissions elsewhere, the aphorisms will be similarly recorded in the note.

इह भाषावृत्तावपि स्वरसूत्राणि न निबध्यन्ते । स्वरस्य भाषायामप्रचारादनर्थित्वाच्च लोकस्य । वेद एवावश्यकः स्वरप्रयोगः । विस्वरेऽनिष्टापातभयात् (18) ।

## ४१ । अपृक्त एकाल्प्रत्ययः ।

एको योऽल्प्रत्ययः सोऽपृक्त उच्यते । आसीत् । अपृक्त ईट् । अर्द्धभाक् । भजो ण्विः (३।२।६२) । वेरपृक्तस्य लोपः (६।१।६७) ।

## ४२ । तत्पुरुषः समानाधिकरणः कर्मधारयः ।

तुल्याभिधेयपद स्तत्पुरुषः कर्मधारयसंज्ञः स्यात् । याचकवृन्दारिका । कर्मधारये पुंवत् (६।३।४२) ।

## ४३ । प्रथमानिर्दिष्टं समास उपसर्जनम् ।

समासस्त्रे प्रथमानिर्द्दिष्टमुपसर्जनसंज्ञं स्यात् । यथा पञ्चमी भयेन (२।१।३७) । वृकभयम् । सप्तमी शौण्डैः (२।१।४०) । अक्षशौण्डः ।

## ४४ । एकविभक्ति चापूर्वनिपाते ।

वाक्ये नियतविभक्तिकमुपसर्जनसंज्ञं स्यात् पूर्वनिपातं विना । निर्गतः कौशाम्ब्या निष्कौशाम्बिः । निर्गतं तस्या निष्कौशाम्बिं पश्येत्यादि ।

(क) एकविभक्तावषष्ठ्यन्तवचनमिति कात्यायनः । अर्द्धपिप्पली । उपसर्जनह्रस्वो न भवति ।

---

२९ । उच्चैरुदात्तः । ३० । नीचैरनुदात्तः । ३१ । समाहारः स्वरितः । ३२ । तस्यादित उदात्त मर्धह्रस्वम् । ३३ । एकश्रुति दूरात् सम्बुद्धौ । ३४ । यज्ञकर्मण्यजपन्यूङ्खसामसु । ३५ । उच्चैस्तरां वा वषट्कारः । ३६ । विभाषा च्छन्दसि । ३७ । न सुब्रह्मण्यायां स्वरितस्य तूदात्तः । ३८ । देवब्रह्मणोरनुदात्तः । ३९ । स्वरितात् संहितायामनुदात्तानाम् । ४० । उदात्तस्वरितपरस्य सन्नतरः ।

(18) तथाचोक्तं भाष्ये—"दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" ॥ १ ॥ इति । स्वरतोऽपराधिफलञ्च—पुराकिलेन्द्रेण त्वष्टुः पुत्रे विश्वरूपाख्ये हते कुपित स्त्वष्टा वृत्राख्यमिन्द्रस्य हन्तारं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान् । तत्रेन्द्रशत्रुर्वर्द्धस्वेति मन्त्रे इन्द्रशत्रुशब्दे तत्पुरुषसमासेनान्तोदात्ते प्रयोक्तव्ये प्रमादात् स आद्युदात्तः किल प्रयुक्तः । तेन पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो लब्धः । तत इन्द्र एवास्य पुत्रान्तरस्यापि हिंसकः सम्पन्न इति श्रुतीतिहासपुराणादिषु प्रसिद्धम् । शिक्षायां च पठ्यते "मन्त्रो हीनः स्वरतो वर्णतो वेत्यादि ।

## ४५ । अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।

अर्थवच्छब्दरूपं प्रातिपदिकसुच्यते । वृक्षः । शुक्लः । डित्थः । कुण्डम् । विप्रः । सर्वः । उच्चैः । अर्थवत् किम् ? वनम् । धनम् । नान्तावधेर्मा भूत् । अधातुः किम् ? हन्तेर्लङि अहन् । न लोपो हि स्यात् । अप्रत्ययः किम् ? काण्डे । कुण्डे । त्रपुणी । ह्रस्वो नपुंसक (१।२।४७) इति ह्रस्वः स्यात् ।

(क) निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या । अध्यागच्छति । प्रलम्बते ।

## ४६ । कृत्तद्धितसमासाश्च ।

एते प्रातिपदिकसंज्ञकाः स्युः । कर्त्ता । श्रीः । दाक्षिः । वरणाः । राजपुरुषः । कुम्भकारः । अर्थवत्समुदायानां समासस्यैवेति नियमाद् वाक्यस्य प्रातिपदिकत्वाभावः । राज्ञः पुरुषः ।

## ४७ । ह्रस्वो नपुंसके प्रातिपदिकस्य ।

क्लीबे प्रातिपदिकस्य ह्रस्वः स्यात् । अतिरि । अतिनु । ग्रामणि कुलम् । नेह । रमते कुलम् । काण्डीभूतं कुलम् । तिङव्यययोरलिङ्गत्वात् । नेह । वनाग्रम् । वनायेति । बहिरङ्गत्वाद् दीर्घस्य ।

## ४८ । गोस्त्रियोरुपसर्जनस्य ।

गोशब्दान्तस्य स्त्रीप्रत्ययान्तस्य चोपसर्जनस्य ह्रस्वः स्यात् । चित्रगुः । स्त्री । निष्कौशाम्बिः । अतिखट्वः । उपसर्जनस्य किम् ? राजकुमारी । स्त्रीति स्त्र्यधिकारविहितस्य ग्रहणान्नेह । अतितन्त्रीः । अतिश्रीः । अतिलक्ष्मीः ।

(क) ईयसो बहुव्रीहौ प्रतिषेधः । बहुप्रेयसी राजा कुलं वा । ईयसश्चेति (५।४।१५६) कपो निषेधः । (19)

(19) अत्र भट्टोजि :—"बहुश्रेयसी कुलम् । अत्र नपुंसकह्रस्वत्वं न । ईयसो बहुव्रीहेर्नेति ह्रस्वत्वस्य प्रतिषेधादिति श्रीपतिपुरुषोत्तमविश्वरूपादयः । अन्ये तूपसर्जनह्रस्व एव निषिध्यते । नपुंसकह्रस्वत्वं तु स्यादेव । बहुश्रेयसि बहुश्रेयसिनी इत्याद्याहुः ।"—इति (प्रौढमनोरमा, P. 160, Benares Edition ).

## ४९ । लुक् तद्धितलुकि ।

स्त्रीप्रत्ययस्य लुक् स्यात् तद्धितलुकि सति । पञ्चशष्कुलिः । क्रीतार्थे ठकोऽध्यर्द्धेति (५।१।२८) लुक् । आमलकं फलम् । नित्यं वृद्धेति (४।३।१४४) मयट् । फले लुक् (४।३।१६३) ।

## ५० । इद् गोण्याः ।

तद्धितलुकि सति गोण्या इत् स्यात् । पञ्चगोणिः पटः । योग-विभागात् पञ्चसूचिः ।

## ५१ । लुपि युक्तवद् व्यक्तिवचने ।

लुपि लुबर्थे युक्तवत् प्रकृत्यर्थवद् व्यक्तिवचने लिङ्गसंख्ये स्याताम् । वङ्गस्यापत्यानि बहूनि वङ्गाः । तेषां निवास (४।२।६९) इत्यणो जनपदे लुप् (४।२।८१) । वङ्गा जनपदः । पञ्चालाः । कुरवः । पुण्ड्राः । लुपि किम् ? लवणाल्लुक् (४।४।२४) । लवणः सूपः । लवणा यवागूः । अभिधेयस्यैव लिङ्ग-संख्ये स्याताम् ।

(क) हरीतक्यादिषु व्यक्तिः । न वचनम् । हरीतक्या विकाराः फलानि हरीतक्यः फलानि । विकाराणो हरीतक्यादिभ्यश्चेति (४।३।१६७) लुप् ।

(ख) खलतिकादिषु वचनम् । न व्यक्तिः । खलतिकस्य गिरेरदूरभवानि खलतिकं वनानि । अदूरभवश्चेत्यणो (४।२।७०) वरणादिभ्यश्चेति (४।२।८२) लुप् ।

(ग) समास उत्तरपदस्यैव बहुवचनविषयस्य युक्तवद्भाव इति भाष्यम् । (20) । मथुरा च पञ्चालाश्च मथुरापञ्चालाः । उत्तरपदस्यैवेति किम् ? पञ्चालमथुरे ।

## ५२ । विशेषणानाञ्चाजातेः ।

लुबर्थस्य विशेषणानाञ्च तथा स्यात् । अङ्गाः सम्पन्ना बहुक्षीरघृताः । अजातेः किम् ? वङ्गा जनपदो रमणीयः ।

---

(२०) एतदप्यत्रैव सूत्रे वार्त्तिकरूपेण विन्यस्तस्य वाक्यस्य विवरणम् । वार्त्तिकञ्चैतत् समास उत्तरपदस्य बहुवचनस्य लुप इति ।

(क) मनुष्यलुपि प्रतिषेधः। चञ्चा मनुष्यो दर्शनीयः। चञ्चा दर्शनीयेति मा भूत्। इवे प्रतिकृतौ (५।३।९६) कन्। तस्य लुम् मनुष्य इति (५।३।९८) लुप्।

## ५३। तदशिष्यं संज्ञाप्रमाणत्वात्।

तदिति व्यक्तिवचनलक्षणं न कर्त्तव्यम्। संज्ञाप्रमाणत्वात्। संज्ञाशब्दा एतेऽङ्गा वङ्गा वरणा इति। नानालिङ्गसंख्या एव प्रमाणं यथापो दारा गृहा वर्षाः।

## ५४। लुब् योगाप्रख्यानात्।

जनपदे लुप् (४।२।८१) वरणादिभ्यश्चेति (४।२।८२) लुबप्यशिष्यः। योगस्य सम्बन्धस्यानुपलब्धेः। नहि पञ्चालानां स्वामित्वात् पञ्चाला जनपदः। वृक्षयोगाद्वरणा ग्रामः।

## ५५। योगप्रमाणे च तदभावेऽदर्शनं स्यात्।

यदि हि वृक्षादियोगः प्रमाणं स्यात् तदा वृक्षाद्यभावे वरणपञ्चालादेरप्रयोगः स्याद् यथा दण्डसम्बन्धाभावे दण्डिनः। तस्माद्रूढिरियम्।

## ५६। प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्।

प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः, क्रियाप्रधानमाख्यातं, साधनप्रधानः कृदन्त, उत्तरपदार्थप्रधान स्तत्पुरुष इत्यादि वचनं, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति च पूर्वाचार्य्यपरिभाषितं न वक्तव्यम्। कुतः? अर्थस्य शास्त्रादन्यो लोकस्तत्प्रमाणत्वात्। अनधीतव्याकरणोऽपि राजपुरुषमौपगवञ्चानयेत्युक्तो राजविशिष्टं पुरुषमुपगुविशिष्टञ्चापत्यमानयति।

## ५७। कालोपसर्जने च तुल्यम्।

काल उपसर्जनञ्च न परिभाष्यम्। यतः पूर्वेण तुल्यम्। लोकत एवावगतेरिति प्रत्याख्यानम्। माथुर्यां (21) तु वृत्तावशिष्यग्रहणमापादमनुवर्त्तते।

---

(21) What work is referred to by this माथुरी वृत्ति? In the Rule तेन प्रोक्तम् (4. 3. 101) we have in the काशिका "प्रकर्षेणोक्तं प्रोक्तमित्युच्यते। न तु कृतम्। कृते ग्रन्थे (4. 3. 113) इत्यनेन गतत्वात्। अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः।" माथुरेण means here

### ५८ । जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ।

जात्यर्थे एको बहुवद्वा स्यात् । सम्पन्नो यवः सम्पन्ना यवा वा । एकस्मिन् किम् ? सम्पन्नौ व्रीहियवौ । संख्याप्रयोगे प्रतिषेधः । एको व्रीहिः सम्पन्नः सुभिक्षकरः ।

### ५९ । अस्मदो द्वयोश्च ।

अस्मद एकत्वे द्वित्वे च बहुवचनं वा स्यात् । अहं करोमि वयं कुर्मो वा । आवां कुर्वो वयं कुर्मो वा । व्यवस्थितविभाषया सविशेषणानां प्रतिषेधः । अहं पटुर्ब्रवीमि । आवां पटुतरौ छात्रौ ब्रूवः (22) । युष्मदि गुरावेकेषामिति जयादित्यः । त्वं गुरु यूयं गुरवः ।

### ६० । फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे ।

फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च नक्षत्रे बहुवचनं वा स्यात् । पूर्वे फल्गुन्यौ पूर्वाःफल्गुन्यो वा । पूर्वे प्रोष्ठपदे पूर्वाः प्रोष्ठपदा वा । नक्षत्रे किम् ? फल्गुन्यौ माणविके ।

### ६१ । छन्दसि पुनर्वस्वोरेकवचनम् ।

### ६२ । विशाखयोश्च ।

छन्दःसूत्रद्वयम् ।

### ६३ । तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।

तिष्य एकः पुनर्वसू द्वौ । तेषां नक्षत्रद्वन्द्वे बहुवचने प्राप्ते द्विवचनं विधीयते । उदितौ तिष्यपुनर्वसू । अर्थग्रहणात् सिध्यपुनर्वसू । बहुवचनस्य किम् ? इदं तिष्यपुनर्वसु । एतदेव ज्ञापकं सर्वो द्वन्द्वो विभाषैकवद् भवतीति (23) । उक्तः संख्यातिदेशः ।

---

according to the न्यास and पदमञ्जरी, मथुरायां भवेन । But this one probably is not the माथुरी वृत्ति spoken, of by पुरुषोत्तम ।

(22) कथं वयं तत्त्वान्वेषान् मधुकर हता स्त्वं खलु कृतीति शाकुन्तले, एते वयममी दाराः कन्येयं कुलजीवितमिति कुमारकाव्ये, वयं क्व वर्णाश्रमरक्षणोचिता इति भारवौ, त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता इति भर्तृहरिशतके च ? न च विधेयोऽर्थो विशेषणमित्यतिदेशो भवत्येवेत्याहुः ।

(23) सर्वो द्वन्द्वो विभाषैकवद्भवति is a परिभाषा, numbered 36, in the परिभाषापाठ which

### ६४। सरूपाणामेकशेष एकविभक्तौ।

तुल्यरूपाणामेकोऽवशिष्यते। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः।

सरूपसमुदायाद्धि विभक्ति र्या विधीयते।
एक स्तत्रार्थवान् सिद्धः समुदायस्य वाचकः॥ १॥

रूपग्रहणादर्थभेदेऽपि भवति। व्रीहिश्च माषः। मानञ्च माषः। मूर्खश्च माषः। माषाः। "पादा रश्मग्ङ्घितुर्यांशाः।" एकविभक्तौ किम्? विप्राभ्यां कृतं विप्राभ्यां देहि।

(क) समानार्थानाञ्च भिन्नरूपाणां क्वचिदेकशेषो वक्तव्यः। वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डौ वा।

### ६५। वृद्धो यूना तल्लक्षणश्चेदेव विशेषः।

यूना सह वचने वृद्धःशिष्यते। युवा निवर्त्तते। वृद्धयुवप्रत्ययलक्षण एव चेद्विशेषः। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। नेह। गार्ग्यवात्स्यायनौ। अपत्यमन्तर्हितं वृद्धमुच्यते (24)।

### ६६। स्त्री पुंवच्च।

यूना सह वचने वृद्धा स्त्री शिष्यते पुंवच्च स्त्र्यर्थःस्यात्। गार्गी च गार्ग्यायणश्च गार्ग्यौ। दाक्षी च दाक्षायणश्च दाक्षी। वात्सी च वात्स्यायनश्च वात्स्यौ। नेह। गार्गीवात्स्यायनौ। दाक्षीवात्स्यायनौ।

### ६७। पुमान् स्त्रिया।

स्त्रिया सहोक्तौ पुमान् शिष्यते। देवश्च देवी च देवौ। असुरौ।

---

contains all such *Paribhashas* or Sutras composed by the Ante-Panini Grammarians. Only those of them which have been applied to and accepted by the भाष्यकार, are now taken as authoritative by the Grammarians of the Panini School. The Paribhashas are explained by सीरदेव in his परिभाषावृत्ति, पुरुषोत्तम in his ललितपरिभाषा ( वा परिभाषावृत्ति ) and नागोजिभट्ट in his परिभाषेन्दुशेखर।

(24) अपत्यमन्तर्हितं वृद्धम् is a Sutra of the ante-Panini Grammarians. The word वृद्ध here is what is meant in the अष्टाध्यायी by the term गोत्र, that is, पौत्रप्रभृति अपत्यम्, viz:—अपत्यं पौत्रप्रभृति गोत्रम् (४।१।१६२)।

ब्राह्मणी। कुक्कुटी। मयूरी। गौरयं गौरियमितौ गावौ। शिवश्च शिवा च शिवौ। "कथयति शिवयोः शरीरयोगम्"। तल्लक्षणश्चेदित्येव। कुक्कुटमयूर्य्यौ।

### ६८। भ्रातृपुत्रौ स्वसृदुहितृभ्याम्।

स्वस्रा भ्राता दुहित्रा पुत्रश्च शिष्यते। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

### ६९। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्।

अनपुंसकैश्च सहोक्तौ नपुंसकं शिष्यते। एकवच्चास्य वा स्याल्लिङ्गलक्षण एव चेद्विशेषः। शुक्लः प्रावारः शुक्ला शाटी शुक्लं वस्त्रं तदिदं शुक्लं तानीमानि शुक्लानि वा। अनपुंसकेन किम्? शुक्लञ्च शुक्लञ्च शुक्लञ्च शुक्लानि। एकवन्न भवति।

### ७०। पिता मात्रा।

### ७१। श्वशुरः श्वश्र्वाः।

मातृश्वश्रूभ्यां सहोक्तौ पितृश्वशुरौ वा शिष्येते। "जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ"। मातापितरौ च। श्वशुरौ श्वश्रूश्वशुरौ च।

### ७२। त्यदादीनि सर्वैर्नित्यम्।

सर्वैरिति त्यदादिभिरन्यैश्च सहोक्तौ त्यदादीनि शिष्यन्ते। स च देवदत्तश्च तौ। यश्च विप्रश्च यौ। त्यदादीनाञ्च यद् यत् परं तत् तच्छिष्यत इत्येके। स च यश्च यौ। यश्च कश्च कौ। स च त्वञ्च युवाम्। स च त्वञ्चाहञ्च वयम्।

### ७३। ग्राम्यपशुसंघेष्वतरुणेषु स्त्री।

ग्राम्याणामतरुणपशूनां सङ्घेषु सहोक्तौ स्त्री शिष्यते। गाव इमाः। अजा इमाः। संघेषु किम्? एतौ गावौ। अतरुणेषु किम्? वत्सा इमे। अनेकशफेष्वभिधानान्नेह। अश्वा इमे। गर्द्दभा इमे।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ प्रथमाध्यायस्य द्वितीयः पादः॥ १।२॥ समाप्तश्च कुटापादः।

---

अथ

श्रीपुरुषोत्तमदेवकृता

# भाषावृत्तिः।

---

## प्रथमोऽध्यायः। तृतीयः पादः।

### १। भूवादयो धातवः।

भूवादयो धातुसंज्ञकाः स्युः। भू। भवति। एधँ। एधते।

### २। उपदेशेऽजनुनासिक इत्।

उपदिश्यत इत्युपदेशो धात्वादिः (25)। तत्रानुनासिकविशिष्टोऽजित्-संज्ञकः स्यात्। एधँ। स्पर्द्धँ। प्रतिज्ञानुनासिक्याः पाणिनीयाः। तेनेहापि स्यात्। रगिँ। लगिँ।

(क) इर उपसंख्यानं कर्त्तव्यम्। भिदिर्। अभिदत्। इरितो वेति (३।१।५७) च्लेरङ्।

### ३। हलन्त्यम्।

उपदेशेऽन्त्यं हलित्संज्ञं स्यात्। अइउण्। डुकृञ्। नदट्। सन्। पुक्। अनङ्।

### ४। न विभक्तौ तुस्माः।

विभक्तेस्तवर्गसकारमकारा इत्संज्ञा न स्युः। वृक्षात्। पचेरन्। यस्मिन्। पचतः। अपचम्।

### ५। आदिर्ञिटुडवः।

इदित्येव। आदिभूता ञिटुडुकारा इत्संज्ञकाः स्युः। ञिमिदा मिन्नः। टुनदि नन्दथुः। डुपचँष् पक्त्रिमम्।

---

(25) धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्। आगमाः प्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः॥ १॥ इत्याद्यः। अत्र वाक्यं वार्त्तिकमित्यर्थः। लिङ्गानुशासनस्य तु प्रकृतेऽनुपयोगः।—मतान्तरे शास्त्रवाक्यानि उपदेशः। आर्षं वाक्यं वा। वस्तुतस्तूपदेशो धातुपाठप्रातिपदिकपाठौ सूत्रवार्त्तिके च। एतै र्हि शब्दा उपदिश्यन्ते।

## ६ । षः प्रत्ययस्य ।

प्रत्ययस्यादिः षकार इत्संज्ञकः स्यात् । ष्वुन् । नर्त्तकी । खनकी । रजकी ।

## ७ । चुटू ।

चवर्गटवर्गौ प्रत्ययस्यादिभूतावित्संज्ञकौ स्याताम् । च्फञ् । कौञ्जायन्यः । जस् । ब्राह्मणाः । झ्यः । वृत्ताः । ञ्यः । शाण्डिक्यः । टः । कुरुचरी । डः । उपसरजः । अनाम्नः ( ४।४।८५ ) । आन्नः । कथं केशचुञ्चुः केशचणः ? चित्कार्य्याभावात् (26) । यादी चुञ्चुप्चणपौ लुप्तनिर्दिष्टयकाराविति (27) भाष्यम् ।

## ८ । लशक्वतद्धिते ।

लकारशकारकवर्गास्तद्धितवर्जिताः प्रत्ययस्यादिभूता इत्संज्ञकाः स्युः । ल्यप् । विजित्य । ल्युट् । चयनम् । शप् । भवति । क्तः । भूतम् । खच् । प्रियंवदः । घुरच् । भासुरम् । भङ्गुरम् । ङे । पटवे । अतद्धिते किम् ? अवेः कः ( ५।४।२८ ) । अविकः ।

## ९ । तस्य लोपः ।

यस्येत्संज्ञा विहिता तस्य लोपः स्यात् । तथैवोदाहृतम् ।

## १० । यथासंख्यमनुदेशः समानाम् ।

समानां समसंख्यानामुद्देशिनामनुदेशिनाञ्चानुक्रमेणानुदेशः स्यात् । नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ( ३।१।१३४ ) । नन्दनः । ग्राही । पचः ।

---

(26) एतद्धि प्रयोजनाभावान्नेत्संज्ञेति व्यवस्थया । न हि प्रयोजनाभावे कस्यापीत्संज्ञा भवति । इदर्थाभावात् सिद्धमिति ( १।३।३, वा ) वार्त्तिककारवचनात् । There is a वार्त्तिक in 1. 3. 3 and again in 1. 3. 7 ( viz :—इदर्थाभावात् सिद्धम् ) by which कात्यायन prohibits the इत्संज्ञा of a letter if its elision do not serve any object and be thus unnecessary.

(27) पूर्वं निर्दिष्टः पश्चाल्लुप्त इति कर्म्मधारयः । राजदन्तादित्वाद् पूर्वकालवाचिनः (२।२।३१) परनिपातः । लुप्तोऽयमिति ज्ञातौ लुप्तनिर्दिष्ट इत्यर्थः । ततो यकार इत्यनेन बहुव्रीहिः । लोपो व्योर्वली-(६।१।६६) त्यनेन यकारस्य लोपः ।

### ११। स्वरितेनाधिकारः।

स्वरितो नाम वर्णधर्मः (28) कश्चित्। तेन चिह्नेनाधिकारो ज्ञेयः। यथाऽऽत्मनेपदम् (१।३।१२)। प्रत्ययः (३।१।१)। अङ्गस्य (६।४।१)।

### १२। अनुदात्तङित आत्मनेपदम्।

अनुदात्तेतो धातोर्ङितश्चात्मनेपदं स्यात्। आस्ते। वर्द्धते। ङितः। प्लवते। शेते। हंसायते। प्लवमानः। पवमानः। शयानः। उपदेश इत्येव। ङित्त्वातिदेशे मा भूत्। उच्चुकुटिषति।

### १३। भावकर्मणोः।

सर्वधातुभ्यो भावे कर्मणि चात्मनेपदं स्यात्। भावे। स्थीयते त्वया। विस्मीयते मया। कर्मणि। क्रियते कटः।

### १४। कर्त्तरि कर्मव्यतिहारे।

क्रियाविनिमये धातोरात्मनेपदं स्यात् कर्त्तरि। व्यतिभवते श्रीः पद्मानाम्। व्यतिभवमानाः पुरुषाः। व्यतिलुनते वीराः। (29)

### १५। न गतिहिंसार्थेभ्यः।

एभ्यः क्रियाविनिमये धातोर्नास्ति तत्। व्यतिगच्छन्ति। व्यतिहिंसन्ति।

(क) हसादीनाञ्च। व्यतिहसन्ति। व्यतिजल्पेयुः। कर्त्तरीत्येव। व्यतिगम्यन्ते ग्रामाः।

(ख) हरतेरप्रतिषेधः। संप्रहरन्ते योधाः।

### १६। इतरेतरान्योन्योपपदाच्च।

आभ्यां युक्ताद् धातोर्नास्ति तत्। इतरेतरस्य व्यतिलुनन्ति। अन्योन्यस्य व्यतिपिबन्ति जलम्। चकारात् परस्परस्य व्यतिलुनन्ति।

---

(28) "नतु तस्य प्रयोगोऽस्ति। केवलमनुवर्त्तमानस्य पथिकस्येव वर्त्म दर्शयित्वा उदास्ते"—इति भाषावृत्त्यर्थविवृतौ सृष्टिधरः। स्वरितो नाम स्वरदोषो ध्वनिविशेष इति कश्चित्। तत्र स्वरभेद इत्यर्थः। दोषा स्त्री रजनिःप्रोक्ता भेददूषणयोः पुमानिति विश्वः। मतान्तरे उच्चारणदोष इत्यर्थः। अत्र नागोजिभट्टः—"स्वरितत्वञ्चेदं दोषविशेषरूपमज्झलसाधारणम्। स्वररूपमधिक्रियमाणपदघटकान्निष्ठं वा। तच्चानुनासिक्यवत् प्रतिज्ञागम्यम्"। इति। (29) विरोधाधिक्येनान्योन्यं छिन्दन्तीत्यर्थः।

१७ । नेर्विशः ।

निपूर्वाद् विशतेरात्मनेपदं स्यात् । निविशते । कथं मधुनि विशन्ति भ्रमराः ? लाक्षणिकत्वात् ।

१८ । परिव्यवेभ्यः क्रियः ।

एभ्यः क्रियस्तत् स्यात् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

१९ । विपराभ्याञ्जेः ।

आभ्याञ्जे स्तत् स्यात् । विजयते । पराजयते ।

२० । आङो दोऽनास्यविहरणे ।

आङो दाञ स्तत् स्यात् । आदत्ते धनम् । अनास्यविहरणे किम् ? व्याददाति मुखम् । कथं "किं व्याददत्से विहग वदनम्" ? कर्त्त्रभिप्राये भविष्यति ।

२१ । क्रीडोऽनुसंपरिभ्यश्च ।

एभ्य आङश्च क्रीड़ते स्तत् स्यात् । अनुक्रीड़ते । संक्रीड़ते । परिक्रीड़ते । आक्रीड़ते ।

(क) समोऽकूजनेऽभिधानान्नेह । संक्रीड़न्ति रथाः ।

(ख) आगमेः क्षमायामात्मनेपदम् । आगमयस्व तावन्माणवक । मा त्वरिष्ठा इत्यर्थः ।

(ग) शिक्षे र्जिज्ञासायाम् । कलासु शिक्षते । विद्यासु शिक्षते । शकेः सनि रूपम् ।

(घ) आशिष्येव नाथः । सर्पिषो नाथते वृद्धः ।

(ङ) हरते र्गतताच्छील्ये । गतविधप्रकारा स्तुल्यार्था इति भर्त्तृहरिः (30) । सादृश्यशीलने हृञ स्तत् स्यात् । जलधिमनुहरते सरः । पैतृकमश्वा अनुहरन्ते । गतिताच्छील्य इति तु न्यासः ।

(च) किरते र्हर्षजीविकाकुलायकरणेषु । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वाऽऽश्रयार्थी ।

---

(३०) भागवृत्तिग्रन्थस्य रचयिता ।

(ञ) आङि नुप्रच्छ्योः । आनुते शिवा । आक्रोशतीत्यर्थः । आपृच्छते । "आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम्" ।

(ज) शप उपलम्भने । प्रियायै शपते कामुकः ।

## २२ । समवप्रविभ्यः स्थः ।

एभ्यस्तिष्ठते स्तत् स्यात् । सन्तिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठमानः ।

(क) आङः स्थःप्रतिज्ञाने । वस्तु क्षणिकमातिष्ठन्ते बौद्धाः ।

## २३ । प्रकाशनस्थेयाख्ययोश्च ।

अत्र स्थ स्तत् स्यात् । धनिभ्यस्तिष्ठते वेश्या । स्वं प्रकाशयतीत्यर्थः । नृपतौ तिष्ठते जनः । तं स्थेयं करोतीत्यर्थः ।

## २४ । उदोऽनूर्द्ध्वकर्मणि ।

उदस्थ स्तत् स्यादनूर्द्ध्वचेष्टायाम् । स्वार्थेषूत्तिष्ठते । मुक्तावुत्तिष्ठते जनः । तत्रोत्सहत इत्यर्थः । अनूर्द्ध्वग्रहणं किम् ? "जवेन पीठादुदतिष्ठदच्युतः ।"

## २५ । उपान्मन्त्रकरणे ।

उपात् स्थ स्तत् स्यान् मन्त्रश्चेत् करणम् । गायत्र्या सूर्य्यमुपतिष्ठते ब्राह्मणः ।

(क) उपाद्देवपूजासङ्गतकरणमित्रकरणपथिष्विति वक्तव्यम् । विप्रोऽर्कमुपतिष्ठते । गङ्गा समुद्रमुपतिष्ठते । राजा राजानमुपतिष्ठते । अयं पन्थाः कपित्थीमुपतिष्ठते ।

(ख) वा लिप्सायाम् । अर्थी दातारमुपतिष्ठते उपतिष्ठति वा ।

## २६ । अकर्मकाच्च ।

उपात् स्थ स्तत् स्यात् । यावद्भोजनमुपतिष्ठते । अकर्मकाद् विधिश्चतुःसूत्राम् ।

## २७ । उद्विभ्यां तपः ।

आभ्यां तपस्तत् स्यात् । उत्तपते वितपते रविः । अकर्मकादित्येव । उत्तपति सुवर्णं सुवर्णकारः । (क) स्वाङ्गकर्मकाच्च । वितपते स्वं पृष्ठम् ।

## २८ । आङो यमहनः ।

तत् स्यात् । आयच्छते । व्यायच्छमानः । आहते । स्वाङ्गकर्मकाच्च । आहते स्वं वक्षः ।

## २९ । समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः (31) ।

संपूर्वाद् गमादे स्तत् स्यात् । सङ्गच्छते । सञ्जग्मे । समृच्छते । समृच्छिष्यते । संपृच्छते । संस्वरते । ऋट । समृच्छते । समियृते । संशृणुते । विद ज्ञाने । संवित्ते । अकर्मकादित्येव । वादं सङ्गच्छति ।

(क) दृशेश्चेति वक्तव्यम् । सम्पश्यते ।

## ३० । निसमुपविभ्यो ह्वः ।

एभ्यो ह्वेञ स्तत् स्यात् । निह्वयते त्वाम् । संह्वयते सखीम् । उपह्वयते । विह्वयते ।

(क) उपसर्गादस्यत्यूह्यो र्वावचनम् । निरस्यति निरस्यते । समूहन् समूहमानः ।

## ३१ । स्पर्द्धायामाङः ।

आङो ह्वेञ स्तत् स्यात् स्पर्द्धा चेत् । मल्लो मल्ल माह्वयते ।

## ३२ । गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ।

एष्वर्थेषु कृञ स्तत् स्यात् । हिंसासूचनं गन्धनम् । उदाकुरुते । भर्त्सनमवक्षेपणम् । उत्कुरुते शत्रून् । सेवने नृपं प्रकुरुते । साहसे परस्त्रीं

---

(31) The real Sutra here is समो गम्यृच्छिभ्याम् and there are three *Vartikas* attached to it ; viz :—(क) समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् । (ख) अर्त्तिश्रुदृशिभ्यश्च and (ग) उपसर्गादस्यत्यूह्यो र्वावचनम् । But जयादित्य interpolated the rule with the *Vartikas* as stated in the Text. The other Buddhist grammarians ( न्यासकार, मैत्रेयरक्षित, पुरुषोत्तमदेव &c ) too followed जयादित्य । समो गम्यृच्छिभ्यामित्येतावानेवार्षः पाठः । अङ्गानामपि पारायणे धर्म इति त्वनाद्रियमाणैः स च वार्त्तिकप्रक्षेपादिना सौगतैर्विकृतः । वेदबाह्यत्वेन तेषां निरङ्कुशत्वात् । पारायणभङ्गाद् धर्महानिभयमिव पाठस्यार्षत्वं सम्प्रदायानुगतत्वादिकमपि न तैः परिगणितम् । एवमन्यत्रापि सूत्रभङ्गे बोद्धव्यम् ।

प्रकुरुते। धर्माद्युपयोगे शतं प्रकुरुते। प्रतियत्ने षष्ठी सुट् च। गुणानामुपस्कुरुते। प्रकथने सहस्रं प्रकुरुते।

३३। अधेः प्रसहने।

प्रसहनमभिभवः। उपेक्षा वा। तत्राधेः कृञ स्तत् स्यात्। तमधिचक्रे। "भवादृशाश्चेदधिकुर्वते रतिम्"।

३४। वेः शब्दकर्मणः।

वेः कृञः शब्दकर्मकात् तत् स्यात्। क्रोष्टा विकुरुते स्वरान्।

३५। अकर्मकाच्च।

अकर्मकाद्वेः कृञ स्तत् स्यात्। विकुर्वतेच्छात्राः। यथेष्टं चेष्टन्त इत्यर्थः।

३६। सम्माननोत्सञ्जनाचार्य्यकरणज्ञानभृतिविगणनव्ययेषु नियः।

एष्वर्थेषु विशेषणेषु नीञस्तत् स्यात्। शास्त्रार्थं नयते। उपपत्तिभिः सम्मानयति। वालकमुपनयते। उत्सञ्जयत्युत्क्षिपति। शिष्यमुपनयते। आत्मवदाचार्य्यीकरोति। नयतेऽर्थान् धीरः। ज्ञानविषयीकरोति। कर्मकरानुपनयते। भृत्या समीपीकरोति। विगणनमृणादिपरिशोधनम्। मद्राः कारं विनयन्ते। व्यये। शतं विनयते धर्मादौ।

३७। कर्त्तृस्थे चाशरीरे कर्मणि।

अशरीरे कर्मणि सति नीञस्तत् स्यात्। क्रोधं विनयते। मन्युं विनयते। कर्त्तृस्थे किम्? गुरोः कोपं विनयति। अशरीरे किम्? गडुं विनयति। मण्डूकप्लुत्या वेदितव्येव। क्रोधं समुन्नयति। "अपनय मानिनि मानम्"।

३८। वृत्तिसर्गतायनेषु क्रमः।

अप्रतिघातोत्साहस्फीतत्वेषु क्रमे स्तत् स्यात्। मन्त्रेऽस्य क्रमते बुद्धिः। युद्धाय क्रमते भटः। प्राज्ञे शास्त्राणि क्रमन्ते।

३९। उपपराभ्याम्।

आभ्यामेवोपसृष्टात् क्रमेरनन्तरसूत्रेणात्मनेपदं स्यात्। मन्त्रेऽस्योपक्रमते बुद्धिः। युद्धाय पराक्रमते भट इत्यादि।

४० । आङ उद्गमने ।

आङः क्रमे स्तत् स्यात् । आक्रमते भानुः । ज्योतिरुद्गमनेऽभिधाना-न्नेह । आक्रामति धूमो हर्म्यतलम् । उद्गमने किम् ? आक्रामति गिरिं रविः । अवष्टभ्नातीत्यर्थः ।

४१ । वेः पादविहरणे ।

वेः क्रमेः पादविक्षेपे तत् स्यात् । सुष्ठु विक्रमतेऽश्वः ।

४२ । प्रोपाभ्यां समर्थाभ्याम् ।

आदिकर्मणि समर्थाभ्यां प्रोपाभ्यां क्रमे स्तत् स्यात् । प्रक्रमते भोक्तुम् । उपक्रमते श्रोतुम् ।

४३ । अनुपसर्गाद्वा ।

अप्रादेः क्रमेस्तद् वा स्यात् । क्रमते क्रामति वा ।

४४ । अपह्नवे ज्ञः ।

निह्नुतौ जानातेस्तत् स्यात् । शतमपजानीते ।

४५ । अकर्मकाच्च ।

ज्ञोऽकर्मकात् तत् स्यात् । सर्पिषो जानीते । करणे षष्ठी ।

४६ । संप्रतिभ्यामनाध्याने ।

आभ्यां ज्ञस्तत् स्यात् । गां सञ्जानीते । कन्यां दातुं प्रतिजानीते । अनाध्याने किम् ? स्मृतौ मा भूत् । मातुः संजानाति । स्मरतीत्यर्थः ।

४७ । भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ।

एष्वर्थेषु विशेषणेषु वदेस्तत् स्यात् । भासनं शोभा । वदते चार्वी लोकायते । वदमानः । उपसम्भाषोपसान्त्वनम् । बालकमुपवदते । ज्ञाने । अयमेको वदते । यत्ने । गेहे वदते । विविधमतौ । क्षेत्रे विवदन्ते कृषकाः । उपमन्त्रणं रहः पृच्छा । परस्त्रीमुपवदते ।

४८ । व्यक्तवाचां समुच्चारणे ।

मनुष्याणां सहोक्तौ वदेस्तत् स्यात् । सम्प्रवदन्ते विप्राः । व्यक्तवाचामिति

किम्? "वरतनु संप्रवदन्ति कुक्कुटाः"। सह्योक्तौ किम्? क्रमेण वदन्ति च्छात्राः।

४९। अनोरकर्मकात्।

अनोर्वदेस्तत् स्यात्। अनुवदते कठः कलापस्य। तद्वद्वदतीत्यर्थः। अकर्मकात् किम्? पूर्वोक्तमनुवदति।

५०। विभाषा विप्रलापे।

विप्रलापात्मके सह्योच्चारणे वदेस्तद् वा स्यात्। विप्रवदन्ते गणका विप्रवदन्ति वा। सह्योक्तौ किम्? क्रमेण वदन्ति च्छात्राः।

५१। अवाद् ग्रः।

अवाद् गिरतेस्तत् स्यात्। अवगिरते मांसम्। अवगिरन्ते माषम्।

५२। समः प्रतिज्ञाने।

सङ्गिरतेः प्रतिज्ञानार्थात् तत् स्यात्। कार्य्यं शब्दं संगिरते।

५३। उदश्चरः सकर्मकात्।

उच्चरतेस्तत् स्यात्। घनानुच्चरते रजः। उत्क्रम्य गच्छतीत्यर्थः। सकर्मकात् किम्? शङ्खध्वनिरुदचरत्। नाद उच्चरति।

५४। समस्तृतीयायुक्तात्।

तृतीयान्तेन योगे सञ्चरतेस्तत् स्यात्। रथेन सञ्चरते विद्याधरः।

५५। दाणश्च सा चेच्चतुर्थ्यर्थे।

अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया वाच्या। तद्युक्तात् सम्प्रदाणस्तत् स्यात्। दास्या मालां संप्रयच्छते कामुकः। दास्यै मालां ददातीत्यर्थः।

५६। उपाद् यमः स्वकरणे।

उपपूर्वाद् यमेः स्वीकारे तत् स्यात्। कन्यामुपयच्छते। "उपायंसत महास्त्राणि।" "उपायंसत नासवम्"। न स्वीचक्रुरित्यर्थः।

## ५७ । ज्ञाश्रुस्मृदृशां सनः ।

सन्नन्तानामेषां तत् स्यात् । धर्मं जिज्ञासते । गुरुं शुश्रूषते । सुस्मूर्षते । दिदृक्षते ।

## ५८ । नानोर्ज्ञः ।

अनोर्ज्ञस्तन् नास्ति । पुत्रमनुजिज्ञासति ।

## ५९ । प्रत्याङ्भ्यां श्रुवः ।

सन्नन्तादाभ्यां श्रुवस्तन् नास्ति । प्रतिशुश्रूषति । आशुश्रूषति ।

## ६० । शदेः शितः ।

शदेः शिन्निमित्तादात्मनेपदं स्यात् । शीयते । शितः किम् ? शत्स्यति ।

## ६१ । म्रियतेर्लुङ्लिङोश्च ।

लुङ्लिङोरेव म्रियतेः शितश्च तत् स्यात् । अमृत । मृषीष्ट । म्रियते । नियमः किम् ? मरिष्यति । ममार । कर्त्तरि नियमान् "मम्रे पतङ्गवद्वीरैः ।"

## ६२ । पूर्ववत् सनः ।

असन्नन्तवत् सन्नन्तादात्मनेपदं स्यात् । आस्ते आसिसिषते । विजयते विजिगीषते । पचति पचते पिपक्षति पिपक्षते ।

## ६३ । आमप्रत्ययवत् कृञोऽनुप्रयोगस्य ।

आम्प्रत्ययान्तधातुवदनुप्रयुक्तस्य कृञ स्तत् स्यात् । ईक्षते ईक्षाञ्चक्रे ।

## ६४ । प्रोपाभ्यां युजेरयज्ञपात्रेषु ।

प्रोपाभ्यां युजि स्तत् स्यात् । प्रयुङ्क्ते । उपयुङ्क्ते । नेह । यज्ञपात्राणि प्रयुनक्ति धीरः ।

(क) स्वराद्यन्तोपसृष्टाद् युजेरिति वक्तव्यम् । उद्युङ्क्ते । नियुङ्क्ते । उपयुङ्क्ते । कथं केवलात् "प्रजासु वृत्तिं यमयुङ्क्त वेदितु"मिति ? कर्त्रभिप्राये भविष्यति । (32)

---

(32) स्वराद्यन्तोपसृष्टात् किम् ? निर्युनक्ति । संयुनक्ति । दुर्युनक्ति ।

## ६५ । समः क्ष्णुवः ।

संक्ष्णौते स्तत् स्यात् । संक्ष्णुते शस्त्रम् ।

## ६६ । भुजोऽनवने ।

तत् स्यात् । भुङ्क्ते । भुञ्जाते । अनवने किम् ? भुनक्ति राजा पृथ्वीं । पालयतीत्यर्थः । भुजो भक्ष इति नोक्तम् । अनुभवेऽपि यथा स्यात् । सुखमनुभुङ्क्ते ।

## ६७ । णेरणौ यत् कर्म णौ चेत् स कर्त्ताऽनाध्याने ।

अकर्त्रभिप्रायार्थोऽयमारम्भः । ण्यन्तादात्मनेपदं स्यादण्यन्ते यत् कर्म णौ चेत् स कर्त्ता भवति । आरोहति करेणुं निषादी । "करेणुरारोहयते निषादिनम्" । पश्यन्ति भृत्या नृपम् । दर्शयते भृत्यान्नृपः । अनाध्याने किम् ? स्मृतौ मा भूत् । स्मरति वनगुल्मं कोकिलः । स्मरयत्येनं वनगुल्मः स्वयमेव ।

## ६८ । भीस्म्योर्हेतुभये ।

ण्यन्तयो र्भीस्मिङो स्तत् स्यात् । मुण्डो भीषयते । जटिलो विस्मापयते । हेतुभये किम् ? काष्ठिकया भाययति । करणादत्र भयम् ।

## ६९ । गृधिवञ्च्योः प्रलम्भने ।

ण्यन्तयोर्गृधिवञ्च्योर्विसंवादने तत् स्यात् । शिशुं गर्द्धयते । शिशुं वञ्चयते । प्रलम्भने किम् ? अहिं वञ्चयति बालः ।

## ७० । लियः सम्माननशालीनीकरणयोश्च ।

लियो ण्यन्तात् पूजापरिभवयोः प्रलम्भने च तथा स्यात् । जटाभिरालापयते । श्येनो वर्त्तिकामुल्लापयते । शिशुमुल्लापयते । अन्यत्र कन्यामुल्लापयति ।

## ७१ । मिथ्योपपदात् कृञोऽभ्यासे ।

ण्यन्तात् कृञ स्तत् स्यात् । अभ्यासे पुनःपुनरावृत्तौ । पदं मिथ्या कारयते ।

## ७२ । स्वरितञितः कर्त्रभिप्राये क्रियाफले ।

स्वरितेतो धातोर्ञितश्चात्मनेपदं स्यात् कर्त्तारञ्चेत् क्रियाफलमभिप्रैति । पचते । यजते । ञितः । कुरुते । कण्डूयते । कर्त्रभिप्राये किम् ? परार्थे

मा भूत् । पचति । करोति । यजति । कथं परार्थे विक्रीणीते प्रयुङ्क्त इत्यादि ? डुक्रीञ्दाञ्ह्वेञ्क्रञ्हञ्नीञ्युजां विशेषविधानात् ।

७३ । अपाद्वदः ।

तत् स्यात् । धान्यार्थी न्यायमपवदते । धनार्थी न्यायमपवदते ।

७४ । णिचश्च ।

णिजन्तात् तथा स्यात् । कारयते । पाचयते । परार्थे कारयति । पाचयति ।

७५ । समुदाङ्भ्यो यमोऽग्रन्थे ।

एभ्यो यमस्तत् स्यात् । इन्द्रियाणि संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । आयंस्त पादम् । अग्रन्थविषये किम् ? चिकित्सा मुद्यच्छति वैद्यः ।

७६ । अनुपसर्गाज्ज्ञः ।

तथैव स्यात् । गां जानीते । परार्थे गां जानाति । कथं सर्पिषो जानीत इति ? अकर्मकाच्चेति (१।३।४५) परार्थे विधानात् ।

७७ । विभाषोपपदेन प्रतीयमाने ।

समीपपदावगते कर्त्रभिप्राये तद् वा स्यात् । स्वं कटं कुरुते करोति वा । एवं पञ्चसूत्रामुन्नेयम् । उक्तं कर्त्रभिप्राये । अथ परस्मैपदमेकादशभिः सूत्रैः ।

७८ । शेषात् कर्त्तरि परस्मैपदम् ।

आत्मनेपदहीनाद् धातोः कर्त्तरि परस्मैपदं स्यात् । याति । वाति । प्रविशति । शेषात् किम् ? रोचते ।

७९ । अनुपराभ्यां कृञः ।

एभ्यः कृञः स्वार्थेऽपि परस्मैपदं स्यात् । अनुकरोति । पराकरोति ।

८० । अभिप्रत्यतिभ्यः क्षिपः ।

एभ्यः क्षिपस्तत् स्यात् । अभिक्षिपति । प्रतिक्षिपति । अतिक्षिपति ।

८१ । प्राद्वहः ।

प्रवहतेस्तथा स्यात् । प्रवहति ।

८२ । परेर्मृषः ।

तत् स्यात् । परिमृष्यति ।

८३ । व्याङ्परिभ्यो रमः ।

एभ्यो रमेस्तत् स्यात् । विरमति । व्यरंसीत् । आरमति । परिरमति । एभ्यः किम् ? अभिरमते ।

८४ । उपाच्च ।

उपाद्रमेस्तत् स्यात् । देवदत्तमुपरमति । ण्यर्थोऽत्र गम्यते ।

८५ । विभाषाऽकर्मकात् ।

अकर्मकादुपरमतेस्तद्वा स्यात् । भोजनादुपरमति उपरमते वा । अथ णिचश्चेति (१।३।७४) प्राप्ते बाधकत्रयमाह ।

८६ । बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।

बुधादेर्ण्यन्तात् परस्मैपदं स्यात् । बोधयति पद्मम् । योधयति काष्ठम् । नाशयति पापम् । जनयति सुखम् । अध्यापयति शिष्यम् । प्रावयत्यर्थान् धीरः । द्रावयति लौहम् । स्रावयति कुण्डीम् ।

८७ । निगरणचलनार्थेभ्यश्च ।

भक्षणकम्पनार्थेभ्यो ण्यन्तेभ्यस्तत् स्यात् । आशयति । भोजयति । चलयति । कम्पयति शाखां वातः ।

(क) अदेः प्रतिषेधः । आदयतेऽन्नं पुत्रेण पिता ।

८८ । अणावकर्मकाच्चित्तवत्कर्त्तृकात् ।

अण्यन्ते यो धातुरकर्मकश्चित्तवत्कर्त्तृकश्च ततो ण्यन्तात् परस्मैपदं स्यात् । आस्ते विप्रः । आसयति विप्रम् । शाययति मित्रम् । चित्तवत्कर्त्तृकात् किम् ? शोषयते व्रीहीनातपः । कर्त्तरीत्येव । शाय्यते विप्रो भवता ।

## ८९ । न पादम्याङ्यमाङ्यसपरिमुहरुचिन्ृतिवदवसः ।

एषामनन्तरसूत्राभ्यां परस्मैपदं नास्ति । ततस्तङानावेव स्याताम् । पाययते घृतम् । दमयते शत्रून् । आयामयते । आयासयते । आयासयमानः । परिमोहयते । रोचयते । नर्त्तयते । वादयते । वासयते । अकर्त्रभिप्राये तु दमयति गजम् । नर्त्तयति भुजम् । भिक्षा वासयति ।

(क) धेट उपसंख्यानं कर्त्तव्यम् । धापयते शिशुम् ।

## ९० । वा क्यषः ।

क्यषन्तादात्मनेपदं वा स्यात् । लोहितायति लोहितायते वा ।

## ९१ । द्युद्भ्यो लुङि ।

द्युतादेर्लुङ्यात्मनेपदं वा स्यात् । व्यद्युतद् व्यद्योतिष्ट वा । द्युतादयो द्वाविंशतिः ।

## ९२ । वृद्भ्यः स्यसनोः ।

वृतुवृधुशृधुस्यन्दूभ्यः स्ये सनि च तद्वा स्यात् । वर्त्स्यति वर्तिष्यते वा । अवर्त्स्यत् अवर्त्तिष्यत वा । विवृत्सति विवर्त्तिषते वा ।

## ९३ । लुटि च कॢपः ।

कॢपेर्लुटि स्यसनोश्च तद्वा स्यात् । कल्प्तासि कल्पितासे वा । कल्प्स्यति कल्पिष्यते वा । अकल्प्स्यत् । अकल्पिष्यत वा । चिकॢप्सति चिकल्पिषते वा ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

प्रथमाध्यायस्य तृतीयः पादः ॥१।३॥

समाप्तश्च भूपादः ।

---

अथ

# भाषावृत्तिः ।

## प्रथमाध्यायस्य चतुर्थः पादः ।

### १ । आ कडारादेका संज्ञा ।

कडाराः कर्मधारय (२।२।३८) इत्यतः प्रागेकैव संज्ञा बोद्धव्या । सा च क्वचिदनवकाशा यथा भसंज्ञा राजभ्यामित्यादौ सावकाशां पदसंज्ञां बाधते राज्ञा राज्ञे । क्वचित् परा यथा बहुव्रीहिसंज्ञा तत्पुरुषसंज्ञां बाधते वीरपुरुषको ग्राम इति । इहाङ्गसंज्ञया भपदसंज्ञयोः समावेशो वक्तव्यः । तेन बाभ्रव्य इत्यङ्गत्वादादिवृद्धिः । भत्वादोर्गुणः (६।४।१४६) । धानुष्क इत्यत्राङ्गत्वादादिवृद्धिः । पदत्वादिणः षत्वम् ।

### २ । विप्रतिषेधे परं कार्य्यम् ।

तुल्यबलयो र्विरोधे परं यत् तत् कार्य्यं स्यात् । सुपि चेति (७।३।१०२) दीर्घः । वृक्षाभ्याम् । बहुवचने झल्येत् (७।३।१०३) । वृक्षेषु । विरोधे परम् । वृक्षेभ्यः । नित्यानित्ययोस्तु नित्यं बलवत् । अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत् । उत्सर्गापवादयोश्चापवादः ।

### ३ । यू स्त्र्याख्यौ नदी ।

इह स्त्रियमाचष्ट इति स्त्र्याख्यः शब्दः संज्ञी । ई ऊ यू इति च तद्विशेषणमिति तदन्तविधिः । ईदूदन्तं स्त्रीलिङ्गं नदीसंज्ञं स्यात् । ईदूतोरेवेयं संज्ञेति भागवृत्तिः । कुमार्य्यै । लक्ष्म्यै । धीवध्वै । यवाग्वै । आख्याग्रहणं किम् ? पदान्तरद्योत्ये स्त्रीत्वे मा भूत् । सेनान्ये स्त्रियै । कथमतिलक्ष्म्यै विप्राय ? बहुश्रेयस्यां राजनि ? अवयवस्त्रीविषयत्वात् सिद्धमिति भाष्यम् ।

## ४ । नेयङुवङ्स्थानावस्त्री ।

इयङुवङाधारौ यू नदीसंज्ञकौ न स्तः । हे श्रीः । हे धीः । हे भ्रूः । अस्त्रीति किम् ? हे स्त्रि ।

## ५ । वाऽमि ।

प्रतिषेधोऽयमामि वा स्यात् । श्रियां श्रीणाम् । भ्रुवां भ्रूणाम् ।

## ६ । ङिति ह्रस्वश्च ।

ङिति चासौ प्रतिषेधो वा स्यात् । श्रियै श्रिये । भ्रुवै भ्रुवे । भ्रुवां शेते भ्रुवि शेते । ह्रस्वश्च । ङिति ह्रस्वौ यू वा नदीसंज्ञकौ स्याताम् । मत्यै मतये । धेन्वै धेनवे । स्त्र्याख्याविल्येव । अग्नये । वायवे । इहामि ङिति च ह्रस्वयो-रियङुवङ्स्थानयोश्च य्वोः पाक्षिकी नदीसंज्ञा । सा स्त्रीवचन एवेष्यते । नावयवाश्रयेति स्मृतिः (33) । तेन सुमतये ऽतिश्रिये सुधिये विप्राय । सुधियां विप्राणाम् । मञ्जुश्रियि सुधियि विप्र इति भवति ।

## ७ । शेषो घ्यसखि ।

ह्रस्वेदुदन्तमनदी शेषो घिसंज्ञःस्यात् । घेर्ङितीति (७।३।१११) गुणः । अग्नये । विष्णवे । वायवे । मतये । धेनवे । असखि किम् ? सख्या । सख्ये । सख्युः । सख्यौ । इह ह्रस्वेदुन्मात्रं घिसंज्ञम् । तथाच द्वन्द्वे घीत्यत्र (२।२।३२) व्यन्तं पूर्वं निपततीत्युच्यते । तेनासखीत्यत्र सखिशब्देकारस्य घित्व-निषेधात् सखिशब्दावयवत्वेऽपि बहुसख्या कृतं बहुसख्युः स्वमित्याहुः । सुसखे-रागच्छतीति तु न्यासः ।

## ८ । पतिः समास एव ।

समासे पतिशब्दो घिसंज्ञः स्यात् । श्रीपतिना । श्रीपतये । श्रीपतेः । श्रीपतौ । नान्यत्र । पत्या । पत्ये । पत्युः । पत्यौ ।

## ९ । षष्ठीयुक्तश्छन्दसि वा ।

छन्दः सूत्रम् ।

(33) स्मृतिराचार्यपारम्पर्योपदेशः शास्त्रकृतामाचार्याणां व्यवस्थेति यावत् ।

## १० । ह्रस्वं लघु ।

ह्रस्वमक्षरं लघूच्यते । भेदनम् । गर्द्दनम् । वर्द्धनम् ।

## ११ । संयोगे गुरु ।

संयोगे परे ह्रस्वमक्षरं गुरूच्यते । शिक्षा । भिक्षा ।

## १२ । दीर्घञ्च ।

दीर्घमक्षरं गुरूच्यते । ईहाञ्चक्रे । ऊहाञ्चक्रे ।

## १३ । यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।

यस्मात् प्रत्ययो विधीयते तदाद्यङ्गसंज्ञं स्यात् । कर्त्ता कारकः । लविता लावकः । तदादीति किम् ? करिष्यमाणः । पचामः । स्याद्यन्तस्याप्यङ्गत्वे मुग्दीर्घौ । पुनः प्रत्ययग्रहणं किम् ? लुप्तेऽपि प्रत्ययेऽन्यस्मिन् परे मा भूत् । अर्थम् । द्व्यङ् ग्रामः ।

## १४ । सुप्तिङन्तं पदम् ।

सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् । छात्राः पठन्ति मे ।

## १५ । नः क्ये ।

क्ये परे नान्तमेव पदं स्यात् । राजीयति । राजायते । नियमः किम् ? वाच्यति । तपस्यति । पदाश्रये कुत्वरुत्वे न भवतः ।

## १६ । सिति च ।

सिति पूर्वं पदं स्यात् । छस् । भवदीयम् । युस् । ऊर्णायुः । भसंज्ञां बाधते ।

## १७ । स्वादिष्वसर्वनामस्थाने ।

कप्-( ५।४।१५१ ) पर्य्यन्तेषु स्वादिषु पूर्वं पदं स्यात् । राजभ्याम् । राजसु । राजत्वम् । राजतमः । असर्वनामस्थाने किम् ? राजानौ । राजानः । कथं सौ ? पदत्वं राजेति । न ङिसम्बुद्ध्योः ( ८।२।८ ) रिति ज्ञापकात् ।

## १८ । यचि भम् ।

यादावजादौ च स्वादौ पूर्वं भसंज्ञं स्यात् । यि । गार्ग्यः । अचि । राज्ञः पश्य । असर्वनामस्थान इत्येव । राजानौ । सामानि ।

(क) नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् । भसंज्ञा स्यात् । नभस्वत् । अङ्गिरस्वत् । मनुष्वत् । पदाश्रयं रुत्वं न भवति ।

(ख) वृषण्वस्वश्वयोर्भसंज्ञा वक्तव्या । वृषण्वसुः । वृषणश्वः । नकार-लोपो न भवति ।

## १९ । तसौ मत्वर्थे ।

मत्वर्थीये परे तान्तं सान्तञ्च भसंज्ञं स्यात् । विद्युत्वान् । मरुत्वान् । पयस्वी । तपस्वी । यशस्वी ।

## २० । अयस्मयादीनि च्छन्दसि ।

इदञ्छन्दः सूत्रमेकम् ।

## २१ । बहुषु बहुवचनम् ।

सुप्तिङामविशेषेण विधानादक्षीणि ते रत्नानीत्यादि लोकोपचारदर्शनाच्च नियमोऽयम् । बहुष्वेवार्थेषु बहुवचनं स्यात् । भिक्षवः सद्धर्म्मान् पठन्ति । विप्रैः सामानि गीयन्ते ।

## २२ । द्व्येकयोर्द्विवचनैकवचने ।

अर्थयोर्द्वित्वैकत्वयोरेव द्विवचनैकवचने स्याताम् । मातापितरौ जनयतः । धर्म्मो रक्षति रक्षितः ।

## २३ । कारके ।

अधिकारोऽयम् । अतःपरं यद्वक्ष्यति तत् कारकेषु मध्ये बोद्धव्यम् । तद् यथा—

## २४ । ध्रुवमपायेऽपादानम् ।

विश्लेषे ध्रुवं कारकमपादानं स्यात् । तच्च "निर्द्दिष्टविषयं किञ्चित्" । वृक्षात् पत्रं पतति । जलादुत्थितः । "उपात्तविषयं तथा" । वलाहकाद्

विद्योतते विद्युत्। निःसृत्येत्यध्याहार्य्यम्। अधर्माद् विरमति। अधर्माज्जुगुप्सते। विरमञ्जुगुप्समानस्ततो निवर्त्तत इत्यर्थः। "अपेक्षितक्रियञ्चेति त्रिधापादानमिष्यते"। माथुराः स्रौघ्नेभ्य आढ्यतराः। नियमेनोत्कर्षक्रिया गम्यत इति। कारक इत्येव। वृक्षस्य पर्णम् पतति। बहुभ्योऽन्यः। कारकादिति (५।४।४२) न थस्।

## २५। भीत्रार्थानां भयहेतुः।

भयत्राणार्थधातुप्रयोगे भयहेतुरपादानं स्यात्। चौराद् भीतः। व्याघ्रादपत्रस्तः। दस्युभ्यो रक्षितः।

## २६। पराजेरसोढ़ः।

पराजेः प्रयोगे सोढुमशक्यमपादानं स्यात्। अध्ययनात् पराजयते मन्दबुद्धिः। भोजनात् पराजयते।

## २७। वारणार्थानामीप्सितः।

एषां प्रयोग ईप्सितमपादानं स्यात्। यवेभ्यो गां वारयति। कथं कूपादन्धं वारयति? बुद्ध्या प्राप्य ततो निवर्त्तयतीत्यर्थः।

## २८। अन्तर्धौ येनादर्शनमिच्छति।

अन्तर्धातुं येन हेतुनात्मनोऽदर्शनमिच्छति तदपादानं स्यात्। उपाध्यायादन्तर्धत्ते छात्रः। उपाध्यायान्निलीयते शिष्यः।

## २९। आख्यातोपयोगे।

नियमाद् वाक्यग्रहणे (34) आख्याता प्रतिपादयिताऽपादानं स्यात्। पण्डितात् पुराणं शृणोति। "रामादधीतसन्देशः"।

## ३०। जनिकर्त्तुः प्रकृतिः।

जायमानस्य प्रकृतिः कारणमपादानं स्यात्। सामग्रीतः फलं जायते।

## ३१। भुवः प्रभवः।

भुवः कर्त्तुः प्रभवोऽपादानं स्यात्। हिमवतो गङ्गा प्रभवति। 'वल्मीकाग्रात् प्रभवति धनुष्खण्डमाखण्डलस्य"।

(34) वाक्यादीनां ग्रहीतुः प्रवृत्तिर्नियम इत्येके। विद्यादिग्रहणार्थं शिष्यादेर्वृत्तिर्नियम इत्यन्ये।

## ३२। कर्म्मणा यमभिप्रैति स सम्प्रदानम् ।

कर्म्मणा करणभूतेन यमभिसम्बध्नाति तत्कारकं सम्प्रदानं स्यात्। ब्राह्मणाय गां ददाति धार्म्मिकः। गुरवे धनं निर्यातयति दृष्टः। पट्टिकोपाध्यायः शिष्याय कर्णचपेटामदात् (35)। शत्रवे भयं ददाति। "भयानि दत्त सीतायै"। कथं रजकस्य वस्त्रं ददाति। ष्ठतः पृष्ठं ददातीति? अभिप्रेत्यर्थस्याविवक्षितत्वाद् यथा सममब्राह्मणे दानमिति (36)। इह प्रार्थनाध्यवसानादिक्रियाभिः कर्त्तुरीप्सिततमत्वात् क्रियापि कर्म भवति। तत् क्रियया यदभिसम्बध्यते तत् सम्प्रदानं सूत्रेणैव। युद्धाय सन्नह्यते। पत्ये शेते। "निवेद्यतां सुग्रीवाय"। "प्रणम्य शास्त्रे सुगताय तायिने" (37)। इह च पशुना रुद्रं यजत इति पशुना देयेन रुद्रं प्रीणयति। पशुं रुद्राय ददातीति वस्त्वर्थः।

## ३३। रुच्यर्थानां प्रीयमाणः।

रुच्यर्थधातूनां प्रयोगे प्रीयमाणः संप्रदानं स्यात्। नारदाय रोचते कलहः। नारदस्य रुचिविषयीभवति।

## ३४। श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः।

एषां प्रयोगे बोधयितुमिष्टः संप्रदानं स्यात्। नृपाय श्लाघते वन्दी। "श्लाघमानः परस्त्रीभ्यः"। पुत्रायापह्नुते वणिक्। छात्राय तिष्ठते कन्या। प्रियायै शपते कामुकः।

---

(35) The MSS in Bengali characters generally give—"पट्टिकोपाध्यायः शिष्याय कर्णचपेटामदात्. But the statement is, either in imitation, or a misquotation, of a celebrated passage of the महाभाष्य on I.I.I.—"एवं हि दृश्यते लोके य उदात्ते कर्त्तव्येऽनुदात्तं करोति खण्डिकोपाध्याय स्तस्मै चपेटां ददात्यन्यत् त्वं करोषीति"।—The probable corruption of the word खण्डिकोपाध्याय arose from an unacquaintance of the scribes with the भाष्य। सृष्टिधर explains—"यः पट्टिकायां विलिख्य वर्णान् शिक्षयति स पट्टिकोपाध्यायः"।

(36) "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।
अधीते शतसाहस्रमनन्तं वेदपारगे ॥१॥" इति मानवधर्म्मशास्त्रे।

(37) तायिने दयालव इति सृष्टिधरः। पालकायेत्यन्ये। सन्तानवते स्फीतियुक्ताय क्रमसाणायेत्यपरे। तायृ सन्तानपालनयोः।

## ३५ । धारेरुत्तमर्णः ।

धारेः प्रयोगे धनिकः संप्रदानं स्यात् । विप्राय शतं धारयति ।

## ३६ । स्पृहेरीप्सितः ।

स्पृहेः प्रयोगेऽभीष्टः सम्प्रदानं स्यात् । धनाय स्पृहयति ।

## ३७ । क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।

क्रुधाद्यर्थानां प्रयोगे कोपस्थानं सम्प्रदानं स्यात् । पुत्राय क्रुध्यति । शत्रवे द्रुह्यति । एकस्मै ईर्ष्यति । अन्यस्मै असूयति । नेह । स्त्रियमीर्ष्यति कामुकः ।

## ३८ । क्रुधद्रुहोरुपसृष्टयोः कर्म्म ।

सोपसर्गयोः क्रुधद्रुहो यं प्रति कोप स्तत् कर्मसंज्ञं स्यात् । पुत्रमभिक्रुध्यति । शत्रुमनुद्रुह्यति ।

## ३९ । राधीक्ष्योर्यस्य विप्रश्नः ।

राधीक्ष्योः प्रयोगे यस्य विविधं पृच्छति तत् सम्प्रदानं स्यात् । पुत्राय राध्यति । किमयं करोति किं न वेति । स्त्रीभ्य ईक्षते । का कीदृशी भवतीति । ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयमिति भट्टिः ।

## ४० । प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता ।

प्रत्याङ्पूर्वस्य शृणोतेः प्रयोगे पूर्वस्य प्रार्थनादेः कर्त्ता सम्प्रदानं स्यात् । तुभ्यं गां प्रतिशृणोति । मह्यं गामाशृणोति । अङ्गीकरोतीत्यर्थः ।

## ४१ । अनुप्रतिगृणश्च ।

अस्य च प्रयोगे पूर्वस्याः क्रियायाः कर्त्ता सम्प्रदानं स्यात् । होत्रेऽनुगृणाति । पोत्रे प्रतिगृणाति । तं शंसन्तं शब्देनानुगच्छति । प्रोत्साहयतीत्यर्थः ।

## ४२ । साधकतमं करणम् ।

क्रियासिद्धौ प्रकृष्टोपकारकं करणमुच्यते । परशुना वृक्षं छिनत्ति । बुद्ध्या जानाति । विवक्षावशात् परशुश्छिनत्ति ।

४३ । दिवः कर्म च ।

दिवः साधकतमं कर्म करणं वा स्यात् । "दुरन्वान् दीव्यता राज्ञा" । दुरक्षैर्वा ।

४४ । परिक्रयणे संप्रदानमन्यतरस्याम् ।

वेतनादिस्वीकारे करणं सम्प्रदानं स्याद्वा । शताय परिक्रीतः शतेन वा ।

४५ । आधारोऽधिकरणम् ।

आश्रयोऽधिकरणमुच्यते । गृहे तिष्ठति । स्थाल्यां पचति ।

४६ । अधिशीङ्स्थासां कर्म ।

एषामाधारः कर्म स्यात् । शय्यामधिशेते । गिरिमधितिष्ठति । ग्राममध्यास्ते । स्थलीमधिशेते ।

४७ । अभिनिविशश्च ।

अस्याप्याधारः कर्म स्यात् । ग्राममभिनिविशते ।

४८ । उपान्वध्याङ्वसः ।

अस्याप्याधारः कर्म स्यात् । ग्राममुपवसति । नदीमनुवसति । गिरिमधिवसति । पल्लीमावसति । इह ग्राम उपवसतीति ? ग्रामे वसन् संत्रिरात्रमुपवसतीत्येवम्प्रकारार्थः । यदुक्तं—

वसतावप्रयुक्तेऽपि देशोऽधिकरणं मतम् ।
अप्रयुक्तं त्रिरात्रादि कर्म चोपवसेः स्मृतम् ॥१॥ इति ।

४९ । कर्त्तुरीप्सिततमं कर्म ।

कर्त्तुः क्रियया व्याप्तुमिष्टतमं कर्म स्यात् । संयोगं जनयति । तण्डुलानोदनं पचति । वेदमधीते ।

५० । तथायुक्तञ्चानीप्सितम् ।

ईप्सितवत् कर्त्तुः क्रियया युक्तं द्वेष्यमन्यच्च कर्म स्यात् । ओदनं बुभुक्षुर्विषं भक्षयति । पुत्रं पश्यन् सूर्य्यं पश्यति ।

## ५१। अकथितञ्च।

अपादानादिसंज्ञाभिर्यन्नोक्तं तत्कर्म स्यात्। गां दोग्धि पयः। कारक इत्येव। गवां दोग्धि-पयः। विवक्षावशाद् गोभ्यो दोग्धि पयः। एवं "याचमानः शिवं सुरान्।" "सोऽपृच्छल्लक्ष्मणं सीताम्।" शिष्यं धर्मं ब्रूते। विप्राञ् शतं जयति। गर्गाञ् शतं दण्डयति। अजां ग्रामं नयति। भारं ग्रामं हरति। इह च "प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम्"। नीयतेऽजा ग्रामम्। वोढव्यो भारो ग्रामम्। क्रियते काष्ठं गृहम्। आकृष्यते शाखा ग्रामम्। "अप्रधाने दुहादीनाम्।" दुह्यते गौः क्षीरम्। उच्यते शिष्यो धर्मम्। गर्गाः शतं दण्ड्यन्ताम्। जीयते विप्रः शतम्। "ण्यन्ते कर्त्तुश्च कर्मणः।" णिचि कर्मतां प्राप्तस्य कर्त्तुर्वाचका लादयः। प्राप्यते विप्रो ग्रामम्। पित्रा गमयितव्यः पुत्रो ग्रामम्। बोध्यते शिष्यो धर्मम्। भोज्यते विप्रो भक्तम्। पाठ्यते पुत्रः सूत्रम्। आस्यते विप्रो मासमिति।

## ५२। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ।

एषामणिचि यः कर्त्ता स णिचि कर्म स्यात्। याति विप्रो ग्रामम्। यापयति विप्रं ग्रामम्। "रावणं गमय प्रीतिम्।" नीवही तु गत्युपसर्जन-प्रापणवचनौ। न गत्यर्थौ। नाययति वाहयति भारं दासेनेति। बुध्यर्थे बोधयति शिष्यं शास्त्रम्। ज्ञापयति नृपं हिताहितम्। उपलम्भयति विप्रं गन्धम्। प्रत्यवसानं भक्षणम्। आशयति भोजयति विप्रमोदनम्। शब्दकर्म। अध्यापयति वटुं वेदम्। पाठयति पुत्रं सूत्रम्। श्रावयति शिष्यं शब्दम्। अकर्मकात्। आसयति पुत्रम्। शाययति मित्रम्। गत्यर्थादिभ्योऽन्यत्र। पाचयत्योदनं सहायेन। इह किलाणौ यः कर्त्ता तस्य णौ कर्मत्वमपि प्रयोजकव्यापारेण कर्त्तृत्वञ्च स्वव्यापारेण स्वतन्त्रत्वादित्युभयसंज्ञासिद्धौ नियमोऽयं गत्यर्थादीनामणौ यः कर्त्ता स णौ कर्मैव न कर्त्तेति। ततश्च गत्यर्थादिव्यतिरिक्तानामणौ कर्त्तुर्णावुभयं भवति कर्त्तृत्वं कर्मत्वञ्चेति वदन्तः

केचित् पाचयत्योदनं देवदत्तं देवदत्तेनेत्याद्यपि भवतीत्याहुः । एवञ्च हृक्रो-र्वेति ( १।४।५७ ) प्रपञ्चार्थं वेदितव्यम् (38)।

(क) जल्पत्यादीनामुपसंख्यानम् । अशब्दकर्मकत्वात् । जल्पयति मित्रम् पुत्रम् । आलापयति पुत्रं मित्रम् । सम्भाषयति देवदत्तं भार्य्याम् ।

(ख) आदिखाद्योः प्रतिषेधो वक्तव्यः । आदयते खादयति विप्रेणौ-दनम् । भक्षणार्थत्वात् ।

(ग) भक्षेरहिंसायाम् । भक्षयति पिण्डीं देवदत्तेन यज्ञदत्तः । हिंसायान्तु भक्षयति यवं वृषभान् ।

(घ) वहेरनियन्तृकर्त्तृकस्येति कात्यायनः । वाहयति भारं मनुष्यैः । अनियन्तृकर्त्तृकस्य तु वाहयति वृषभान् भारम् ।

## ५३ । हृक्रोरन्यतरस्याम् ।

हृञ्कृञोरणिचि यः कर्त्ता स णिचि कर्म वा स्यात् । हारयति भारं दासं दासेन वा । कारयति कटं पुत्रं पुत्रेण वा ।

(क) अभिवादिदृशोरात्मनेपदे वा ।

गुरुमभिवादयते पुत्रं पुत्रेण वा । दर्शयते नृपं भृत्यान् भृत्यै र्वा ।

## ५४ । स्वतन्त्रः कर्त्ता ।

क्रियासिद्धावगुणत्वेन विवक्षितो यः स कर्त्ता स्यात् । विप्रेण पच्यते । क्रिया जायते । ओदनः सिध्यति ।

## ५५ । तत्प्रयोजको हेतुश्च ।

स्वतन्त्रस्य प्रयोजकोऽर्थः कर्त्ता हेतुश्चोच्यते । कुर्वन्तं प्रयुङ्क्ते कारयति देवदत्तः । उक्तानि कारकाणि ।

## ५६ । प्राग्रीश्वरान्निपाताः ।

अधिरीश्वर (१।४।९७) इत्यतः प्राङ् निपाता वेदितव्याः ।

---

(38) This passage is referred to by श्रीपति in his कातन्त्रपरिशिष्ट viz :—"तदा हृक्रो र्वा वचनमकर्मकाभ्यवहारार्थयोर्नित्यं मा भूदिति कथम् ? प्रपञ्चार्थमिति लघुवृत्तिकृतोक्तम्" ।—(In his Rule 18 under कारक) ।

## ५७। चादयोऽसत्त्वे।

अद्रव्यवृत्तयश्चादयो निपाता उच्यन्ते। याति च वाति च। घटं वा पटं वा पश्य। च। वा। वै। स्वाहा। स्वधा। ओम्। आम्। पशु। तु। मन्ये। अस्ति। ब्रूहि। विभाषा। अन्यतरस्याम्। नञ्। नो। न इत्यादि। उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः। असत्त्वे किम्? स्वाहा अग्नायी।

## ५८। प्रादयः।

प्र। परा। अप। सम्। अनु। अव। निर्। दुर्। निस्। दुस्। अभि। वि। अधि। सु। उद्। अति। नि। प्रति। परि। अपि। उप। आङ्। एते निपाताः स्युः। प्रतनु। प्रविरलम्। अभिनवोऽभिलीनः।

## ५९। उपसर्गाः क्रियायोगे।

प्रादयो निपाताः क्रियायोगे उपसर्गाः स्युः। प्रणमति। परिषिञ्चति। क्रियायोगे किम्? प्रनायको देशः। इह दुर्नीतमवदत्तमित्यादावुपसर्ग-प्रतिरूपकनिपाताश्रयणात् णत्वतत्त्वे न भवतः।

"प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्य्यपयः।

उप आङिति विंशतिरेष सखे उपसर्गविधिः कथितः कविना" (39)। इति।

## ६०। गतिश्च।

प्रादय उपसर्गा गतिसंज्ञकाश्च स्युः। प्रणम्य। अभिषिच्य।

## ६१। ऊर्य्यादिच्विडाचश्च।

एते गतिसंज्ञकाः स्युः। ऊरीकृत्य। उररीकृत्य। च्विः। शुक्लीकृत्य। शुक्लीभूय। डाच्। पटपटाकृत्य। दमदमाकृत्य।

## ६२। अनुकरणञ्चानितिपरम्।

अव्यक्तानुकरणं गतिः स्यात्। खटत्कृत्य भग्नः। अनितिपरं किम्? खटदिति कृत्वा भग्नः।

---

(39) श्लोकोऽयं तोटकच्छन्दसा ग्रथितः। इह तोटकमम्बुधिसैः प्रथितमिति लक्षणात्। सखेत्यत्र संहितायामपि पादान्तत्वाद् वैकल्पिकं गुरुत्वम्। निस्दुसौ रुत्वेन निर्दुरिति लाभाद् विंशतिरित्युक्तम्। पूर्वेषां मतेन निस्दुसोरभावाद्वा।

## ६३ । आदरानादरयोः सदसती ।

अनयोरेते गती स्याताम् । गुरून् सत्कृत्य गतः । खलानसत्कृत्य गतः ।

## ६४ । भूषणेऽलम् ।

अत्रेदं गतिः स्यात् । कन्यामलंकृत्य गतः ।

## ६५ । अन्तरपरिग्रहे ।

अन्तःशब्दो गतिः स्यात् । अन्तर्हत्य स्थितः खलः । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् ? अन्तर्हत्वा मूषिकां गतः श्येनः । परिगृह्येत्यर्थः ।

(क) अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या । अन्तर्धा । अन्तर्धिः । अन्तर्णयति ।

## ६६ । कणेमनसी श्रद्धाप्रतिघाते ।

कणेमनःशब्दौ तृष्णाविगमे गती स्याताम् । कणेहत्य मनोहत्य पयः पिबति । आतृष्णमित्यर्थः ।

## ६७ । पुरोऽव्ययम् ।

गतिः स्यात् । "पुरस्कृत्य शिखण्डिनम् ।" नमस्पुरसोर्गत्योरिति (८।३।४०) सत्वम् ।

## ६८ । अस्तञ्च ।

अस्तमव्ययं गतिः स्यात् । अस्तङ्गत्य क आगतः । मृत्वेत्यर्थः ।

## ६९ । अच्छ गत्यर्थवदेषु ।

अच्छेत्यव्ययमाभीक्ष्ण्यवृत्तिर्गत्यर्थे वदतौ च गतिः स्यात् । अच्छगत्य । अच्छोद्य ।

## ७० । अदोऽनुपदेशे ।

त्यदादिरदःशब्दो गतिः स्यात् । अदःकृत्य स्थितः । अनुपदेशे किम् ? अदः कृत्वा गच्छ ।

## ७१। तिरोऽन्तर्द्धौ।

तिरोऽव्ययं गतिः स्यात्। तिरोभूय स्थितश्चौरः। अन्तर्धौ किम्। तिरो भूत्वा स्थितं काण्डम्।

## ७२। विभाषा कृञि।

अन्तर्धौ कृञि तिरो वा गतिः स्यात्। तिरस्कृत्य तिरःकृत्वा।

## ७३। उपाजेऽन्वाजे।

बलाधानवृत्ती निपाताविती कृञि वा गती स्याताम्। उपाजेकृत्य उपाजे कृत्वा वा। अन्वाजेकृत्य अन्वाजे कृत्वा वा।

## ७४। साक्षात्प्रभृतीनि च।

साक्षादादीनि कृञि गतिसंज्ञकानि वा स्युः। साक्षात्कृत्य साक्षात् कृत्वा वा। मिथ्या। लवणम्। वशे। प्रादुस्। आविस्। नमस्।

## ७५। अनत्याधान उरसिमनसी।

एतावनुपश्लेषे कृञि वा गती स्याताम्। उरसिकृत्य उरसि कृत्वा वा जपेन्मन्त्रम्। मनसिकृत्य मनसि कृत्वा वा। नेह। उरसि कृत्वा हस्तं शेते।

## ७६। मध्येपदेनिवचने च।

एते कृञि वा गतयः स्युः। मध्येकृत्य मध्ये कृत्वा वा। पदेकृत्य पदे कृत्वा वा। निवचनेकृत्य निवचने कृत्वा वा। तूष्णीम्भूयेत्यर्थः। अनत्याधाने इत्येव। हस्तिनः पदे कृत्वा शिरः शेते।

## ७७। नित्यं हस्तेपाणावुपयमने।

एतौ स्वीकारे कृञि नित्यं गती स्याताम्। "तां हस्तेकृत्य मा स्वप्सीः"। पाणौकृत्य भुङ्क्ते।

## ७८। प्राध्वं बन्धने।

प्राध्वं कृञि नित्यं गतिः स्याद् बन्धनगतौ। प्राध्वंकृत्य कुटुम्बं स्थितः।

### ७९ । जीविकोपनिषदावौपम्ये ।

एतौ सादृश्ये कृञि गती स्याताम् । जीविकाकृत्य व्याचष्टे । उपनिषत्कृत्य कथयति ।

### ८० । ते प्राग् धातोः ।

ते गत्युपसर्गसंज्ञका धातोः प्राक् प्रयोक्तव्याः । तथैवोदाहृतम् ।

### ८१ । छन्दसि परेऽपि ।

### ८२ । व्यवहिताश्च ।

छन्दः सूत्रद्वयम् ।

### ८३ । कर्मप्रवचनीयाः ।

अधिकारोऽयम् ।

### ८४ । अनुर्लक्षणे ।

लक्षणे कारके हेतौ द्योत्येऽनुः कर्मप्रवचनीयनामा स्यात् । होममनु वृष्टो देवः ।

### ८५ । तृतीयार्थे ।

सहार्थेऽनुस्तन्नामा स्यात् । गङ्गामन्ववसिता (40) पुरी । तया सह बद्धेत्यर्थः ।

### ८६ । हीने ।

हीने द्योत्येऽनुस्तन्नामा स्यात् । अन्वर्जुनं योद्धारः । ततो हीना इत्यर्थः ।

### ८७ । उपोऽधिके च ।

उपोऽधिके हीने च तन्नामा स्यात् । उपख्यार्यां द्रोणः । उप गोवर्द्धनं शाब्दिकाः ।

### ८८ । अपपरी वर्जने ।

एतौ वर्जने तथा स्याताम् । अप त्रिगर्त्तेभ्यः । परि सुघ्नाद् वृष्टो देवः ।

---

(40) अनुवसितेति पाठान्तरम् । तत्राप्यवपूर्वात् षिञ् बन्धन इत्यस्मात् क्तः । तत्र वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यनेनादिलोप ।

### ८९। आङ् मर्य्यादावचने ।

सीमायामाङ् तन्नामा स्यात् । आ समुद्राद् वृष्टो देवः। वचनग्रहणादभिव्याप्तौ च। आकुमारं यशस्तव ।

### ९०। लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः ।

चिह्नादौ द्योत्ये प्रतिपर्य्यनवः कर्मप्रवचनीयाः स्युः। वृक्षं प्रति विद्योतते विद्युत् । वृक्षं परि । वृक्षमनु । एवं मातरं प्रति साधुः । यदत्र मां प्रति स्यात् । वृक्षं वृक्षं प्रति सिञ्चति ।

### ९१। अभिरभागे ।

अभिर्भागवर्जितलक्षणादौ तन्नामा स्यात् । वृक्षमभि विद्योतते विद्युत् । मातरमभि साधुः। वृक्षं वृक्षमभि सिञ्चति । अभागे किम्? यदत्र मामभिष्यात् । उपसर्गाश्रयो मूर्धन्यः ।

### ९२। प्रतिः प्रतिनिधिप्रतिदानयोः ।

प्रतिः सदृशप्रत्यर्पणयोस्तथा स्यात् । यो नारायणतः प्रति । माषानस्मै तिलेभ्यः प्रति यच्छति ।

### ९३। अधिपरी अनर्थकौ ।

अनर्थका-(41) वधिपरी तथा स्याताम् । कुतोऽध्यागच्छति । कुतः पर्य्यानयति । गत्युपसर्गसंज्ञाबाधः फलम् । अनर्थकौ (41) किम्? अधिगम्य । परिणीय ।

### ९४। सुः पूजायाम् ।

पूजायां सुस्तन्नामा स्यात् । सुसिक्तं त्वया । उपसर्गाश्रयं षत्वं न भवति ।

### ९५। अतिरतिक्रमणे च।

अतिप्रवृत्तिरतिक्रमः । तस्मिन् पूजायाञ्चाति स्तन्नामा स्यात् । अतिसिक्तं त्वया । पूजायाम् । अतिस्तुतम् । अतिस्तुतिः ।

---

(41) अनधिकार्थाविति पाठान्तरम् ।

## ९६। अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु।

एषु वर्त्तमानोऽपिशब्दः कर्मप्रवचनीयः स्यादित्येकः सूत्रार्थः। सर्पिषोऽपि स्यात्। बिन्दुपदार्थेऽपिशब्दः। एषु यत् पदं वर्त्तते तत्प्रत्यपिशब्दः कर्मप्रवचनीयः स्यादिति द्वितीयः सूत्रार्थः। सर्पिषोऽपि स्यात्। बिन्द्वर्थे स्यात्पदम्। तत् प्रत्यपिशब्दः कर्मप्रवचनीयः। तेनोपसर्गाश्रयं षत्वं न भवति। सर्पिस्तु प्रति न कर्मप्रवचनीय इति द्वितीया न स्यात्। सम्भावना योग्यता। "अपि स्थाणुं जयेद्रामः"। अन्ववसर्गः प्राकाम्यम्। अपि सिञ्च अपि स्तुहि। गर्हा निन्दा। अपि स्तुयाद्वृषलम्। समुच्चये। अपि सिञ्च अपि स्तुहि। उभयं कुरु।

## ९७। अधिरीश्वरे।

ऐश्वर्ये गम्येऽधिस्तन्नामा स्यात्। अधि पञ्चालेषु ब्रह्मदत्तः।

## ९८। विभाषा कृञि।

अधिः कृञि वा कर्मप्रवचनीयः स्यात्। यन्मामधिकरिष्यति यन्मामधि करिष्यति वा। अधिकृत्य अधि कृत्वा वा। उक्ता निपाताः।

## ९९। लः परस्मैपदम्।

लादेशाः परस्मैपदमुच्यन्ते। तिप्तस्झिसिप्थस्थमिब्वस्मस्शतृक्वसु।

## १००। तङानावात्मनेपदम्।

तङ् एतौ च लादेशावात्मनेपदमुच्यन्ते। तङिति तातांझथासाथांध्वमिड्वहिमहिङ्। आन इति शानच्कानचौ।

## १०१। तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः।

तिङां त्रीणित्रीणि पदानि क्रमेण प्रथममध्यमोत्तमसंज्ञकानि स्युः। तिप् तस्झितातांझ इति प्रथमः। ततो मध्यमः। तत उत्तमः।

## १०२। तान्येकवचनद्विवचनबहुवचनान्येकशः।

तानि त्रीणित्रीणि पदानि प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञकानि स्युः। तिरित्येकवचनम्। तसिति द्विवचनम्। झीति बहुवचनम्। एवमन्यत्रापि।

## १०३। सुपः।

सुपश्च तथा स्यात्। सु इत्येकवचनम्। औ इति द्विवचनम्। जसिति बहुवचनम्। एवं सर्वत्र।

## १०४। विभक्तिश्च।

सुप् तिङ् च विभक्तिरुच्यते।

## १०५। युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः।

लकारेण समानाधिकरणे युष्मद्युपपदे मध्यमपुरुषः स्यात्। त्वं पचसि। युवां पचथः। यूयं पचथ। त्वं दृश्यसे। युवां दृश्येथे। यूयं दृश्यध्वे। स्थानिनीति। गम्यमानेऽपि युष्मदि। ओदनं पचसि। मया दृश्यसे। भवत्प्रयोगे नेष्यते (42)। भवान् करोति। समानाधिकरणे किम्? त्वया दृश्यते।

## १०६। प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च।

परिहासगतौ मन्योपपदस्य धातोरुत्तमे प्राप्ते मध्यमःपुरुषः स्यात्। मन्यतेश्च मध्यमे प्राप्त उत्तमः। स चैकवत् मन्तुरनेकत्वेऽपि। एहि मन्ये पयः पास्यसि? न पास्यसि। पीतं तदतिथिभिः। प्रहासे किम्? एहि मन्यसे दध्यन्नं भोक्ष्ये। साधु मन्यसे। एवं मन्यध्वेऽपि।

---

(42) युष्मद्युपपद इति सूत्रे (१।४।१०५) युष्मच्छब्दस्य युगपद्रूपपरस्यार्थपरस्य च ग्रहणात्। ओदनं पचेत्यादौ च युष्मच्छब्दस्य रूपपरस्यैव गम्यमानत्वम्। एवञ्च भवति भिक्षां देहीत्यत्र रूपपरस्य युष्मद एव गम्यत्वे मध्यमपुरुषः। न चात्र वाक्यस्यार्षत्वकल्पनेन कश्चिदर्थः। भवान् करोतीत्यादौ तु भवच्छब्दस्य युष्मदर्थपरत्वेऽपि तद्रूपपरत्वाभावान्न मध्यमः। तथाह्यस्य सूत्रस्य (१।४।१०५) व्याख्याने मैत्रेयरक्षितः—"युष्मदीत्यर्थग्रहणं वा स्याच्छब्दग्रहणं वा? तत्र यद्यर्थग्रहणं भवान् करोतीत्यत्रापि मध्यमपुरुषः प्राप्नोति। युष्मदर्थस्यात्रापि विद्यमानत्वात्। अथ शब्दस्य ग्रहणमेवं सति परमत्वं करोषीत्यत्र न स्यात्। नह्यत्र युष्मच्छब्द उपपदम्। किं तर्हि? तदन्तसमुदायः। नचात्र तदन्तविधिरस्ति। ग्रहणवता प्रातिपदिकेन तदन्तविधिनिषेधात्। अथापि स्यात् तदन्तविधिरस्तीत्वं करोतीत्यत्रापि स्यात्। एवं तर्हि रूपवदर्थोऽप्यङ्गीक्रियत इत्यत्राथर्वच्छब्दग्रहणम्। तेन युष्मच्छब्दाभावे भवान् करोतीत्यत्र न भवति। अथ भवान् करोतीत्यत्र स्थानिन्यपीति मध्यमः कस्मान्न भवति? नैवम्। नह्यत्र युष्मच्छब्दः प्रसङ्गी। भवच्छब्देनैव तदर्थस्याभिधानात्। शब्दानां वाच्येऽर्थे प्रसङ्गः। नतूक्ते।"—इति तन्त्रप्रदीपे (वृत्तिप्रदीपे)।

१०७ । अस्मद्युत्तमः ।

अस्मदि वाच्य उत्तमःपुरुषः स्यात् । अहं पचामि । आवां पचावः । वयं पचामः । अहं दृश्ये । आवां दृश्यावहे । वयं दृश्यामहे । गम्यमानेऽपि । पचामि । दृश्ये ।

१०८ । शेषे प्रथमः ।

युष्मदस्मद्भ्यामन्यस्मिन् प्रथमःपुरुषः स्यात् । स भाति । तौ भातः । ते भान्ति ।

१०९ । परः सन्निकर्षः संहिता ।

अत्यन्तप्रत्यासत्तिः संहितोच्यते । दध्यत्र । मध्वत्र ।

११० । विरामोऽवसानम् ।

परे वर्णाभावोऽवसानमुच्यते । वृक्षः । सिद्धिः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
प्रथमाध्यायस्य चतुर्थः पादः ॥ १।४ ॥
समाप्तश्च कारकपादः । प्रथमोऽध्यायश्च ।

अथ

# भाषावृत्तिः ।

## द्वितीयोऽध्यायः । प्रथमः पादः ।

### १ । समर्थः पदविधिः ।

यो नाम पदानां विधिः स समर्थो वेदितव्यो यथा समासः । राज्ञः पुरुषो राजपुरुषः । समर्थ इति किम् ? भार्य्या राज्ञः पुरुषो देवदत्तस्य । पदविधिग्रहणं किम् ? तिष्ठतु दध्यशान त्वं शाकेन । यणादेशो वर्णविधिः ।

### २ । सुबामन्त्रिते पराङ्गवत् स्वरे ।

अतःपरं सुबित्यधिक्रियते । शेषश्छान्दसः स्वरभागः ।

### ३ । प्राक् कडारात् समासः ।

कडारशब्दात् (२।२।३८) प्राक् समासो वेदितव्यः ।

### ४ । सह सुपा ।

सुबित्येव । अतःपरं सुपा सह सुबन्तं समस्यत इत्यधिकृतं वेदितव्यम् । लक्षणमप्येतत् । पूर्वं भूतो भूतपूर्वः । विस्पष्टपटुः । तत्प्रथमः । पुनर्गवः (1) । अध्वगन्तव्य इत्यादि ।

---

(1) अत्र पुनर्गव इत्युदाहरणं तु चिन्त्यम् । टचोऽप्राप्तेः । वस्तुतस्तु कुगतिप्रादय (२।२।१८) इत्यत्र नित्याधिकारेऽव्ययं प्रवृद्धादिभिरिति इवेन विभक्त्यलोपः पूर्वपद प्रकृतिस्वरत्वञ्चेति वार्त्तिकद्वयं कात्यायनेन पठितम् । तेन हि पुनर्गव इत्यत्राव्ययं प्रवृद्धादिभिरित्यनेन नित्यसमासः । तस्य च तत्पुरुषाधिकारे पठितत्वाद्द गोरतद्धित लुकीति (५।४।९२) तत्र टच् । इवेन विभक्त्यलोप इति वार्त्तिकन्तु भाष्यकृता सह सुपेत्यत्र समानीय पठितम् । तेनास्य इवपदेन समासस्य नित्यत्वं खण्डितम् । यथोत्तरं मुनीनां प्रामाण्यात् । न च सह सुपेत्यस्य नित्याधिकारेऽन्तर्भावः । योगविभागेनैव सिद्धे समासेऽव्ययमित्याद्युत्तरसूत्रैः (२।१।६) पुनः समासस्यविधानात् । भाष्ये चात्र विस्पष्टं पटुर्विस्पष्टपटुरिति विग्रहप्रदर्शनाच्च । न चाऽनिष्टापत्तिः । अपसिद्धान्तात् । वृत्तिकैयटादि महाग्रन्थविरोधाच्च । तथाहि—चरट्सूत्रे ( ५।३।५३ ) वृत्तिकृता, शाकलसूत्रे ( ६।१।१२३ ) ऽनुदात्तमित्यत्र ( ६।१।१५८ ) असिद्धवदित्यत्र (६।४।२२) च कैयटेन च, सुप्सुपेति समासस्य विग्रहः प्रदर्शितः । अतएवैवेन

## ५ । अव्ययीभावः ।

अव्ययीभावो नाम समासो वाच्यः प्राक् तत्पुरुषात् । तद्यथा—

### ६ । अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्त-वचनेषु ।

विभक्त्याद्यर्थेष्वव्ययं सुपा सह समस्यते । विभक्त्यर्थे । स्त्रीष्वधिकृत्य कथा प्रवर्त्ततेऽधिस्त्रि । अधिपाणि कपोलौ । समीपार्थे । उपकुम्भम् । समृद्धौ सुमद्रम् । ऋद्ध्यभावो व्यृद्धिः । दुर्यवनम् । दुर्भिक्षम् । अर्थाभावे निर्मक्षिकम् । अतययो भूतत्वमतिक्रमः । निःशीतम् । असम्प्रत्यर्थे । नायमस्य कम्बलस्य भोगकालोऽतिकम्बलम् । शब्दप्रादुर्भावः प्रकाशता । इतिपाणिनि । उद्विक्रमादितम् । पश्चादर्थे । अनुरथम् । यथार्था-श्चत्वारः । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यञ्चेति । योग्यतायाम् । अनुरूपमस्य दानम् । वीप्सायाम् । प्रतिदिनं ददाति । पदार्थानतिवृत्तौ । यथाबलमध्येति पाठम् । सादृश्ये । वीणावत् सवीणं ध्वनति । सहंसं गच्छति । आनुपूर्व्ये । अनुज्येष्ठं प्रविशन्तु । यौगपद्ये । सचक्रं निधेहि । अव्ययीभावे चाकाल इति (६।३।८१) सहस्य सः । गौणेऽपि सादृश्ये । सदृशः किख्या (2) सकिखि । सदृशीभिर्लक्ष्म्या सलक्ष्मि स्त्रीभिः । सम्पत्तौ ।

---

समासो वैकल्पिकः । तेनोद्बाहुरिव वामन इति कचाचितौ विष्वगिवागजौ गजावित्यादौ व्यस्तप्रयोगः । जीमूतस्येवेत्यादौ तैत्तिरीयाणां च पृथक्पदत्वेन पाठः । बह्वृचैरेव तत्र समासोऽभ्युपगम्यते । वागर्थाविवेत्यादौ इवशब्दः समस्तः पृथग् वा । समासफलमैकार्थीभाव ऐकपद्यमैकस्वर्यम् । तेन वृत्त्यन्तरञ्च यथाऽग्निरिवराजो वायुरिवसख उर्वशीवजानिरग्निरिवकल्पो वायुरिवपाश इत्यादि । अपि च हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणी”मिति, “अद्वैतमप्यनुभवामि करस्थबिल्वतुल्यं शरीरमहिनिर्ल्वयनीव वीक्ष्ये”त्यादिप्रयोगोऽपि साधुरिति केचित् । अन्ये त्वेतन्न सहन्ते । तथा च नागेशः—“हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणी मित्यसाध्वेव । मातेति प्रथमाया मातृसदृशीमित्यर्थेऽसाधुत्वादि”ति । तत्रापि समासे मातरमिव हितकारिणीमित्यहिनिर्ल्वयनीमिवेति यथायथं विभक्तेर्विपरिणामो लोपाभावश्च स्यादित्येके ।

(2) अपचितपरिमाणा शृगाली किखीति हरदत्तादयः । सृष्टिधरस्त्वाह—“किं खादामीति या भिक्षुकी भाष्यति सा किखी । पृषोदरादित्वात् सिद्धम् । तथाच किखी मर्कटीति धरणिः । तद्वदनवस्थिता” इति । वृत्तेरेतदुदाहरणव्याख्याने पदमञ्जरीकार आह “अप्रसिद्धोदाहरणं चिरन्तनप्रयोगात् ।” इति ।

सत्त्वम्। साकल्यवचने। सतृणमभ्यवहरति। तृणमपि न त्यजतीत्यर्थः। अन्तवचने। साग्निमधीते।

७। यथाऽसादृश्ये।

यथाशब्दः समस्यते। ये ये वृद्धा यथावृद्धम्। न सादृश्ये। यथा शक्र स्तथा त्वम्।

८। यावदवधारणे।

इयत्तायां यावच्छब्दःसमस्यते। यावत्त्रयनं भिक्षून् वासय।

९। सुप् प्रतिना मात्रार्थे।

लेशार्थे सुबन्तं प्रतिना समस्यते। न सुखप्रति संसारे। न दोषप्रति बौद्धदर्शने।

१०। अक्षशलाकासंख्याः परिणा।

अमी परिणा समस्यन्ते। द्युतव्यवहारेऽभिधानम्। अक्षपरि। शलाका-परि। संख्या। एकपरि। द्विपरि।

११। विभाषा।

अतःपरं विभाषा समासो वाच्यः।

१२। अपपरिबहिरञ्चवः पञ्चम्या।

एते पञ्चम्यन्तेन समस्यन्ते। अपत्रिगर्त्तम्। परित्रिगर्त्तम्। बहिर्ग्रामम्। प्राग्ग्रामम्। विभाषाधिकाराद्वाक्यञ्च। अप त्रिगर्त्तेभ्यः। परि त्रिगर्त्तेभ्यः। बहिर्ग्रामात्। प्राग् ग्रामात्।

१३। आङ् मर्य्यादाभिविध्योः

एतयोराङ् पञ्चम्या समस्यते। आसमुद्रं गतः। आकुमारं यशस्तव।

१४। लक्षणेनाभिप्रती आभिमुख्ये।

आभिमुख्यार्थेऽभिप्रती लक्षणवाचिना सुबन्तेन समस्येते। अभ्यग्नि शल-भाःपतन्ति। प्रतिदीपं शलभाःपतन्ति। लक्षणेन किम्? दिङ्मोहात् स्रुघ्नं प्रति गतः।

१५ । अनुर्यत् समया ।

१६ । यस्य चायामः ।

अनुशब्दो यस्य समीपवाची यस्य च दैर्घ्यवाची तेन समस्यते । अनुवनं चौराः । तत्समीपा इत्यर्थः । अनुगङ्गं वाराणसी । गङ्गावदायता ।

१७ । तिष्ठद्गुप्रभृतीनि च ।

अमूनि यथापाठं साधूनि स्युः । तिष्ठन्त्यस्मिन् काले गावस्तिष्ठद्गु कालः । वहद्गु कालः । आयतीगवम् । खलेयवम् । प्राह्णम् । प्रदक्षिणम् । प्रतयक्षम् । समक्षम् । अपसव्यम् । इच् कर्मव्यतीहारे । दण्डादण्डि ।

१८ । पारेमध्ये षष्ठ्या वा ।

एतौ षष्ठ्या वा समस्येते । निपातनादेत्वम् । पारेश्मशानं सरित् । मध्येगङ्गम् । पक्षे षष्ठीसमासः । श्मशानपारम् । गङ्गामध्यम् ।

१९ । संख्या वंश्येन ।

वंशभवेन संख्या समस्यते । द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि । त्रिमुनि व्याकरणस्य ।

२० । नदीभिश्च ।

नदीभिः संख्या समस्यते । समाहारेऽभिधानम् । द्विगङ्गम् । पञ्चनदम् ।

२१ । अन्यपदार्थे च संज्ञायाम् ।

नाम्नि सुबन्तमन्यपदार्थे नदीभिः समस्यते । उन्मत्तगङ्गं नाम देशः ।

२२ । तत्पुरुषः ।

अथात स्तत्पुरुषो वाच्यः प्राग् बहुव्रीहेः ।

२३ । द्विगुश्च ।

द्विगुसमास स्तत्पुरुषसंज्ञः स्यात् । पञ्चराजी (3)। पञ्चगवम् । तत्पुरुषत्वे टच् ।

(3) अत्र सृष्टिधर :—"अकृतएव समासे टजित्यकारान्तोत्तरपद इति स्त्रीत्वे रूपम् । यदा तु कृते समासे समासान्तष्टजिति मतं तदा द्विगोरकारान्तोत्तरपदत्वं नास्तीति स्त्रीत्वाभावे पञ्चराजम् । भाष्यटीकायान्तु

## २४ । द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।

एभिर्द्वितीयान्तं समस्यते । कष्टं श्रितः कष्टश्रितः । लोकातीतः । भूमिपतितः । विपद्गतः । तरङ्गात्यस्तः । सुखप्राप्तः । सुखापन्नः । द्वितीयेति योगविभागाद् "विशेषविदुषः शास्त्रम् ।" "विप्राय वेदविदुषे ।"

(क) गमिगाम्यादीनाञ्च । ग्रामगमी । ग्रामगामी । ओदनं बुभुक्षुरोदनबुभुक्षुः । "द्विषद्वीर्य्यनिराकरिष्णुः" ।

## २५ । स्वयं क्तेन ।

स्वयं क्तान्तेन समस्यते । स्वयंविलीनम् । स्वयंकृतम् । तस्येदम् (४।३।१२०) । स्वायंकृतम् ।

## २६ । खट्वा क्षेपे ।

द्वितीयान्ता खट्वा क्तान्तेन समस्यते निन्दा चेत् । "खट्वारूढः प्रमादवान्" ।

## २७ । सामि ।

इदं क्तान्तेन समस्यते । सामिविलोकितम् । सामिकृतम् । तस्य शेषः सामिकृतशेषः । सामीत्यर्थग्रहणान्नेमभिन्नमर्द्धकृतमित्येके ।

## २८ । कालाः ।

द्वितीयान्ताः कालशब्दाः क्तान्तेन समस्यन्ते । अहरतिसृताः । रात्र्यारूढाः ।

## २९ । अत्यन्तसंयोगे च ।

अत्र च द्वितीयान्ताः कालशब्दाः सुपा सह समस्यन्ते । मुहूर्त्तसुखम् । चिरोषितः । वर्षभोग्यः ।

---

पूर्व्वस्मिन्नपि पक्षे पात्रादित्वात् पञ्चराजमित्येव घोषितम् ।"—इति । भाष्यटीका भाष्यप्रदीप इति । तथाच कैयटः—"पञ्चराजमिति । अकारान्तोत्तरपदत्वाभावात् स्त्रीत्वाभावः । यदा समासार्थोत्तरपदान्ताः समासान्ता इति पक्षस्तदा तु पात्रादित्वात् स्त्रीत्वाभावः" । इति । हरदत्तस्यैवम् । भट्टोजिश्च । तथाच पदमञ्जरी—"क्वचित् पञ्चराजीति स्त्रीलिङ्गस्य पाठः । स भाष्यविरोधादपपाठः ।" इति । माधवस्तु पञ्चराजीति ङीष्पक्षवादी । तथाहि धातुवृत्तौ राजृधातुव्याख्याने—"अयं समासान्त उत्तरपदादेकत एव समासे भवतीत्युक्तम् । तेन पञ्चराजीत्यादावकारान्तोत्तरपदसमाहारद्विगुत्वेन स्त्रियां ङीष् भवती"ति ।

## ३०। तृतीया तत्कृतार्थेन गुणवचनेन।

तृतीयान्तं तत्कृतेन गुणवचनेन समस्यते। गुणमुक्तवान् गुणवचनः। शङ्कुलया खण्डः शङ्कुलाखण्डः। शलाकाकाणः। अर्थशब्देन च। धान्येनार्थो धान्यार्थः। तत्कृतेन किम्? अक्ष्णा काणः। वचनग्रहणं किम्? घृतेन पाटवम्।

## ३१। पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः।

एभिस्तृतीयान्तं समस्यते। मासेन पूर्वो मासपूर्वः। पितृसदृशः। गुरुसमः। एकोनः। वाक्कलहः। वाङ्निपुणः। गुड़मिश्रः। आचारश्लक्ष्णः। कथं गुरुतुल्यो द्व्यङ्गविकलो मासावरः? भाविबहुलवचनात्।

## ३२। कर्तृकरणे कृता बहुलम्।

कर्त्तरि करणे च या तृतीया तदन्तं कृदन्तेन समस्यते। चौरहतः। व्याघ्रहतः। करणे। शरभिन्नः। लोष्टहतः। बहुलग्रहणं किम्? दात्रेण लूनवान्। पूर्वमुत्तरञ्च विधानं बहुलप्रपञ्चः।

## ३३। कृत्यैरधिकार्थवचने।

कृत्यैस्तृतीयान्तं समस्यतेऽधिकार्थोक्तिश्चेत्। काकपेया नदी। वाष्पच्छेद्यानि तृणानि।

## ३४। अन्नेन व्यञ्जनम्।

समस्यते। दध्नोपसिक्त ओदनो दध्योदनः।

## ३५। भक्ष्येण मिश्रीकरणम्।

समस्यते। गुड़ेण मिश्रा धाना गुड़धानाः। गुड़पिष्टकाः। तिलतण्डुलाः।

## ३६। चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः।

चतुर्थ्यन्तमेभिः समस्यते तादर्थ्ये। यूपाय दारु यूपदारु। प्रकृतिविकारभावेऽभिधानादेह। रन्धनाय स्थाली। अवहननायोदूखलम्।

यक्षबलिः। गोहितम्। गोसुखम्। गोरक्षितम्। इह वासस्टहाश्ववासादयस्तु चतुर्थीति योगविभागात्। षष्ठीसमासेन वा।

(क) अर्थशब्देन नित्यसमासवचनं सर्वलिङ्गता च। विप्रार्थः सूपः। विप्रार्था शाटी। विप्रार्थं पयः।

३७। पञ्चमी भयेन।

भयवाचिना पञ्चम्यन्तं समस्यते। चौराद् भयं चौरभयम्। व्याघ्रभीतिः। कथं सितेतरो ग्रामनिर्गतोऽधर्मजुगुप्सुः? पञ्चमीति योगविभागात्।

३८। अपेतापोढ़मुक्तपतितापत्रस्तैरल्पशः।

एभिरल्पा पञ्चमी समस्यते। दुःखापेतः सुखापेतः। कल्पनापोढ़ः। रोगमुक्तः। स्वर्गपतितः। चौरापत्रस्तः। अल्पशः किम्? प्रासादात् पतितः।

३९। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन।

स्तोकाद्यर्थाः कृच्छ्रञ्च क्तेन समस्यन्ते। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्यासादागतः। दूरादागतः। कृच्छ्रादवाप्तः। पञ्चम्याः स्तोकादिभ्य (६।३।२) इत्यलुक्।

४०। सप्तमी शौण्डैः।

शौण्डादिभिः सप्तम्यन्तं समस्यते। अक्षशौण्डः। अक्षधूर्त्तः। परेऽधि पराधीनः। स्वाधीनः। रणपण्डितः। कार्य्यनिपुणः। आकृतिगणोऽयम्।

४१। सिद्धशुष्कपक्वबन्धैश्च।

एभिः सप्तमी समस्यते। काम्पिल्यसिद्धः। आतपशुष्कः। छायाशुष्कः। "शाखाग्रपक्वं फलम्।" स्थालीपक्वः। चारकबन्धः।

४२। ध्वाङ्क्षेण क्षेपे।

ध्वाङ्क्षवाचिना सप्तम्यन्तं समस्यते क्षेपश्चेत्। तीर्थध्वाङ्क्षः। तीर्थकाकः। तद्वदनवस्थित इत्यर्थः।

४३ । कृत्यैर्ऋणे ।

कृत्यैरिति सौत्रो निर्देशः । कृत्येन यता सप्तम्यन्तं समस्यते । मासदेयम् । वर्षदेयम् । ऋणस्य नियोगोपलक्षणार्थत्वात् पूर्वाह्णगेयं साम ।

४४ । संज्ञायाम् ।

नाम्नि सप्तम्यन्तं समस्यते । वनेकिंशुकाः । हलदन्तादित्य-लुक् (६।३।९) ।

४५ । क्तेनाहोरात्रावयवाः ।

एते सप्तम्यन्ताः क्तेन समस्यन्ते । पूर्वाह्णकृतम् । अपररात्रकृतम् । अवयवग्रहणं किम्? अह्नि कृतम् ।

४६ । तत्र ।

इदं क्तेन समस्यते । तत्रभुक्तम् । तत्रकृतम् । तस्येदम् (४।३।१२०) । तात्रकृतम् ।

४७ । क्षेपे ।

क्षेपे सप्तम्यन्तं क्तेन समस्यते । प्रवाहेमूत्रितम् । भस्मनिहुतम् । तत्पुरुषे कृतीत्यलुक् (६।३।१४) ।

४८ । पात्रेसमितादयश्च ।

अमी क्षेपे निपात्यन्ते । पात्रेसमिताः । कूपमण्डूकाः । उदुम्बरकृमिः । पिण्डीशूरः । मातरिपुरुषः । मातरिशूरः । गोष्ठेप्रवीरः । गेहेनर्द्दी । गेहेपटुः । गेहेमेही । गेहेपण्डितः ।

४९ । पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।

पूर्वकालवृत्तयः शब्दा एकादयश्च समानाधिकरणेन सुपा सह समस्यन्ते । दग्धप्ररूढ़ः । स्नातानुलिप्तः । एकादयः । एकपण्डितः । एकपत्नी । सर्व-

ट्वेवाः। जरद्गवः। पुराणतरः (4)। नवोदकम्। केवलान्नम्। समानाधिकरणेन किम्? एकसाः शौल्कम्।

## ५०। दिक्संख्ये संज्ञायाम्।

एते नाम्नि समस्येते। समानाधिकरणेनेति चा पादमनुवर्त्तते। पूर्वेषुकामशमी। पञ्चाम्राः (5)। सप्तर्षयः। कथमनाम्नि चतुर्वर्णी द्विपदाश्रितो विधिर्द्वीन्द्रिये इति? कार्य्योऽत्र यत्नः। (6)

## ५१। तद्धितार्थोत्तरपदसमाहारे च।

तद्धितार्थे विषयभूत उत्तरपदे परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन समस्येते। तद्धितार्थे। पौर्वशालः। पाञ्चनापितिः। उत्तरपदे। पञ्चगवप्रियः। पञ्चगवधनः। समाहारे दिङ् न सम्भवति। पञ्चकुमारी।

## ५२। संख्यापूर्वो द्विगुः।

अनन्तरसूत्रे संख्यापूर्वसमासो द्विगुरुच्यते। पञ्चकपालः सूपः। द्विगो-

---

(4) पुराणभकरिति पाठान्तरम्। अत्र सृष्टिधरः—"बिभर्तीति भरुः पोष्टा। औणादिक उः" इति। भरु भर्त्तरि भूपे चेति विश्वः।

(5) तथाचाहुः—"अश्वत्थ एकः पिचुमर्द्द एको द्वौ चम्पकौ त्रीणि च केसराणि। सप्ताय ताला नव नारिकेलाः पञ्चाम्ररोपी नरकं न याति" ॥ १ ॥ इति। पिचुमर्द्दो निम्ब इत्यर्थः। पिचुमन्द इति मतान्तरे रूपम्।

(6) अयमत्र यत्नः। चतुरवयवाश्चतुष्परिमिता वा वर्णाश्चतुर्वर्णाः। द्व्यवयवे द्विसंख्याके वा पदे। तदाश्रितो विधिः। द्व्यवयवे द्विसंख्याके वेन्द्रिये द्वीन्द्रिये इति। सर्वत्र शाकपार्थिवादित्वात् (२।१।६०, वा) समासः। अपिच द्विपदाश्रित इत्यादौ त्रिपदतत्पुरुषोऽपि न। तस्य परिमाणिमात्रेणैव (२।१।५१, वा) विहितत्वात्। सुप् सुपेत्यत्र त्वेकत्वस्य विवक्षितत्वाद्द्वयोर्द्वयोरेव तत्पुरुषः। न बहूनां युगपत्। एवं हि त्रिलोकनाथेन सतां मखद्विष इति पुराणस्य कवेस्तस्य चतुर्मुखसमीरितेति त्रिलोकनाथः पितृसद्मगोचर इति च कालिदासस्य, नवरसरुचिरेति मम्मटस्य, पञ्चपुरुषगामिनीत्यादयश्च प्रयोगाः समाधेयाः। ननु ते त्रिपदतत्पुरुषेण साध्याः। न च पञ्चपुरुषादिषु विशेषणसमासः। दिक्संख्ये संज्ञायामिति (२।१।५०) नियमात्। नापि समाहारे द्विगुः। द्विगो (४।१।२१) रिति ङीप्प्रसङ्गात्। पात्रादित्वञ्च (२।४।३०, वा) न कल्पनीयम्। "यदि त्रिलोकी गणनापरा स्यादि"त्यादिप्रयोगस्यासाधुतापत्तेः। त्रिलोकनाथ इत्यत्र त्र्यवयवो लोकस्त्रिलोकस्तस्य नाथ इति, त्रयाणां लोकनाथ इति वा, नवरसरुचिरेत्यत्र नवरसेति बहुव्रीहिस्ततो रुचिरेत्यनेन कर्मधारय इति वा, समाधानम्। इत्थं चतुर्मुखसमीरितेत्यत्र चतुर्द्दिक्दर्शीनि चतुःसंख्याकानि चतुरवयवानि वा मुखानि चतुर्मुखानि। तैः समीरितेति विग्रहः। एवमन्यत्रापि यथोचितमुन्नेयम्।

लुगनपत्य इत्यणो (४।१।८८) लुक् । पञ्चनावप्रियः । नावो द्विगोरिति (५।४।९९) टच् । पञ्चपूली । द्विगो (४।१।२१) रिति ङीप् । पञ्चकुमारि ।

## ५३ । कुत्सितानि कुत्सनैः ।

कुत्सितार्थानि कुत्साकरैः समस्यन्ते । वैयाकरणखसूचिः ।

## ५४ । पापाणके कुत्सितैः ।

एते कुत्सितैः समस्येते । पापपुरुषः । अणकभार्य्या । "किं मयाणकभार्य्यया ।"

## ५५ । उपमानानि सामान्यवचनैः ।

उपमानवाचीनि सामान्यधर्मवचनैः समस्यन्ते । शङ्ख इव पाण्डरः शङ्खपाण्डरः । कनकगौरः । शस्त्रीश्यामा । स्त्रियाः पुंवत्त्वे (६।३।३४) मृगचपला । काकवन्ध्या ।

## ५६ । उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।

उपमेयं व्याघ्रादिभिः समस्यते । पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः । मुखचन्द्रः । करपद्मम् । सामान्याप्रयोगे किम् ? पुरुषोऽयं व्याघ्रइव शूरः । नन्वत्र सापेक्षत्वान्न भविष्यति । तद्यंतज् ज्ञापयति प्रधानस्य सापेक्षस्यापि समासोऽस्तीति । तेन राजपुरुषोऽभिरूपकः । राजपुरुषो दर्शनीय इति ।

## ५७ । विशेषणं विशेष्येण बहुलम् ।

विशेषणवाचि सुबन्तं विशेष्यवाचिना सुबन्तेन समस्यते । नीलोत्पलम् । कृष्णतिलाः । लसदुत्पलम् । इदंस्त्री । इदम्पुरुषः । बहुलग्रहणान्नेह । बोधिसत्त्वो महासत्त्वः । रामो जामदग्न्यः । इह च नित्यम् । कृष्णसर्पः । विशेषणं किम् ? वृक्षः शिंशपा । असुरोऽन्धकः । इह च तत्पुरुषविधानमस्यैव प्रपञ्चमाहुः । विशेषणमेव ह्येतत् कष्टश्रितो राजपुरुष इति ।

## ५८ । पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ।

अमी समानाधिकरणेन सुपा समस्यन्ते । पूर्वपण्डितः । अपरभार्य्या । प्रथमपुरुषः । चरमपर्वतः । जघन्यधर्मः । समानबलम् । मध्यदेशः । मध्यमनरः । वीरपुरुषः ।

५९। श्रेण्यादयः कृतादिभिः।

एभिरमी समस्यन्ते। च्व्यर्थेऽभिधानम्। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः। एवं मृदुभूताः। श्रेणि पूग कूट पटु देव मृदु श्रवण पण्डितादयाः श्रेण्यादयः। कृत भूत समाख्यात। कृतादिः।

६०। क्तेन नञ्विशिष्टेनानञ्।

नञाधिकेन क्तेनानञ् क्तान्तं समस्यते। कृतञ्च किञ्चिदकृतञ्च किञ्चित् कृताकृतं कार्य्यम्। भुक्ताभुक्तम्। अशितानशितम्।

(क) कृतापकृतादीनामुपसंख्यानम्। कृतापकृतम्। गतप्रत्यागतम्।

(ख) शाकपार्थिवादीनां मध्यपदलोपश्च। शाकप्रधानः पार्थिवः शाकपार्थिवः। अजातौल्वलिः। विन्ध्यगिरिः। चन्दनद्रुमः। श्रीहर्षनृपतिः। सुग्रीवकपिः। करणकारकम्। तर्कविद्या। व्याकरणशास्त्रम्।

६१। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः।

एते पूज्यमानैः समस्यन्ते। सत्पुरुषः। महापुरुषः। पूज्यमानैः किम्? उत्कृष्टा गौः पङ्कात्। उद्धृतेत्यर्थः।

६२। वृन्दारकनागकुञ्जरैः पूज्यमानम्।

अमीभिः पूज्यमानं समस्यते। गोवृन्दारकः। योषिद्वृन्दारिका। पुरुषनागः। मुनिकुञ्जरः। पूज्यमानं किम्? देवदत्तो नागो यतो मूर्खः।

६३। कतरकतमौ जातिपरिप्रश्ने।

इमौ जातिपरिप्रश्नवृत्ती समस्येते। कतरकठः। कतमकालापः। जातिपरिप्रश्ने किम्? कतमो भवतां पटुः। अतएवाजातावपि डतमजुत्वेयः कतमो चैत्रमैत्राविति।

६४। किं क्षेपे।

किंशब्दः क्षेपे समस्यते। किंगौः। अदोहवाहात्। किंपुत्रः। दौःशील्यात्। किंराजा यो न रक्षति।

६५ । पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ।

एभिर्जातिः समस्यते । गोपोटा । गोयुवतिः । अग्निस्तोकः । घृतकतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोवष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । विप्राध्यापकः । वकधूर्त्तः । जातिः किम् ? यज्ञदत्तो धूर्त्तः ।

६६ । प्रशंसावचनैश्च ।

एभिर्जातिः समस्यते । गोमल्लिका । अश्वप्रकाण्डम् ।

६७ । युवा खलतिपलितवलिनजरतीभिः ।

खलत्यादिभिर्युवा समस्यते । युवा चासौ खलतिश्चेति युवखलतिः । युवपलितः । युववलिनः । इह लिङ्गविशिष्टग्रहणात् समानाधिकरणाधिकारबलाद्वा युवतिर्जरती युवजरती ।

६८ । कृत्यतुल्याख्या अजात्या ।

कृत्याख्या तुल्याख्याश्चाजात्या समस्यन्ते । उष्णं भोज्यं भोज्योष्णम् । पानीयोष्णम् । भोज्यलवणम् । तुल्याख्या । तुल्यश्वेतश्चन्द्रेण । सदृशमहान् गिरिणा । अजात्या किम् ? भोज्य ओदनः । विशेषणसमासोऽपि बाध्यते ।

६९ । वर्णो वर्णेन ।

समस्यते । कृष्णलोहितः । कृष्णशबलः । श्वेतरक्तः ।

७० । कुमारः श्रमणादिभिः ।

अयमेभिः समस्यते । कुमारी श्रमणा कुमारश्रमणा । कुमारकुलटा । कुमारपण्डितः । एवं तापसी । गर्भिणी । अध्यापक । पटु । निपुणादि ।

७१ । चतुष्पादो गर्भिण्या ।

चतुष्पाद्वाचिनो गर्भिण्या समस्यन्ते । गोगर्भिणी । अश्वगर्भिणी । जातेरभिधानान्नेह । कालाची गर्भिणी ।

७२ । मयूरव्यंसकादयश्च ।

अमी तत्पुरुषे निपात्यन्ते । व्यंसको धूर्त्तः । मयूरव्यंसकः । छात्रव्यंसकः ।

काम्बोजमुण्डः। यवनमुण्डः। परनिपातार्थमेषां पाठः। उच्चावचम्। परम-कृत्वा। पीत्वास्थिरकः। "राघवः प्रोथपापीयान्"। या इच्छा यदृच्छा।

(क) अव्ययं कृतेति वक्तव्यम्। प्रातर्दोहः। अवश्यंकारी। (7)

(1) एहीड़ादयोऽन्यपदार्थे। एहि ईड़ इति यत्रोच्यते तदेहीड़म्। इह एहीति यत्रोच्यते तदेहीहं कर्म।

(2) जहिकर्म्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति। जह्यन्तं कर्मणा समस्यते। समासश्च कर्त्तारमाह। जहि जोड़मित्यभीक्ष्णमाह जहिजोड़ः। जहिस्तम्बः।

(3) आख्यातमाख्यातेन क्रियासातत्ये। अश्नीत पिबतेति यत्रोच्यते सा नियोजनक्रियाऽश्नीतपिबता। पचतभृज्जता। खादतमोदता। आकृतिगणोऽयम्।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
द्वितीयाध्यायस्य प्रथमः पादः ॥२।१॥
समासस्य समर्थपादः।

---

(7) एतच्चाविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्य इति वचनात्। वार्त्तिककारस्तु कुगति-प्रादय (२।२।१८) इत्यत्रैवाव्ययं प्रवृद्धादिभिरित्युक्त्वाव्ययेन कृद्भिरकृद्भिश्च समासं विहितवान्। तेन पुनःप्रवृद्धम् पुनर्गवः पुनःसुखमित्यादिषु तत्पुरुषः सिद्धः। परन्तु प्रातर्दोहादीनामत्र विधानं चिन्त्यमेव। मयूर-व्यंसकादयश्चेत्यत्र (२।१।७२) चकारस्यावधारणार्थत्वादेषां समासान्तरे घटकतया प्रवेशानर्हत्वापत्तेः।

अथ

# भाषावृत्तिः ।

## द्वितीयोऽध्यायः । द्वितीयः पादः ।

### १ । पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।

पूर्वादयोऽवयविना एकद्रव्ये वर्त्तमानाः समस्यन्ते । पूर्वं कायस्य पूर्वकायः । अपरकायः । उत्तरकायः । अधरकायः । कथं मध्याह्नः सायाह्नः पश्चिमरात्रः ? विशेषणसमासोऽस्तु । यद्येवमनेनैव पूर्वश्चासौ कायश्चेति सिद्धम् । किं सूत्रेण ? नैवम् । षष्ठीसमासापवादत्वात् सूत्रस्य । नहि भवति कायपूर्वं इति ।

### २ । अर्द्धं नपुंसकम् ।

समभागि क्लीबलिङ्गमर्द्धमेकदेशिना समस्यते । अर्द्धपिप्पली । अर्द्धनखरञ्जनी । नपुंसकं किम् ? ग्रामार्द्धः । नगरार्द्धः ।

### ३ । द्वितीयतृतीयचतुर्थतुर्य्याण्यन्यतरस्याम् ।

एतान्येकद्रव्ये वर्त्तमानान्यवयविना समस्यन्ते वा । द्वितीयं भिक्षाया द्वितीयभिक्षा । तृतीयवापी । चतुर्थनदी । तुर्य्यकथा । पक्षे भिक्षाद्वितीयम् । वापीतृतीयम् । नदीचतुर्थम् । कथातुर्य्यम् ।

### ४ । प्राप्तापन्ने च द्वितीयया ।

इमे द्वितीयान्तेन समस्येते । अ चेति । यदा लिङ्गविशिष्टग्रहणात् टाबन्ताभ्यां समासस्तदाऽकारश्चान्तादेशः । सौत्रत्वाच्चास्य प्रश्लेषः (8) । प्राप्तो

---

(8) भाष्येऽकारप्रश्लेषश्चकारेणानुमितः । तथाहि—"नायमनुकर्षणार्थश्चकारः । किं तर्हि ? अत्वमनेन विधीयते" इति । द्वितीयया अ इति भट्टोजिमते छेदः । कैयटमते प्राप्तापन्ने इत्यस्मात् परमकारस्य स्थितिः । "सौत्रत्वाच्च निर्देशस्य प्रकृतिभावः प्रगृह्याश्रयो न भवती" । त्याहुः । नागेशोऽप्यत्र कैयटमतानुसारी ।

जीविकां प्राप्तजीविकः। आपन्नसुखः। प्राप्ता जीविकां प्राप्तजीविका। आपन्नसुखा। कथं जीविकाप्राप्तः सुखापन्न इति ? द्वितीयाश्रितेति (२।१।२४) वचनसामर्थ्यात्।

## ५। कालाः परिमाणिना।

कालशब्दाः परिच्छेद्येन समस्यन्ते। मासो जातस्य मासजातः। वर्षजातः। द्व्यहजातः।

## ६। नञ्।

नञ् समर्थेन सुपा समस्यते। अब्राह्मणः। अशुक्लः। अनेकः। असर्वः। असर्वस्मै। अकृत्वा। अकर्त्तुम्।

## ७। ईषदकृता।

अकृदिति गुणोपलक्षणम्। ईषद् गुणेन समस्यते। ईषद्रक्तः। ईषद्रक्तः पुत्रः।

## ८। षष्ठी।

षष्ठ्यन्तं सुपा समस्यते। राजपुरुषः। राजपुरुषधनम्।

(क) कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्। इध्मप्रव्रश्चनः। उद्दालकपुष्पभञ्जिका।

(ख) तत्स्थैश्च गुणैर्नतु तद्विशेषणैः। गुणात्मन्येव ये गुणाः सन्ति नतु सोऽयमित्यभेदोपचाराच्छुक्लादिवद् द्रव्ये तैर्गुणैः षष्ठी समस्यते। गुणेनेति (२।२।३१) निषेधं वक्ष्यति। तस्यायमपकर्षः। ब्राह्मणवर्णः। चन्दनगन्धः। कपित्थरसः। पटहध्वनिः। अङ्गस्पर्शः। नतु तद्विशेषणैः। घृतस्य तीव्रः। चन्दनस्य मृदुः।

## ९। याजकादिभिश्च।

अयं योगः कर्त्तरि चेति (२।२।१६) निषेधापवादत्वात् स्वरार्थो व्याख्यातव्यः।

१० । न निर्धारणे ।

निर्धारणे या षष्ठी सा न समस्यते । नराणां क्षत्रियः शूरतमः । गवां कृष्णा सम्पन्नक्षीरतमा । अध्वगानां रथिनः शीघ्रतमाः ।

(क) प्रतिपदविधाना षष्ठी न समस्यते । सर्पिषो ज्ञातम् । मातुः स्मृतम् । चौरस्य रुग्णम् ।

११ । पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।

पूरणादिना षष्ठी न समस्यते । छात्राणां पञ्चमः । भिक्षूणामष्टादशः । गुणे । बलाकायाः शौक्ल्यम् । पटस्य लौहित्यम् । पटस्य शुक्लः । इह च वैशेषिकप्रसिद्धाः संख्यादयो गुणा नेष्यन्ते । शतसहस्रान्ताच्च निष्कादिति (५।२।११८) वचनात् । नापि धर्ममात्रं गुणो गृह्यते । अधिकरणेतावत्त्वे च (२।४।१५) वर्त्तमानसामीप्ये वर्त्तमानवद्वेति (७।३।१३१) निर्देशात् । तेन गोशतं गोचत्वारिंशद् बुद्धिवैगुण्यं वचनसामर्थ्यं "पद्मासनकौशलं" मुनिचापलं वस्त्रपीतिमा द्रव्यकाठिन्यं "पच्चालीपिङ्गलिम्नः" उदरगौरवमित्यादयः साधवः स्युः । सुहितार्थास्तृप्त्यर्थाः । फलानां तृप्तः । फलानां सुहितः । फलानामाशितः । शेषषष्ठीयम् । नलोकेति (२।३।६९) कृद्योगायाः प्रतिषेधात् । सत् । चौरस्य द्विषन् । मित्रस्य कुर्वन् । मित्रस्य कुर्वाणः । अव्ययम् । विप्रस्य कृत्वा । तव्यः । ब्राह्मणस्य कर्त्तव्यम् । एकाधिकरणे । राज्ञः स्रौग्घ्नस्य । पाणिनेः सूत्रकारस्य ।

१२ । क्तेन च पूजायाम् ।

पूजायां क्तेन षष्ठी न समस्यते । राज्ञां मतम् ।

१३ । अधिकरणवाचिना च ।

इदमेषामासितम् ।

१४ । कर्मणि च ।

कर्मणि षष्ठी न समस्यते । आश्चर्यो गवां (9) दोहोऽगोपालकेन ।

(9) अगवामिति छित्त्वात सृष्टिधर आह—"अप्रशस्तगवीनामित्यर्थः । नञ्स्तत्पुरुषादिति (५।४।७१) समासान्तनिषेध" इति ( भाषावृत्त्यर्थविवृतौ ) ।

## १५। तृजकाभ्यां कर्त्तरि।

तृजकाभ्यां योगे कर्त्तरि षष्ठी न समस्यते। भवत आसिका। भवतोऽग्रगामिका। तृज् ग्रहणमुत्तरार्थम्।

## १६। कर्त्तरि च।

कर्त्तरि यौ तृजकौ विहितौ ताभ्यां योगे कर्मणि षष्ठी न समस्यते। अपां स्रष्टा। पुरां भेत्ता। ओदनस्य भोजकः। निषेधपञ्चसूत्रीयं स्वरार्था। शेषषष्ठीसमासस्यानिवारणात्। तेन राजसम्मतो "राममहितः" भवदासितं भवदासिका गोदोह"स्तत्कर्त्ता फलभाग् यत" इति भर्त्तृहरिः। क्रियाविशेषको जातिवाचकस्तत्प्रयोजक इत्याद्यसंख्याः षष्ठीसमासा भवन्त्येव। तस्मात् केवलं कारकषष्ठीसमासे सति गतिकारकोपपदात् कृदि-(६।२।१३९)-त्युत्तरपदप्रकृतिस्वरेणौदनभोजकादयो मध्योदात्ता मा भूवन्। शेषषष्ठीसमासे सति समासान्तोदात्ता (६।१।२२३) यथा स्युरिति निषेध आरभ्यते। याजकादिभिश्चेति (२।२।९) पुनः कारकषष्ठीसमासप्रतिप्रसवाद् ब्राह्मणयाजकादिषूत्तरपदप्रकृतिस्वर एव।

## १७। नित्यं क्रीड़ाजीविकयोः।

अनयोरर्थेन षष्ठी समस्यते। नित्यमिति वाक्यनिवृत्त्यर्थम्। दमनकभञ्जिका नाम क्रीड़ा। संज्ञायां ण्वुल् (३।३।१०९)। जीविकायाम्। दन्तलेखकः। नखलेखकः। ण्वुल्तृचौ (३।१।१३३)।

## १८। कुगतिप्रादयः।

एते नित्यं समस्यन्ते। कुत्पः। कुत्सितः। कोष्णम्। गतिः। उररीकृत्य। प्रकृत्य। प्रादिः। दुष्कुलम्। सुमानुषी। आपिङ्गलः। प्रगत आचार्य्यः प्राचार्य्यः। अतिखट्वः। निष्कौशाम्बिः। प्रादिप्रसङ्गे कर्मप्रवचनीयानां क्वचिन्निषेधः। अनभिधानात्। वृक्षं प्रति विद्योतते विद्युत्।

क्वचिन्नवत्येव । अतिसुतम् । अतिरतिक्रमणे चेति (१।४।९५) कर्मप्रवचनीयत्वात् षत्वाभावः । (10)

## १९ । उपपदमतिङ् ।

नित्यमुपपदं समस्यते । कुम्भकारः । ग्रामणीः । अग्निचित् । अतिङिति किम् ? कर्त्तुं व्रजति । कारको व्रजति ।

## २० । अमैवाव्ययेन ।

यद्यव्ययेनोपपदं समस्यते तदामैव । स्वादुङ्कारं भुङ्क्ते । नान्येन । कालो भोक्तुम् ।

## २१ । तृतीयाप्रभृतीन्यन्यतरस्याम् ।

उपदंशस्तृतीयायामित्यादौ (३।४।४७) तृतीयादीन्युपपदान्यमा वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते मूलकोपदंशं वा । उच्चैःकारम् ।

## २२ । क्त्वा च ।

तानि क्त्वान्तेन वा समस्यन्ते । उच्चैःकृत्य उच्चैः कृत्वा वा कथयति । तृतीयाप्रभृतीनीत्येव । अलं कृत्वा । खलु कृत्वा । उक्तास्तत्पुरुषः ।

## २३ । शेषो बहुव्रीहिः ।

तत्पुरुषाव्ययीभावाभ्यामन्यो बहुव्रीहिर्नाम समासो वाच्यः ।

## २४ । अनेकमन्यपदार्थे ।

अनेकं सुबन्तमन्यपदार्थे वर्त्तमानं समस्यते । प्राप्तोदको ग्रामः । ऊढरथोऽश्वः । दत्तबलिर्दानवः । च्युतफलस्तरुः । सुसूक्ष्मजटकेशो व्रती ।

---

(10) सूत्रेऽस्मिन्नेतानि वार्त्तिकानि—(क) "प्रादिप्रसङ्गे कर्मप्रवचनीयप्रतिषेधः । (ख) व्यवेतप्रतिषेधश्च । (ग) सिद्धं तु क्त्वाङ्खतिदुर्गतिवचनात् । (घ) प्रादयः क्तार्थे । ( कुः पापार्थे । आङीषदर्थे । स्वती पूजायाम् । दुर्निन्दायामिति सौनागाः । ) (ङ) प्रादयो गताद्यर्थे प्रथमया । (च) अत्यादयः क्रान्ताद्यर्थे द्वितीयया । (छ) अवादयः क्रुष्टाद्यर्थे तृतीयया । (ज) पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या । (झ) निरादयः क्रान्ताद्यर्थे पञ्चम्या । (ञ) अव्ययं प्रवृद्धादिभिः । (ट) इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च । (ठ) उदात्तवता तिङा गतिमता चाव्ययं समस्यत इति वक्तव्यम् ।

बहुशस्यो देश:। इह च यथाभिधानं व्यवस्था। तेन मत्वर्थे बहुव्रीहि:। चित्रगुर्देवदत्त इति। न सम्बन्धमात्रे। तथा प्रथमार्थे न भवति वृष्टे देवे गत इति। क्वचित् सामानाधिकरण्येऽपि न स्यात् पञ्च भुक्तवन्तोऽस्येति। व्यधिकरणानाञ्च स्यात्। कण्ठेकाल:। उरसिलोमा। उच्चैर्मुख:। क्वचिद् दध्नोपसिक्त ओदनो दध्योदन इतिवदुत्तरपदस्य वृत्तावन्तर्भाव:। उष्ट्रमुखमिव मुखमस्य उष्ट्रमुख:। सुवर्णविकारोऽलङ्कारोऽस्य सुवर्णालङ्कार:। क्वचिद् गतार्थस्यापि पदे प्रयोग: प्रपतितपर्ण: प्रपर्ण:। अविद्यमानपुत्रोऽपुत्र इति। इहास्तिक्षीरा ब्राह्मणी। अस्तिधना। लेखको नास्तिदोषक इत्यव्यया-भ्यामस्तिनास्तिशब्दाभ्यां समास:।

## २५। संख्ययाऽव्ययासन्नादूराधिकसंख्या: संख्येये।

अव्ययादय: संख्येयवाचिन्या संख्यया समस्यन्ते। दशानां समीपे उप-दशा:। आसन्नविंशा:। अदूरदशा:। अधिकदशा:। संख्या। द्वौ वा त्रयो वेति द्वित्रा:। त्रिचतुरा:। पञ्चषा:। चतुष्पञ्चा:। लक्षकोटा:। "एकद्वान् दिवसांस्तिष्ठ"। सप्ताष्टैर्दिवसैर्यास्यसि।

## २६। दिङ्नामान्यन्तराले।

दिशां नामान्यन्तराले वाच्ये समस्यन्ते। दक्षिणपूर्वा दिक्। पूर्वोत्तरा। उत्तरपश्चिमा।

(क) सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव:। (11)

## २७। तत्र तेनेदमिति सरूपे।

इदमित्यर्थे सप्तम्यन्ते तृतीयान्ते च समानरूपे पदे समस्येते। इति-शब्दो लौकिकविवक्षार्थ:। केशेषु केशेषु गृहीत्वेदं युद्धं वृत्तं केशाकेशि युद्धम्। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं वृत्तं दण्डादण्डि युद्धम्। अन्येषामपि दृश्यत इति (६।३।१३७) दीर्घ:। इच् कर्मव्यतिहारे इतीच् (५।४।१५७) समासान्त:। तिष्ठद्गुप्रभृतित्वादव्ययत्वम् (२।१।१७)।

(11) एतद् भाष्यकारवचनमित्येके। वार्त्तिकमित्यपरे। इदानीन्तनपुस्तकेष्वपि वार्त्तिकरूपेणैव विन्यस्तं दृश्यते। This is put down as a वार्त्तिक to 2. 2. 26.

## २८ । तेन सहेति तुल्ययोगे ।

तृतीयान्तेन सहशब्दः समस्यते तुल्ययोगश्चेत् । सपुत्र आगतः । सच्छात्रः । तुल्ययोगस्य प्रायिकत्वात् सदर्पः सधनः सपत्तः । उक्तो बहुव्रीहिः ।

## २९ । चार्थे द्वन्द्वः ।

अनेकमित्येव । अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यत इत्ययं द्वन्द्वो नाम समासः । इतरेतरयोगे । प्लक्षाशोकौ । प्लक्षाशोकवटाः । समाहारे । वाक्त्वचम् । धवखदिरपलाशम् ।

## ३० । उपसर्जनं पूर्वम् ।

समासेषूपसर्जनसंज्ञं पूर्वं प्रयोज्यम् । अधिस्त्रि । राजपुरुषः ।

## ३१ । राजदन्तादिषु परम् ।

एषूपसर्जनं घ्यन्तादि च परं प्रयोज्यम् । दन्तानां राजा राजदन्तः । राजजम्बुः । मातुः सपत्नी सपत्नीमाता । वनस्याग्रे अग्रेवणम् । निपातनादलुक् । पूर्वं वासितं ततो लिप्तं लिप्तवासितम् । सिक्तसंमृष्टम् । नग्नमुषितम् । द्वन्द्वे । पुत्रपशू ।

(1) धर्मादिषूभयम् । धर्मार्थावर्थधर्मौ । चन्द्रार्कावर्कचन्द्रौ । अन्तादी आद्यन्तौ । सर्पिर्मधुनी मधुसर्पिषी ।

(2) जायाया जम्भावो दम्भावश्च । जायापती जम्पती दम्पती ।

## ३२ । द्वन्द्वे घि ।

द्वन्द्वे घ्यन्तं पूर्वं निपतति । कमण्डलुकृष्णाजिनम् । बहुष्वेकत्र नियमः । पटुशुक्लमृदवः ।

## ३३ । अजाद्यदन्तम् ।

इदं द्वन्द्वे पूर्वं निपतति । उष्ट्रशशम् । इन्द्रवायू । परत्वादिदमिष्यते । कथं "विषयेन्द्रिययोरिष्टः" ? परत्वाल्लघ्वक्षरमिति (२।२।६४, वा) भविष्यति । बहुष्वेकत्र नियमः । अश्वरथेन्द्राः ।

## ३४ । अल्पाच्तरम् ।

इदं द्वन्द्वे पूर्वं प्रयोज्यम् । प्लक्षन्यग्रोधम् । धवाश्वकर्णम् । इह वागग्नी वागिन्द्राविति । घ्यन्तादजाद्यदन्ताच्च परत्वादिदमिष्यते । बहुष्वेकत्र नियमः । शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः ।

(क) अभ्यर्हितं पूर्वमिति वक्तव्यम् । मातापितरौ (12) ।

(ख) भ्रातुर्ज्यायसः । युधिष्ठिरार्जुनौ ।

(ग) लघ्वक्षरञ्च । कुशकाशम् । शरशीर्षम् ।

(घ) वर्णानामानुपूर्व्येण । ब्राह्मणक्षत्रियविट्शूद्राः ।

(ङ) ऋतुनक्षत्राणां समानाक्षराणामानुपूर्व्येण । हेमन्तशिशिरवसन्ताः । भरणीकृत्तिकारोहिण्यः ।

(च) संख्याया अल्पीयस्याः । एकादश । द्वादश । द्वित्राः । नवतिशतम् ।

## ३५ । सप्तमीविशेषणे बहुव्रीहौ ।

सप्तम्यन्तं विशेषणञ्च बहुव्रीहौ पूर्वं निपतति । कण्ठेकालः । चित्रगुः ।

(क) सर्वनामसंख्ययोरुपसंख्यानम् । सर्वश्वेतः । द्विकृष्णः । सप्तकृतः बहुश्रुतः । सप्तोन्नतः ।

(ख) वा प्रियस्य । गुडप्रियः । प्रियगुडः ।

(ग) गड्वादिभ्यः सप्तम्याः परवचनम् । गडुकण्ठः । अरुःशिराः ।

## ३६ । निष्ठा ।

निष्ठान्तं बहुव्रीहौ पूर्वं निपतति । कृतकृत्यः । गतरतिः । जितशत्रुः ।

(क) जातिकालसुखादिभ्यः परवचनम् । जातेः । मांसभक्षिती । सुरापीती । तृजग्धः । कटकृतः । कालात् । मासजातः । वर्षजातः । सुखादिभ्यः । सुखजातः । कृच्छ्रजातः ।

(ख) प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ । शस्त्रोद्यतः । असुद्यतः ।

---

(12) गर्भधारणपोषणाभ्यां तातान्माता गरीयसीति मातुरभ्यर्हितत्वमित्याहुः ।

शूलपाणिः । दण्डपाणिः । प्रायिकञ्चैतत् सर्वम् । तेन कृतकटः । उद्-
गूर्णबाणः ।

### ३७ । वाऽऽहिताग्न्यादिषु ।

आहिताग्न्यादौ निष्ठान्तं पूर्वं वा प्रयोज्यम् । आहिताग्निः । अग्न्या-
हितः । एवं जातपुत्रः । जातश्मश्रुः । घृतपीतः । ऊढभार्य्यः । गतार्थः ।
आकृतिगणोऽयम् ।

### ३८ । कड़ाराः कर्मधारये ।

कड़ारादयो गुणशब्दाः कर्मधारये पूर्वं वा प्रयोज्याः । कड़ारजैमिनिः
जैमिनिकड़ारो वा । कड़ार । गडुल । काण । खञ्ज । कुब्ज । वामन ।
खलति । गौर । वृद्ध । पिङ्गल । खल । एकसंज्ञाधिकारः पूर्णः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवस्य भाषावृत्तौ द्वितीयाध्यायस्य
द्वितीयः पादः ॥ २।२ ॥ समासशापरपादः ।

---

अथ

# भाषावृत्तिः ।

---

## द्वितीयोऽध्यायः । तृतीयः पादः ।

### १ । अनभिहिते ।

लकृत्तद्धितसमासैरनभिहिते कर्मादाविकत्वादिषु द्वितीयादयो वाच्याः ।

### २ । कर्मणि द्वितीया ।

कर्मणि द्वितीया स्यात् । काशान् कटं करोति । ओदनं बुभुक्षुः-व्रीहीन् प्रोक्षति । अजां ग्रामं नयति । अनभिहित इत्येव । निन्येऽजा ग्रामम् । नयनीयाजा ग्रामम् । शतिकोऽश्वः । प्राप्तातिथिर्ग्रामः ।

(क) उभसर्वतसोः कार्या धिगुपर्य्यादिषु त्रिषु ।
द्वितीयाम्रेड़ितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ १ ॥

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग् दुर्जनम् । उपर्य्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो ग्रामम् । ततोऽन्यत्रापि दृश्यते । बुभुक्षितं न प्रति भाति किञ्चित् । बुभुक्षितस्येत्यर्थः । एवं चैत्र यावच्छीतमित्यादौ ।

(ख) अभितःपरितःसमयानिकषाहायोगेष्वपि दृश्यते । अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् ।

### ३ । तृतीया च होश्छन्दसि ।

छन्दः सूत्रमेकम् ।

### ४ । अन्तराऽन्तरेण युक्ते ।

आभ्यां युक्ते द्वितीया स्यात् । "वैदेहीमन्तरा क्रुद्धः ।" वैदेह्या मध्य इत्यर्थः । त्वाञ्च माञ्चान्तरा कमण्डलुः । तव मम मध्य इत्यर्थः । उपपद-

विभक्तेः कारकविभक्तिर्बलीयसीति कमण्डलोर्न द्वितीया । सर्वा ह्युपपद-विभक्तयः षष्ठ्यपवादिकाः । नान्तरेण गुणान् सुखम् । गुणैर्विनेत्यर्थः ।

५ । कालाध्वनोरत्यन्तसंयोगे ।

अत्यन्तसंयोगश्चेत् कालाध्वनोर्द्वितीया स्यात् । सर्वरात्रं कल्याणी । मासं रमणीयाः । "क्षणमूचे" । दिवसं पठति । अध्वनः । क्रोशं कुटिला नदी । योजनं धावति । भाष्ये तु योजनक्रिययाऽत्यन्तसंयोगः । तदर्थमेतदिति स्थितम् । मासमास्ते । क्रोशं स्वपितीत्यादिषु प्राक्तनमेव कर्म ।

तदाह,—

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्म्मकैर्योगे कर्मत्वमुपजायते ॥ १ ॥ इति । (13)

एवं चास्यते मास इति लकारेण कर्मणोऽभिधानं घटते । अत्यन्तसंयोगे किम् ? मासस्यैकरात्रं रम्या । क्रोशस्यैकदेशे कुटिला नदी ।

६ । अपवर्गे तृतीया ।

फलप्राप्तौ क्रियात्यागोऽपवर्गः । तत्र गम्ये कालाध्वनोस्तृतीया स्यात् । मासेनाधीतो ग्रन्थः । क्षणेनावगतोऽर्थः । क्रोशेनाधीतः । क्रोशेनावगतोऽर्थः ।

७ । सप्तमीपञ्चम्यौ कारकमध्ये ।

कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यामेते स्याताम् । अद्य भुक्त्वा द्व्यहे द्व्यहाद् वा भोक्ता । कर्त्तृशक्त्योर्मध्ये कालः । इहस्थोऽयं धन्वी क्रोशे लक्ष्यं विध्यति क्रोशाद्वा ।

८ । कर्मप्रवचनीययुक्ते द्वितीया ।

कर्मप्रवचनीयैर्योगे द्वितीया स्यात् । यज्ञमनु प्रावर्षत् ।

९ । यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।

यस्मादधिकं यस्य चेश्वरवचनं तत्र तैर्योगे सप्तमी स्यात् । उपशते

---

(13) This is a quotation from the वाक्यपदीय by भर्तृहरि। The author had often quoted from it. The stanzas in (1.2.64), in (1.4.24) and in (1.4.86) are also from the वाक्यपदीय।

विंशतिः। उपखार्य्यां द्रोणः। यस्य चेश्वरवचनम्। अधि पञ्चालेषु ब्रह्मदत्तः।

१०। पञ्चम्यपाङ्परिभिः।

एभिः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अप त्रिगर्त्तेभ्यो वृष्टो देवः। आ त्रिगर्त्तेभ्यः। "परि पर्य्युदधेः"। परिर्वर्जनार्थः। आ पाटलिपुत्रात्।

११। प्रतिनिधिप्रतिदाने च यस्मात्।

यतः प्रतिनिधिः प्रतिदानञ्च तत्र तैर्योगे पञ्चमी स्यात्। स राजा शक्रतः प्रति। तिलेभ्यः प्रति माषान् प्रयच्छति।

१२। गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि।

गत्यर्थानां कर्मण्येते स्याताम्। ग्रामं गच्छति ग्रामाय वा। नगरं गच्छति नगराय वा। ग्रामं याति ग्रामाय वा। वनं वनाय वा प्रस्थितः। कथं क्व गच्छसीति? आधारविवक्षायाम्। क्व स्थातुं गच्छसीत्यर्थः। चेष्टायां किम्? मोहं गच्छति। अनध्वनि किम्? मार्गं गच्छति।

१३। चतुर्थी सम्प्रदाने।

सम्प्रदाने चतुर्थी स्यात्। विप्राय गां ददाति। "भयानि दत्त सीतायै।" स तस्मै साधुकारमदात्। पुष्पेभ्यः स्पृहयति।

(क) तादर्थ्ये च। यूपाय दारु।

(ख) क्लृपि संपद्यमाने च। उच्चाराय कल्पते माषः।

(ग) उत्पातेन ज्ञाप्यमाने। वाताय कपिला विद्युत् (14)। वृष्टये चोन्मुखी विद्युत्।

(घ) हितयोगे च। अरोचकिने हितं सौवीरार्द्रकम्।

---

(14) वाताय कपिला विद्युदातपायातिलोहिनी।
कृष्णा सर्वविनाशाय दुर्भिक्षाय सिता भवेत्॥ १॥ इति भाष्यादौ पूर्णः श्लोकः।

## १४ । क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।

स्थानी (15) क्रियार्थोपपदस्तुमुन्नन्तो यो धातुस्तस्य कर्मणि चतुर्थी स्यात् । एधेभ्यो व्रजति । फलेभ्यस्तिष्ठति । स्थानिनः किम् ? एधानाहर्त्तुं व्रजति ।

## १५ । तुमर्थाच्च भाववचनात् ।

तुमुना समानार्थाच्चतुर्थी स्यात् । पाकाय व्रजति । भूतये धावति । भाववचनात् किम् ? ओदनं पाचको व्रजति । ओदनं भोजको व्रजति ।

## १६ । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ।

नमआदियुक्ताच्चतुर्थी स्यात् । नमो विष्णवे । स्वस्ति प्रजाभ्यः । "अलं प्रदोषः प्रियसङ्गमाय ।" स्वाहाऽग्नये । स्वधा पितृभ्यः । नमः शिवाय ।

## १७ । मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।

मन्यतेः कर्मण्यनादरे चतुर्थी वा स्यात् । न त्वा तृणं मन्ये तृणाय वा । "मन्ये तृणाय स्वाराज्यम् ।" "हरिमप्यमंसत तृणाय ।" इह तृणसमानाधिकरणात् त्वादेश्चतुर्थी न भवति । व्यवस्थितविभाषया । अप्राणिष्वित्यनावादिष्विति वक्तव्यम् । न त्वा नावं मन्ये । न त्वा काकं मन्ये ।

## १८ । कर्त्तृकरणयोस्तृतीया ।

अनयोस्तृतीया स्यात् । विप्रेण पच्यते । अग्निना दह्यते । परशुना वृक्षं छिनत्ति वर्द्धकिः ।

(क) प्रकृत्यादिभ्य उपसंख्यानम् । प्रकृत्या सुभगः । गोत्रेण गार्ग्यः । समेन धावति । विषमेण धावति । "तत्रागारे धनपतिगृहादुत्तरेणास्मदीयम् ।"

## १९ । सहयुक्तेऽप्रधाने ।

सहार्थेन युक्तादप्रधाने तृतीया स्यात् । विप्रः शिष्येण सहागतः । पुत्रेण सार्द्धं गोमान् ।(16)

---

(15) स्थानमस्यास्त्वीति स्थानी । अप्रयुज्यमान इत्यर्थः ।

(16) व्यवहारान्नृपः पश्येद् विद्वद्भि ब्राह्मणैः सहेत्यत्र ब्राह्मणैरित्यप्रधाने तृतीयेति स्पष्टम् । अविचारे धर्मशास्त्रतः प्राधान्येन नृपस्यैव पापार्हत्वात् ।

## २० । येनाङ्गविकारः ।

हानिराधिक्यञ्च विकारः । येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा काणः । पादेन खञ्जः । "मुखेन त्रिलोचनः ।"

## २१ । इत्थम्भूतलक्षणे ।

विशेषप्राप्तस्य लक्षणे तृतीया स्यात् । शिखया परिव्राजकः ।

## २२ । संज्ञोऽन्यतरस्यां कर्म्मणि ।

सञ्जानातेः कर्म्मणि तृतीया वा स्यात् । मात्रा सञ्जानीते मातरं वा ।
(क) संज्ञः कृद्योगे षष्ठी विप्रतिषेधेनेति वाच्यम् । मातुः संज्ञाता ।

## २३ । हेतौ ।

तृतीया स्यात् । धनेन कुलम् । विद्यया यशः । हेत्वधीनः कर्त्ता कर्त्रधीनं करणमिति हेतुकरणयोर्भेदः ।

## २४ । अकर्त्तर्य्यृणे पञ्चमी ।

ऋणे हेतौ पञ्चमी स्यात् । ऋणाद् बद्धः । शतादभिभूतः । अकर्त्तरि किम् ? शतेन प्रयोजककर्त्रा बन्धितः ।

## २५ । विभाषा गुणेऽस्त्रियाम् ।

पराश्रितो गुणः । गुणे हेतौ पञ्चमी स्याद्वा । जाड्याद् गृहीतो जाड्येन वा । धूमादग्निं धूमेन वा । कृतकत्वादनित्यः शब्दः कृतकत्वेन वा । अस्त्रियां किम् ? प्रज्ञया धीरः ।

## २६ । षष्ठी हेतुप्रयोगे ।

हेतुशब्देन हेतौ द्योत्ये षष्ठी स्यात् । अर्थस्य हेतोर्वसति । "अल्पस्य हेतोर्बहु हातुमिच्छन्" । यत्र हेतुशब्देन समासस्तत्र समुदायादेव षष्ठी । बालबोधहेतोर्व्याचष्टे ।

## २७ । सर्व्वनाम्नस्तृतीया च ।

हेतुशब्दप्रयोगे सर्व्वनाम्नस्तृतीयाषष्ठ्यौ स्याताम् । "स कस्य हेतोः सखि नाभियातस्त्वं हेतुना केन चिरादुपेता" ।

(क) हेत्वर्थप्रयोगे सर्वविभक्तीनां प्रायदर्शनम् । (17) किन्निमित्तमागतः । केन निमित्तेन । कस्मै हेतवे । कस्मात् कारणात् । कस्य प्रयोजनस्य । कस्मिन्निमित्ते ।

२८ । अपादाने पञ्चमी ।

स्यात् । ग्रामादागच्छति । वृकाद् बिभेति ।

(क) ल्यब्लोपे कर्मणि । प्रासादात् प्रेक्षते । प्रासादमारुह्येत्यर्थः ।

(ख) अधिकरणे च । आसनात् प्रेक्षते । कटकात् संवादयति ।

(ग) प्रश्नाख्यानयोश्च । कुतस्त्वम् ? नगरात् ।

(घ) यतश्चाध्वकालनिर्माणं तत्र पञ्चमी । अध्वनः प्रथमा सप्तमी च । काले सप्तमीति वाच्यम् । चम्पातः सोमतीर्थं पञ्च योजनानि पञ्चसु योजनेषु वा । काले । फाल्गुन्याश्चैत्री मासे ।

२९ । अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ।

एभिर्युक्तात् पञ्चमी स्यात् । द्रव्यादन्यो गुणः । "परैस्त्वदन्यः क इवापहारयेत्" । अर्थग्रहणाद् भिन्नो भ्रातृभ्यः । आराद् ग्रामात् । शुक्लादितरः । "अंशादृते निषिक्तस्य नीललोहितरेतसः" (18) । दिक्शब्दः । पूर्वो ग्रामात् । अञ्चूत्तरपदम् । प्राग् ग्रामात् । आच् । दक्षिणा ग्रामात् । आहि च । उत्तराहि ग्रामात् । उत्तराहि समुद्रात् ।

३० । षष्ठ्यतसर्थप्रत्ययेन ।

अतसुजर्थप्रत्ययैर्योगे षष्ठी स्यात् । दक्षिणतो ग्रामस्य वृक्षः । एवमुत्तरतः पुरः पुरस्ताद् उपरि उपरिष्टाद् ग्रामस्येति । कथं प्राग् ग्रामात् ? अञ्चूत्तर-

---

(17) निमित्तकारणहेतुषु सर्वासां प्रायोदर्शनमित्येव कात्यायनवाक्यं प्रकृतं वार्त्तिकम् । तदर्थेन आह हेत्वर्थप्रयोगे सर्वविभक्तीनां प्रायदर्शनमिति । भट्टोजिग्रन्थेऽप्यस्यार्थेन एव ग्रहणं निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनमिति । वस्तुतस्तु कात्यायनादीनां व्याख्यातृत्वेन तेषां वाक्यभङ्गे न पारायणादिभङ्गदोष इति श्राद्धणैरपि ग्रन्थकृद्भिस्तेषां वाक्यं बहुत्र नाविकलं समुद्धृतम् ।

(18) क्व कर्म प्रध्वस्तं परमपुरुषाराधनमृत इति ( पुष्पदन्तप्रयोगे ) तु ऋतेयोगे द्वितीया प्रामादिकीत्येके । अपाणिनीयत्वात् । ततोऽन्यत्रापि दृश्यत (२।३।२ वा) इति वार्त्तिकबलादत्र द्वितीयेत्यन्ये ।

पदग्रहणात्। क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इत्यपायविवक्षया वा। मातुः पुरस्तात्। तत उपरिष्टात्। "कफोनिः कूर्परादधः"। (19)

## ३१। एनपा द्वितीया।

एनपातसुजर्थप्रत्ययेन योगे द्वितीया स्यात्। दक्षिणेन गयां महाबोधिः। षष्ठ्यपीत्येके। दक्षिणेन गयायाः। (20)

## ३२। पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्।

एभिर्योगे तृतीया पञ्चमी वा स्यात्। पृथक् चन्द्रेण। "दुनोति चन्द्रात् पृथगप्यनङ्गः"। विना कार्य्येण विना कार्य्याद् वा। नाना वृक्षेण नाना वृक्षाद् वा। द्वितीया च दृश्यते विना वातं विना वर्षमित्यादि। (21)

## ३३। करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य।

असत्त्ववचनस्य अद्रव्यवचनस्य स्तोकादेः करणे पञ्चमी वा स्यात्। "स्तोकेन रुष्टा दयिताय नारी स्तोकादुपेता पुनरेव तोषम्"। कृच्छ्रादवाप्तः कृच्छ्रेण वा। कृच्छ्रात् कृच्छ्रेण वा मुक्तः। असत्त्ववचनस्य किम्? स्तोकेन विषेण हतः।

## ३४। दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्।

दूरान्तिकार्थैर्योगे षष्ठीपञ्चम्यौ स्याताम्। दूरं ग्रामस्य ग्रामाद्वा। विप्रकृष्टं शैलस्य शैलाद्वा। अन्तिकं गृहस्य गृहाद्वा।

## ३५। दूरान्तिकार्थेभ्यो द्वितीया च।

एभ्यो द्वितीया स्यात् पञ्चमी तृतीया च। दूरं दूराद् दूरेण वा ग्रामस्य नदी। अन्तिकमन्तिकादन्तिकेन वा मूर्खाणां पशुत्वम्। असत्त्ववचनस्येत्येव। दूरः पशुः। आसन्ना मुनयः।

---

(19) In some MSS. the भट्टि stanza उत्तराहि वसन्ग्रामः समुद्राद्रक्षसां पुरम्। अवैक्षवणतोयस्य स्थितां दक्षिणतः कथम् is also quoted here.

(20) This is referred to in the परिशिष्टप्रबोध by गोपीनाथ—"एनपा द्वितीया। षष्ठ्य-पीष्यते। दक्षिणेन गयाया इति लघुवृत्तिः" इति।

(21) विना वातं विना वर्षं विद्युत्प्रपतनं विना। विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ ॥१॥ इति काशिकादौ पूर्णः श्लोकः।

## ३६ । सप्तम्यधिकरणे च ।

अधिकरणे सप्तमी स्यात् । कटे आस्ते । चकाराद् दूरान्तिकार्थेभ्यश्च । दूरे ग्रामस्य । अन्तिके नद्याः ।

(क) क्तस्येन्विषयस्य कर्मणि । अधीती व्याकरणे । निपठितो तन्त्रेषु ।

(ख) निमित्तात् कर्मसंयोगे ।

"चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥१॥"

## ३७ । यस्य च भावेन भावलक्षणम् ।

यस्य च क्रिययाऽन्यस्य क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतो देवदत्तो दुग्धास्वागतः । अस्मिन् सतीदं भवति । ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते । नेह । शयानेन भुक्तम् । अनभिधानात् ।

## ३८ । षष्ठी चानादरे ।

अनादराधिक्ये भावलक्षणे षष्ठी सप्तमी च स्यात् । रुदतः प्रव्रजितवान् रुदति वा । रुदन्त मनादृत्येत्यर्थः । एवं पश्यतोहरः ।

## ३९ । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।

एभिर्योगे षष्ठी सप्तमी च स्यात् । गवां स्वामी गोषु वा । प्राणानामीश्वरः प्राणेषु वा ।

## ४० । आयुक्तकुशलाभ्यां चासेवायाम् ।

आभ्यां योगे तात्पर्य्यगतौ ते द्वे स्याताम् । आयुक्तो विहारकरणस्य विहारकरणे वा । कुशलः सेवायाः सेवायां वा ।

## ४१ । यतश्च निर्धारणम् ।

यतो जात्यादिभिः पृथक् क्रियते ततस्ते द्वे स्याताम् । नृणां क्षत्रियः शूरतमो नृषु वा । गवां कृष्णा सम्पन्नक्षीरतमा गोषु वा । अध्वगानां रथिनः शीघ्रतमा अध्वगेषु वा ।

## ५४। रुजार्थानां भाववचनानामज्वरेः।

भावकर्त्तृकाणां रुजार्थधातूनां कर्मणि षष्ठी स्यात्। चौरस्य रुजति रोगः। अज्वरेः किम्? चौरं ज्वरयति ज्वरः। ज्वरिरुपलक्षणम् (23)। चौरं सन्तापयति सन्तापः। शेष इत्येव। "रुजन्ति चेतः प्रसभं ममाधयः"।

## ५५। आशिषि नाथः।

आशिषि नाथतेः कर्मणि षष्ठी स्यात्। सर्पिषो नाथते गृध्नुः।

## ५६। जासिनिप्रहणनाटक्राथपिषां हिंसायाम्।

एषां कर्मणि हिंसायां षष्ठी स्यात्। चौरस्य उज्जासयति। चौरस्य प्रहन्ति। चौरस्य निहन्ति। चौरस्य प्रणिहन्ति। चौरस्य निप्रहन्ति। क्रथि घटादिः। तस्य निपातनाद्वृद्धिः। धैर्य्यस्योत्क्राथयति शोकः। विवेकस्य पिनष्टि कामः।

## ५७। व्यवहृपणोः समर्थयोः।

द्यूते क्रयविक्रये च समानार्थयोरनयोः कर्मणि षष्ठी स्यात्। शतस्य व्यवहरति। शतस्य पणते वणिक्। "प्राणानामपणिष्टासौ"।

## ५८। दिवस्तदर्थस्य।

व्यवहारार्थस्य दिवः कर्मणि षष्ठी स्यात्। शतस्य दीव्यति। "अदेवीद् बन्धुभोगानाम्"।

## ५९। विभाषोपसर्गे।

सोपसर्गस्य दिवस्तथा स्याद्वा। शतस्य प्रतिदीव्यति शतं वा। अशेषविवक्षयैव द्वितीयासिद्धौ विभाषाग्रहणं स्पष्टार्थम्। इह

## ६०। द्वितीया ब्राह्मणे।

## ६१। प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने।

## ६२। चतुर्थ्यर्थे बहुलञ्छन्दसि।

## ६३। यजेश्च करणे।

वेदार्था चतुःसूत्री।

---

(23) अज्वरिसन्ताप्योरिति वक्तव्यमिति वार्त्तिकात्।

## ६४ । कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ।

कृत्वोऽर्थप्रयोगे कालो य आधारस्तत्र षष्ठी स्यात् । पञ्चकृत्वो दिवसस्य भुङ्क्ते । शतकृत्वो रात्रेः स्मरति प्रियाम् । द्विरह्नोऽधीते । शेष इत्येव द्विरह्न्यधीते ।

## ६५ । कर्तृकर्मणोः कृति ।

कृत्प्रयोगे कर्त्तरि कर्मणि च षष्ठी स्यात् । शेष इत्यस्य निवृत्तेः कारकविभक्तिरियम् । द्वितीयातृतीययोर्बाधा । भवत आसिका (24) । ओदनस्य भोजकः । इह तदर्हमिति ( ५।१।११७ ) निर्देशेनास्यानित्यत्वं ज्ञापितम् । तेन धाये रामोदमुत्तममिति भट्टिः । यद्वा । आ मोदात् सम्मदपर्य्यन्तमित्यव्ययीभावे रूपमिदमिति कृति न षष्ठीति (25) । अनभिहित इत्येव कर्त्तव्यः कटः ।

## ६६ । उभयप्राप्तौ कर्मणि ।

एकत्र कृत्युभयप्राप्तौ षष्ठी कर्मण्येव स्यात् । न कर्त्तरि । अद्भुतः समुद्रस्य बन्धो वानरैः । आश्चर्य्यं सुभगारोषस्य दूतीभिः परिमार्ज्जनम् ।

(क) अकाकारयोस्तु स्त्रियां नियमप्रतिषेधः । भेदिका चन्द्रस्य तमसाम् । चिकीर्षा रवेरालोकानाम् ।

(ख) शेषे विभाषा । अकाकारयोरन्यत्र विभाषा । विचित्रा सूत्रस्य कृतिः पाणिनेः पाणिनिना वा ।

## ६७ । क्तस्य च वर्त्तमाने ।

वर्त्तमाने क्तस्य प्रयोगे षष्ठी स्यात् । न लोकेत्यस्य ( २।३।६९ ) बाधा । राज्ञां मतम् । सतां मतः । सतामर्चितः । प्रजानां कान्तः । कथं त्वया शीलितः । मया रचितः ? काव्योऽत्र यत्नः । इह च्छात्रस्य हसितम् ? मयूरस्य नृत्तमिति शेषषष्ठीयम् । न लोकेति ( २।३।६९ ) कृद्योगायाः प्रतिषेधात् । कारकविवक्षायां तु च्छात्रेण हसितमित्यागमः ।

---

(24) भवत आशिका इति क्वचित् पाठः ।

(25) This passage is quoted by गोपीनाथ in his परिशिष्टप्रबोध under Rule 72 in the कारक chapter.

## ४२। पञ्चमी विभक्ते।

यत्र निर्धारणाश्रयो विभागोऽस्ति ततः पञ्चमी स्यात्। माथुराः स्रौघ्नेभ्य आढ्यतराः।

## ४३। साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः।

आभ्यां योगे पूजागतौ सप्तमी स्यात्। पितरि साधुः। मातरि साधुः। मातरि निपुणः। बोधे निपुणः। अप्रतेः किम्? मातरं प्रति साधुः। प्रतिरूपलक्षणम् (22)। मातरमनु। इत्थाप्रतेरिति योगं विभज्य सूत्रान्तरैरपि सम्बध्नन्ति यथायथं विभक्तीनां निषेधार्थम्। तेन वृक्षं वृक्षं प्रति पुष्पाणि सन्तीति नाधारसप्तमी। त्वां प्रति स्वामीति न षष्ठीसप्तम्यौ। केशान् प्रत्युत्सुक इति न तृतीयासप्तम्यौ। देवदत्तं प्रति कुप्यतीति न सम्प्रदाने चतुर्थी।

## ४४। प्रसितोत्सुकाभ्यां तृतीया च।

आभ्यां योगे तृतीयासप्तम्यौ स्याताम्। केशैः प्रसितः केशेषु वा। केशैरुत्सुकः केशेषु वा। "भवत्यामुत्सुको रामः।"

## ४५। नक्षत्रे च लुपि।

लुबन्तान्नक्षत्रात् तृतीयासप्तम्यौ स्याताम्। पुष्येण पायसमश्नीयात् पुष्ये वा। अधिकरण इत्येव। अद्य पुष्यः।

## ४६। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा।

एतावन्मात्रेऽनभिहिते। कर्मादावुक्तेऽपि प्रथमा स्यात्। यत्राद्या शब्दस्य वृत्तिः स प्रतिपदिकार्थः। वृक्षो दृश्यताम्। श्वेतो धावति। पाचकः। पचनम्। स्त्री। पुमान्। नपुंसकम्। द्रोणः। खारी। आढ़कम्। वृक्षादेराद्याकृतौ वृत्तिः। तदुपचाराद् द्रव्यादौ पुंस्त्वादिकञ्च। वृक्षादेः सर्वदान्वयित्वात् स्वार्थ एव। नाधिकम्। अथाप्येतल्लिङ्गादिद्वारेणापि सिध्यति तदाऽसंख्यमलिङ्गमुदाहार्य्यम्। उच्चैः। त्वम्। अहमिति। मात्रग्रहणादधिकेऽनभिहिते न भवति। वृक्षं पश्यति। अश्वेन गम्यते। लिङ्गाधिक-

(22) तेन प्रत्यादयो गृह्यन्ते। प्रत्यादयश्च प्रतिपर्य्यनव इति लक्षणेत्यादि (१।४।९०) सूत्रोक्ताः।

मात्रे कुमारी। शृङ्खला। परिमाणमुपचारः। तदधिकमात्रे प्रस्थेन परिमितो व्रीहिः प्रस्थो द्रोणः खारी आढ़कं व्रीहिः। वचनं संख्या। तन्मात्रे। उक्तेऽपि यथा स्यात्। एको द्वौ बहवः।

४७। सम्बोधने च।

सम्बोधनाधिक्ये प्रथमा स्यात्। हे विप्र। हे विप्रौ। हे विप्राः।

४८। साऽमन्त्रितम्।

सा सम्बोधनप्रथमाऽमन्त्रितमुच्यते। हे विप्र तव स्वम्। हे वत्स तवाश्वः।

४९। एकवचनं सम्बुद्धिः।

आमन्त्रितस्यैकवचनं सम्बुद्धिरुच्यते। हे वृक्ष। हे पते। हे नदि। हे पटो।

५०। षष्ठी शेषे।

कारकाणामविवक्षा शेषः सम्बन्धः। तत्र गम्ये षष्ठी स्यात्। राज्ञः पुरुषस्य धनम्। सुखस्य जानाति। माषाणामश्नीयात्। "नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः"। शेषे विधानमा कृद्योगात् (३।३।६५)।

५१। ज्ञोऽविदर्थस्य करणे।

ज्ञः करणे षष्ठी स्यात्। मधुनो जानीते। मधुना प्रवर्त्तत इत्यर्थः। तैले घृतस्य जानीते। अविदर्थस्य किम्? स्वरेण पुत्रं जानाति। शेषषष्ठ्या सिद्धे प्रकरणमिदं नियमार्थं ज्ञाधीगर्थादेः करणकर्माद्येव शेषत्वेन विवक्षणीयमिति।

५२। अधीगर्थदयेशां कर्मणि।

एषां शेषत्वेन विवक्षिते कर्मणि षष्ठी स्यात्। मातुः स्मरति। कर्मणः शेषत्वेन विवक्षितत्वात्। अकर्मकादपि भावे लादयः। मातुः स्मर्य्यते। मातुः स्मृतम्। एवम् ममैवाध्येति नृपतिः। "रामस्य दयमानोऽसौ"। सर्पिष ईष्टे। शेष इत्येव। मातरं स्मरति। माता स्मर्य्यते।

५३। कृञः प्रतियत्ने।

कृञो गुणान्तराधाने कर्मणि षष्ठी स्यात्। अलङ्कारस्योपस्कुरुते कामुकः।

## ६८। अधिकरणवाचिनश्च।

आधारार्थस्य क्तस्य प्रयोगे कर्त्तृकर्मणोः षष्ठी स्यात्। इदमेषामासितम्। इदमस्य शयितम्। भुक्तमिदमोदनस्य।

## ६९। न लोकाव्ययनिष्ठाखलर्थतृनाम्।

लादीनां कृतां प्रयोगे उक्ता षष्ठी न स्यात्। लः। ओदनं पचन्। ओदनं पचमानः। उपसेदिवान् पाणिनिम्। उः। कटं चिकीर्षुः। धनं दिप्सुः। "रक्षोगणं क्षिप्णुः" (26)। कार्य्यं कारुः। उकः। गङ्गां गामुकः।

(क) उकप्रतिषेधे कमे र्भाषायामप्रतिषेधः। दास्याः कामुकः।

अव्ययम्। कटं कृत्वा। कटं कर्त्तुम्। निष्ठा। तेन कृतम्। सोऽन्नं भुक्तवान्। खलर्थः। ईषत्करः सुकरः कटो भवता। तृन्। कर्त्ता कटान्। तृन्निति प्रत्याहारग्रहणम्। तेन शानन्नादेरपि प्रतिषेधः। सोमं पवमानः। नड़माघ्नानः।

(ख) द्विषः शतुर्वावचनम्। चौरस्य द्विषंश्चौरं वा।

## ७०। अकेनोर्भविष्यदाधमर्ण्ययोः।

अकेनोः कर्मणि षष्ठी न स्याद् भविष्यति ऋणे च। ओदनं पाचको व्रजति। वार्त्तामाख्यायकः। ग्रामं गमी। शतं दायी।

## ७१। कृत्यानां कर्त्तरि वा।

एषां कर्त्तरि वा षष्ठी स्यात्। त्वया कटः कर्त्तव्यस्तव वा। मया कटः कर्त्तव्यो मम वा। तव गम्यो ग्रामस्त्वया वा। "गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम्।" कर्त्तरि किम्? उपस्थानीयः शिष्यो गुरोः। उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधः। कृष्टव्या शाखा ग्रामं वानरेण। नेया ग्राममजा गोपालकेन।

---

(26) क्षिप्णुरित्यत्र णत्वाभाव इति केचित्। क्षुभ्नादिषु (८।४।३९) तृप्नुशब्दग्रहणात्। अन्ये त्वाचार्य्यादणत्वञ्चेति (४।१।४९, वा) स्थितेऽपि यथाचार्य्याणामाचार्य्याणामित्यादौ णत्वं तथा क्षिप्णुरित्यत्रापि रषाभ्यां नो णः समानपदे (८।४।१) इति णत्वं निर्बाधमेव मन्यन्ते।

## ७२ । तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ।

तुल्यार्थैर्योगे तृतीया वा स्यात् । तुल्यः शक्रेण । पक्षे शेषत्वात् षष्ठी तुल्यः शक्रस्य । समः सूर्य्येण सूर्य्यस्य वा । अतुलोपमाभ्यां किम् ? "उपमा स्त्रीमुखस्येन्दुश्चन्द्रस्य स्त्रीमुखं तुला ।" तुलोपमाशब्दाविह सदृशार्थौ ।

## ७३ । चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ।

आयुष्याद्यर्थैं र्हितेन च योगे चतुर्थी स्यात् षष्ठी वा । आयुष्यं राज्ञेऽस्तु राज्ञो वा । एवं चिरञ्जीवितं कुशलं मद्रं भद्रं सौहित्यं शिवं सुखं हितं गोभ्योऽस्तु गवां वा । हितम् प्रजाभ्यः प्रजानां वा । आशिषि किम् ? आयुष्यं ते तपः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

द्वितीयाध्यायस्य तृतीयः पादः ॥ २।३ ॥

समाप्तश्चानभिहितपादः ।

अथ

# भाषावृत्तिः ।

## द्वितीयोऽध्यायः । चतुर्थः पादः ।

### १ । द्विगुरेकवचनम् ।

समाहारे द्विगोरर्थं एकवद्भवति । पञ्चपूली शोभना । दशशती रम्या ।

### २ । द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम् ।

प्राण्यङ्गादेर्द्वन्द्व एकवत् स्यात् । हस्तपादम् । कर्णनासिकम् । मार्द्दङ्गिक-पाणविकम् । रथिकपादातम् । कथं हस्त्यश्वौ । परत्वात् पशुद्वन्द्व-विभाषया ।

### ३ । अनुवादे चरणानाम् ।

अनूक्तौ चरणानां द्वन्द्व एकवत् स्यात् । स्थेणोर्लुङ्यभिधानम् । उदगात् कठकालापम् । प्रत्यष्ठात् कठकौथुमम् ।

### ४ । अध्वर्य्युक्रतुरनपुंसकम् ।

अध्वर्यौ यजुर्वेदे क्रतूनां सोमयागादीनां द्वन्द्व एकवत् स्यात् । अर्काश्व-मेधम् । अनपुंसकं किम् ? राजसूयवाजपेये ।

### ५ । अध्ययनतोऽविप्रकृष्टाख्यानाम् ।

पाठेन प्रत्यासन्नानां द्वन्द्व एकवत् स्यात् । क्रमकवार्त्तिकम् । छात्रो-पाध्यायम् ।

### ६ । जातिरप्राणिनाम् ।

अप्राणिजातीनां द्वन्द्व एकवत् स्यात् । आराशस्त्रि । द्रुमशैलम् । जातिः किम् ? विन्ध्यहिमालयौ । इह कुण्डे वदरामलकानि सन्ति । द्वन्द्वः किम् ? आरासहिता शस्त्रीत्याराशस्त्रीयम् ।

### ७। विशिष्टलिङ्गो नदी देशोऽग्रामाः ।

भिन्नलिङ्गयोर्नदीदेशयोर्द्वन्द्व एकवत् स्यात् । गङ्गाशोणम् । शोणनर्मदम् । वरेन्द्रीमगधम् । मगधश्रावस्ति । भिन्नलिङ्गयोः किम् ? गङ्गायमुने । अग्रामाः किम् ? जाम्बवशालूकिन्यौ ।

(क) ग्रामाणां प्रतिषेधे नगराणामप्रतिषेधः । मथुरापाटलिपुत्रम् ।

### ८। क्षुद्रजन्तवः ।

क्षुद्रजन्तुवाचिनां द्वन्द्व एकवत् स्यात् । दंशमशकम् । यूकालिक्षम् ।

### ९। येषाञ्च विरोधः शाश्वतिकः ।

नित्यविरोधिनां द्वन्द्व एकवत् स्यात् । अहिनकुलम् । काकोलूकम् । श्वसृगालम् । मार्जारमूषिकम् । चकारात् पशुशकुनिविकल्पोऽपि बाध्यते । इह देवासुराणां कौरवपाण्डवानाञ्च नैमित्तिको विरोधः ।

### १०। शूद्राणामनिरवसितानाम् ।

शूद्राणां द्वन्द्व एकवत् स्यात् । रजकतन्तुवायम् । निरवसितानां (27) प्रतिषेधः । चाण्डालमृतपाः ।

### ११। गवाश्वप्रभृतीनि च ।

अमूनि यथापाठं साधूनि स्युः । गवाश्वम् । कुब्जवामनम् । पुत्रपौत्रम् । दासीदासम् ।

### १२। विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।

एषां द्वन्द्व एकवद्वा स्यात् । प्लक्षवटम् । रुरुपृषतम् । कुशकाशम् । व्रीहियवम् । दधिक्षीरम् । गोमहिषम् । हंसचक्रवाकम् । अश्ववडवम् । पूर्वापरम् । अधरोत्तरम् । पक्षे प्लक्षवटा रुरुपृषता इत्यादि ।

(क) बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम् ।

---

(27) निरवसिताः पात्राद् बहिष्कृता इत्यर्थः । यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः ।

एषां बहुप्रकृतिरेव द्वन्द्व एकवत् स्यात्। न द्विप्रकृतिः। बदरामलके रथिकपादाते प्लक्षवटौ यूकालिक्षे इत्यादि।

## १३। विप्रतिषिद्धञ्चानधिकरणवाचि।

विरुद्धानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात्। शीतोष्णं शीतोष्णे वा। हिमातपं हिमातपौ वा। नेह। सुखदुःखे। स्वर्गनरकौ।

## १४। न दधिपयआदीनि।

नैतान्येकवत् स्युः। दधिपयसी। दधिसर्पिषी। सर्पिर्मधुनी। शुक्लकृष्णे। ऋक्सामे। वाङ्मनसे।

## १५। अधिकरणैतावत्त्वे च।

समासार्थस्येयत्तायां द्वन्द्वो नैकवत् स्यात्। दश दन्तौष्ठाः। सप्त मार्दङ्गिकपाणविकाः।

## १६। विभाषा समीपे।

अधिकरणैतावत्त्वस्य सामीप्यगतौ द्वन्द्व एकवद्वा स्यात्। उपदशं दन्तौष्ठम्। उपदशा दन्तौष्ठा वा।

## १७। स नपुंसकम्।

यस्यैकत्वमुक्तं स नपुंसकं स्यात्। पञ्चगवम्। पाणिपादम्।

(क) अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते। पञ्चपूली।

(ख) आबन्तो वा। पञ्चखट्वम्। पञ्चखट्वी।

(ग) अनो नलोपश्च वा च स्त्रियां भाष्यत इति वक्तव्यम्। पञ्चतक्षं पञ्चतक्षी।

(घ) पात्रादिभ्यः प्रतिषेधः। द्विपात्रम्। त्रिभुवनम्। चतुर्युगम्। पञ्चगवम्। दिशाशब्दाच्चतुर्दिशम्।

## १८। अव्ययीभावश्च।

अयं नपुंसकं स्यात्। अधिस्त्रि। अधिलक्ष्मि। उन्मत्तगङ्गम्। चकारात् पुण्यसुदिनाभ्यामह्नः। पुण्याहम्। सुदिनाहम्।

(क) पथः संख्याव्ययादेः । द्विपथम् । चतुष्पथम् । विपथम् । उत्पथम् ।

(ख) क्रियाविशेषणानां कर्मत्वं नपुंसकत्वञ्च । मृदु पचति ।

## १९ । तत्पुरुषोऽनञ्कर्मधारयः ।

नञ्कर्मधारयाभ्यां विना तत्पुरुषो नपुंसकं स्यादित्यधिक्रियते । यथा विभाषा सेनेति (२।४।२५) । शत्रुसेनं शत्रुसेना वा । तत्पुरुषः किम् ? दृढ़सेनो राजा । अनञ्कर्मधारयः किम् ? असेना । परमसेना ।

## २० । संज्ञायां कन्थोशीनरेषु ।

नाम्नि कन्थान्तस्तत्पुरुषो नपुंसकं स्यात् । सौशमिकन्थं नाम देशः । संज्ञायां किम् ? वीरणकन्था । उशीनरेष्विति किम् ? दाक्षिकन्था ।

## २१ । उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।

उपज्ञा उपक्रमश्च कर्मसाधनौ । तदन्तस्तत्पुरुषो नपुंसकं स्यात् तयोरादिराख्यातुमिच्छा चेत् । आगमोपज्ञं धर्माधर्मौ । मनूपज्ञं लोकवृत्तम् । आढ्योपक्रमं दानम् । ब्राह्मणोपक्रमं प्रतिग्रहः ।

## २२ । छाया बाहुल्ये ।

छायान्तस्तत्पुरुषः क्लीवं स्यात् । खड्गच्छायम् । शलभच्छायम् । बाहुल्ये किम् ? वृक्षच्छाया ।

## २३ । सभा राजाऽमनुष्यपूर्वा ।

राजपर्य्यायपूर्वाऽमनुष्यपूर्वा च सभा क्लीवं स्यात् । सभा शाला । इनसभम् । ईश्वरसभम् । "नृपतिसभामगमन्नवेपमान" इति तु (28) विशेषविवक्षायां गजपतिवत् । राजशब्दस्य पर्य्यायमात्रोपलक्षणार्थत्वान्नेह राजसभा चन्द्रगुप्तसभेति । राक्षससभम् । अमनुष्यशब्दस्य रक्षःपिशाचादौ रूढ़त्वान्नेह देवसभेति ।

---

(28) A quotation from the poem कीचकवधमहाकाव्य ।

## २४ । अशाला च ।

अशालार्था सभा क्लीबं स्यात् । स्त्रीसभम् । दासीसभम् । तत्सङ्घात इत्यर्थः । (29)

## २५ । विभाषा सेनासुराच्छायाशालानिशानाम् ।

सेनाद्यन्तस्तत्पुरुषः क्लीबलिङ्गः स्याद्वा । शत्रुसेनम् । यवसुरम् । वृक्षच्छायम् । गोशालम् । श्वनिशम् । पक्षे शत्रुसेना यवसुरेत्यादि ।

## २६ । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।

अनयोरुत्तरपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तत्पुरुषे । राजस्त्री । अर्द्धपिप्पली । सुखचन्द्रः ।

(क) द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधः । पञ्चकपालः सूपः । प्राप्तजीविकः । आपन्नसुखः । अलङ्कुमारिः । प्रतिगतोऽक्षं प्रत्यक्षः पटः । निष्कौशाम्बिः । वाच्यलिङ्गतैव भवति ।

## २७ । पूर्ववदश्ववडवौ ।

एकवद्भावादन्यत्राश्ववडवयोः पूर्ववल्लिङ्गं स्यात् । अश्ववडवौ । अश्ववडवान् । अश्ववडवैः ।

## २८ । हेमन्तशिशिरावहोरात्रे च च्छन्दसि ।

छन्दः सूत्रम् ।

## २९ । रात्राह्नाहाः पुंसि ।

एते पुंसि स्युः । "अहोरात्राविमौ पुण्यौ" । पूर्वाह्णः । द्व्यहः । त्र्यहः । एकाहः ।

## ३० । अपथं नपुंसकम् ।

स्यात् । अपथमिदम् । तत्पुरुषानुवृत्तेरपथोऽयन्देशः ।




---

(29) कथं विहसति युवति सभां तव सकलेति जयदेवे ? युवतीति सम्बोधनान्तमित्यर्थविद्वतौ मृष्टिधरचक्रवर्त्ती ।

## ३१। अर्द्धर्चाः पुंसि च।

अर्द्धर्चादयः पुंसि क्लीबे च स्युः। अर्द्धर्चमर्धर्चः। यूथं यूथः। मधु मधुः। "क्षपयत्यशुभं कर्म कर्म्माणि चिनुते शुभम्।" एवं गोमयसरकसारवर्णपद्म-शङ्खकुलिशदिवसकार्पासकर्पूरधर्मव्रतादि। उक्तं लिङ्गम्।

## ३२। इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ।

इदमः साकच्कस्य पूर्वोक्तस्यानुकथनेऽशादिश्यते तृतीयादौ विभक्तौ परतः। इमकाभ्यां रात्रिरधीता। अथो आभ्यामहरप्यधीतम्।

## ३३। एतदस्त्रतसोस्त्रतसौ चानुदात्तौ।

एतद इत्यधिक्रियते। त्रतसोस्तु एतदोऽशित्यशादेशे (५।३।५) (30) सिद्धे वचनमिदमनुदात्तार्थम्। स च स्वरभागः। एतस्मिन् वसामः। अथो अत्राधीमहे। "एतस्मिन्निर्गता कीर्त्तिरथातो बिभ्यति द्विषः"।

## ३४। द्वितीयाटौस्स्वेनः।

एष्विदमेतदोरेनादेशः स्यात्। "इममिन्द्रसमं विद्धि मैनं मंस्थास्त्वमन्यथा"। टा। अनेन रात्रिरधीता। अथो एनेनाहरप्यधीतम्। ओस्। अनयोः। अथो एनयोः। एवमेतदः। एतम्। अथो एनम्। एतेन। अथो एनेन। एतयोः। अथो एनयोः। अन्वादेश इत्येव। अयं दण्डो हरानेन। समानाधिकरण एवाभिधानान्नेह। इमं छात्रं भोजय। इमञ्च विप्रमिति।

(क) एनदिति नपुंसकैकवचने। नपुंसकैकत्वे द्वितीयायामेनद्वक्तव्यः। इदं कुण्डलमानय। अथो एनत् परिवर्त्तय। एतत् कुण्डमानय। अथो एनत् प्रक्षालय। (31)

---

(30) The बौद्ध grammarians put the aphorism as एतदोऽश् (५।३।५). But Brahmin commentators all follow भाष्य and give it as एतदोऽन्।

(31) (a) अयमेनादेशः सापेक्षत्वेऽपि स्यात्। यथा—अथैनमद्रेस्तनया शुशोचेति रघौ, प्रवेशयामास च भर्तुरेनामिति कुमारे, तदेनमुल्लङ्घितशासनं विधेरिति माघे च। (b) अनुवादे तु न। अथवाऽन्वादेशस्याविवक्षया न। यथा भाष्ये—एतमातं ङितं विद्यादिति (१।१।१४)। एवञ्च—आशीविषेण रदनच्छददंशदानमेतेन ते पुनरनर्थतया न शङ्क्यमिति नैषधे, नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापयेति जयदेवे च नैनादेशः।

## ३५ । आर्धधातुके ।

अधिकारोऽयम् । ण्यक्षत्रियं (२।४।५८) यावत् ।

## ३६ । अदो जग्धिर्ल्यप् ति किति ।

अदो जग्धिरादेशः स्यात् ल्यपि तादौ च किति प्रत्यये परतः । इकार उच्चारणार्थः । प्रजग्ध्य । जग्धः । जग्धवान् । कथमन्नम् ? अन्नाण्ण इति (४।४।८५) निपातनात् ।

## ३७ । लुङ्सनोर्घस्लृ ।

लुङि सनि चादेर्घस्लृ स्यात् । अघसत् । जिघत्सति ।

(क) अच्युपसंख्यानम् । प्रघसोऽयम् ।

## ३८ । घञपोश्च ।

अनयोरदो घस्लृ स्यात् । घञ् घासः । उपसर्गेऽद इत्यप् (३।३।५९) । प्रघसः ।

## ३९ । बहुलं छन्दसि ।

छान्दसं सूत्रम् ।

## ४० । लिट्यन्यतरस्याम् ।

अदो लिटि वा घस्लृ स्यात् । जघास । जक्षतुः । जक्षुः । पक्षे आद । आदतुः । आदुः ।

## ४१ । वेञो वयिः ।

वेञो वयि लिंटि वा स्यात् । उवाय । ऊयतुः । ऊयुः । पक्षे ववौ । ववतुः । ववुः ।

---

(c) हे रोहिणि त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतम् ।
　　जालान्तरेण मम वासगृहं प्रविष्टः श्रोणीतटं स्पृशति किं कुलधर्म्म एषः ॥ १ ॥

इत्यादौ त्वयं श्रोणीतटं स्पृशत्येनं निवारयेति व्यत्यासेन योजनीयम् । (d) नपुंसके एनत् । प्रत्याहारैनत् परिवर्त्तयेनदिति । (e) समासे तु न । एतच्छ्रितमिति । एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन वहिरङ्गे सामासिके लुकि तदप्रवृत्तेरित्याहुः ।

४२ । हनो वध लिङि ।

हन्तेर्लिङि वधादेशः स्यात् । वध्यात् । वध्यास्ताम् । वध्यासुः । आर्ध-धातुक इत्येव । विधौ लिङि तु । हन्यात् । हन्याताम् । हन्युः ।

४३ । लुङि च ।

४४ । आत्मनेपदेष्वन्यतरस्याम् ।

लुङि हनो वधादेशः स्यात् । अवधीत् । तङि वा । आवधिष्ट । आवधि-षाताम् । पक्षे आहत । आहसाताम् ।

४५ । इणो गा लुङि ।

लुङीणो गादेशः स्यात् । अगात् । अगाताम् । अगुः । अगायि ग्रामः ।
(क) इण्वदिक इति वक्तव्यम् । अध्यगात् ।

४६ । णौ गमिरबोधने ।

इणो णौ गमिरादिश्यतेऽबोधने । गमयति । अबोधने किम् ? अर्थान् प्रत्याययति । इण्वदिक इत्येव । अधिगमयति ।

४७ । सनि च ।

सनीणो गमिः स्यात् । जिगमिषति । जिगमिषा । अबोधन इत्येव । प्रतीषिषति । इण्वदिक इत्येव । अधिजिगमिषति ।

४८ । इङश्च ।

इङः सनि गमिः स्यात् । अधिजिगांसते शास्त्रम् । अधिजिगांसमानः ।

४९ । गाङ् लिटि ।

इङो लिटि गाङादेशः स्यात् । अधिजगे । अधिजगाते । अधिजगिरे ।

५० । विभाषा लुङ्लृङोः ।

इङो गाङ् वा स्यात् । अध्यगीष्ट अध्यैष्ट वा । अध्यगीष्यत अध्यैष्यत वा ।

५१ । णौ च संश्चङोः ।

संश्चङ्परे णाविङो गाङ् वा स्यात् । अधिजिगापयिषति शिष्यमध्यापि-

पयिषति वा। चङि। अध्यजीगपत् (32)। "अध्यापिपद् गाधिसुतो यथावत्।"

## ५२। अस्तेर्भूः।

स्यात्। भविता। भवितुम्। भवितव्यम्। "अनुप्रयोगे तु भुवास्त्यबाधनम्" (६।४।११०,वा)। ईहामास। इहार्धधातुक इति सामान्येनोपादानम्। तेन पौर्वापर्य्याभावाद् विषयसप्तमीयं स्थिता। अतोऽस्तेरजेश्चक्षिङश्च प्रागेवादेशे कृतेऽजन्तलक्षणो यत् सिध्यति भव्यम् प्रवेयमाख्येयमिति।

## ५३। ब्रुवो वचिः।

स्यात्। वक्ता। वक्तुम्। वक्तव्यम्। आर्धधातुक इत्येव। ब्रवीति।

## ५४। चक्षिङः ख्याञ्।

स्यात्। आख्याता। आख्यास्यति। आख्यास्यते। ञित्त्वादुभयपदित्वम्। ख्शादिरप्ययमादेशः। (33) व्याक्श्ख्याता। व्याक्श्ख्यानम्। व्याक्श्ख्यातुम्। प्रत्येकं क्शादिरित्यपरे। व्याक्ख्याता व्याश्ख्याता वा। व्याक्ख्यानं व्याश्ख्यानं वा।

(क) वर्जने प्रतिषेधः। सञ्चख्या दुर्जनाः। वर्जनीया इत्यर्थः।

(ख) आर्धधातुकप्रकरणे बहुलं संज्ञाच्छन्दसोरिति वक्तव्यम्। असुन् नृचक्षाः। युच् विचक्षणः। अजेर्लुट्। व्यजनम्। इणः क्ङ्न्। गात्वम्।

## ५५। वा लिटि।

चक्षिङो लिटि ख्याञ् वा स्यात्। आचख्यौ। आचख्ये। पक्षे आचचक्षे।

---

(32) "निर्विशेषं महाशेषाच्छेषकृष्णमहं भजे। यो मां विशिष्य शेषोक्तीः सर्वा एवाध्यजीगपत्॥ १॥"

(33) सूत्रेऽस्मिन् वार्त्तिकानां संख्या द्वादश। तत्र चक्षिङः क्शाञ् ख्याञाविति प्रथमं वार्त्तिकम्। ख्शादिर्वेति द्वितीयम्। असिद्धे शस्य यवचनमिति तृतीयम्। पुरुषोत्तमेन तु प्रथमं वार्त्तिकं परित्यज्य ख्शावागन्तुकौ गृहीत्वा सूत्रोक्तस्य ख्याञ आदौ तौ भवत इति द्वितीयस्यार्थो व्याख्यातः। ख्याञ आदौ शकारो वा खकारो वागन्तुक इति मतान्तरस्यापि पक्षेऽङ्गीकृतम्। नतु ख्यास्थाने ख्शौरादेशश्चक्षिङः क्शाञादेशश्चेति। एतेन तन्मते आख्याता आक्श्ख्याता आक्ख्याता आश्ख्यातेति चातूरूप्यम्। आक्शातेति तु न स्यात्। अन्यमते त्वाख्याता आक्शातेति द्वैरूप्यमेव। आगन्तुकक्शादित्वानङ्गीकारात्। उभयमत संकलने रूपपञ्चकम्।

## ५६। अजेर्व्यघञपोः।

अजेर्वी स्यात्। प्रवायकः। प्रवयणीयः। वीत्वा। वीतवान्। अघञपोः किम्? समाजः शूराणाम्। समजः पशूनाम्।

(क) क्यपि च प्रतिषेधः। समज्या गोष्ठी।

(ख) वलादावार्द्धधातुके विकल्पः। प्रवेता। प्राजिता।

## ५७। वा यौ।

अजेर्ल्युटि वीभावो वा स्यात् प्राजनो दण्डः प्रवयणो वेतिरकः सूत्रार्थः। औणादिके यौ परेऽजेर्वादेशः स्याद् वायुरित्यपरः सूत्रार्थः। उक्तमार्धधातुके।

## ५८। ण्यक्षत्रियार्षञितो यूनि लुगणिञोः।

एभ्यो यून्युत्पन्नयोरणिञोर्लुक् स्यात्। कुर्वादिण्यान्तात् (४।१।१७२)। कौरव्यः पिता कौरव्यः पुत्रः। क्षत्रियाद् वृष्णिकुरुभ्यश्चेत्यण् (४।१।११)। श्वाफल्कः पिता श्वाफल्कः पुत्रः। आर्षाद् वासिष्ठः पिता वासिष्ठः पुत्रः। ञितः। विदाद्यञन्तात् (४।१।१०४)। वैदः पिता वैदः पुत्रः। सर्वत्रात इञो (४।१।९५) लुक्। अणः खल्वपि। तिकादिफिञन्ताद् (४।१।१५४) यून्युत्पन्नस्य प्राग्दीव्यतीयस्याणो (४।१।८३) लुक्। तैकायनिः पिता तैकायनिः पुत्रः।

## ५९। पैलादिभ्यश्च।

एभ्यो युवप्रत्ययस्य लुक् स्यात्। पीलाया वेत्यणन्ता-(४।१।११८) दणो द्व्यच (४।१।१५६) इति फिञो लुक्। पैलः पिता पैलः पुत्रः।

## ६०। इञः प्राचाम्।

प्राचां गोत्रे य इञ् तदन्ताद् युवप्रत्ययस्य लुक् स्यात्। पान्नागारिः पिता पान्नागारिः पुत्रः। यञिञोश्चेति (४।१।१०१) फको लुक्।

## ६१। न तौल्वलिभ्यः।

तौल्वल्यादेः प्राचामिञन्ताल्लुङ् नास्ति। तौल्वलिः पिता तौल्वलायनः पुत्रः।

## ६२ । तद्राजस्य बहुषु तेनैवास्त्रियाम् ।

बहुषु तद्राजस्य लुक् स्यात् । पञ्चालानामपत्यानि बहूनि पञ्चालाः । जनपदशब्दात् क्षत्रियादञ् (४।१।१६८) । अङ्गाः । वङ्गाः । द्व्यञ्मगधेत्यण् (४।१।१७०) । अस्त्रियां किम् ? पाञ्चाल्यः स्त्रियः । तेनैवेति किम् ? अन्यकृतबहुत्वे मा भूत् । प्रियवाङ्गा विप्राः ।

## ६३ । यस्कादिभ्यो गोत्रे ।

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् पूर्ववत् । शिवाद्यण् (४।१।११२) । यस्काः । अयःस्थूणाः । अस्त्रियामित्येव । यास्क्यः स्त्रियः । तेनैत्येव । प्रिययास्का विप्राः ।

## ६४ । यञञोश्च ।

गोत्रे यञोऽञश्च पूर्ववल्लुक् स्यात् । गर्गाः । वत्साः । अञ् । विदाः । उर्वाः । पूर्ववत् । नेह । गार्ग्यः स्त्रियः । प्रियगार्ग्या विप्राः ।

(क) यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् । गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलं गार्ग्यकुलं वा । विदकुलं वैदकुलं वा ।

## ६५ । अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः । अत्रेरितश्चानिञ इति (४।१।१२२) ढक् । शेषेभ्य ऋष्यण् (४।१।११४) । पूर्ववत् । आत्रेय्यः स्त्रियः । प्रियात्रेया विप्राः ।

## ६६ । बह्वच इञः प्राच्यभरतेषु ।

प्राच्यभरतेषु बह्वचः प्रब्दादिञो बहुषु लुक् स्यात् । प्राच्यगोत्रे पन्नागाराः । भरतगोत्रे । युधिष्ठिराः । अर्जुनाः ।

## ६७ । न गोपवनादिभ्यः ।

गोपवनादयोऽष्टौ विदाद्यन्तर्गणाः (34) । तेभ्योऽञो यञञोश्चेति (२।४।६४) लुङ् नास्ति । गौपवनाः । शैग्रवाः ।

---

(34) अष्टौ गोपवनः शिग्रुरश्वभाजनविन्दवः । श्यामाकश्यावतामश्चापर्णौ गोपवनादिषु ॥ १ ॥

६८ । तिककितवादिभ्यो द्वन्द्वे ।

तिकादेः कितवादेश्च द्वन्द्वे गोत्रप्रत्ययस्य लुक् स्यात् । द्वन्द्वे । तैकायनयश्च कैतवायनश्च तिककितवाः । तिकादिफिञो (४।१।१०४) लुक् । वङ्खर-भण्डीरथाः । अत इञो (४।१।९५) लुक् ।

६९ । उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ।

एभ्यो गोत्रप्रत्ययस्य बहुषु लुग् वा स्यात् । अद्वन्द्वे द्वन्द्वे च । उपकाः । औपकायनाः । लमकाः । लामकायनाः । नड़ादिः । उपकलमकाः (35) । आहारकाः । विहारकाः । आहारकयः । वैहारकयः । आहारकविहारकाः आहारकिवैहारकयो वा ।

७० । आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ।

अगस्त्यशब्दादृष्यण् (४।१।११४) । कुण्डिनीशब्दाद् गर्गादियञ् (४।१।१०५) । तयोर्बहुषु लुक् स्यात् । अगस्तिकुण्डिनजिति चादेशौ भवतः । अगस्तयः । कुण्डिनाः ।

७१ । सुपो धातुप्रातिपदिकयोः ।

धातोः प्रातिपदिकस्य चावयवस्य सुपो लुक् स्यात् । सनाद्यन्तधातोः (३।१।३२) । पुत्रीयती । मालीयति । समासप्रातिपदिकस्य । कष्टश्रितः । राजपुरुषः । अनयोः किम् ? वृक्षः ।

७२ । अदिप्रभृतिभ्यः शपः ।

अदादेः शपो लुक् स्यात् । अत्ति । द्वेष्टि । शेते ।

(1) चर्करीतञ्च (36) । बोभवीति । चर्करीतमिति यङ्लुकः प्राचां संज्ञा ।

७३ । बहुलं छन्दसि ।

छान्दसम् ।

७४ । यङोऽचि च ।

अचि यङो लुक् स्यात् । लोलुवः । पोपुवः । मरीमृजः । इह चकारेण

(35) अस्य तिककितवादित्वात् पूर्वेण सूत्रेण नित्यमेव लुक् । नतु विकल्पः ।

(36) इदमदादिगणस्थमेकं गणसूत्रम् । चर्करीतमदादौ बोध्यमित्यर्थः ।

बहुलग्रहणमनुकृष्यते नतु च्छन्दसीति। तेन भाषायामनच्यपि यङ्लुक्। लालपीति वावदीतीति जयादित्यः। चकाराद् बहुलं छन्दसीति (२।४।७३) सर्वमनुवर्त्तते। तेन बाहुल्यादनच्यपि च्छन्दस्येव यङ्लुक्। भाष्ये तु हुश्नुग्रहणज्ञापक (६।४।८७) बलाद् बोभवीतीत्येवं पदं भाषायां साधु। नान्यदिति भागवृत्तिः। दृश्यन्ते च शिष्टप्रयोगाः।

"यदि देवो वरीवर्ष्टि कोकिली रोरवीति च।
मयूरोऽपि नरीनर्त्ति मरीमर्मि तदा प्रिये" ॥१॥ इति।

तेजांसि शंशमाञ्चक्रुरिति भट्टिः।

"हरिणा सह संख्यं ते बोभूत्विति यदब्रवीः।
न जाघटीति युक्तौ तत् सिंहद्विरदयोरिव" ॥१॥

इति पाणिनेर्जाम्बवतीविजयकाव्यम्।

## ७५। जुहोत्यादिभ्यः श्लुः।

जुहोत्यादेः शपः श्लुः स्यात्। जुहोति। बिभर्त्ति।

## ७६। बहुलं छन्दसि।

छान्दसम्।

## ७७। गातिस्थाघुपाभूभ्यः (37) सिचः परस्मैपदेषु।

एभ्यः सिचो लुक् स्यात्। इणो गा (२।४।४५)। अगात्। अगाताम्। अगुः। स्था। अस्थात्। घु (१।१।२०)। अदात्। अधात्। पा पाने। अपात्। अभूत्। कै गै शब्दे। पा रक्षणे। अनयोर्नेष्यते। अगासीन्नटः। अपासीन्नृपः। परस्मैपदेषु किम्? अगासातां ग्रामौ विप्रेण।

## ७८। विभाषा घ्राधेट्शाच्छासः।

परस्मैपदेष्वेभ्यः सिचो लुग् वा स्यात्। घ्रा। अघ्रात्। धेट्। अधात्। शो। अशात्। छो। अच्छात्। सो। असात्। पक्षे ऽघ्रासीदित्यादि।

(37) केचित्तु सूत्रेऽस्मिन् भीधातो र्ङसौ निर्देशः। एरनेकाच (६।४।८२) इति यणित्युक्त्वा मा भैः शशाङ्क मम शीधुनि नास्ति राहुरिति प्रयोगः साधुरिति वदन्ति। अन्ये त्वेतन्न मन्यन्ते, तथाच भट्टिः—मास्म भैषी स्त्वयाद्यैव कृतार्थौ द्रक्ष्यते पतिरिति। वस्तुतस्तु मा भैरिति पदं प्रामादिकमेवेति बहवः। एकान्ततः समर्थनायन्हि त्वागमशासनमनित्यमिति ( प, ९५ ) यथा कथञ्चित् समाधेयम्।

## ७९ । तनादिभ्यस्तथासोः ।

तनादेः सिचो लुग् वा स्यात् तथासोः परतः । अतत । अतथाः । अतनिष्ट । अतनिष्ठाः ।

## ८० । मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।

छान्दसम् ।

## ८१ । आमः ।

आमः परस्य लेर्लुक् स्यात् । ईहाञ्चक्रे ।

## ८२ । अव्ययादाप्सुपः ।

अव्ययात् परस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् । सुपः । स्वः । प्रातः । कृत्वा । कर्त्तुम् । इहाव्ययस्यालिङ्गसंख्यत्वादाप्सुपोरभावाल्लुक्प्रयोजनं चिन्त्यम् ।

## ८३ । नाव्ययीभावादतोऽम् त्वपञ्चम्याः ।

अदन्तादव्ययीभावात् सुपो लुङ् नास्ति । पञ्चमीवर्जममादेशस्तु विधेयः । उपकुम्भं तिष्ठति पश्य देहि वा । अतः किम् ? उपाग्नि । अपञ्चम्याः किम् ? उपकुम्भादागतः ।

## ८४ । तृतीयासप्तम्योर्बहुलम् ।

अनयोरम् बहुलं स्याददन्तादव्ययीभावाद् । उपकुम्भमुपकुम्भेन वा कृतम् । उपकुम्भमुपकुम्भे वा निधेहि । सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम् । सुमद्रम् । सुभिक्षम् । नदीसमासे । उन्मत्तगङ्गम् । संख्यावयवे । एकविंशतिभारद्वाजम् । उक्तौ लुक् ।

## ८५ । लुटः प्रथमस्य डारौरसः ।

लुटः प्रथमपुरुषस्य डारौरसः स्युः । श्वः कर्त्ता । कर्त्तारौ । कर्त्तारः । श्वः अध्येता । अध्येतारौ । अध्येतारः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

द्वितीयाध्यायस्य चतुर्थः पादः ॥२।४॥

समाप्तश्च द्विगुपादो द्वितीयोऽध्यायश्च ।

---

अथ

# भाषावृत्तिः ।

## तृतीयोऽध्यायः । प्रथमः पादः ।

### १ । प्रत्ययः ।

### २ । परश्च ।

प्रत्ययो वक्तव्यः । स च परः स्यात् । तथैवोदाहार्थम् । याति । कृतम् ।

### ३ । आद्युदात्तश्च ।

### ४ । अनुदात्तौ सुप्पितौ ।

स्वरसूत्रद्वयम् ।

### ५ । गुप्तिज्किद्भ्यः सन् ।

एभ्यः सन् प्रत्ययः स्यात् । लोकतोऽर्थावगमः । जुगुप्सतेऽधर्मम् । तितिक्षतेऽपराधम् । चिकित्सत्यातुरम् भिषक् । तथा विचिकित्सति मे मनः । सन्देग्धीत्यर्थः ।

### ६ । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।

मानादिभ्यः सन् स्यात् । अभ्यासस्य दीर्घश्च । मीमांसते शास्त्रम् । बीभत्सते गजम् । दीदांसते मतुम् । शीशांसते शस्त्रम् । अनिच्छासन आर्द्धधातुकत्वं नास्ति । धातोरित्यनभिधानात् (३।१।७) ।

### ७ । धातोः कर्मणः समानकर्तृकादिच्छायां वा ।

इषेः कर्मणः समानकर्तृकाद्धातोरिच्छायां वा सन् स्यात् । पक्षे वाक्यञ्च । कर्तुमिच्छति चिकीर्षति । जुगुप्सिषते । विवर्त्तिषते । इच्छासन्नन्तान्नेष्यते ।

चिकीर्षितुमिच्छति (1)। इहाश्मा लुलुठिषते नदीकूलं पिपतिषतीत्युपचारात्। (2)।

## ८। सुप आत्मनः क्यच्।

इषेः कर्म्मणः सुबन्तादेषितुरिच्छायां वा क्यच् स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति। पुत्रीयन्ति। पुत्रीयन्। भार्य्यीयति। दधीयति। मधूयति। गव्यति। राजीयति।

(क) क्यचि मान्ताव्ययान्निषेधः। किमिच्छति। स्वरिच्छति।

## ९। काम्यच्च।

क्यज्विषये काम्यच् स्यात्। पुत्रकाम्यति। स्त्रीकाम्यति।

## १०। उपमानादाचारे।

क्यजित्येव। उपमानात् कर्मणः सुबन्तादाचारे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति भृत्यम्। मात्रीयति परकलत्रम्।

(क) अधिकरणाच्च। आचारे क्यच् स्यात्। "प्रासादीयति यः कुट्यां पर्य्यङ्कीयति मञ्चके।"

## ११। कर्त्तुः क्यङ् सलोपश्च।

कर्त्तुरुपमानादाचारेऽर्थे क्यङ् स्यात्। सान्तस्य च लोपः। शिशुरिवाचरति शिशूयते वृद्धः। "एरण्डोऽपि द्रुमायते"। काकोऽपि गरुडायते। गव्यते गवयः। नाव्यते द्रोणी। "तस्य सन्तोषशीलस्य कुब्जिकाप्यप्सरायते"। सलोपोऽयमोजसो ऽप्सरसो नित्यम् (3) पयसस्तु विभाषयेत्येके। अप्सरस एव लोपो नान्यस्येत्यपरे।

(क) सर्वप्रातिपदिकेभ्यः क्विब् वा। प्रातिपदिकात् क्यङ्विषये

---

(1) शैषिकान् मतुबर्थीयाच्छैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ १ ॥ इति भाष्यात्।

(2) उपमानादिति पाठान्तरम्।

(3) "ओजायमानां तस्याघ्नं प्रणीय जनकात्मजे"ति भट्टिः।

क्विप् वा स्यात्। अश्वति (4) खरः। प्रभवति भृत्यः। रिपवन्ति मित्राणि। विधवति रविः। गोदोहति। गोदुहतीति कश्चित्। अवगल्भादयस्तु क्विप् विधावात्मनेपदार्थमनुदात्तेत उपदेष्टव्या इति स्मृतिः। तेनावगल्भते। विह्रोड़ते। क्लीवते। कास्प्रत्ययादित्याम् (३।१।३५)। अवगल्भाञ्चक्रे।

## १२। भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः।

भृशादिभ्यश्च्व्यर्थगतौ भुवि भवत्यर्थे क्यङ् स्यात्। अभृशो भृशो भवति भृशायते स्नेहः। शीघ्रायते। उत्सुकायते। हलन्तस्य च लोपः। सुमनायते। उन्मनायते। उन्मनायमानः।

## १३। लोहितादिडाज्भ्यः क्यष्।

लोहितादेर्डाजन्ताच्च भुवि भवत्यर्थे क्यष् स्यात्। अलोहितो लोहितो भवति लोहितायति लोहितायते। मन्दायति। मन्दायते। एवं वर्म हरित निद्रा तन्द्रा करुणा घृणा केका। आकृतिगणोऽयम्। कात्यायनस्तु (क) लोहितडाज्भ्यः क्यष् वचनं भृशादिष्वितराणीत्याह। डाच्। दमदमायति दमदमायते। डाचि बहुल मिति (८।१।१२, वा) द्वे।

## १४। कष्टाय क्रमणे।

कष्टाय यत् प्रातिपदिकं ततः क्रमणेऽर्थे क्यङ् स्यात्। कष्टायेति सामान्यनिर्देशात् सत्रकक्षकृच्छ्रगहनेभ्योऽपि स्यात्। तथाच श्लोक-वार्त्तिकं—

तादर्थ्ये एवात्र भवेच्चतुर्थी कष्टाय यत् क्रामति कर्मणे तु।
व्याख्यानतोऽर्थग्रहणं हि लभ्य मंहश्चिकीर्षापि च नान्तरीया ॥१॥ (5)

---

(4) "क्विबन्ताद्धातोः कर्त्तरि क्विपि कृतेऽतो लोपे (६।४।४८) क्वौ लुप्तं न स्थानिवदिति वकारस्योट्। अश्वः खरः।" इति भाषावृत्त्यर्थविवृतिः।

(5) नान्तरीया अभिन्नेत्यर्थः। येन विना यन्न भवति तत् तस्य नान्तरीयम्। अविनाभावसम्बन्धः। अन्तरशब्दाद् गहादित्वाच्छः। टाप्। अन्तरीया। ततो नञर्थस्य नशब्दस्य सुप्सुपेति समासः। नान्तरीया। अथवा नञ्समासः। यथाह कैयटः—"अन्तरशब्दो गहादिषु पठ्यते। स च विनार्थे वर्त्तते। अन्तरे भवमन्तरीयम्। तत्र नञ्समासे कृते पृषोदरादित्वाद् भाष्यकारवचनप्रामाण्याद्वा नलोपाभाव" इति (२।२।१८) भाष्यप्रदीपे। गहादिभ्यश्चेति (४।२।१३८) छः। नान्तरीयकमित्यत्र तु स्वार्थे कन् प्रत्ययः। अंहश्चिकीर्षा पापचिकीर्षा।

इति । कष्टायते । सत्रायते । कृच्छ्रायते । कक्षायते । गहनायते । पापञ्चिकीर्षतीत्यर्थः ।

१५ । कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः ।

आभ्यां कर्मभ्यां वर्त्तिचरोरर्थयोः क्यङ् स्यात् । रोमन्थायते गौः । हनुचलनेऽभिधानान्नेह । कीटो रोमन्थं वर्त्तयति ।

(क) तपसः परस्मैपदञ्च । तपस्यति ।

१६ । वाष्पोष्मभ्यामुद्वमने ।

(क) फेनाच्च ।

एभ्य उद्वमने क्यङ् स्यात् । वाष्पायते स्थाली । ऊष्मायते भक्तम् । फेनायते नदी । धूमाच्चेति भर्त्तृहरिः (6) । धूमायतेऽग्निः । "धूमायन्त इवाश्लिष्टाः" । (7)

१७ । शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।

एभ्यः क्रियायां क्यङ् स्यात् । शब्दं करोति शब्दायते । वैरायते । वैरायमाणः । एवं यावन् मेघायते ।

(क) सुदिनदुर्दिननीहाराच्च । सुदिनायते । दुर्दिनायते । नीहारायते ।

(ख) अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्त्तव्यम् । अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । प्रुष्टायते । प्लुष्टायते ।

१८ । सुखादिभ्यः कर्त्तृवेदनायाम् ।

एभ्यः कर्त्तुरनुभवे क्यङ् स्यात् । आत्मनः सुखं वेदयते सुखायते । दुःखायते । सुख दुःख अलीक करुणा कृच्छ्र प्रतीप घृणा । आकृतिगणोऽयम् ।

१९ । नमोवरिवश्चित्रङः क्यच् ।

एभ्यः क्यच् स्यात् । पूजापरिचर्य्याश्चर्य्येष्वभिधानम् । नमस्यति देवान् । वरिवस्यति गुरून् । चित्रीयते हेममृगः । विस्मापयत इत्यर्थः ।

---

(6) भागवृत्तिकारः ।

(7) धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहताः । उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ ॥१॥ इति भारतीयः श्लोकः ।

२० । पुच्छभाण्डचीवराण्णिङ् ।

एभ्यो णिङ् स्यात् । उदसनसमाचयनपरिधानेष्वभिधानम् । उदसनमुत्-क्षेपणम् । उत्पुच्छयते व्याघ्रः । सम्भाण्डयते कुलालः । सञ्चीवरयते भिक्षुः ।

२१ । मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।

करण इत्येव । मुण्डादिभ्यः क्रियाविशेषे णिच् स्यात् । मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । व्रतयति । वस्त्रात् संवरणे । संवस्त्रयति । हलिकल्योरत्वनिपातनं सन्वद्भावनिषेधार्थम् । हलिं गृह्णाति हलयति । कलिं गृह्णाति कलयति । अजहलत् । अचकलत् । हलिर्बृहद्धलम् । कृतं गृह्णाति कृतयति । तूस्तानि विनिहन्ति वितूस्तयति पन्थानं वातः । तूस्तं धूलिः । (8)

२२ । धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।

धातोः क्रियासमभिहारे यङ् स्यात् । कार्त्स्न्येन पुनःपुनर्वा पचति पापच्यते । कार्त्स्न्येन भृशं वा ज्वलति जाज्वल्यते । जाज्वल्यमानः । एकाचः किम् ? भृशं जागर्त्ति । हलादेः किम् ? भृशमीक्षते । शुभरुचो-स्त्वनभिधानम् । गृणातेश्च ।

(क) सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानम् । सप्तभ्यो यङ् स्यादेभ्यः । सोसूच्यते । सोसूत्र्यते । सोमूत्र्यते । अटाट्यते । "अटाट्यमानोऽरण्यानीम्" । अरार्य्यते । "किमभीररार्य्यसे" । अशाश्यते । प्रोर्णोनूयते ।

२३ । नित्यं कौटिल्ये गतौ ।

गत्यर्थात् कौटिल्यएव यङ् स्यात् । जङ्गम्यते । चङ्क्रम्यते । नित्यग्रहणं क्रियासमभिहारनिवृत्त्यर्थमिति स्मृतिः ।

२४ । लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ।

लुपादिभ्योऽष्टभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हा निन्दा । गर्हितं

---

(8) तूस्तं धूलौ च विख्यातं जटायाञ्च नपुंसकमिति मेदिनीकरवचनादिहोभयार्थैव । वितूस्तयति मूर्धानं भिक्षुरिति भाषाऽप्यर्थविवृतौ सृष्टिधरचक्रवर्त्ती ।

लुम्पति लोलुप्यते । सासद्यते । "तस्याः सासद्यमानायाः ।" चञ्चूर्य्यते । जञ्जप्यते । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । निजेगिल्यते ।

## २५ । सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्ण-चूर्णचुरादिभ्यो णिच् ।

एभ्यो णिच् स्यात् । लोकतोऽर्थावगमः । सत्यापयति । अर्थवेदसत्यानामापुगिति पूर्वस्मृतेरुपलक्षणम् । अर्थापयति । वेदापयति । विपाशयति । निरूपयति । उपवीणयति । अनुतूलयति । उपश्लोकयति । अभिषेणयति । अनुलोमयति । त्वचशब्दोऽदन्तः । त्वचं गृह्णाति त्वचयति । संवर्मयति । वर्णयति । अवचूर्णयति । चुरादिभ्यः स्वार्थे णिच् । चोरयति । चिन्तयति । चुरादौ

(1) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ।

(2) तत्करोति तदाचष्ट इति गणसूत्रम् । सूत्रं करोति सूत्रयति । मूत्रयति । सूचयति । कुमारीमाचष्टे कुमारयति । मालां मालयति । मातरं मातयति । बहुलवचनाद् ।

(क) आख्यानात् कृदन्तात् तदाचष्ट इति णिच् । कृल्लुगादिकं प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवति । कंसस्य वधमाचष्टे घातयति कंसम् । बलिं बन्धयति नटः कथको वा । एवं राजानमागमयति । मृगान् रमयति । उद्गमयति सूर्य्यमिति । पाशादेरपि णिजस्यैव प्रपञ्चः ।

## २६ । हेतुमति च ।

करण इत्येव । हेतोः प्रयोजकस्य यो व्यापारः क्रियासु प्रेषणमानुकूल्यं वा स हेतुमान् । तत्र धातोर्णिच् स्यात् । कुर्वन्तं प्रयुङ्क्ते कारयति । पाचयति । आसयति । शाययति । भिक्षा वासयतीति कारीषोऽग्निरध्यापयतीत्युपचारात् । पञ्चभि र्हलैः कर्षतीति कृषिः प्रतिविधानार्थः । याजका यजन्तीति यजि र्हविष्प्रक्षेपणार्थः ।

## २७ । कण्ड्वादिभ्यो यक् ।

एभ्यो यक् स्यात् । कण्डूञ् । कण्डूयति कण्डूयते । "कृच्छ्रायन्तौ

विलोक्य त्वां स्त्री न मन्तूयतीह का।" महीङ्। "महीय्यमाना भवतातिमात्रम्"। हृणीङ्। "हृणीयते वीरवती न भूमिः।" मृग। "मृग्यन्तः पदवीम्"। "क्लिश्नन्नपि हि मेधावी"। सुख। "सुख्येयुः प्रकृतयो नृपम्।"

## २८। गुपूधूपविच्छिपणिपनिभ्य आयः।

एभ्य आयः स्यात्। गोपायति। धूपायति। विच्छायति। पणायति। पनायति।

## २९। ऋतेरीयङ्।

ऋतेः सौत्राद्धातोरीयङ् स्यात्। ऋतीयते।

## ३०। कमेर्णिङ्।

स्यात्। कामयते।

## ३१। आयादय आर्द्धधातुके वा।

आर्धधातुके विषये आयादयो वा स्युः। गोप्ता गोपायिता वा। गुप्तिर्गोपाया वा। अर्त्तिता ऋतीयिता वा। कामयिता कमिता वा।

## ३२। सनाद्यन्ता धातवः।

सनाद्यन्ता (9) धातुसंज्ञकाः स्युः। तथैवोदाहृतम्। अथ धातोर्विकरणाः।

## ३३। स्यतासी लृलुटोः।

लृटि लृङि च स्यः स्यात्। करिष्यति। अकरिष्यत्। लुटि तासिः स्यात्। कर्त्तासि। कर्त्तासे।

## ३४। सिब् बहुलं लेटि।

लेट् छान्दसः।

## ३५। कास्प्रत्ययादाममन्त्रे लिटि।

कासेः प्रत्ययान्ताच्च धातोर्लिट्याम् स्यात्। "कासाञ्चक्रे पुरी सौधैः।" चिकीर्षाम्बभूव। पातयामास। संत्रासयाञ्चकार। "भूयस्त्वं बेभिदाञ्चक्रे।"

---

(9) "सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विम् णिच् यङौ तथा।
यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः" ॥ १ ॥ इति।

प्रत्ययग्रहणसनिकाजुपलक्षणमिति स्मृतिः । तेन दरिद्राञ्चकार । चुलुम्पाञ्चकार ।

## ३६ । इजादेश्च गुरुमतोऽनृच्छः ।

इजादिर्यो धातुर्गुरुमांस्ततो लिट्याम् स्यात् । ईहाञ्चक्रे । ईक्षाञ्चक्रे । ऊहाञ्चक्रे । अनृच्छः किम् ? आनर्च्छ ।

(क) ऊर्णोतेर्नुवद्भावो वक्तव्यः । प्रोर्णुनाव ।

## ३७ । दयायासश्च ।

एभ्यो लिट्याम् स्यात् । "दयाञ्चक्रे न राक्षसः" । पलायाञ्चक्रे । आसाञ्चक्रे । आसाम्बभूव । आसामास ।

## ३८ । उषविदजागृभ्योऽन्यतरस्याम् ।

एभ्यो लिट्याम् वा स्यात् । "ओषाञ्चकार कामाग्निः" । उवोष । विदेरगुणत्वञ्च । विदाञ्चकार विदाम्बभूव । विदामास विवेद । जागरामास जागराञ्चकार जागराम्बभूव जजागार ।

## ३९ । भीह्रीभृहुवां श्लुवच्च ।

एषां लिट्याम् वा स्यात् । श्लाविव द्वित्वमित्त्वञ्च । बिभयाञ्चकार । जिह्रयाम्बभूव । बिभरामास । जुहवाञ्चकार । पक्षे बिभाय । जिह्राय बभार । जुहाव ।

## ४० । कृञ्चानुप्रयुज्यते लिटि ।

आमन्तस्य लिटि परतः कृञनुप्रयुज्यते । कृञिति कृभ्वस्तयः । तथैवोदाहृतम् ।

## ४१ । विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ।

इदं लोटि वा निपात्यते । विदांकुर्वन्तु विदन्तु वा । विदांकुरु विद्धि वा (10) ।

---

(10) "वक्त्रं संहर माञ्चलेन चपले ! पद्मेरुहस्यास्य वा तत्त्वं वीक्ष्य विदांकरोतु भगवानम्भोजिनीवल्लभः" — इति सृष्टिधरचक्रवर्त्तिधृतम् । अत्र पुरुषवचने न विवक्षिते । इतिशब्दस्य सर्वेषां पुरुषाणां वचनानाञ्चग्रहणार्थत्वात् ।

४२। अभ्युत्सादयांप्रजनयांचिकयांरमयामकःपावयांक्रियाद्विदामक्रन्निति च्छन्दसि।

छान्दसम्।

४३। च्लि लुङि।

४४। च्लेः सिच्।

लुङि च्लिः स्यात्। तस्य सिजादिश्यते। अकार्षीत्। अहार्षीत्। अपाक्षीत्।

(क) स्पृशमृशकृषतृपदृपां सिज् वा वाच्यः। एभ्यः सिज् वा स्यात्। अस्प्राक्षीत्। अस्पार्क्षीत्। अम्राक्षीत्। अमार्क्षीत्। अक्राक्षीत्। अकार्क्षीत्। अत्राप्सीत्। अतार्प्सीत्। अद्राप्सीत्। अदार्प्सीत्। पक्षे क्सः। अस्पृक्षत्। अमृक्षत्। अकृक्षत्। पुषाद्यङ्। अतृपत्। अदृपत्। (11)

४५। शल इगुपधादनिटः क्सः।

शषसहान्तादिगुपधात् च्लेः क्सः स्यात्। स्पृश अस्पृक्षत्। गुह् अघुक्षत्। "मा घुक्षः पन्थुरात्मानम्"। अनिटः किम्? अमोषीत्।

४६। श्लिष आलिङ्गने।

श्लिषः प्राक्ष्वालिङ्गन एव क्सः स्यात्। अश्लिक्षत् कन्याम्। अश्लिक्षद् भार्य्याम्। अन्यत्र समाश्लिषज्जतु काष्ठम्।

४७। न दृशः।

दृशः क्सो न स्यात्। अद्राक्षीत्। अदर्शत्। इरितो वेति वाऽङ् (३।१।५७)।

४८। णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्।

एभ्य च्लेश्चङ् स्यात्। अचीकरत्। अलीलवत्। अनीनशत्। "मा तपः साधु नीनशः"। अचिक्लिशत्। अशिश्रियत्। अदुद्रुवत्। घनो जलमसुस्रुवत्। कर्त्तरीति वर्त्तते प्राक् चिण्भावकर्मणोरिति (३।१।६६)।

---

(11) रधादित्वादिमौ वेट्कावमर्थमनुदात्ततेति वेट्त्वात् पक्षे अतर्पीत्। अदर्पीत्।

(क) कमेरुपसंख्यानम् । “अचकमत सपल्लवां धरित्रीम्” । णिङ्पक्षे पूर्वेणाचीकमत । (12)

## ४९ । विभाषा धेट्श्व्योः ।

धेट्श्विभ्यां च्लेश्चङ् स्याद्वा । अदधद् अधासीद् वा । विभाषा घ्राधेड्ति (२।४।७८) पक्षे लुगुक्तः । अधात् । अशिश्वियद् अश्वयीद् वा । अङ् । अश्वत् । कर्त्तरीत्येव । अधिषातां गावौ वत्सेन ।

## ५० । गुपेश्छन्दसि ।

## ५१ । नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।

छान्दसं सूत्रद्वयम् । (13)

## ५२ । अस्यतिवक्तिख्यातिभ्योऽङ् ।

एभ्यश्च्लेरङ् स्यात् । आस्थत् । अवोचत् । आख्यत् । तङ्पक्षे पर्य्यास्थत । अवोचत । व्याख्यत ।

## ५३ । लिपिसिचिह्वश्च ।

## ५४ । आत्मनेपदेष्वन्यतरस्याम् ।

लिपादिभ्य श्च्लेरङ् स्यात् ।

“इह सा व्यलिपद् गन्धैः स्नान्तीहाभ्यषिचज्जलैः ।
इहाहं द्रष्टुमाह्वं तां स्मरन्नेवं मुमोह सः” ॥ १ ॥

तङि वा । “तस्यालिपत शोकाग्निः” । “अलिप्तेवानिलः शीतः” । “स्नानभ्यषिचताम्भोऽसौ” । “तथाभ्यषिक्त वारीणि” । “आह्वास्त स मुहुः सुरान् मुहुराह्वत राक्षसान्” ।

## ५५ । पुषादिद्युताद्य्लृदितः परस्मैपदेषु ।

पुषादेर्द्युतादेर्लृदितश्च च्लेरङ् स्यात् । अपुषत् । अशुषत् । अद्युतत् । अश्वितत् । शक्लृ अशकत् । गम्लृ अगमत् । परस्मैपदेषु किम् ? व्यद्योतिष्ट ।

(12) अत्र “नाकमिष्टसुखं याति सुयुक्तैर्वड़वारथैः । अथ पत्काषिणो यान्ति ये ऽचीकमतभाषिणः ॥१॥ इति भाष्ये विशिष्टप्रयोगप्रशंसापरः श्लोकः ।

(13) वेद एवायञ्चङ्निषेधः । भाषायां त्विशं चङेव । तथाचार्दयते “र्येनार्दिदद्द दैत्यपुरं पिनाकी” ति भट्टिः । वेदे त्वार्दयीत् । “मैनमर्दयीदि”ति ।

## ५६। सर्त्तिशास्त्यर्त्तिभ्यश्च।

एभ्यश्च्लेरङ् स्यात्। असरत्। अशिषत्। आरत्। आरताम्। कथं "समारन्त ममाभीष्टाः"? तङ्यपीच्छन्त्याचार्य्याः।

## ५७। इरितो वा।

इरितो धातोर्वा च्लेरङ् स्यात्। अच्योतीत्। अच्युतद्वा। अभिदत् अभैत्सीद्वा। अरुधत् अरौत्सीद्वा। परस्मैपदेष्वित्येव। अरुद्ध।

## ५८। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च।

एभ्यश्च्लेरङ् स्याद्वा। अजरत्। अस्तभत्। अम्रुचत्। अम्लुचत्। अग्लुचत्। ग्लुञ्चेरग्लुचदित्येके (14)। अश्वत्। पक्षे सिच्। अजारीत्। अश्वयीत्।

## ५९। कृमृदृरुहिभ्यश्छन्दसि।

छान्दसम्।

## ६०। चिण् ते पदः।

तकारे परतः पद्यतेः कर्त्तरि च्लेश्चिण् स्यात्। समपादि शस्यम्। तकारे किम्? उदपत्सातान्।

## ६१। दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्।

कर्त्तरि दीपादिभ्यस्तकारे च्लेश्चिण् स्यात्। "क्रुद्धोऽदीपि रघुव्याघ्रः।" अदीपिष्ट वा। अजनि अजनिष्ट वा। अबोधि अबुद्ध वा। अपूरि अपूरिष्ट वा। अतायि अतायिष्ट वा। अप्यायि अप्यायिष्ट वा।

## ६२। अचः कर्मकर्त्तरि।

अजन्तात् कर्मकर्त्तरि तकारे चिण् वा स्यात्। उपाचायि वनं स्वयमेव उपाचायिष्ट वा। अकारि कटः स्वयमेवाकृत वा।

---

(14) वस्तुतस्तु ग्लुञ्चेरपि ग्लुचुवदग्लुचदित्येव रूपम्। अनिदितां (६।४।२४) हल उपधायाः क्ङितीत्युपधालोपस्यानिवार्य्यत्वात्। ग्लोचते लुङि अग्लुचत्। अग्लोचीत्। ग्लुञ्चतेस्तु अग्लुचदग्लुञ्चीदिति। ग्रुचु ग्लुचु स्तेयकरणे। ग्लुञ्चु षस्ज गतावित्यर्थभेदात् सूत्रे उभयोः पाठः। अग्लुञ्चदिति लुङिरूपं तु भाष्यविरुद्धम्।

६३ । दुहश्च ।

दुहे स्तत्र चिण्वा स्यात् । अदोहि अदुग्ध वा गौः स्वयमेव

६४ । न रुधः ।

रुध स्तत्र न चिण् स्यात् । अरुद्ध गौः स्वयमेव ।

६५ । तपोऽनुतापे च ।

तपस्तत्र न चिण् स्यात् । अतप्त तपस्तापसः । अनुतापे च भाव-कर्मणोरपि न चिण् । अन्ववातप्त पापेन कर्मणा ।

६६ । चिण् भावकर्मणोः ।

अनयोस्तकारे परतस्त्रेश्चिण् स्यात् । अशायि त्वया । अकारि कटः ।

६७ । सार्वधातुके यक् ।

भावकर्मवाचिनि सार्वधातुके यक् स्यात् । भावे । आस्यते त्वया । कृञः श च (३।३।१००) क्रिया । परिचर्य्या । कर्मणि । क्रियते कटः । क्रियेते कटौ ।

६८ । कर्त्तरि शप् ।

कर्त्तृवाचिनि सार्वधातुके शप् स्यात् । भवति । एधते । धावति धावते । चोरयति । चिकीर्षति । माल्यधारयः ।

६९ । दिवादिभ्यः श्यन् ।

एभ्यः श्यन् स्यात् । दीव्यति । सीव्यति । शूरम्मन्यः ।

७० । वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।

एभ्यो वा श्यन् स्यात् । भ्राश्यते भ्राशते वा । भ्लाश्यते भ्लाशते वा । भ्रम्यति भ्रमति वा । दिवादौ तु नित्यम् । भ्राम्यति । अभिलष्यति अभिलषति वा । त्रस्यति त्रसति वा । त्रुट्यति त्रुटति वा ।

७१ । यसोऽनुपसर्गात् ।

वा श्यन् स्यात् । यस्यति यसति वा । प्रादौ नित्यम् । प्रयस्यति ।

७२ । संयसश्च ।

श्यन् वा स्यात् । संयस्यति संयसति वा ।

७३। स्वादिभ्यः श्नुः।

एभ्यः श्नुः स्यात्। सुनोति। चिनोति।

७४। श्रुवः शृ च।

श्रुवः श्नुः स्याच्छृभावश्च। शृणोति। शृणुतः।

७५। अक्षोऽन्यतरस्याम्।

अक्षो वा श्नुः स्यात्। अक्ष्णोति अक्षति वा।

७६। तनूकरणे तक्षः।

तक्षस्तनूकृतौ श्नु र्वा स्यात्। तक्ष्णोति तक्षति वा काष्ठम्। (15)

७७। तुदादिभ्यः शः।

एभ्यः शः स्यात्। तुदति। उपदिशति।

७८। रुधादिभ्यः श्नम्।

एभ्यः श्नम् स्यात्। रुणद्धि। भिनत्ति। पिनष्टि। छिनत्ति। रुन्धानः।

७९। तनादिकृञ्भ्यः उः।

एभ्य उः स्यात्। तनोति। करोति।

८०। धिन्विकृण्व्योर च।

धिविकृविभ्यामुः स्यादकारश्चान्तादेशः। तस्य चातो लोपः (६।४।४८)। "धिनोति हव्येन हिरण्यरेतसम्"। कृणोति।

८१। क्र्यादिभ्यः श्ना।

एभ्यः श्ना स्यात्। क्रीणाति। क्रीणीते। प्रीणाति। गृह्णाति। गृह्णन्। गृह्णीते। गृह्णानः।

८२। स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च।

एभ्यः श्ना स्यात्। श्नुश्च। उत्तभ्नाति उत्तभ्नोति वा। स्तुभ्नाति स्तुभ्नोति वा। स्कभ्नाति स्कभ्नोति वा।

---

(15) तनूकरणे किम्? सन्तक्षति वाग्भिः शिष्यम्।

## ८३ । हलःश्नः शानज्झौ ।

हलः परस्य श्नाप्रत्ययस्य शानच् स्याद्धौ परतः । पुषाण । बधान । गृहाण ।

## ८४ । छन्दसि शायजपि ।

छान्दसम् । उक्ता विकरणाः ।

## ८५ । व्यत्ययो बहुलम् ।

बहुलमित्याधातुप्रत्ययविधानमधिक्रियते । शेषश्छान्दसः ।

## ८६ । लिङ्याशिष्यङ् ।

छान्दसम् ।

## ८७ । कर्मवत् कर्मणा तुल्यक्रियः ।

कर्त्तरीत्येव । कर्मणा तुल्यक्रियः कर्त्ता कर्मवत् स्यात् । कर्मस्थक्रियेष्वतिदेशः । प्रयोजनं यगात्मनेपदचिण्चिण्वद्भावाः । पच्यते ओदनःस्वयमेव । षष्टिकाः षष्टिरात्रेण पच्यन्ते । अभेदि काष्ठं स्वयमेव । करिष्यते कटःस्वयमेव । कथमन्योन्य माश्लिष्यतः ? अन्योन्यं गृह्णीतः ? साधनभेदेन भिन्नक्रियत्वात् । इह दुहिपच्योः सकर्मकयोः कर्मवद् बहुलमिति भाष्यम् । दुग्धे गौः चीरं स्वयमेव । अदुग्ध गौः चीरं स्वयमेव । उदुम्बरो लोहितं फलं पच्यते । तथा करणेन तुल्यक्रियः कर्त्ता बहुलं कर्मवत् स्यात् । परिवारयति कण्टकैर्वृत्तम् । परिवार्य्यन्ते कण्टकाः स्वयमेव वृत्तम् ।

## ८८ । तपस्तपःकर्मकस्यैव ।

तपिः कर्त्ता कर्मवत् स्यात् । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । तपःकर्मकस्यैव किम् ? उत्तपति सुवर्णं सुवर्णकारः ।

## ८९ । न दुहस्नुनमां यक्चिणौ ।

एषां कर्मकर्त्तरि यक्चिणौ न स्याताम् । दुग्धे गौः चीरं स्वयमेव । अदुग्ध गौः चीरं स्वयमेव । प्रस्नुते गौः । प्रास्नोष्ट गौः स्वयमेव । नमते दण्डः । अनंस्त दण्डः स्वयमेव ।

(क) णिश्रन्थिग्रन्थिब्रूञामात्मनेपदाकर्मकाणाश्चेति भारद्वाजीयाः । एषां

कर्मकर्त्तरि यक्चिणौ न स्तः। णिः। भूषयते कन्या। कारयते कटः। अचीकरत कटः। ग्रन्थते मेखला। अग्रन्थिष्ट माला। श्रन्थते। अश्रन्थिष्ट मेखला। ब्रूते कथा। विकुरुते पयः स्वयमेव।

(ख) किरादेः सनश्च। किरादेः सन्नन्तस्य च कर्मकर्त्तरि यक्चिणौ न स्तः। विकिरते हस्ती। चिकीर्षते कटः। अचिकीर्षिष्ट कटः स्वयमेव।

## ९०। कुषिरजोः प्राचां श्यन् परस्मैपदञ्च।

अनयोः कर्मकर्त्तरि प्राचां मतेन श्यन्परस्मैपदे स्याताम्। कुष्णाति पादम्। कुष्यति पादः। श्नप्श्नोर्नित्य (७।१।८१) मिति नुम्। कुष्यन्ती जङ्घा। रज्यति वस्त्रम्। "स्वयमन्वरज्यदतुषारकरः।"

## ९१। धातोः।

अधिकारोऽयमा तृतीयाध्यायपरिसमाप्तेः। धातोः कृत्तिङो विधेयाः।

## ९२। तत्रोपपदं सप्तमीस्थम्।

अत्र धात्वधिकारे (३।१।९१) सप्तमीनिर्दिष्टमुपपदसंज्ञं स्यात्। वक्ष्यति कर्मण्यण् (३।२।१)। सुपि स्थः (३।२।४)।

## ९३। कृदतिङ्।

तत्र धात्वधिकारे (३।१।९१) तिङोऽन्ये कृत्संज्ञकाः स्युः। तव्यण्वुल्-घञादयः।

## ९४। वाऽसरूपोऽस्त्रियाम्।

कृत्सु भिन्नरूपोऽपवादो वा बाधकः स्यात्। कर्त्तव्यं कार्य्यं वा। विबोद्धा विबुधो वा। हसितं हसनं वा। अस्त्रियां किम्? चिकीर्षा। न क्तिन्। असरूपः किम्? गोदः। शर्मदः।

## ९५। कृत्याः प्राङ् ण्वुलः।

ण्वुलः प्राक् सप्त प्रत्ययाः कृत्यसंज्ञकाः स्युः।

तव्यश्च तव्यतश्चानीयरं केलिमरं तथा ।

यतं ख्यतं क्यपश्चैव सप्त कृत्यान् प्रचक्षते ॥ १ ॥ (16)

## ९६ । तव्यत्तव्यानीयरः ।

धातोरिमे स्युः । भातव्यम् । भानीयम् । भवितव्यम् । भवनीयम् । वक्तव्यम् । वचनीयम् । इह वास्तव्यस्तद्धितान्तः । तदुक्तं भाष्ये तद्धितो वा पुनरेषः । वास्तुनि भवो वास्तव्य इति ।

(क) केलिमर उपसंख्यानं कर्त्तव्यम् । कर्मकर्त्तर्यभिधानम् । पचेलिमा माषाः । छिदेलिमा रज्जुः । कालसामान्ये चामी तव्यदादयः । तथाच भूतेऽपि । कर्म प्रोक्तवन्तः कर्मप्रवचनीयाः । वर्त्तमाने । भवतीति भव्यः ।

## ९७ । अचो यत् ।

अजन्ताद् यत् स्यात् । लव्यम् । भव्यम् । पव्यम् । पेयम् । गेयम् । देयम् । दित्स्यम् । पुत्रीय्यम् । देदीप्यम् । पुत्रकाम्यम् । गर्दभ्यम् । कथं भाव्यमनेनेति ? आवश्यकेऽस्तु ( ३।१।१२५ ) ।

(क) तकिशसिचतियतिजनीनाञ्च । तक्यम् । प्रशस्यम् । चत्यम् । यत्यम् । जन्यम् ।

(ख) हनो वा वध च । यत् स्याद् वा वधादेशश्च । वध्यः । पक्षे ख्यति घात्यः ।

## ९८ । पोरदुपधात् ।

पवर्गान्तादुपधाद् यत् स्यात् । ख्यतो बाधा । शप्यम् । जप्यम् । लभ्यम् । जाप्यन्तु बाहुल्यात् । अदुपधात् किम् ? गोप्यम् । तपरः किम् ? आप्यम् ।

## ९९ । शकिसहोश्च ।

अनयोर्यत् स्यात् । शक्यम् । सह्यम् ।

---

(16) यतं ख्यतं क्यपश्चैव केलिमरमनीयरम् ।
तव्यञ्च तव्यतञ्चाङ्गः कृत्यान् सप्त विधान् बुधाः ॥ १ ॥
Occurs in the text of some MSS. while in others, it is given only in the भाषावृत्त्यर्थविवृति, as a stanza composed by the commentator.

**१०० । गदमदचरयमश्चानुपसर्गे ।**

एभ्योऽप्रादौ यत् स्यात् । गद्यम् । माद्यन्ते तेन मद्यम् । चर्य्यम् । यम्यम् । कथं नियम्यम् । यत्रोपचर्य्यमिति ? दुष्प्राप्यवत् पश्चात् समासेन ।

(क) चरेराङि चागुरौ । यत् स्यात् । आचर्य्यो धर्म्मः । अगुरौ किम् ? आचार्य्यः । ण्यत् ।

**१०१ । अवद्यपण्यवर्य्या गर्ह्यपणितव्यानिरोधेषु ।**

एष्वेते निपात्यन्ते । अवद्यं निन्द्यम् । पण्यं विक्रेयम् । वर्य्योऽनिरुद्ध-प्रवृत्तिः । अतेन वर्य्यः । "सुग्रीवो नाम वर्य्योऽसौ पण्यभ्रात्वधः कपिः ।" वर्य्या पतिंवरेत्येके । (17)

**१०२ । वह्यं करणम् ।**

वहेः करणे स्यात् । वहन्ति तेन वह्यं शकटम् ।

**१०३ । अर्य्यः स्वामिवैश्ययोः ।**

अनयोरर्त्तेर्यत् स्यात् । अर्य्यः । अन्यत्र आर्य्यो गन्तव्यो देशः ।

**१०४ । उपसर्य्या काल्या प्रजने ।**

प्रजने प्रथमगर्भग्रहणे प्राप्तकाला गौरुपसर्य्योच्यते ।

**१०५ । अजर्य्यं सङ्गतम् ।**

इदमत्र निपात्यते । "तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतम्" ।

**१०६ । वदः सुपि क्यप् च ।**

वदः क्यप् स्यात् सुप्युपपदे । यच्च । "अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीमि ते ।" मत्वर्थीयेऽचि (५।२।१२७) "सत्यवद्यो रघूत्तमः ।" सुपि किम् ? वाद्यम् । अनुपसर्गं इत्येव । प्रवाद्यम् । सुवाद्यम् । कथमनूद्यम् ? अनुपसर्गेणानुना ।

---

(17) अत्र भट्टोजिः ।—"वर्य्येति स्त्रियामेव निपात्यते । अस्त्रियान्तु ण्यदेव । वार्य्या ऋत्विज इति वृत्तिकारमतम् । भट्टिस्तु छन्दाञ्जसा निर्देशं मत्वाम: पुंलिङ्गेऽपि यतं प्रायुङ्क्त । पुरुषोत्तमादयोऽप्येवम् ।"—इति शब्दकौस्तुभः । (p. 897)

## १०७। भुवो भावे।

भावे भुवः सुपि क्यप् स्यात्। ब्रह्मभूयं ब्रह्मत्वम्।

## १०८। हनस्त च।

सुपि हन्तेर्भावे क्यप् स्यात्। तश्चान्तादेशः। ब्रह्महत्या। "मित्रभूयं गतस्तस्य रिपुहत्यां करिष्यसि।"

## १०९। एतिस्तुशास्वृदृजुषः क्यप्।

एभ्यः क्यप् स्यात्। इत्यः। स्तुत्यः। शिष्यः। वृत्यः। आदृत्यः। जुष्यः। कथमुपेयम्? ईङ् गताविल्यस्मात्।

(क) शंसिदुहिगुहिभ्यो वा क्यप्। शस्यं शंस्यम्। दुह्यं दोह्यम्। गुह्यं गोह्यम्।

(ख) अञ्जेश्च संज्ञायाम्। क्यप् स्यात्। आज्यं घृतम्।

## ११०। ऋदुपधाच्चाकॢपिचृतेः।

ऋदुपधात् क्यप् स्यात्। वृत्यम्। नृत्यम्। गृध्यम्। न कॢपिचृतेः। कल्प्यम्। चर्त्यम्।

## १११। ई च खनः।

खनः क्यप् स्यादीकारश्चान्तादेशः। आद्गुणः (६।१।८७)। खेयम्।

## ११२। भृञोऽसंज्ञायाम्।

क्यप् स्यात्। भृत्यः। संज्ञायां तु भार्या।

(क) समश्च बहुलम्। संभृत्याः। संभार्याः।

## ११३। मृजेर्विभाषा।

मृजेर्वा क्यप् स्यात्। मृज्यो मार्ग्यो वा।

## ११४। राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः।

क्यबन्ता इमे निपात्यन्ते। राजसूयः क्रतुः। सुवति दीप्यते सूर्यः। मृषोद्यतेऽसौ मृषोद्यः। रोचतेऽसौ रुच्यः। गुपेरादिकत्वञ्च। कुप्यं वसु। गोप्यमन्यत्। कृष्टपच्याः शालयः। अव्यथ्या दुर्जनाः।

११५। भिद्योद्ध्यौ नदे।

एतौ नदविशेषे निपात्येते। भिनत्ति कूलानि भिद्यः। उज्झत्युदकमुद्ध्यः।

११६। पुष्यसिद्ध्यौ नक्षत्रे।

एतौ नक्षत्रभेदे स्याताम्।

११७। विपूयविनीयजित्या मुञ्जकल्कहलिषु।

एष्वेते निपात्यन्ते। विपूयो मुञ्जः। विनीयः कल्कः। जित्यो हलिर्हलं स्यात्।

११८। प्रत्यपिभ्यां ग्रहेश्छन्दसि।

छान्दसम्।

११९। पदास्वैरिबाह्यापक्ष्येषु च।

एष्वर्थेषु ग्रहेः क्यप् स्यात्। प्रगृह्यं पदम्। गृह्यका अस्वैरिणः। ग्रामगृह्या सेना। ग्रामबाह्येत्यर्थः। "गुणगृह्या वचने विपश्चितः"। गुणपक्ष्या इत्यर्थः।

१२०। विभाषा कृवृषोः।

अनयोर्वा क्यप् स्यात्। कृत्यं कार्यं वा। वृष्यं वर्ष्यं वा। पक्षे ण्यत्।

१२१। युग्यञ्च पत्रे।

युग्यं वाहने स्यात्। योग्यमन्यत्।

१२२। अमावस्यदन्यतरस्याम्।

अमापूर्वाद्वसेर्ण्यति वृद्धिर्वा निपात्यते। अमावास्या अमावस्या वा।

१२३। छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि।

छान्दसम्।

### १२४ । ऋहलोर्ण्यत् ।

ऋवर्णान्ताद्धलन्ताच्च ण्यत् स्यात् । कार्य्यम् । हार्य्यम् । आहार्य्यम् । पाक्यम् । वाच्यम् । पाच्यम् । वाह्यम् । वाक्यम् । पाठ्यम् । क्वच्च काव्यम् । वास्यम् । कथं समस्यमभ्यस्यम् ? तर्हि संज्ञापूर्वकत्वाद् वृद्ध्यभावः । संज्ञापूर्वको विधिरनित्य इति (प, ९४) ।

(क) पाणौ सृजेः । ण्यत् स्यात् । पाणिसर्ग्या रज्जुः ।

(ख) समवपूर्वाच्च । समवसर्ग्यः ।

(ग) दभेश्च । पोरदुपधादित्यस्या-(३।१।९८) पवादो ण्यत् स्यात् । अवदाभ्यम् । दभिः सौत्रो धातुः ।

### १२५ । ओरावश्यके ।

उवर्णान्तादावश्यके द्योत्ये ण्यत् स्यात् । लाव्यम् । पाव्यम् । मयूरव्यंसकादित्वात् (२।१।७२) समासः । अवश्यलाव्यम् ।

### १२६ । आसुयुवपिरपिलपित्रपिचमश्च ।

एभ्यो ण्यत् स्यात् । आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । अवत्राप्यम् । आचाम्यम् ।

### १२७ । आनाय्योऽनित्ये ।

"आनाय्यो दक्षिणाग्नौ स्यात्" ।

### १२८ । प्रणाय्योऽसम्मतौ ।

असम्मतिरनिष्टश्चौरादिस्तत्र प्रणाय्यः स्यात् ।

### १२९ । पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ।

पाय्यादयो माङ्नीञ्चिञ्धाञां मानादौ निपात्यन्ते । पाय्यं मानम् । सान्नाय्यं हविः । निकाय्यो निवासः । धाय्या सामिधेनी ।

### १३० । क्रतौ कुण्डपाय्यसञ्चाय्यौ ।

एतौ क्रतौ निपात्येते ।

## १३१ । अग्नौ परिचाय्योपचाय्यसमूह्याः ।

एतेऽग्नौ निपात्यन्ते । वहेः संप्रसारणदीर्घौ च । समूह्यः ।

## १३२ । चित्याग्निचित्ये च ।

एते निपात्येते । चित्योऽग्निः । भावेऽग्निचित्या स्यात् । उक्ताः कृत्य-प्रत्ययाः ।

## १३३ । ण्वुल्तृचौ ।

धातोः कर्त्तरि ण्वुल्तृचौ स्याताम् । दायको दाता । अधिष्ठायकोऽधिष्ठाता । वाचको वक्ता । पाचकः पक्ता । कारकः कर्त्ता ।

## १३४ । नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।

नन्द्यादेर्ल्युः स्यात् । नन्दनः । मदनः । दमनः । शोभनः । तपनः । दर्पणः । पवनः । रमणः । जनार्द्दनः । विभीषणः । लवणः । निपातनात्त्वम् । ग्रहादेर्णिनिः । ग्राही । परिपन्थी । स्थायी । पचादेरच् । पचः । श्वपचः । वदः । कद्वदः । मेषः । देवः । श्वेतः । योधः । क्रोधः । सर्पः । स्पर्शः । नर्त्तः । हलधरः । गदाधरः । पयोधरः । यशोधरः । शक्तिधरः । गङ्गाधरः । जातिस्मरः । लोलुवः । पोप्लुवः । चञ्चुरः । पचादिराकृतिगणः ।

## १३५ । इगुपधज्ञाप्रीकिरः कः ।

एभ्यः कः स्यात् । बुधः । कृशः । ईशः । विपुलः । क्षिपः । मृडः । ज्ञः । प्रियः । उत्किरः ।

## १३६ । आतश्चोपसर्गे ।

आदन्तात् प्रादौ कः स्यात् । प्रस्थः । सुस्थः । प्रज्ञः । सुम्लः । सुग्लः ।

## १३७ । पाघ्राध्माधेट्दृशः शः ।

एभ्यः शः स्यात् । उत्पिवः । उज्जिघ्रः । "आजिघ्रैः पुष्पगन्धानाम् ।" उद्धमः । उद्धयः । उत्पश्यः । अप्रादेश्चेति केचित् । पश्यः । जिघ्रः ।

(क) न संज्ञायाम् । व्याघ्रः । अथवा निपातनात् ।

१३८। अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ।

एभ्योऽप्रादौ शः स्यात् । लिम्पः । विन्दः । माल्यधारयः । सातिः सौत्रः । सातयः । साहयः ।

(क) गवादिषु विन्देः संज्ञायाम् । गोविन्दः । अरविन्दम् ।

(ख) नौ लिम्पेः । निलिम्पा देवाः ।

१३९। ददातिदधात्योर्विभाषा ।

अप्रादौ दाधाभ्यां शो वा स्यात् । ददः । दायः । दधः । धायः ।

१४०। ज्वलितिकसन्तेभ्यो णः ।

धातोर्ज्वलादेः कसान्ताद्वा णः स्यात् । ज्वालः । ज्वलः । चालः । चलः । रामः । रमः । अनुपसर्गादित्येव । प्रज्वलः । नित्यं पचाद्यच् ।

(क) तनोतेश्च । अवतानः । अवतनः ।

१४१। श्याद्व्यधास्रुसंस्रुतीणवसावहृलिहश्लिषश्वसश्च ।

एभ्यो णः स्यात् । श्यैङ् । अवश्यायः । प्रतिश्यायः । आत् । दायः । धायः । व्यधादेः । व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायोऽन्तकृत् । अवहारः । लेहः । "दद्येऽहं मधुनो लेहैः" । श्लेषः । श्वसितीति श्वासः । श्याग्रहणं सोपसर्गात् कबाधनार्थम् ।

१४२। दुन्योरनुपसर्गे ।

दुनीञो णः स्यात् । दावः । नायः । उत्तरविभाषयास्यापि शेषत्वादचि दवो नय इत्याहुः । अप्रादौ किम् ? प्रणयः ।

१४३। विभाषा ग्रहः ।

ग्रहो वा णः स्यात् । ग्राहो ग्रहो वा ।

(क) भवतेश्चेति वक्तव्यम् । भवतीति भावो भवो वा ।

१४४। गेहे कः ।

गेहे कर्त्तरि ग्रहेः कः स्यात् । गृहम् । गृहाः ।

**१४५। शिल्पिनि ष्वुन्।**

(क) नृतिखनिरञ्जिभ्य एव। शिल्पिनि कर्त्तरि ष्वुन् स्यात्। नर्त्तकी। खनकी। रजकी।

**१४६। गस्थकन्।**

गायतेः स्थकन् स्यात्। गाथकः।

**१४७। ण्युट् च।**

गायतेर्ण्युट् स्यात्। गायनः। चकारात् कारणम्।

**१४८। हश्च व्रीहिकालयोः।**

हाधातोर्ण्युट् स्यात्। हायनो व्रीहिः। हायनो वत्सरः।

**१४९। प्रुसृल्वः समभिहारे वुन्।**

प्रुसृलूभ्यः समभिहारे वुन् स्यात्। प्रवकः। सरकः। लवकः।

**१५०। आशिषि च।**

आशीर्गतौ धातो र्वुन् स्यात्। नन्दतात् नन्दकः। जीवताज्जीवकः। भूयाद् भवकः।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवस्य भाषावृत्तौ

तृतीयाध्यायस्य प्रथमः पादः ॥३।१॥

समाप्तश्च प्रत्ययपादः।

अथ

# भाषावृत्तिः ।

## तृतीयोऽध्यायः । द्वितीयः पादः ।

### १ । कर्मण्यण् ।

कर्ममात्रोपपदाद् धातोरण् स्यात् । कुम्भकारः । नगरकारः । ऋतुलावः । वेदाध्यायः । कर्त्तभिप्रायः । छत्रधारः । द्वारपालः । विप्रघातः । अश्ववारः । कमण्डलुग्राहः । रिपुघातः ।

(क) शीलिकामिभक्ष्याचरिभ्यो णः । एभ्यो णः स्यात् । मांसशीलः । स्त्रियां टाप् । मांसशीला । मांसकामः । मांसकामा । धर्मकामः । धर्मकामा । मांसभक्षः । मांसभक्षा । साध्वाचारः । कल्याणाचारा कन्या ।

(ख) ईक्षिक्षमिभ्याञ्च । आभ्यां णः स्यात् । सुखप्रतीक्षा । बहुक्षमा ।

### २ । ह्वावामश्च ।

ह्वेञ्वेञ्माङ्भ्यः कापवादोऽण् स्यात् । स्वर्गह्वायः । तन्तुवायः । "व्योममायमिवोत्थितम् ।"

### ३ । आतोऽनुपसर्गे कः ।

आदन्तादप्रादौ कः स्यात् । गोदः । शर्मदः । कम्बलदः । सुखदः । धर्मदः । सर्वज्ञः । नृपः । अङ्गुलित्रः । पार्ष्णित्रः । अनुपसर्गे किम् ? गोसन्दायः । वड़वासन्दायः ।

### ४ । सुपि स्थः ।

सुपीति योगविभागादादन्तात् सुप्युपपदे कः स्यात् । द्विपः । पादपः । कच्छपः । सुस्थः । दुःस्थः । प्रस्थः । विषमस्थः । मध्यस्थः । ततः स्थः । तिष्ठतेः सुपि कः स्यात् । भावेऽभिधानम् । आखूत्थं वर्त्तते । अतःपरं कर्मणि सुपीति यथासम्भवमनुवर्त्तते ।

५। तुन्दशोकयोः परिमृजापनुदोः।

अनयोराभ्यां कः स्यात्। तुन्दपरिमृजोऽलस एव। शोकापनुदः प्रिय एवोच्यते।

(क) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्। कः स्यात्। मूलविभुजो रथः। नखमुचं धनुः। प्रियाख्यो ब्राह्मणः। अपो बिभर्त्ति अब्भ्रम्। मह्रीध्रः। कृतघ्नो नरः। शत्रुघ्नः। प्रलम्बघ्नः। कुमुदम्। सरोरुहम्। त्रयो दीव्यन्त्यस्मिंस्त्रिदिवः स्वर्गः। आकृतिगणोऽयम्।

६। प्रे दाज्ञः।

७। समि ख्यः।

प्रदाप्रज्ञासंख्याभ्योऽणपवादः कः स्यात्। विश्वासप्रदः। पथिप्रज्ञः। गोसंख्यः।

८। गापो ष्टक्।

गापाभ्यां कापवादष्टक् स्यात्। सामगः। सामगी। अनुपसर्गे एव। सामप्रगायः।

(क) सुराशीध्वोः पिबतेरिति वक्तव्यम्। सुरापः। शीधुपः। सुरापी। शीधुपी।

९। हरतेरनुद्यमनेऽच्।

हृञोऽनुत्क्षेपणेऽच् स्यात्। अंशहरः। मनोहरः। पित्तहरं क्षीरम्। वाक्यहरा दूती। उत्क्षेपणे तु भारहारः।

१०। वयसि च।

वयसि गम्यमाने हृञोऽच् स्यात्। अस्थिहरः श्वा। वर्म्महरः कुमारः।

११। आङि ताच्छील्ये।

आङि हृञोऽच् स्यात्। पुष्पाहरः। फलाहरः। सुखाहरः। तच्छील इत्यर्थः।

## १२ । अर्हः ।

अर्हतेरणपवादोऽच् स्यात् । पूजार्हः पण्डितः । पूजार्हा ब्राह्मणी । कार्य्यार्हा ब्राह्मणी ।

(क) शक्तिलाङ्गूलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेः । एषु ग्रहेरच् स्यात् । शक्तिग्रहः । लाङ्गूलग्रहः । धनुर्ग्रहः ।

(ख) सूत्रे चावधार्य्यर्थे । (18) ग्रहेरच् स्यात् । सूत्रमर्थतोऽवधारयति सूत्रग्रहः प्राज्ञः । सूत्रग्राहोऽन्यत्र ।

## १३ । स्तम्बकर्णयो रमिजपोः ।

रमिजपिभ्यां स्तम्बकर्णोपपदाभ्यामच् स्यात् । हस्तिसूचकयोरभिधानम् । स्तम्बेरमो हस्ती । कर्णेजपः खलः ।

## १४ । शमि धातोः संज्ञायाम् ।

शम्युपपदे धातुमात्रादच् स्यात् । शङ्करः शिवः । शंवरो दैत्यः । शंवदः कोऽपि ।

## १५ । अधिकरणे शेतेः ।

आधारोपपदाच्छीङोऽच् स्यात् । खेशयः । गुहाशयः ।

(क) पार्श्वादिषूपसंख्यानम् । एषु शीङोऽच् स्यात् । पार्श्वाभ्यां शेते पार्श्वशयः । उरःशयः ।

(ख) उत्तानादिषु कर्त्तृषु । उत्तानः शेते उत्तानशयः । अवमूर्द्धशयः ।

(ग) दिग्धसहपूर्वाच्च । दिग्धसहशयः । गिरिशशब्दस्तु लोमादिशप्रत्ययान्तो भाषायां साधुः (19) ।

---

(18) The real वार्त्तिक as taken up in the महाभाष्य is सूत्रे च धार्य्यर्थे and it is attached to 3. 2. 9. So अवधार्य्यर्थे is another instance of differently reading the महाभाष्य ।

(19) एवञ्च प्रत्याहतास्तौ गिरिशप्रभावादिति । आरोपितं यद् गिरिशेन पश्चादिति । गिरिशमुपचचार प्रत्यहं सा सुकेशीत्यादिप्रयोगः समाधेयः ।

१६। चरेष्टः।

आधारोपपदाच्चरेष्टः स्यात्। कुरुचरः। वनेचरः। रात्रिचरः रात्रिञ्चरः। खेचरः। खेचरी। नक्तञ्चरी। कथं सहचरीति ? (20) चिन्त्यम्।

१७। भिक्षासेनादायेषु च।

एषु चरेष्टः स्यात्। भिक्षाचरः। सेनाचरः। आदायचरः (21)। स्वयं ग्राहीत्यर्थः।

१८। पुरोऽग्रतोऽग्रेषु सर्त्तेः।

एषु सर्त्तेष्टः स्यात्। पुरःसरः। अग्रतःसरः। अग्रे सरतीति अग्रेसरः। अग्रेसरी। कथं पुरःसरा वाचः ? व्युत्पत्त्यन्तरेण। पचाद्यच्। (22)

१९। पूर्व्वे कर्त्तरि।

सर्त्तेष्टः स्यात्। पूर्वःसरतीति पूर्वसरः।

२०। कृञो हेतुताच्छील्यानुलोम्येषु।

हेत्वादौ गम्ये कृञोऽण्विषये टः स्यात्। "दारिद्र्यं पुरुषस्य विक्लवकरम्"। पुष्टिकरं मांसम्। ताच्छील्ये। व्यसनकरः। दयाकरः। आशाकरः। तापकरः। आनुलोम्ये। प्रीतिकरः। "पितुर्वाक्यकरं रामम्"। हेत्वादौ किम् ? भाष्यकारः।

२१। दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबलिभक्तिकर्त्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु।

दिवादौ षड्विंशतौ यथायोगं सुपि कर्मणि चोपपदे कृञोऽहेत्वादौ टः स्यात्। दिवाकरः। विभाकरः। प्रभाकरः। भास्करः। "देवापदामादिकरो

---

(20) प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहमिति रघुकाव्ये। पचादिषु पठितस्य चरडित्यस्य सुप्सुपेति समासे सहचरीति।

(21) द्विषम् वनेचराग्र्याणांत्वमादायचरी वन इति भट्टिः।

(22) यूथं तदग्रसरगर्वितकृष्णसारमिति कालिदासप्रयोगस्तु बाहुलकादित्याहुः।

य एकः"। किंकरः। कारकरः। संख्याकरः। संख्येत्यर्थग्रहणमित्येके। एककरः। द्विकरः। चतुष्करः। अहस्करः। अरुष्करः।

(क) किंयत्तद्बहुष्वज्विधानं टाबर्थमिति कात्यायनः। किंकरा। यत्करा। तत्करा। बहुकरा। सूत्रकारस्य मते त्वजादिपाठात् टाप्। (23)

## २२। कर्मणि भृतौ।

कर्मशब्दोपपदात् कृञो भृतौ टः स्यात्। कर्मकरो भृत्यः। कर्मकरी। भृतौ किम्? कर्मकारः।

## २३। न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु।

नवस्वेषु कृञो हेत्वादौ टो न स्यात्। "शब्दकारः पपात खम्"। श्लोककारः। एवं यावत् पदकारः।

## २४। स्तम्बशकृतोरिन्।

अनयोः कृञ इन् स्यात्। स्तम्बकरिः। शकृत्करिः। व्रीहिवत्सयोरेवाभिधानम्।

## २५। हरतेर्दृतिनाथयोः पशौ।

पशौ कर्त्तरि दृतौ नाथे चोपपदे हृञ इन् स्यात्। दृतिहरिः श्वा। नाथहरिः सिंहः। (24)

## २६। फलेग्रहिरात्मम्भरिश्च।

इनन्तौ निपात्येते। चकारात् कुक्षिम्भरिः।

## २७। छन्दसि वनसनरक्षिमथाम्।

छान्दसम्।

## २८। एजेः खश्।

ण्यन्तादेजेरणविषये खश् स्यात्। अङ्गमेजयः। जनमेजयः। शत्रुमेजयः। भ्रातृमेजयः।

---

(23) अतःपरं क्वचित् पुस्तके हेत्वादौ तु किंकरीत्यधिकः पाठः।

(24) दृतिश्चर्मपुटे मत्स्य इति मेदिनी। नाथं यूथपतिं यूथस्य नाथं प्रभुं हरतीति केचित्। नाथो नासारज्जुरिति भट्टोजिः। नाथं चर्ममयद्रव्यविशेष इत्युपाध्यायसर्वस्वे।

(क) वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यश्च। वातादिष्वजादिभ्यः खश् स्यात्। वातमजो मृगः। शुनिन्धयः पापः। तिलन्तुदः काकः। शर्द्धञ्जहा मृगाः।

२९। नासिकास्तनयोर्ध्माधेटोः।

३०। नाडीमुष्ट्योश्च।

(क) घटीखारीवातेषु च। एषूपपदेषु ध्माधेटोः खश् स्यात्। नासिकन्धमः। नासिकन्धयः। खित्यनव्ययस्येति (६।३।६६) ह्रस्वः। स्तने धेट एवेति स्मृतिः। स्तनन्धयो बालः। "नाड़िन्धमान् मार्गान्"। नाड़िन्धयः। मुष्टिन्धमः। मुष्टिन्धयो बालः। घटिन्धमः। घटिन्धयः। खारिन्धमः। खारिन्धयः। वातन्धमः। वातन्धयः।

३१। उदि कूले रुजिवहोः।

अनयोः खश् स्यात्। कूलमुद्रुजो गजः। कूलमुद्वहा नदी।

३२। वहाभ्रे लिहः।

वहेऽभ्रे च लिहः खश् स्यात्। वहंलिहो गौः। अभ्रंलिह स्तरुः।

३३। परिमाणे पचः।

खश् स्यात्। प्रस्थम्पचा स्थाली। "पान्लावल्यम्पचान् मुनीन्।" "तापोऽभ्मः प्रस्तम्पचः"।

३४। मितनखे च।

अनयोः पचेः खश् स्यात्। मितम्पचः कृपणः। नखम्पचा यवागूः।

३५। विध्वरुषो स्तुदः।

अनयोस्तुदः खश् स्यात्। विधुन्तुदो राहुः। अरुन्तुदः पीडाकृत्।

३६। असूर्य्यललाटयो दृंशितपोः।

असूर्य्ये दृशो ललाटे तपः खश् स्यात्। असूर्य्यम्पश्या राजदाराः। ललाटन्तपः सूर्य्यः।

## ३७। उग्रम्पश्येरम्मदपाणिन्धमाश्च।

अमी निपात्यन्ते। "उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः।" मेघज्योतिरिरम्मदः। पाणिन्धमाः पाचकाः।

## ३८। प्रियवशे वदः खच्।

अनयोर्वदः खच् स्यात्। प्रियंवदः। वशंवदोऽनुकूलः।

## ३९। द्विषत्परयोस्तापेः।

अनयोस्तापेः खच् स्यात्। द्विषन्तपः। परन्तपः। खचि ह्रस्वः (६।४।९४)। लिङ्गविशिष्टे नेष्टम्। द्विषतीतापः।

## ४०। वाचि यमो व्रते।

व्रतविषये वाचि यमः खच् स्यात्। वाचंयमो मुनिः। व्रते किम्? वाग्यामः।

## ४१। पूःसर्वयो र्दारिसहोः।

पुरि दारेः सर्वे सहेः खच् स्यात्। पुरन्दरः। सर्वंसहः। सर्वंसहा भूमिः। भगे च दारेः। भगन्दरो रोगः।

## ४२। सर्वकूलाभ्रकरीषेषु कषः।

कषेरेषु खच् स्यात्। सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो गिरिः। करीषङ्कषा वात्या।

## ४३। मेघर्त्तिभयेषु कृञः।

एषु कृञः खच् स्यात्। मेघङ्करो वातः। ऋतिंकरः। भयङ्करः।

## ४४। क्षेमप्रियमद्रेऽण् च।

एषु कृञः खच् स्यात्। अण् च। क्षेमङ्करः क्षेमकारो वा। प्रियङ्करः प्रियकारो वा। मद्रंकरो मद्रकारो वा। कथं क्षेमङ्करीति? चिन्त्यम्। (25)

## ४५। आशिते भुवः करणभावयोः।

आङ्पूर्वादश्नातेः कर्त्तरि निष्ठान्ते आशितशब्द उपपदे भवतेः खच् स्यात्।

(25) अत्र नागेशः—"क्षेमंकरीत्यत्र गौरादित्वात् (४।१।४१) ङीष्" इति (शब्देन्दुशेखरे)।

आशितेन तृप्तेन भूयतेऽनेनेत्याशितम्भव ओदनः। भावे। "फलैर्येष्वाशितम्भवम्।"

४६। संज्ञायां भृतृवृजिधारिसहितपिदमः।

एभ्योऽष्टभ्यः कर्मणि सुपि च नाम्नि खच् स्यात्। विश्वम्भरो विष्णुः। रथन्तरं साम। पतिंवरा कन्या। शत्रुञ्जयो राजा। धनञ्जयोऽर्जुनः। वसुन्धरा पृथ्वी। सर्वंसहा भूः। उष्णन्तपः सूर्यः। बलिन्दमः कृष्णः।

४७। गमश्च।

गमेः सुपि खच् स्यात् संज्ञायामसंज्ञायाञ्च। हृदयङ्गममेतत् त्वां ब्रवीमीति भट्टिः। मातापितृपूर्वङ्गमः। प्लवङ्गमः। सुतङ्गमः। भुजङ्गमः।

(क) विहायसो विह च। विहङ्गमः खगः। विहगविहङ्गादयस्तु संज्ञाशब्दास्त्रिकाण्डपाठात् साधवः सुरः।

४८। अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः।

एषु गमे र्डः स्यात्। अन्तगः। अत्यन्तगः। अध्वगः।

(क) अन्येष्वपि दृश्यते। अन्यत्र सुप्युपपदे गमे र्डः स्यात्। सर्वत्रगः। स्वरगारगः। खे गच्छतीति खगः। प्लवेन गच्छतीति प्लवगः।

(ख) उरसो लोपश्च। उरसा गच्छतीति उरगः।

(ग) सुदुरोरधिकरणे। सुगः। दुर्गः।

(घ) निसो देशे। निर्गो देशः। पद्भ्यां न गच्छतीति पन्नगः सर्पः। पृषोदरादिः (६।३।१०९)।

४९। आशिषि हनः।

आशिषि हन्ते र्डः स्यात्। शत्रुं वध्याच्छत्रुहः। दस्युहः। आशिषि किम्? शत्रुघातः। इह दार्वाघाटश्चार्वाघाटो वर्णसंघात इति कर्मण्यणि (३।२।१) पृषोदरादिप्रपञ्च (६।३।१०९) एव।

५०। अपे क्लेशतमसोः।

क्लेशे तमसि चापहन्तेर्डः स्यात्। क्लेशापहः पुत्रः। तमोपहः सूर्यः।

**५१। कुमारशीर्षयोर्णिनिः।**

अनयोर्हन्तेर्णिनिः स्यात्। कुमारघाती। शीर्षघाती। निपातनाच्छिरसः शीर्षभावः।

**५२। लक्षणे जायापत्योष्टक्।**

जायापत्यो र्हन्तेष्टक् स्याल्लक्षणवति कर्त्तरि। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। "पतिघ्नीलक्षणोपेतां मन्येऽहं बालिनः श्रियम्।"

**५३। अमनुष्यकर्त्तृके च।**

अमनुष्यकर्त्तृकाद्धन्तेष्टक् स्यात्। श्लेष्मघ्नं मधु। पित्तघ्नं क्षीरम्।

**५४। शक्तौ हस्तिकपाटयोः।**

अनयो र्हन्तेष्टक् स्यात्। "युधि हस्तिघ्नः"। कपाटघ्न श्चौरः। शक्तौ किम्? हस्तिघातो विषप्रदः।

**५५। पाणिघताड़घौ शिल्पिनि।**

एतौ शिल्पिनि निपात्येते।

(क) उपसंख्यानाच्च राजघ स्त्रीक्षः।

**५६। आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्।**

आढ्यादिषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् स्यात्। अनाढ्यमाढ्यमनेन कुर्वन्त्याढ्यङ्करणो मन्त्रः। सुभगङ्करणं दानम्। स्थूलंकरणं घृतम्। पलितंकरणो जरा। नग्नङ्करणं द्यूतम्। अन्धंकरणो मूत्रनिरोधः। अच्वावित्युत्तरार्थम्। इह तु ख्युना मुक्ते ल्युटा भाव्यम्। आढ्यीकरणो रसविधिः। स्थूलीकरणमौषधम्। तदुक्तं भाष्ये ख्युनि च्विप्रतिषेधानर्थक्यम्। ल्युट्ख्युनोरविशेषादिति।

**५७। कर्त्तरि भुवः खिष्णुच्खुकञौ।**

आढ्यादिषु भवतेः खिष्णुच्खुकञौ स्यातां कर्त्तरि। अनाढ्य आढ्यो भवति "आढ्यम्भविष्णुर्यशसा कुमारः।" आढ्यम्भावुकः। प्रियम्भविष्णुः

प्रियम्भावुकः। अच्वावित्येव। आढ्योभविता। अतः परं सकर्मकेभ्योऽपि सुपि विधिः। न कर्मण्येव।

५८। स्पृशोऽनुदके क्विन्।

स्पृशेः सुपि क्विन् स्यात्। व्योमस्पृक्। मर्मस्पृक्। मन्त्रेण स्पृशति मन्त्रस्पृक्। अश्वस्पृक्। घृतस्पृक्। अग्निस्पृक्। हृदिस्पृक्। क्विन्प्रत्ययस्य कुः (८।२।६२)। अनुदके किम्? उदकस्पर्शो विप्रः।

५९। ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च।

क्विन्प्रत्ययान्ता ऋत्विगादयो निपात्यन्ते। ऋतौ यजतीति ऋत्विक्। धृषेर्द्वित्वञ्च। दधृक् धृष्टः। सृजिदृशोः कर्मणि क्विन्। सृजन्ति तामिति स्रक्। दिशन्ति तामिति दिक्। उत्स्निहेस्तलोपश्च षत्वञ्च। उष्णिक्। अञ्चेः सुपि क्विन्। प्राङ् प्राञ्चौ। न्यङ् न्यञ्चौ। अश्वङ्। सध्र्यङ्। देवद्र्यङ्। प्राक्प्रत्यगादयस्त्वस्तातिप्रत्ययान्ताः। युजेः केवलात्। युङ्। युञ्जौ। क्रुञ्चेश्च। क्रुङ्। क्रुञ्चौ। ञोपधत्वान्नलोपाभावः।

६०। त्यदादिषु दृशोऽनालोचने कञ् च।

त्यदादावुपपदे दृशेः कञ् स्यात्। चकारात् क्विंश्च। त्यच्छब्दश्छान्दसः। स इव दृश्यते तादृशः। तादृक्। तादृशी। यादृशः। यादृक्। यादृशी। कीदृक्। कीदृशः। त्वादृक्। त्वादृशः। भवादृक्। भावादृशः। अनालोचने किम्? तं पश्यतीति तद्दर्शः।

(क) समानान्ययोश्चेति वक्तव्यम्। समानमात्मानं पश्यतीति सदृशः। सदृशी। सदृक्। अन्यादृशः। अन्यादृक्। अन्यादृशी। सदृक्षस्तु च्छान्दसः।

६१। सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्।

सदादेरप्रादौ प्रादौ च सुपि क्विप् स्यात्। गिरौ सीदति गिरिसत्। प्रसत्। प्रसूः। "अङ्गदस्त्वं पुनर्हन्तुम्।" प्रद्विट्। मित्रद्विट्। मित्रध्रुक्। गोधुक्। अश्वयुक्। शब्दवित्। प्रवित्। काष्ठभित्। शत्रुच्छित्। शत्रुजित्।

प्रणीः। सेनानीः। सन्मार्गनीः। "सायन्तनीं तिथिप्रण्यः।" राजृ सम्राट्। स्वाराट्। कुरुराट्। "पतति पतङ्गमृगराजि।"

## ६२। भजो ण्विः।

सुपि प्रादौ च भजो ण्विः स्यात्। अर्द्धभाक्। प्रभाक्।
इह छन्दःपञ्चसूत्री। (26) विट्।

## ६८। अदोऽनन्ने।

अदो विट् स्यात्। शस्यमत्ति शस्यात्। मत्स्यात्। "वाणं प्राणादमक्षिपत्।" अनन्ने किम्? अन्नादः। कथं कणादः? वासरूपविधिना (३।१।९४)।

## ६९। क्रव्ये च।

क्रव्यशब्दे चोपपदेऽदो विट् स्यात्। क्रव्यमत्ति क्रव्यात्। अदोऽनन्न इत्येव (३।२।६८) सिद्धे क्रव्यग्रहणं वासरूपे-(३।१।९४) नाण्निवृत्त्यर्थमिति भाष्यम्।

## ७०। दुहः कब् घश्च।

दुहेः कप् स्याद् घश्चान्तादेशः। कामदुघः कल्पतरुः। अत्र च्छन्दश्चतुःसूत्री। (27)

## ७४। आतो मनिन्क्वनिब्वनिपश्च।

आकारान्तेभ्यो धातुभ्यो विज्मनिन्क्वनिब्वनिपश्च प्रत्ययाः स्युः। शुभंयाः। कीलालपाः। मनिन्। सूत्रामा (28)। अश्वत्थामा। पृषोदरादित्वात् (६।३।१०९)। सुदामा।

---

(26) The author omits here the following five aphorisms :—

६३। छन्दसि सहः। ६४। वहश्च। ६५। कव्यपुरीषपुरीष्येषु ञ्युट्। ६६। हव्येऽनन्तःपादम्। ६७। जनसनखनक्रमगमो विट्।

(27) Of these four vedic Sutras, the last one is applicable, according to many, also to the secular Sanskrit. So it is given in the text as well.

७१। मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्। ७२। अवे यजः। ७३। विजुपे च्छन्दसि। ७४। आतो मनिन्क्वनिब्वनिपश्च।

(28) सुत्रामेति दीर्घपाठे त्वन्येषामपि दृश्यत इति (६।३।१३७) दीर्घः।

७५। अन्येभ्योऽपि दृश्यन्ते।

सुशर्म्मा। देवशर्म्मा। क्वनिप्। धीवा। पीवेति भाषायमपीत्येके। तथाच क्विब्विज्मनिन्क्वनिब्वनिप इति चान्द्रसूत्रम्। नेत्यन्ये। यदा वनिप् तदा धावा। पावा। अवावा। (29)

७६। क्विप् च।

धातोर्यथाविधानं क्विप् स्यात्। उखास्रत्। पर्णध्वत्। प्रयुक्। ऋत्विक्स्रक्दृक्।

७७। स्थः क च।

तिष्ठतेः सुपि कः स्यात् क्विप् च। शंस्थः। शंस्थाः (30)। शमिधातो (३।२।१४) रित्यज्बाधनार्थं वचनम्।

७८। सुप्यजातौ णिनिस्ताच्छील्ये।

सुपि धातोर्णिनिः स्यात्। उष्णभोजी। शीघ्रभोजी। मृदुभाषी। ब्रह्मसेवी। नित्यजागरी। आत्मानं न श्रावयतीत्यश्रावी क्विबादिप्रत्ययः। अजातौ किम्? तृणानां नेता।

(क) साधुकारिणि च। साधुकारिणि कर्त्तरि धातो र्णिनिः स्यात्। अताच्छील्येऽपि। साधुकारी। साधुदायी। तुरङ्गगामी। तुरङ्गयायी।

(ख) ब्रह्मणि वदः। णिनिः स्यात्। ब्रह्मवादी। ब्रह्मवाद इति तु न भवति। अनभिधानात्।

७९। कर्त्तर्युपमाने।

अत्र धातोर्णिनिः स्यात्। हंसइव गच्छति हंसगामी। सिंहनर्दी।

८०। व्रते।

णिनिः स्यात्। स्थण्डिलशायी। वनवर्त्ती।

---

(29) ओणृ अपनयने। अवावा अपनेता चौर इति यावत्।

(30) कथमत्र क्विपि घुमास्थागापाजहातिसां हलीति (६।४।६६) नेत्त्वम्? "स्थानिवदादेशोऽनल्विधाविति (१।१।५६) निषेधात्। प्रत्ययलोप इति (१।१।६२) सूत्रन्तु नियमार्थमिति सिद्धान्तादिति भट्टोजिः। ईत्त्वमककारादाविति वचनाद् भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्त्वाभाव इति कैयटः।

## ८१ । बहुलमाभीक्ष्ण्ये ।

आभीक्ष्ण्यगतौ णिनिः स्यात् । पुनः पुनर्मधु पिबन्ति मधुपायिनो भ्रमराः । कषायपायिणः ।

## ८२ । मनः ।

मन्यते र्णिनिः स्यात् । दर्शनीयमानी भार्य्यायाः । रिपुमानी (31) भ्रातुः ।

## ८३ । आत्ममाने खश्च ।

आत्ममानगतौ मन्यतेः खश् स्यात् । णिनिश्च । शूरमात्मानं मन्यते शूरम्मन्यः शूरमानी (31) । साधुम्मन्यः साधुमानी ।

## ८४ । भूते ।

अधिकारोऽयं प्राग् वर्त्तमानात् (३।२।१२३) ।

## ८५ । करणे यजः ।

करणोपपदाद् यजते र्णिनिः स्यात् । हविर्याजी । अग्निष्टोमयाजी । राजसूययाजी ।

## ८६ । कर्मणि हनः ।

कर्मोपपदाद्धन्ते र्णिनिः स्यात् । पितृव्यघाती । अन्यासन्नघाती । निन्दायामभिधानम् । अन्यत्र चौरं हतवान् ।

## ८७ । ब्रह्मभ्रूणवृत्रेषु क्विप् ।

एषु हनः क्विप् स्यात् । ब्रह्महा । "ब्रह्मघ्नां पापसम्मतः ।" भ्रूणहा । वृत्रहा । अन्येभ्योऽपीति (३।२।१७) क्विपि सिद्धे हन्तेः क्विब्वचनं ब्रह्मादिष्वेवेति नियमार्थमिति भाष्यम् । भूते च नियमात् । कालसामान्यविवक्षायां हिमहा । वीरहा । तमोहा । तमोपहा ।

---

(31) रिपुमानी शूरम्मन्यः शूरमानीत्यत्र हरिनाम वारिनाश इत्यादिवन्न णत्वम् । रषाभ्यामित्यत्र (८।४।१) समानपद इत्यस्याखण्डपद इत्यर्थात् । समासे तु पदद्वयाश्रितत्वान्न समानपदत्वम् । अतएवाग्रग्रामाभ्यां नयते र्णत्वमिति वार्त्तिकारम्भः । तेनाग्रणी ग्रामणी ग्रामणाय इत्यादिसिद्धिः । अन्यथा समानपदत्वेनावापि रषाभ्यामित्येव (८।४।१) णत्वं सिध्यति । किं वार्त्तिकेन ?

## ८८। बहुलञ्छन्दसि।

छन्दः सूत्रमेकम्।

## ८९। सुकर्मपापमन्त्रपुण्येषु कृञः।

एषु कृञः क्विप् स्यात्। सुकृत्। कर्मकृत्। पापकृत्। पुण्यकृत्। मन्त्रकृत्।

## ९०। सोमे सुञः।

क्विप् स्यात्। सोमसुत्।

## ९१। अग्नौ चेः।

क्विप् स्यात्। अग्निचित्।

## ९२। कर्मण्यग्न्याख्यायाम्।

कर्मोपपदाच्चिञः क्विप् स्यादग्न्याख्या चेत्। श्येन इव चीयते चितश्चेष्यते वा श्येनचित्। रथचक्रचित्। आख्याग्रहणं रूढिप्रसिद्ध्यर्थम्।

## ९३। कर्मणीनि विक्रियः।

कर्मणि विक्रीणातेरिनिः स्यात्। पुनः कर्मग्रहणं कुत्सार्थम्। तैलविक्रयी। मांसविक्रयी विप्रः।

## ९४। दृशेः क्वनिप्।

कर्मणि दृशेः क्वनिप् स्यात्। मेरुं दृष्टवान् मेरुदृश्वा। परलोकदृश्वा। बहुदृश्वा। पारदृश्वा।

## ९५। राजनि युधिकृञः।

## ९६। सहे च।

राजनि सहे च युधिकृञ्भ्यां क्वनिप् स्यात्। राजानं योधितवान् राजयुध्वा। "राजकृत्वा पिता न ते।" "सहयुध्वानमन्येन"। सहकृत्वा।

## ९७। सप्तम्यां जने र्डः।

सप्तम्यन्तोपपदाज्जने र्डः स्यात्। उपसरजः। "ये प्रोक्ता कृतजैर्द्विजैः।" मन्दुरजः।

### ९८। पञ्चम्यामजातौ।

पञ्चम्यां जनेर्डः स्यात्। बुद्धेर्जातो बुद्धिजः। कौशल्याजो रामः। अजातौ किम्? अश्वाज् जातः।

### ९९। उपसर्गे च संज्ञायाम्।

संज्ञा चेत् प्रादौ जनेर्डः स्यात्। प्रजा सर्व्वलोकः।

### १००। अनौ कर्मणि।

कर्मोपपदादनुजनेर्डः स्यात्। पुमनुजः। रामानुजः। आत्मानुजः।

### १०१। अन्येष्वपि दृश्यते।

अन्येषूपपदेषु जनेर्डः स्यात्। अजः। द्विजः। क्लीन जातः क्लिञ्जः। सहजः। जातौ च। ब्राह्मणजो धर्मः। प्रादावसंज्ञायाञ्च। अभिजाः क्लेशाः। अधिजः। प्रथमे जातः प्रथमजः। अनावकर्मणि च। अनुजः। अपि-शब्दादन्येभ्योऽपि धातुभ्यो डः। आखा। परिखा। वरानाहन्ति वराहः। ज्वरापहः। कटाहः। दूरापहः। प्रह्वः। कह्वः। गिरिशः। एवञ्च गमेर्डविधावन्येष्वपीति (३।२।४७) यदुक्तं तदस्यैव प्रपञ्चः।

### १०२। निष्ठा।

धातोर्भूते क्तक्तवतू स्याताम्। कृतः कृतवान्।

(क) आदिकर्मणि निष्ठा वक्तव्या। प्रकृतः कटं चैत्रः।

### १०३। सुयजोर्ङ्वनिप्।

सुञो यजेश्च ङ्वनिप् स्यात्। सुत्वा सुत्वानौ। यज्वा यज्वानौ। "यज्वभिः सम्भृतं हव्यम्।"

### १०४। जीर्य्यतेरतृन्।

स्यात्। जरन्। जरन्तौ। जरन्तः।

### १०५। छन्दसि लिट्।

### १०६। लिटः कानज्वा।

## १०७। क्वसुश्च।

लिटः क्वसुर्वेति वयमधिक्रियते। शेषश्छान्दसः। न्यासकारस्तु कानच्क्वसोः कित्करणाद् भाषायामपि प्रयोगमिच्छति (32)। चिञ् चिक्यानः। पॄ निपपुराणः। स्था तस्थिवान्। "पदमातस्थुषा त्वया।" पा पपिवान्। तॄ तितीर्वान्।

## १०८। भाषायां सदवसश्रुवः।

सदादेर्भाषायां लिटः क्वसुर्वा स्यात्। उपसेदिवान्। उपसेदुषा। ऊषिवान्। "ऊषुषां परदारेषु।" शुश्रुवान्। पक्षे लुङ्लङ्लिटो विज्ञेयाः।

## १०९। उपेयिवाननाश्वाननूचानश्च।

एते लिटि निपात्यन्ते। इणः क्वसुरिट् च। उपेयिवान्। अश्नातेर्नञि। अनाश्वान्। "धृतजयधृतेरनाशुषः"। अनुवचेः कर्त्तरि कानच्। "अनूचानः (33) प्रवचने"। सूत्रे लिङ्गवचनमतन्त्रमिति। "उपेयुषामपि दिवम्।" (34) वेत्यनुवृत्त्या पक्षे लुङ्लङ्लिटो विज्ञेयाः।

## ११०। लुङ्।

भूतार्थाद्धातोर्लुङ् स्यात्। अकार्षीत्। अनैषीत्।

## १११। अनद्यतने लङ्।

अद्यतनवर्जिते भूते काले धातो र्लङ् स्यात्। अकरोत्। अपचत्।

(क) परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः।

अरुणद् यवनः साकेतमित्यादिकस्तु प्रपञ्चः। नापूर्वलक्षणम्। परोक्षेऽप्यनद्यतनमात्रविवक्षायां सिद्धेः। दर्शनाविषयेऽपि। तर्ह्यहन् कंसं किल विष्णुरिति स्यादिति चेत्? वाढ़म्। भवतु। का ते हानिः? तथाहि

---

(32) कित्करणस्य प्रयोजनान्तरत्वादेतद् भाष्यविरुद्धं भाषायां सदवसेति (३।२।१०८) सूत्रविरुद्धञ्चेत्याहुः।

(33) इदमूचुरनूचानाः प्रीतिकण्टकितत्वच इति कुमारकाव्ये। उपेयिवाननूचानैर्निन्दितस्वं जनान्तगेति भट्टिकाव्ये च। अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु य इत्यमरः।

(34) उपेत्यप्यतन्त्रम्। अविवक्षित मप्रधान मिति यावत्। तेन ईयिवान्। समीयिवान्। प्रपेदे पूजित स्तस्मिन् दण्डकारण्यमीयिवानिति भट्टिः।

वास्तवेऽपि भूतानद्यतनपरोक्षे विवक्षाभेदेन भट्टिप्रयोगाः—अभून्नृपः । न्यक्षिपच्चाङ्गदम् । सुग्रीवं प्रोचे सद्भावमागत इत्यादयः (35) ।

### ११२ । अभिज्ञावचने लृट् ।

### ११३ । न यदि ।

स्मृतिवाचिन्युपपदेऽनद्यतने भूते लृट् स्यात् । स्मरसि पुण्ड्रेष्वां वत्स्यामः । "सम्भविष्याव एकस्यामभिजानासि मातरि" । यच्छब्दयोगे तु नायं लृट् । लङेव । अभिजानासि यन्नागविन्ध्येऽतिष्ठाम । "अवसाम नगेन्द्रेषु यत्" ।

### ११४ । विभाषा साकाङ्क्षे ।

साकाङ्क्षे प्रयोक्तरि लृड्यं वा स्यात् । तत् स्मरसि यत्रानकसवं गमिष्यामस्तत्र घृतेनौदनं भोक्ष्यामहे । पक्षे अगच्छामाभुञ्ज्महि वा ।

### ११५ । परोक्षे लिट् ।

भूतानद्यतनपरोक्षे लिट् स्यात् । जगाम । चकार । पपाच ।

(क) अत्यन्तापह्नवे च । भूतमात्रे लिट् । कपित्थ्यां नगर्य्यां दृष्टोऽसि मया । नाहं कपित्थीञ्जगाम ।

### ११६ । हशश्वतोर्लङ् च ।

अनयोर्योगे लङ्लिटौ वा स्याताम् । इतिहाकरोत् । शश्वदकरोत् । पक्षे इतिह चकार ।

### ११७ । प्रश्ने चासन्नकाले ।

अत्र लिड्‌र्थे लङ्लिटौ स्याताम् । पृच्छामि त्वामगच्छज्जगाम वा चैत्रः । आसन्नकाले किम् ? "जहार सीतां पौलस्त्यः" । पञ्चवर्षाभ्यन्तरमासन्नकालः ।

---

(35) परोक्षे लिट् (३।२।११५) अनद्यतने लङ् (३।२।१११) भूते (३।२।११०) लुङिति कालवैशिष्ट्ये लिङादीनां व्यवस्था तु विशेषविवक्षयेत्याहुः । अन्यथा कथमुपाददे तस्य सहस्ररश्मि स्त्वष्टा नवं निर्मित मातपत्रमिति मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषातामिति तमभ्यगच्छत् प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च पश्चादिति कालिदासादिप्रयोगेष्वेककालिककर्मणोऽभिधाने तेषां युगपत् प्रयोगः ? अतएवाह कैयटः—"विशेषनिश्चयाभावात् सामान्यस्यैव युक्ता विवक्षा । सत्स्वेव विशेषेषु सामान्यमाश्रित्य लुङादिप्रयोग उपपद्यत एव । विशेषविवक्षायान्तु लङादिप्रयोग इति न कश्चिद् दोष" इति ।

११८। लट् स्मे।

११९। अपरोक्षे च।

स्मयुक्ताद्धातोर्भूतानद्यतनेऽपरोक्षे परोक्षे च लट् स्यात्। अधीते स्म। विहरति स्म।

१२०। ननौ पृष्टप्रतिवचने।

१२१। नन्वोर्विभाषा।

धातोर्ननुयुक्ताद् भूतमात्रे लट् स्यात् प्रश्नादुत्तरश्चेत्। अकार्षीः कटं देवदत्त? ननु करोमि भोः। नन्वोस्तु योगे वा। न करोमि नाकार्षं वा। नु करोमि न्वकार्षं वा।

१२२। पुरि लुङ् चास्मे।

भूतानद्यतने पुरायुक्ताद् धातोर्लुङ् लट् च वा स्यात्। अवात्सुरिह पुरा छात्राः। वसन्तीह पुरा मृगाः। "पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः"। विभाषेत्येव। अवसन् पुरा। ऊषुः पुरा। अस्मे किम्? पुरा वसन्ति स्म। उक्तं भूते।

१२३। वर्त्तमाने लट्।

प्रारब्धापरिसमाप्तिर्वर्त्तमानकालः। तत्र धातो र्लट् स्यात्। भवति। अत्ति। अस्ति। जुहोति। तनुते। रुणद्धि। चोरयति। चिकीर्षति। इहापि प्रारब्धापरिसमाप्तिरस्त्येवेति। तिष्ठन्ति गिरयः। स्रवन्ति नद्यः। जयत्युपेन्द्रः। वर्त्तमानाधिकारः प्राग् भविष्यतः (३।३।३)।

१२४। लटः शतृशानचावप्रथमासमानाधिकरणे।

एतौ लटः स्थाने स्याताम्। विभाषेति वर्त्तते मण्डूकप्लुत्या। सा च व्यवस्थितविभाषेति भाष्यस्थितिः। पचन् विप्रः पचति विप्रः। सन् अस्ति। अधीयानः अधीते। व्यवस्थितविभाषात्वात् क्वचिन्नित्यम्। कौर्वतः। पाचतः। स्वार्थेऽण्। कुर्वद्भक्तिः। पचमानभक्तिः। भज्यमानत्वाद् भक्तिः। पचमानतरः। गच्छद्रूपः। कुर्वद्रूपः। पचत्कल्पः। लसद्विसच्छेदः। घूर्णमानप्रदीपः।

क्वचिन्न । पचतितराम् । जल्पतिरूपम् । अप्रथमासमानाधिकरणे किम् ? अत्र नित्यं तौ स्याताम् । पचन्तं पचमानं पश्य । पचता पचमानेन कृतम् ।

१२५ । सम्बोधने च ।

अत्र नित्यं तौ स्याताम् । हे कुर्वन् । हे कुर्वाण ।

१२६ । लक्षणहेत्वोः क्रियायाः ।

क्रियायाश्चिह्नजनकाद्धातो स्तौ स्याताम् । तिष्ठन् मूत्रयति गौः । शयानो भुङ्क्ते । हेतौ । अर्जयन्नास्ते । सेव्यमानो विलसति । याच्यमानः प्रसीदति । क्रियायाः किम् ? यः कम्पते सोऽश्वत्थः ।

(क) माङ्याक्रोशे । माङि धातोस्तौ स्याताम् । मा जीवन् । मा पचमानः । "मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति" ।

१२७ । तौ सत् ।

तौ शतृशानचौ सदित्युच्येते । लृटः सद्वेत्यादौ कार्य्यम् (३।३।१४) ।

१२८ । पूङ्यजोः शानन् ।

लट इति निवृत्तम् । आभ्यां शानन् स्यात् । सोमं पवमानः । यजमानः ।

१२९ । ताच्छील्यवयोवचनशक्तिषु चानश् ।

एषु गम्येषु धातोश्चानश् स्यात् । वनं पर्य्यटमानः । आत्मानं वर्णयमानः । भूषयमाणः । जीवमानः । लसमानः । स्फुरमाणः । "दीव्यमानं शितान् बाणान् ।" ज्वलमानः । वधूं मण्डयमानः । वयसि । स्त्रियं गच्छमानः । शिखण्डं वहमानः । शक्तौ । हस्तिनं निघ्नानः ।

१३० । इङ्धार्य्योः शत्रकृच्छ्रिणि ।

अकृच्छ्रिणि कर्त्तरि इङ्धारिभ्यां शतृ स्यात् । अधीयन् सकलं शास्त्रम् । "धारयन् मस्करिव्रतम् ।" कृच्छ्रिणि तु कर्त्तरि कष्टेनाधीते ।

१३१ । द्विषोऽमित्रे ।

द्विषः शत्रौ वाच्ये शतृ स्यात् । द्विषन् । द्विषती ।

१३२। सुञो यज्ञसंयोगे।

सुञोऽत्र शतृ स्यात्। सुन्वन्तो यजमाना एव।

१३३। अर्हः प्रशंसायाम्।

अर्हतेः स्तुतौ शतृ स्यात्। अर्हन् पूजां मुनिः। नेह। वधमर्हति।

१३४। आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु।

क्विपं यावत् (३।२।१७७) तच्छीलादौ प्रत्यया वाच्याः कर्त्तरि।

१३५। तृन्।

धातोस्तृन् स्यात्। शीले। विरुद्धं वदिता। आचारे। आद्धं कर्त्ता। आसनं दाता। वधूं मुण्डयितारः (36)। साधौ। हर्त्ता मनः। गन्ता खेटम्। होतृपोत्रादय स्तृणादौ।

१३६। अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतो(त्पदो)न्मद-रुच्यपत्रपवृतुवृधुसहचर इष्णुच्।

एभ्यो द्वादशभ्यो धातुभ्य इष्णुच् स्यात्। कन्यामलंकरिष्णुः। निराकरिष्णुः शत्रून्। एवं यावच्चरिष्णुः। भुवश्चेति (३।२।१३८) चकाराद् भ्राजिष्णुरित्येके।

१३७। णेश्छन्दसि।

छान्दसम्।

१३८। भुवश्च।

इष्णुच् स्यात्। भविष्णुः।

१३९। ग्लाजिस्थश्च क्स्नुः।

एभ्यः क्स्नुः स्यात्। ग्लास्नुः। जिष्णुः। चकाराद् भूष्णुः। तिष्ठतेरीत्वं (१।४।६६) नेष्यते। स्थास्नुः।

---

(36) मण्डयितार इति क्वचित् पाठान्तरम्।

१४० । त्रसिगृधिधृषिक्षिपेः क्नुः ।

एभ्यः क्नुः स्यात् । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्णुः । (37)

१४१ । शमित्यष्टाभ्यो घिनुण् ।

शमादिभ्यो (38) घिनुण् स्यात् । शमी ।

"भ्रमी कदम्बसम्भिन्नः पवनः शमिनामपि ।"

क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥"

तमी । दमी । श्रमी । भ्रमी । मादी । अकर्मकेभ्योऽभिधानान्नेह । वनं भ्रमिता ।

१४२ । संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीड़विविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ।

एभ्यः सप्तविंशतेर्घिनुण् स्यात् । सम्पर्की । अनुरोधी । आयामी । आयासी । परिसारी । "संसर्गी सरितां नृपः ।" परिदेवी । संज्वारी । "परिक्षेप्यश्मसान्मृतुः ।" परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीड़ी । विवेकी । त्यागी । रागी । निपातनादनुनासिकलोपः । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती । चकारादभ्यायी ।

१४३ । वौ कषलसकत्थस्रम्भः ।

विपूर्वात् कषादेर्घिनुण् स्यात् । कष हिंसायाम् । विकाषी । विलासी । विकत्थी । विस्रम्भी ।

१४४ । अपे च लषः ।

अपे वौ च लषे घिनुण् स्यात् । अपलाषी । विलाषी । लष कान्तौ ।

---

(37) क्षिप्णुशब्दस्यापि णत्वे मतद्वैधमपगामिनीति शब्दे यथा । क्षुभ्नादिषु (८।४।३९) तृप्नोतिशब्दग्रहणात् पकारपरस्य न णत्वमित्येके । अन्ये तु रुग्णादिशब्दवद् रषाभ्यां समानपदे (८।४।१) णत्वमबाधमित्याहुः । एतच्च पूर्वं न लोकेति (२।३।६९) सूत्रोदाहरणप्रसङ्गेन उक्तम् ।

(38) शमिस्तमिर्दमिश्चैव श्रमिर्भ्रमिः क्षमिः क्लमिः । इत्येते मदिना सार्द्धमष्टौ शमादयः स्मृताः ॥ १ ॥

१४५। प्रे लपसृद्रुमथवदवसः।

प्रपूर्वाल्लपादिषट्काद् विनुण् स्यात्। प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी।

१४६। निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्।

निन्दादिदशकाद् वुञ् स्यात्। निन्दकः। हिंसकः। क्लेशकः। खादकः। विनाशकः। परिक्षेपकः। परिराटकः। परिवादकः। व्याभाषकः। असूयकः।

१४७। देविक्रुशोश्चोपसर्गे।

आभ्यां वुञ् स्यात्। आदेवकः। परिक्रोशकः। प्रादौ किम्? देवयिता। क्रोष्टा।

१४८। चलनशब्दार्थादकर्मकाद् युच्।

अकर्मकेभ्यश्चलनशब्दार्थेभ्यो युच् स्यात्। चलनः। चेष्टनः। वेपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात् किम्? पठिता स्तोत्रम्।

१४९। अनुदात्तेतश्च हलादेः।

युच् स्यात्। वर्त्तनः। वर्द्धनः। द्योतनः। जुगुप्सनः। मीमांसनः। अनुदात्तेतः किम्? लन्। भविता। हलादेः किम्। एधिता। अकर्मकादित्येव। वसिता वस्त्रम्। कथ "मुक्तकण्ठावर्द्धनैः शुभ्र"मिति (39)? नायं षष्ठीसमासः। किं तर्हि? तृतीयासमासः।

१५०। जुचंक्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः।

ज्वादिदशकाद् युच् स्यात्। जवनः। चंक्रमणः। दंद्रमणः। सरणः। गर्धनः। ज्वलनः। शोचनः। लषणः। पतनः। पदनः।

१५१। क्रुधमण्डार्थेभ्यश्च।

कोपभूषार्थेभ्यो युच् स्यात्। क्रोधनः। कोपनः। रोषणः। मण्डनः। भूषणः। प्रसाधनम्।

---

(39) अथोपशरदेऽपश्यत् क्रौञ्चानां चेष्टनैः कुलैः। उत्कण्ठावर्द्धनैः शुभ्रं रवणैरम्बरं तत मिति भट्टिपद्यमिदम्।

१५२ । न यः ।

यकारान्ताद् युज् न स्यात् । आप्यायिता । स्फायिता । ध्मायिता । क्नूयिता ।

१५३ । सूददीपदीक्षश्च ।

एभ्यो नास्ति युच् । सूदिता । दीपिता । दीक्षिता । मधुसूदनादयो नन्द्यादित्वात् (३।१।१३४) ।

१५४ । लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ।

लषादिदशकादुकञ् स्यात् । अभिलाषुकः । पातुकः । उपपादुकः । स्थायुकः । भावुकः । वर्षुकः । घातुकः । कामुकः । गामुकः । शारुकः ।

१५५ । जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।

एभ्यः षाकन् स्यात् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । षित्वात् ङीष् । जल्पाकी । वराकी ।

१५६ । प्रजोरिनिः ।

सौत्रात् प्रजोरिनिः स्यात् । प्रजवी ।

१५७ । जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ।

एभ्य इनिः स्यात् । जयी । आदरी । क्षयी । विश्रयी । अत्ययी । वमी । "पापमव्यथिनं कपिम् ।" अभ्यमी । भुवनपरिभवी । प्रसवी ।

१५८ । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।

स्पृह्यादिसप्तकादालुच् स्यात् । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तत्पूर्वस्य द्राति स्तन्द्रा निपात्यते । तन्द्रालुः । "श्रद्धालुर्मधुपानस्य" ।

(क) आलुचि शीङ्ग्रहणं कर्त्तव्यम् । शयालुः । कथं शीतालुः ? शीतोष्णतृप्रेभ्यस्तन्न सहत इति (५।२।१२२, वा) तद्धितो भविष्यति ।

१५९ । दाधेट्सिशदसदो रुः ।

दादिभ्यो रुः स्यात् । दारुर्दानशीलः । धारुः । सेरुः । शद्रुः । सद्रुः ।

१६० । सृघस्यदः क्मरच् ।

एभ्यः क्मरच् स्यात् । सृमरः । घस्मरः । अद्मरः ।

१६१ । भञ्जभासमिदो घुरच् ।

एभ्यो घुरच् स्यात् । भञ्जेः कर्मकर्त्तर्य्यभिधानम् । स्वयं भङ्गुरं काष्ठम् । कथमनङ्गं मानभङ्गुर मिति भामहः (40) ? तर्हि चिन्त्यम् । भासुरम् । मेदुरः पशुः ।

१६२ । विदिभिदिच्छिदेः कुरच् ।

एभ्यः कुरच् स्यात् । विदुरो ज्ञाता । भिदिच्छिद्योः कर्मकर्त्तर्य्यभिधानमित्याहुः । (41) स्वयं भिदुरं काष्ठम् । छिदुरा रज्जुः । कथं गुरुमत्सरच्छिदुरयेति माघः ? करीन्द्रदर्पच्छिदुरं मृगेन्द्रमिति जाम्बवतीविजयकाव्ये पाणिनिः (42) ? संसारबन्धच्छिदुरान् द्विजातीनिति व्योषः ? तदेतच् चिन्त्यम् ।

१६३ । इण्नश्जिसर्त्तिभ्यः क्वरप् ।

एभ्यः क्वरप् स्यात् । इत्वरी । नश्वरी । जित्वरी । विसृत्वरी । अकर्मकाद्विधिः ।

---

(40) "मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् । स प्रियासङ्गमोत्कण्ठां सा सद्यो मनसः शुच"-मिति भामहपद्यम् ॥ १ ॥

(41) भञ्जेर्घुरच् भिदिच्छिदिभ्यां कुरच्च कर्मकर्त्तरीति जयादित्यः । एतच्च भाष्यानुक्तम् । एवं च माघे प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गना इति शुद्धे कर्त्तरि प्रयोगः । अपिच करीन्द्रदर्पच्छिदुरं मृगेन्द्रमिति रसज्ञाया इत्थं विदुरश्मिधासभमकरानित्यादिः कर्त्तरि प्रयोगः । वस्तुतस्तु कर्त्तरि कृदिति (३।४।६७) कर्त्तर्युक्तः प्रत्ययः यथासम्भवं कर्मकर्त्तर्य्यपि भवति । तस्यापि कर्तृत्वात् । एवञ्च स मुग्धकान्तास्तनसङ्गभङ्गुरैरिति माघप्रयोगः । संलक्ष्यते न च्छिदुरोऽपि हार इति रघुकाव्ये ।

(42) In quoting from the जाम्बवतीविजयकाव्य, पुरुषोत्तम appears to have set much value on the tradition that it had पाणिनि as its author. This is evident from this and the quotation given in 2. 4. 74 by him. The writer of the जाम्बवतीविजयकाव्य was indeed too clever and lucky. He had easily succeeded in palming his book off under the name of the sage. Hence some undue regard was paid to it by a few writers of the classical period.

**१६४ । गत्वरश्च ।**

निपात्यते ।

**१६५ । जागरूकः ।**

जागर्त्तेरूकः स्यात् । जागरूकः ।

**१६६ । यजजपदशां यङः ।**

एभ्यो यङन्तेभ्य उकः स्यात् । यायजूकः । जञ्जपूकः । दन्दशूकः । वावदूकस्तूणादौ ।

**१६७ । नमिकम्पिस्म्यजसकमहिंसदीपो रः ।**

एभ्यः सप्तभ्यो रः स्यात् । नम्रः । कम्प्रः । स्मेरः । जसु प्रयत्ने । न जस्यतीत्यजस्रा प्रवृत्तिः । यस्त्वजस्रं भुङ्क्ते इति क्रियाविशेषणं सोऽव्ययमन्य एव नित्यपर्य्यायः । कर्त्तृवाचिनोऽस्य क्रियाविशेषणत्वानुपपत्तेः (43)। कम्रः । हिंस्रः । दीप्रः ।

**१६८ । सनाशंसभिक्ष उः ।**

सन्नन्तादुः स्यात् । आशंसेर्भिक्षेश्च । चिकीर्षुः । पिपठिषुः । "आत्मनः क्षेममाशंसुः" । भिक्षुः ।

**१६९ । विन्दुरिच्छुः ।**

इयं निपात्यते । विन्दुर्ज्ञाता । इच्छुः प्रसादम् । कथमल्पार्थे विन्दुः ? विदि अवयवे । औणादिकउः ।

**१७० । क्याच्छन्दसि ।**

**१७१ । आदृगमहनजनः किकिनौ लिट् च ।**

(क) भाषायां धाञ्कृसृजनिगमिनमिभ्यः । एभ्यो भाषायां किकिनौ स्याताम् । लिट्कार्य्यञ्च । दधिः । चक्रिः । सस्रिः । जज्ञिः । जग्मिः । नेमिः ।

(ख) सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वाच्यौ । सहादि-

---

(43) जयादित्यस्त्वजस्रं जुहोतीत्युदाहृत्याजस्रमिति जसु मोक्षणे नञ्पूर्वो रप्रत्ययान्तः क्रियासातत्ये वर्त्तत इत्याह । हरदत्तमाधवभट्टोजिप्रभृतयश्चैवम् ।

यङन्तात् किकिनौ स्याताम्। त्रैलोक्यभारं सासहिः। वावहिः। चाचलिः। पापतिः। नीग् (७।४।८४) नेष्टः।

## १७२। स्वपितृषोर्नजिङ्।

(क) धृषेश्च।

एभ्यो नजिङ् स्यात्। स्वप्नक्। स्वप्नजौ। तृष्णक्। तृष्णजौ। धृष्णक्। धृष्णजौ।

## १७३। शॄवन्द्योरारुः।

आभ्यामारुः स्यात्। शरारुः। वन्दारुः।

## १७४। भियः क्रुक्लुकनौ।

(क) क्रुकन्नपि।

भियः क्रुक्रुकन्लुकनः स्युः। भीरुः। भीलुकः। भीरुकः।

## १७५। स्थेशभासपिसकसो वरच्।

एभ्यः पञ्चभ्यो वरच् स्यात्। स्थावरः। ईश्वरः। भास्वरः। पिसृ गतौ। पेस्वरः। कस गतौ। विकस्वरः। कथमीश्वरी? औणादिको वरट्। (44)

## १७६। यश्च यङः।

यङन्ताद् याते र्वरच् स्यात्। यायावरोऽनिलयः।

## १७७। भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्।

भ्राजाद्यष्टकात् तच्छीलादौ क्विप् स्यात्। विभ्राजत इति विभ्राट्। विभ्राजौ। भाः भासौ। धूः धुरौ। विद्युत् विद्युतौ। ऊर्क् ऊर्जौ। पूः पुरौ। जवते र्दीर्घश्च। जूः जुवौ। ग्रावस्तुत्। ग्रावस्तुतौ। पचेः पक्।

## १७८। अन्येभ्योऽपि दृश्यते।

क्विप् स्यात्। श्लोकवित्। भित्। शोकच्छित्। दृशिग्रहणाद् दीर्घा-

---

(44) प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्येति देवीमाहात्म्ये। ईश्वरीति औणादिको वरड़ित्येके। अतष्टित्तान् ङीप्। पुंयोगादाख्यायां (४।१।४८) मिति ङीष् इत्यन्ये। अन्येभ्योऽपि दृश्यन्त इति (३।४।७५) क्वनिप्। ततो वनो र चेति (४।१।७) ङीब्रौ इत्यपरे। वरचि तु टाप्। तथाहि विन्यस्तमङ्गलमहौषधिरीश्वराया इति भारविः।

दिक्च । वाक् । शब्दप्राट् । परौ व्रजेः षश्च पदान्ते (उण, २।२१७) । परिव्राट् । आयतं स्तौति आयतस्तूः । कटप्रूः । श्रिञ् श्रीः । श्रियौ । ध्यायतेर्दधातेर्वा धीरिति भाष्यम् । गतं ताच्छीलिकैः ।

## १७९ । भुवः संज्ञान्तरयोः ।

संज्ञायां भुवः क्विप् स्यात् । पुनर्भूः । स्वयम्भूः ब्रह्मा । आत्मभूः । अङ्गभूः । अन्तरे च । प्रतिभूरन्तरस्थः ।

## १८० । विप्रसंभ्यो ड्वसंज्ञायाम् ।

भुवो विप्रसम्पूर्वाड्डुः स्यादसंज्ञायाम् । विभुः । प्रभुः । सम्भुः । संज्ञायां तु विभूर्नाम कश्चित् सम्भविता ।

(क) मितद्र्वादिभ्य उपसंख्यानम् । मितद्रुः । शतद्रुः । कृपां लातीति कृपालुः । लज्जालुः । शं प्राप्नोतीति शम्भुः शिवः ।

## १८१ । धः कर्मनि ष्ट्रन् ।

धेटो धाञो वा ष्ट्रन् स्यात् । धयति दधाति वा तामिति धात्री । आमलक्याः स्तनदायिन्या वा संज्ञा (45) ।

## १८२ । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।

एभ्यस्त्रयोदशभ्यः करणे ष्ट्रन् स्यात् । दान्ति तेन दात्रम् । नेत्रम् । "सुमन्त्रनेत्रेण रथेन शोचन्" । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री । सूत्रे दशेति निरनुनासिकनिपातनान्नुमटि दशनम् (46) । ष्ट्रनि तु दंष्ट्रेति । अजादिपाठाट् टाबित्युक्तम् ।

## १८३ । हलसूकरयोः पुवः ।

पुवः करणे ष्ट्रन् स्यात् । पोत्रम् । हलस्य सूकरस्य वा मुखम् ।

---

(45) धात्री जनन्यामलकीवसुमत्युपमातृष्विति विश्वः । (46) करण इत्येव । भावे ल्युटि तु दंशनम् ।

### १८४ । अर्त्तिलूधूसूखनसहचर इत्रः ।

एभ्य इत्रः स्यात् करणे । अरित्रं नौकावाहनम् । रिपुलवित्रो बाणः । धवित्रं व्यजनम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

### १८५ । पुवः संज्ञायाम् ।

पुव इत्रः स्यात् संज्ञा चेत् । पवित्रं कुशम् । (47)

### १८६ । कर्त्तरि चर्षिदेवतयोः ।

कर्त्तरि करणे च पुव इत्रः स्यात् । ऋषिः पवित्रम् (48) । अग्निः पवित्रम् ।

### १८७ । ञीतः क्तः ।

ञीतो धातोर्वर्त्तमाने क्तः स्यात् । मिन्नः । क्ष्विण्णः ।

### १८८ । मतिबुद्धिपूजार्थेभ्यश्च ।

इच्छाज्ञानपूजार्थेभ्यो वर्त्तमाने क्तः स्यात् । राज्ञां मतः । राजभिर्मन्यत इत्यर्थः । वासरूपेण (३।१।९४) लडपि भवति । क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीत्यत्र (प, ६९) ल्युट्साहचर्य्यान् नपुंसकक्ते वासरूपविध्यभावः । एवं राज्ञामिष्टः । राज्ञां बुद्धः । राज्ञां ज्ञातः । "न ज्ञातं तात यत्नस्य पौर्वापर्य्यममुष्य ते ।" एवं सतां विदितोऽवगतः । इह वर्त्तमानक्तेन भूतक्तस्य बाधनमिष्यते । तेन त्वया ज्ञातो मयार्चित इत्याद्यचिकित्स्यमिति भागवृत्तिः । (49)

---

(47) अस्त्री कुशं कुशो दर्भः पवित्रमथ कत्तृणमित्यमरः । कात्यायनश्च—"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ इति ।

(48) ऋषिर्वेदमन्त्रः पावमान्यादिः । तथाचोक्तमृषिदर्शनादिति ।

(49) तेनेत्यधिकारे (५।२।११२) उपज्ञात इति (५।२।११५) सूत्रितत्वाज् ज्ञापकान् ज्ञानार्थेभ्यो भूतेऽपि क्तः । नतु इच्छापूजार्थेभ्यः । अतः पूजितो यः सुरासुरैरित्यादयोऽपशब्दा इति भर्त्तृहरिहरदत्तादयः । ज्ञापकं सामान्यापेक्षमिति त्वनुन्यासकारमैत्रेयादयः । एषां मते तु संवत्सरं कथं तात वसामोऽविदिताः परैरिति भारते विराटपर्वणि, जनैरविदितविभवो भवानीपतिरिति भारवेः, नराविदितवैभवद्व्यलीकैरिति माघस्य, कलहं स राममहितः कृतवानिति भट्टेः, राज्ञा हिमवतः सारो विज्ञातोऽस्य हिमाद्रिणेति कालिदासस्य, अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवादिति दण्डिनश्च प्रयोगे न काप्यनुपपत्तिः ।

पूजार्थात् सतामर्चितः । सुराणां पूजितः । सताम् पूजितः । चकारस्यानुक्त-समुच्चयार्थत्वाच्छीलितरक्षितक्षान्तव्याहृतदयितस्निग्धतुष्टचान्तरुष्टादिसिद्धिः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
तृतीयाध्यायस्य द्वितीयः पादः ॥३।२॥
समाप्तश्च कर्मणिपादः ॥

अथ

# भाषावृत्तिः ।

---

## तृतीयोऽध्यायः । तृतीयः पादः ।

### १ । उणादयो बहुलम् ।

वर्त्तमाने संज्ञायामुणादयः प्रत्यया बहुलं साधवः स्युः । उण् । कारुः । वायुः । एनुः । करेणुः । आलञ् । पातालम् । अलच् । मङ्गलम् ।

### २ । भूतेऽपि दृश्यन्ते ।

भूतार्थेऽप्युणादयः साधवः स्युः । वृत्तं वर्त्म । भसितं भस्म । उक्तो वर्त्तमानः ।

### ३ । भविष्यति गम्यादयः ।

गम्यादयः षड् भविष्यदर्थे साधवः स्युः । ग्रामं गमी । आगामी । ग्रामगामी । प्रतियोगी । प्रस्थायी । प्रतिबोधी । भावी । भविष्यदधिकारः प्राग् घञः (३।३।१६) ।

### ४ । यावत्पुरानिपातयो र्लट् ।

यावत्पुरानिपातयो र्योगे भविष्यति लट् स्यात् । यावद् भुङ्क्ते । "न गच्छामि पुरा लङ्काम्" । निपातयोः किम् ? यावद् भोक्ष्यसे तावद् दास्यति ।

### ५ । विभाषा कदाकर्ह्योः ।

भविष्यदर्थे कदाकर्हियोगे लड् वा स्यात् । "कदा भवति मे प्रीतिः" ? कर्हि भवति मे धनम् ? पक्षे लुड्लटौ ।

### ६ । किंवृत्ते लिप्सायाम् ।

किंवृत्तयोगे लिप्सायां लड् वा स्यात् । कस्ते भिक्षां ददाति ? कस्त्वां

भोजयति ? वृत्तग्रहणं डतरडतमार्थम् । कतरो भिक्षां ददाति ? कतमो भोजयति । पक्षे लुड्लृटौ ।

## ७ । लिप्स्यमानसिद्धौ च ।

अभीष्टादर्थस्य सिद्धौ गम्यमानायां लङ् वा स्यात् । यो दध्योदनं ददाति स स्वर्गं गच्छति । पक्षे लुड्लृटौ ।

## ८ । लोडर्थलक्षणे च ।

प्रैषादिलक्षणार्थाद् धातो र्लङ् वा स्यात् । उपाध्यायश्चेदागच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दोऽधीष्व ।

## ९ । लिङ् चोर्द्ध्वमौहूर्त्तिके ।

ऊर्द्ध्वमौहूर्त्तिके भविष्यति लोडर्थलक्षणार्थाद् धातोर्लिङ् लट् च स्याद्वा । मुहूर्त्तस्योपरि गुरुश्चेदागच्छति आगच्छेदागमिष्यति आगन्ता वा अथ त्वं छन्दोऽधीष्व ।

## १० । तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम् ।

धातो स्तुमुण्ण्वुलौ स्यातां क्रियार्था चेत् क्रियोपपदं स्यात् । ओदनं भोक्तुं व्रजति । ओदनं भोजको व्रजति । भोजनार्था व्रजतिक्रियात्रोपपदम् (50) ।

---

(50) अत्र भाषावृत्त्यर्थविवृतौ सृष्टिधरः—"समानकर्त्तृकेषु तुमुन्निष्यते । अयं तु भिन्नकर्त्तृकेऽपि स्यादिति मस्करिणो वस्तुं कुटीं घटयति । गृही सुतेन भोक्तुं मांसं क्रीणातीति ।"—whether a verb formed with तुमुन् must have the same subject as agrees with the principal verb of the sentence, is a disputed point. There are altogether five Rules in the अष्टाध्यायी for the provision of तुमुन्, viz :—(1) तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम् (3.3.10) (2) समानकर्त्तृकेषु तुमुन् (3.3.158) (3) कालसमयवेलासु तुमुन् (3.3.167) (4) शकधृषज्ञाग्लाघटर—भलभक्रमसहार्हास्त्यर्थेषु तुमुन् (3.4.65) (5) पर्याप्तिवचनेष्वलमर्थेषु (3.4.66). Of these the last three do not obviously require the condition of समानकर्त्तृकता । The second rule is under the restriction of इच्छार्थेषु and it means इच्छार्थेषु धातुषु समानकर्त्तृकेषूपपदेषु धातो स्तुमुन् स्यात् । यथा इच्छति वाञ्छति काङ्क्षति वष्टि कामयते अभिलषति वा भोक्तुम् । समानकर्त्तृकेषु किम् ? देवदत्तं भुञ्जानमिच्छति यज्ञदत्तः । So some assert that in the case where the main root does not imply इच्छा, तुमुन् is admissible with its subject being other than that of the main verb. Hence ब्रह्मकर्म कर्त्तुं भवन्तमहं वृणे is the statement

## ११। भाववचनाश्च।

भावार्थाश्च घञादयस्तुमुन्विषये स्युः। लाभाय स्थितः। भूतये धावति।

## १२। अण् कर्मणि च।

तुमुन्नर्थे कर्म्मोपपदादण् स्यात्। शतुलावो व्रजति। गोदायो व्रजति।

## १३। लृट् शेषे च।

तुमुन्नर्थे लृट् स्यात्। नटं द्रक्ष्यामीति व्रजति। शेषे भविष्यत्काले च। करिष्यति। पठिष्यति।

## १४। लृटः सद्वा।

लृटः स्थाने शतृशानचौ वा स्याताम्। करिष्यति करिष्यते। करिष्यन् करिष्यमाणः।

## १५। अनद्यतने लुट्।

भविष्यदनद्यतने लुट् स्यात्। श्वः कर्त्ता। परश्वो भोक्ता। इह त्वियं

---

given for अभिलाप in a वरण ceremony by अनिरुद्धभट्ट। कालिदास has रैवां यदि प्रेक्षितु मस्ति कामः and यद्यर्थिता निर्ह्रतवाच्यशल्यान् प्राणान् मया धारयितुं चिरं वः। भट्टि gives श्रुत्वा विस्फूर्ज्जथुप्रख्यं निनादं परिदेविनी। मत्वा कष्टश्रितं रामं सौमित्रिं गन्तु मैजिहत्। In the मुद्राराक्षस is न कोऽपि निर्गन्तुं प्रवेष्टुं वानुमोद्यते (act v). सुषेणकविराज in his commentary on the कातन्त्र grammar says :—कर्त्तुं वा कश्चिदन्तर्हयति वसुमती दक्षिणं सप्ततन्तुमित्यादि प्रयोगात् कर्तृभेदेऽपि तुमो वाच्यत्वमिति निर्णीयते। On the other hand रघुनन्दन ( the स्मार्त्तभट्टाचार्य्य of Bengal ) considered the समानकर्त्तृकत्व condition of तुमुन् as absolutely binding and changed the form of the statement as quoted above, sanctioned by अनिरुद्धभट्ट, to ब्रह्मकर्मकरणाय भवन्तमहं वृणे। भट्टोजि, his grandson हरिदीक्षित and नागेश the pupil of हरिदीक्षित, all decide also for the समानकर्त्तृकत्व system of तुमुन्. Says भट्टोजि "तुमुण्वुलाविति ( 3. 3. 10 ) विधिरपि भिन्नकर्त्तृकेषु नेष्यते। पुत्रं भोजयितुमागच्छतीति वक्तव्ये पुत्रेण भोक्तुमित्यप्रयोगात्। सेयं व्यवस्था शब्दशक्तिस्वाभाव्याद् बहुलग्रहणाद्वा सिद्धा" (प्रौढ़मनोरमा). If so, why then समानकर्त्तृकेषु is applied only in 3. 3. 158 or given there at all ? हरि and नागेश explain it thus "समानकर्त्तृकेष्विति स्पष्टार्थमेवेति भावः।" So those who accept the समानकर्त्तृकत्व state of तुमुन् as binding, supply some suitable words to account for such applications as ब्रह्मकर्म कर्त्तुं भवन्तमहं वृणे, e. g. ब्रह्मकर्म कर्त्तुं स्थितं भवन्तमिति।

नु कदा गन्ता यैवं पादौ निदधातीत्यद्यतनेऽपि कालविप्रकर्षादुपमानेनानद्यत-नत्वमारोप्य लुङिति भाष्यस्थितिः । उक्तं भविष्यति ।

## १६ । पदरुजविशस्पृशो घञ् ।

एभ्यो घञ् स्यात् । पद्यते गच्छतीति पादः । रोगः । वेशः । स्पृशेरुप-तापेऽभिधानम् । स्पर्शः । अन्यत्र तु पचाद्यचि कम्बलस्पर्शः । स्वरे भेदः ।

## १७ । सृ स्थिरे ।

सर्त्तेः स्थिरे कर्त्तरि घञ् स्यात् । सारो मज्जा । चन्दनसारः । कार्य्यसारः ।

(क) व्याधिमत्स्यबलेष्विति वक्तव्यम् । अतीसारो व्याधिभेदः । विसारो मत्स्यः । सारो बलम् ।

## १८ । भावे ।

भावे घञ् स्यात् । पाकः । रोगः ।

## १९ । अकर्त्तरि च कारके संज्ञायाम् ।

कर्मादावकर्त्तरि कारके घञ् स्यात् संज्ञायाम् । प्रास्यत इति प्रासः । प्रसेवः । आहरन्त्यस्मादित्याहारः । संज्ञाग्रहणं प्रायिकम् । तेनेहापि स्यात् । दायो दत्तः । लाभो लब्धः । अकर्त्तरि किम् ? मिषतीति मेषः । पचा-द्यच् । स्वरे भेदः । इह दारजारौ कर्त्तरीति न वक्तव्यम् । दीर्य्यन्ते तै दौराः । जीर्य्यते तेन जार इति करणे सिद्धिरिति स्मृतिः । अतःपरं भावेऽकर्त्तरि च कारके विधानम् । तत्र तावदेरज् (३।३।५६) ऋदोरपौ (३।३।५७) बाधकं घञमाह । तद्यथा ।

## २० । परिमाणाख्यायां सर्वेभ्यः ।

धातुमात्राद् घञ् स्यात् परिमाणाख्या चेत् । एकस्तण्डुलनिश्चायः । द्वौ शूर्पनिष्पावौ । कथं तिङोऽष्टादश प्रत्ययाः ? पञ्चोपद्रवाः ? "नैकोऽपि तव निश्चयः" इति ? पदसंस्कारपक्षे भविष्यति ।

## २१। इङश्च ।

इङो घञ् स्यात्। अध्यायः। उपाध्यायः।

(क) स्त्रियां वा ङीष्वचनम्। उपाध्यायी उपाध्याया वा।

(ख) शृणाते र्वायुवर्णनिवृत्तेषु घञ् वक्तव्यः। शारो वातः। शारः शवलः। नीशारः प्रावरणम्।

## २२। उपसर्गे रुवः।

प्रादौ रौतेर्घञ् स्यात्। उपरावः। संरावः। विरावः।

## २३। समि युद्रुदुवः।

एभ्यः समि घञ् स्यात्। संयावः। संद्रावः। संदावः। समोऽन्यत्र यवः। प्रयवः। उपयवः। निद्रवः।

## २४। श्रिणीभुवोऽनुपसर्गे ।

एभ्योऽप्रादौ घञ् स्यात्। श्रायः। नयनं नायः। भावः। कथं प्रभावः? पश्चात् समासेन।

## २५। वौ क्षुश्रुवः।

क्षुश्रुभ्यां वौ घञ् स्यात्। विक्षावः। विश्रावः।

## २६। अवोदोर्नियः।

अवे उदि च नियो घञ् स्यात्। अवनायः। उन्नायः। कथमवनयोन्नयौ? वाहुल्यात्। रावप्रभावगर्भस्रावववत्।

## २७। प्रे द्रुस्तुस्रुवः।

एभ्यः प्रे घञ् स्यात्। प्रद्रावः। प्रस्तावः। प्रस्रावः।

## २८। निरभ्योः पूल्वोः।

निष्पूभिलूभ्यां घञ् स्यात्। निष्पावः। अभिलावः।

## २९। उन्न्योर्ग्रः।

उन्न्योर्गृणाते र्घञ् स्यात्। उद्गारः। निगारः।

### ३० । कॄ धान्ये ।

धान्यविषये उन्नयोः किरते घञ् स्यात् । उत्कारो धान्यानाम् । निकारः । धान्ये किम् ? पुष्पनिकरः ।

### ३१ । यज्ञे समि स्तुवः ।

यज्ञविषये संस्तौति घञ् स्यात् । संस्तावश्छन्दोगानाम् । यज्ञविषये किम् ? "गुणाः प्रियत्वेऽधिकृता न संस्तवः" ।

### ३२ । प्रे स्त्रोऽयज्ञे ।

यज्ञादन्यत्र प्रस्तृणाति घञ् स्यात् । पुष्पप्रस्तारः । अयज्ञे किम् ? बर्हिष्-प्रस्तरः । व्रीहिप्रस्तरः ।

### ३३ । प्रथने वावशब्दे ।

वौ स्तृणातेः प्रथने घञ् स्यात् । प्रथनं विस्तीर्णता । वारिविस्तारः । अशब्दे किम् ? वाग्विस्तरः ।

### ३४ । छन्दोनाम्नि च ।

वृत्तनाम्नि विस्तृणाति घञ् स्यात् । विष्टारपङ्क्तिर्नामच्छन्दः । छन्दो-नाम्नि चेति (८।३।८४) षत्वम् ।

### ३५ । उदि ग्रहः ।

उदि ग्रहे घञ् स्यात् । उद्ग्राहः ।

### ३६ । समि मुष्टौ ।

मुष्टौ संग्रहे घञ् स्यात् । अहो मल्लस्य संग्राहः । मुष्टेर्दार्ढ्यमित्यर्थः । अन्यत्र संग्रहः ।

### ३७ । परिन्योर्नीणो र्द्यूताभ्रेषयोः ।

द्यूते परिनीओऽभ्रेषे (51) नीणो घञ् स्यात् । "परिणायस्तु शाराणां न्यायः स्थित्यनतिक्रमः ।"

---

(51) भ्रेष चलने । भ्रेषणं भ्रेषश्चलनम् । अभ्रेषोऽचलनम् । पदार्थानामनपचारी यथाप्राप्तकरण-मिति यावत् ।

## ३८। परावनुपात्यय इणः। (52)

परिपूर्वादिणः परिपाट्यां घञ् स्यात्। तव पर्य्यायः। मम पर्य्यायः। अनुपात्यये किम्? कालविपर्य्ययः।

## ३९। व्युपयोः शेतेः पर्य्याये।

व्युपयोः शेतेर्घञ् स्यात्। तवाद्य विशायः। ममोपशायः। पर्य्यायशयनमित्यर्थः।

## ४०। हस्तादाने चेरस्तेये।

सामीप्यगतौ चिञो घञ् स्यात्। पुष्पप्रचायः। फलोच्चायः। फलोपचायः। हस्तादाने किम्? लगुडेन पुष्पप्रचयः। अस्तेये किम्? वृक्षाग्रे चौर्य्येण पुष्पोच्चयः। पुष्पप्रचयः।

## ४१। निवासचितिशरीरोपसमाधानेष्वादेश्च कः।

एष्वर्थेषु चिञो घञ् स्यात्। आदेश्च कः। निकायो गृहम्। निकायोऽग्निः। निचित इत्यर्थः। कायो देहः। उपसमाधानं राशीकरणम्। गोमयनिकायः। काष्ठनिकायः। (53)

## ४२। संघे चानौत्तराधर्य्ये।

प्राणिनां समुदायः सङ्घः। सङ्घे चिञो घञ् स्यात्। आदेश्च कः। भिक्षुनिकायः। "मृग्याः शलुनिकायानाम्।" अनौत्तराधर्य्ये किम्? शूकरनिचयः।

## ४३। कर्मव्यतिहारे णच् स्त्रियाम्।

परस्परकरणे धातोः स्त्रियां भावे णच् स्यात्। "व्याक्रोशीं विदधते।" "व्यावहासीमनाश्रितैः।" णचः स्त्रियामञ् (५।४।१४)। बाहुल्यात् क्वचिद् बाधकविषयेऽपि। व्यावचोरी। "व्यात्युक्षीमभिसरणग्लहामदीव्यन्।"

---

(52) क्रमप्राप्तस्य लङ्घनमनुपात्ययः।

(53) चः क इति वक्तव्ये आदेरिति वचनं यङ्लुगर्थम्। यङ्लुगन्तेऽप्यादेरेव यथा स्यात्। अनन्त्यस्याभ्यासस्य चोभयोर्मा भूदिति यथा गोमयनिकेचायः। गोमयानां पुनः पुनाराशीकरणमित्यर्थः।

## ४४ । अभिविधौ भाव इनुण् ।

भावे ऽभिव्याप्तौ धातोरिनुण् स्यात् । सांराविणम् । सांकूटिनम् । अणिनुण (५।४।१५) इति स्वार्थेऽण् ।

## ४५ । आक्रोशेऽवन्योर्ग्रहः ।

अवे नौ च ग्रहेर्घञ् स्यादाक्रोशश्चेत् । अवग्राहः । निग्राहस्ते वृषल भूयात् ।

## ४६ । प्रे लिप्सायाम् ।

लिप्सायां प्रग्रहेर्घञ् स्यात् । पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी । (54)

## ४७ । परौ यज्ञे ।

यज्ञे परिग्रहेर्घञ् स्यात् । उत्तरपरिग्राहः । यज्ञविशेषः ।

## ४८ । नौ वृ धान्ये ।

नौ वृधातोर्घञ् स्यात् । नीवारा व्रीहयः ।

## ४९ । उदि श्रयतियौतिपूद्रुवः ।

एभ्य उदि घञ् स्यात् । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः ।

## ५० । विभाषाऽङि रुप्लुवोः ।

रुप्लुभ्यामाङि घञ् स्याद्वा । आराव आरवो वा । "दूराप्लावं हनूमन्तं रामः प्रोचे गजाप्लवः ।"

## ५१ । अवे ग्रहो वर्षप्रतिबन्धे ।

वृष्टिनिरोधे ऽवग्रहो घञ् स्याद्वा । अवग्राहोऽवग्रहो वा मेघस्य ।

## ५२ । प्रे वणिजाम् ।

वणिजां तुलासूत्रे वाच्ये प्रग्रहेर्घञ् स्याद्वा । प्रग्राहः प्रग्रहो वा ।

## ५३ । रश्मौ च ।

रश्मिरश्वादिविधारणरज्जुः । तत्र प्रग्रहे घञ् स्याद्वा । प्रग्राहः प्रग्रहो वा ।

---

(54) भिक्षार्थीति पाठान्तरम् ।

## ५४। ह्वयतेराच्छादने।

आच्छादनेऽस्माद् घञ् स्याद्वा। प्रावारो वस्त्रम्। "विन्ध्यस्य प्रवरो घनः।"

## ५५। परौ भुवोऽवज्ञाने।

परिभुवस्तिरस्कारे घञ् स्याद्वा। परिभावः। पक्षे ऽप्। परिभवः। उक्तो घञ्।

## ५६। एरच्।

इवर्णान्ताद् घञपवादोऽच् स्यात्। चयः। शिलोच्चयः। जयः। व्ययः। प्रणयः। प्रश्रयः।

(क) अज्विधौ भयादीनामुपसंख्यानम्। क्लीबे। क्तादिबाधनार्थम्। भयम्। वर्षम्। वासरूपेण (३।१।९४) क्तादयोऽपि भवन्ति। भीतं शिशुना हृष्टं देवेन वर्षणं मेघस्येति भागवृत्तिः।

## ५७। ऋदोरप्।

ऋकारान्तोवर्णाभ्यामप् स्यात्। कॄ करः। तॄ तरः। भॄ भरः। गॄ गरः। शॄ शरः। प्रतरः। प्रदरः। सङ्करः। स्तुञ् स्तवः। स्रवः। भवः। सम्भवः। लवः। पवः। ऋदिति दकारोऽयमुच्चारणार्थः। नैष तकार इति भाष्यम्।

## ५८। ग्रहवृदृनिश्चिगमश्च।

(क) वशिरण्योश्च। एभ्योऽप् स्यात्। ग्रहः। वरः। दरः। निश्चिग्रहणं स्वरविशेषार्थम्। निश्चयः। गमः। वशः। रणः। बहुलाधिकारात् स्वयंग्राहः (55)।

(ख) स्थास्नापाव्यधिहनियुधिभ्यो घञर्थे कः। प्रस्थः। प्रस्नः। प्रपिबन्त्यस्यां प्रपा। आविधः। विघ्नः। आयुधम्।

## ५९। उपसर्गेऽदः।

अत्तेः प्रादावप् स्यात्। विघसः। प्रघसः। संघसः। उपसर्गे किम्? घासः।

---

(55) काण्डे स्वयंग्राहनिषक्तवाङ्मिति कुमारे।

६० । **नौ ण च ।**

नावक्तेरप् स्यात् । णश्च । निवसः । न्यादः ।

६१ । **व्यधजपोरनुपसर्गे ।**

आभ्यामप्रादावप् स्यात् । व्यधः । जपः । प्रादौ तु आव्याधः । उपजापः ।

६२ । **स्वनहसो र्वा ।**

आभ्यामप्रादावब् वा स्यात् । स्वनः स्वानः । हसो हासः (56) ।

६३ । **यमः समुपनिविषु च ।**

अप्रादावेषु च यमोऽब् वा स्यात् । यमो यामः । संयमः संयामः । उपयमः उपयामः । नियमः नियामः । वियमः वियामः ।

६४ । **नौ गदनदपठस्वनः ।**

एभ्यो नौ वा स्यादप् । निगदो निगादः । निनदः निनादः । निपठः निपाठः । निस्वनः निस्वानः ।

६५ । **क्वणो वीणायाञ्च ।**

क्वणोऽप्रादावब् वा स्यात् । क्वणः क्वाणः । नौ च । निक्वणः निक्वाणः । वीणाविषये च । प्रक्वाणः प्रक्वणो वा वीणायाः ।

६६ । **नित्यं पणः परिमाणे ।**

अत्र पणो नित्यमप् स्यात् । शाकपणः । परिमितो मुष्टिः । "नराः क्षीणपणा इव ।"

६७ । **मदोऽनुपसर्गे ।**

अप्रादौ मदोऽप् स्यात् । विद्यामदः । धनमदः । बाहुल्यान्मादः ।

६८ । **प्रमदसम्मदौ हर्षे ।**

एतावत्र निपात्येते । प्रमदः । सम्मदः ।

---

(56) हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसै र्दूतपथः सितीकृत इति नैषधीये ।

## ६९। समुदोरजः पशुषु।

समुत्पूर्वादजोऽप् स्यात्। हस्तिनां समजः संघः। अश्वानामुदज उद्गमनम्। पशुषु किम्? विप्रसमाजः।

## ७०। अक्षेषु ग्लहः।

अक्षेषु ग्लहो निपात्यते। अन्यत्र ग्रहः।

## ७१। प्रजने सर्त्तेः।

प्रजने प्रथमगर्भाधाने सर्त्तेरप् स्यात्। उपसरः।

## ७२। ह्वः संप्रसारणञ्च न्यभ्युपविषु।

एषु ह्वयतेरप् स्यात् संप्रसारणञ्च। निहवः। अभिहवः। उपहवः। विहवः।

## ७३। आङि युद्धे।

आङि ह्वयतेरप् स्यात् सम्प्रसारणञ्च। आहवो युद्धम्।

## ७४। निपानमाहावः।

आहावो निपात्यते निपानञ्चेत्।

## ७५। भावेऽनुपसर्गस्य।

अप्रादौ भावे ह्वयतेरप् स्यात्। "कुर्वन्तो हवमाप्तानाम्।"

## ७६। हनश्च वधः।

भावे हनोऽप् स्याद् वधादेशश्च। वधः। चकाराद् घञपीष्यते। घातः।

## ७७। मूर्त्तौ घनः।

हन्तेः काठिन्येऽप् स्यात्। घनादेशश्च। लोहघनः। अभ्रघनः। कथं घनं दधीति? अभेदोपचारात्।

## ७८। अन्तर्घणो देशे।

अयमभ्यन्तरदेशे स्यात्। णत्वञ्चेष्यते। तस्मिन्नन्तर्घणे पश्यन्निति भट्टिः।

## ७९। अगारैकदेशे प्रघणः प्रघाणश्च।

एतौ गृहैकदेशे स्याताम्।

## ८० । उद्घनोऽत्याधानम् ।

निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।

## ८१ । अपघनोऽङ्गम् ।

अयमङ्गे स्यात् । "त्रणिभिरपघनैर्घर्घराव्यक्तघोषान् ।"

## ८२ । करणेऽयोविद्रुषु ।

एषु हनः करणेऽप् स्यात् । घनादेशश्च । अयोघनः । विघनः । द्रुघनः कुठारः । णत्वे द्रुघण इति केचित् ।

(क) स्त्रियां खलनौ विप्रतिषेधेन । अयोहननी । द्रुहननी । विहननी ।

## ८३ । स्तम्बे क च ।

स्तम्बे हनः कः स्यात् । "सा स्तम्बघ्नपदन्यासान् ।" चकारादप् च । स्तम्बघनः ।

## ८४ । परौ घः ।

करणे परौ हन्तेरप् स्यात् । घादेशश्च । परिघः ।

## ८५ । उपघ्न आश्रये ।

अयमत्र निपात्यते ।

## ८६ । संघोद्घौ गणप्रशंसयोः ।

गणे संघः प्रशंसायामुद्घः स्यात् ।

## ८७ । निघो निमितम् ।

परिमितं निघः स्यात् । निघा वृक्षाः । उक्तोऽप् ।

## ८८ । ड्वितः क्त्रिः ।

धातोर्डुकारानुबन्धात् क्त्रिः स्यात् । क्त्रेर्मम् नित्यम् (४।४।२०) । कृत्रिमम् । क्रीतिमम् । लब्ध्रिमम् । भृत्रिमम् । पक्त्रिमम् ।

## ८९ । ट्वितोऽथुच् ।

टुकारानुबन्धादथुच् स्यात् । नन्दथुः । वमथुः । भ्राजथुः । वेपथुः ।

## ९०। यजयाचयतविच्छप्रच्छरक्षो नङ्।

एभ्यो भावेऽकर्त्तरि च कारके नङ् स्यात्। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। प्रश्ने चासन्नकाल (४।२।११७) इति ज्ञापकात् संप्रसारणाभावः। रक्ष्णः।

## ९१। स्वपो नन्।

अस्मान्नन् स्यात्। स्वप्नः।

## ९२। उपसर्गे घोः किः।

प्रादौ दाधाभ्यां किः स्यात्। आदिः। आधिः। निधिः। प्रधिः। अन्तर्द्धिः। प्रणिधिः। बाहुल्यात् कर्त्तरि विधिः।

## ९३। कर्मण्यधिकरणे च।

आधारे कर्मोपपदाद् घोः किः स्यात्। जलधिः। वारिधिः। ओषधिः। बालधिः।

## ९४। स्त्रियां क्तिन्।

स्त्रियां भावेऽकर्त्तरि च कारके धातोः क्तिन् स्यात्। श्रितिः। चितिः। सिद्धिः। नीतिः। श्रूयतेऽनया श्रुतिः। भूतिः। स्तुतिः। कृतिः। ऋद्धिः। सृष्टिः।

(क) ॠकारल्वादिभ्यः क्तिन् निष्ठावत्। कीर्णिः। गीर्णिः। लूनिः। धूनिः।

(ख) क्तिन्नाबादिभ्यः। आबादेर्गुरोश्च इत्र (३।३।१०२) इत्यपवादः क्तिन् स्यात्। आप्तिः। दीप्तिः। राद्धिः। साद्धिः। प्रशस्तिः। बाहुल्याच्छास इत्वं नास्ति। शास्तिः।

(ग) ग्लाम्लाज्याहाभ्यो निः। एभ्यो निः स्यात्। ग्लानिः। म्लानिः। ज्यानिः। हानिः।

(घ) सम्पदादिभ्यः क्विप्। सम्पत्। प्रतिपत्। विपत्। संवित्। वेत्त्येव। क्तिनपीष्यते। सम्पत्तिः। प्रतिपत्तिः। विपत्तिः।

## ९५। स्थागापापचो भावे।

एभ्योऽङपवादः क्तिन् स्यात्। प्रस्थितिः। सङ्गीतिः। प्रगीतिः। आपीतिः। पक्तिः। कथमास्था व्यवस्थेति? अभिधानप्रामाण्यात्। (57)

---

(57) वस्तुतस्तु पूर्वापरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञाया (१।१।३४) मिति ज्ञापकात्।

९६ । मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ।

छान्दसम् ।

९७ । ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ।

वेञादेः षड़मी निपात्यन्ते ।

९८ । व्रजयजोर्भावे क्यप् ।

आभ्यां भावे क्यप् स्यात् । व्रज्या । प्रव्रज्या । इज्या । बाहुल्यादिष्टिः ।

९९ । संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ।

एभ्यो नवभ्यः संज्ञायां क्यप् स्यात् । भावाधारकरणेष्वभिधानम् । समज्या । निषद्या । निपत्या । मन्या । विद्या । सुत्या । शय्या । भृत्या । इत्या । बाहुल्यात् समस्येत्येके । कथं भृतिर्मतिरासूतिरिति ? निपातनादिति न्यासकृत् ।

१०० । कृञः श च ।

कृञः शः स्यात् क्यप् च । क्रिया । कृत्या । योगविभागात् कृतिः ।

१०१ । इच्छा ।

भावे निपात्यते । कर्मणि क्तिनि इष्टिः ।

(क) परिचर्य्यापरिसर्य्यामृगयाटाट्याजागर्य्याजागराणाम् । शप्रत्यये एषां षण्णां निपातनं कर्त्तव्यम् ।

१०२ । अ प्रत्ययात् ।

प्रत्ययान्ताद् धातोरः स्यात् । ततष्टाप् । चिकीर्षा । तितिक्षा । पुत्रीया । पुत्रकाम्या । लोलूया । चंक्रमा । सेसिचा । कण्डूया ।

१०३ । गुरोश्च हलः ।

गुरुमतो हलन्तादः स्यात् । शिक्षा । भिक्षा । ईहा । प्रतीक्षा । व्यतीहा । ऊहा । बाहुल्याद्रूढिः । चकाराच्छोभा ।

१०४ । षिद्भिदादिभ्योऽङ् ।

षितो भिदादेश्चाङ् स्यात् । पचा । लपा । ऋदृशोरङि गुणः (७।४।१६)

जरा। घटा। व्यथा। जटा। बाहुल्यादुपलब्धिः। भिदादेस्त्वभिधानं स्मरन्ति। भिदा विदारणे। भित्तिरन्या। ऋतेरङि कृते गुणे (७।४।१६) निपातनाद्दीर्घः। आरा शस्त्रम्। ऋतिरन्या। एवं कारा बन्धनालये। तारा नक्षत्रे। धारा प्रपतने। धृतिरन्या। बाहुल्यादसिधारा। लिखेर्गुणे पक्षे त्वञ्च। लेखा रेखा। कृपेः संप्रसारणञ्च। कृपा। गुहा। पृच्छा। मृजा। रुजा। विदा। भिदादिराकृतिगणः।

## १०५। चिन्तिपूजिकथिकुम्बिचर्चश्च।

ण्यन्तेभ्य एभ्योऽङ् स्यात्। युचोऽपवादः। चिन्ता। पूजा। कथा। कुम्बा। चर्चा।

## १०६। आतश्चोपसर्गे।

आदन्तात् प्रादावङ् स्यात्। प्रमा। प्रतिमा। प्रधा। उपधा। प्रभा। प्रतिभा। अदन्तरोरुपसर्गवद्वृत्तिः। श्रद्धा। अन्तर्धा। बाहुलकात् क्तिन्। प्रमितिः।

## १०७। ण्यासश्रन्थो युच्।

ण्यन्तादासेः श्रन्थेश्च युच् स्यात्। भावना। दापना। दीपना। कारणा। भूषणा। कामना। चोदना। उपासना। श्रन्थना। बाहुल्यात् पाचयतेः पाक्तिः।

(क) घट्टिवन्दिविदिभ्यश्च। एभ्यो युच् स्यात्। घट्टना। वन्दना। वेदना।

(ख) इषेरनिच्छार्थस्य। अन्वेषणा।

(ग) परेर्वा। पर्य्येषणा। परीष्टिः।

## १०८। रोगाख्यायां ण्वुल् बहुलम्।

रोगे गम्ये बहुलं ण्वुल् स्यात्। प्रच्छर्दिका। प्रवाहिका। विचर्चिका। प्रस्कन्दिका। नच भवति। शिरोऽर्त्तिः। अर्त्तेः क्तिन्।

(क) धात्वर्थनिर्देशे ण्वुल् वक्तव्यः। आसिका। शायिका। शायिका।

(ख) इक्श्तिपौ धातुनिर्द्देशे । पचिः । याचिः । यातिः । करोतिः । यजेर्दपेरित्युच्चारणार्थं इकारः ।

(ग) वर्णात् कारः । अकारः । आकारः । औकारः । ककारः । ओङ्कारः । हुङ्कारः । एवकारः । फट्कारः । शीत्कार । फुत्कारः । थुत्कारः । एवकारादौ घञन्तेन समास इत्यन्ये ।

(घ) रादिफः । रेफः ।

(ङ) मत्वर्थाच्छः । मत्वर्थीयः । बाहुल्यादभस्यापि यस्येति चेति (६।४।१४८) लोपः ।

(च) इञजादिभ्यः । आजिः । आतिः । आटिः ।

(छ) इक् कृष्यादिभ्यः । कृषिः । गिरिः । सर्वोऽयं बहुलप्रपञ्चः ।

## १०९ । संज्ञायाम् ।

नाम्नि धातोर्ण्वुल् स्यात् । पुष्पभञ्जिका शालभञ्जिका नाम क्रीड़ा ।

## ११० । विभाषाख्यानपरिप्रश्नयोरिञ् च ।

प्रश्नाख्यानयोरिञ् ण्वुलौ वा स्याताम् । कां त्वं कारिमकार्षीः कारिकां क्रियां कृत्यां कृतिं वा । सर्वां कारिमकार्षम् । कारिकां क्रियां कृत्यां कृतिं वा । एवं स्थायिं स्थितिं स्थायिकां वा ।

## १११ । पर्य्यायार्हर्णोत्पत्तिषु ण्वुच् ।

धातोरेष्वर्थेषु ण्वुच् स्यात् । भवतः शायिका । "अहं पर्य्यायसंप्राप्तां कुर्वे प्रायोपवेशिकाम्" । अर्हसि त्वमिक्षुभक्षिकाम् । धारयसि मे तिल-मोदकखादिकाम् । उत्पन्ना मे पयःपायिका ।

## ११२ । आक्रोशे नञ्यनिः ।

शापे नञुपपदादनिः स्यात् । "तस्याजननिरेवास्तु जननीक्लेशकारिणः" । "अभवनिरस्तु तदा मनोभवस्य" । भावेऽकर्त्तरि च कारके स्त्रियाञ्चेति निवृत्तम् ।

## ११३ । कृत्यल्युटो बहुलम् ।

धातोर्ल्युट् कृत्याश्च बहुलं कर्त्रादौ स्युः । कर्त्तरि । लोचनलोभनीया शस्यपङ्क्तिः । करणे । स्नानीयं चूर्णम् । सम्प्रदाने । दानीयो भिक्षुः ।

आधारे। शयनीयं कटिलम्। रमणीया वापी। रम्यमुद्यानम्। तिष्ठन्त्य-स्मिन् स्थेयः। ल्युट् कर्त्तरि। गुणमुक्तवान् गुणवचनः। कर्मणि। अवसेचनो वृक्षः। राजभोजना: शालयः। अपादाने। प्रपतनमित्यादि।

११४। नपुंसके भावे क्तः।

क्लीबे भावे क्तः स्यात्। हसितं भिक्षोः। गतं विप्रस्य।

११५। ल्युट् च।

क्लीबे भावे ल्युट् स्यात्। करणम्। गमनम्। हरणम्।

११६। कर्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखम्।

ईदृक्कर्मोपपदाल्ल्युट् स्यान्नपुंसके भावे। पयःपानं भुजङ्गानां सुखम्। गुड़भोजनं भिक्षोः सुखम्। नित्यमुपपदसमासः। विशेषणं किम्? कण्टकानां मर्द्दनं कण्टकमर्द्दनं दुःखम्।

११७। करणाधिकरणयोश्च।

अनयोर् ल्युट् स्यात्। देहव्रश्चनः खड्गः। उपमानं मुखस्येन्दुः। आधारे। राजधानी। वार्धानी। गोदोहनी स्थाली। ओदनपचनः कटाहः। व्रीहिभरणः कुसूलः। करणाधिकरणयो र्विधान मा खलः। (३।३।१२६)।

११८। पुंसि संज्ञायां घः प्रायेण।

पुंसि नाम्नि प्रायेण घः स्यात्। करणे। दन्तच्छदः। कुर्वन्त्यनेन करः। शरः। आधारे। आकरः। आलयः। परिसरावसरावत्रैव।

११९। गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च।

समेते घान्ता निपात्यन्ते। चकारादाह्वयतेऽनेनाह्वयः।

१२०। अवे तॄस्त्रोर्घञ्।

अवे आभ्यां घञ् स्यात्। अवतारः। अवस्तारः।

१२१। हलश्च।

हलन्ताद् वविषये घञ् स्यात्। लेखः। वेदः। बन्धः। अपामार्गः। भृज्यतेऽनेन भर्गः। प्रायेणेत्येव। निकषः।

१२२ । अध्यायन्यायोद्यावसंहाराधारावायाश्च ।

घञिमे घविषये घञन्ता निपात्यन्ते । अधीयतेऽत्राध्यायः । निपूर्वादिणो नीयतेऽनेन न्यायः ।

१२३ । उदङ्कोऽनुदके ।

अयमत्र निपात्यते । घृतोदङ्कः । नेह । जलोदञ्चनः ।

१२४ । जालमानायः ।

आनायः स्याज्जालञ्चेत् ।

१२५ । खनो घ च ।

खनो घञ् स्याद् घश्च । आखन्यतेऽनेनाखानः । आखनः । इहाखाखनिकादयस्त्वौणादिकाः । करणाधिकरणयोरिति (३।३।११७) निवृत्तम् ।

१२६ । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।

एषु धातोः खल् स्यात् । कृच्छ्रेन क्रियतेऽसौ दुष्करः । दुर्लभः । अकृच्छ्रेण क्रियतेऽसौ सुकरः । ईषत्करः । सुभोजः । सुबोधः । सुभेदः । सुलभः ।

१२७ । कर्त्तृकर्मणोश्च भूकृञोः ।

कर्त्तरि भुवः कर्मणि कृञ स्तथा खल् स्यात् । च्व्यर्थेऽभिधानम् । दुराढ्यम्भवं तेन । सुराजम्भवममुना । ईषदाढ्यङ्कर स्त्वया पुत्त्रः । सुपण्डितङ्करः शिष्यः । गतित्वेऽपि सुदुरोरत्र धातोः प्राक् प्रयोगो (१।४।८०) न भवति । खलः खित्करणात् ।

१२८ । आतो युच ।

आदन्तात् खल्विषये युच् स्यात् । सुपानं पयः । दुरुपस्थानो गुरुः । दुर्दाना गौः । दुर्ज्ञाना गौः ।

१२९ । छन्दसि गत्यर्थेभ्यः ।

१३० । अन्येभ्योऽपि दृश्यते ।

छान्दसे सूत्रे ।

(क) भाषायां शासियुधिदृशिधृषिमृषिभ्यश्च। एभ्यो युच् स्यात्। दुःशासनः। दुर्योधनः। दुर्दर्शनः (58)। दुर्धर्षणः। दुर्मर्षणः। सुयोधनः सुदर्शनः। सुमर्षणः।

## १३१। वर्तमानसामीप्ये वर्तमानवद्वा।

वर्त्तमानसमीपे भूते भविष्यति च वर्त्तमानवत् प्रत्ययो वा स्यात्। कदा त्वमागतः। अयमहमागच्छामि। कदा यास्यसि? एषोऽहं गच्छामि। यान्तं मां विद्धीत्यर्थः। पक्षे यथाप्राप्तञ्च।

## १३२। आशंसायां भूतवच्च।

आकाङ्क्षायां भविष्यति वर्त्तमानवद् भूतवच्च प्रत्ययो वा स्यात्। उपाध्यायश्चेदागच्छति आगत आगमिष्यति आगन्ता आगच्छेद् आगमद् वा एते छन्दोऽधीमहे अध्यगीष्महि। पक्षे लृङ्लुटौ। एवं "सौमित्रे मामुपायंस्थाः।" "मामुपायंस्त रामेति"। अथास्यापवादद्वयमाह।

## १३३। क्षिप्रवचने लृट्।

क्षिप्रार्थयोगे लृट् स्यात्। स चेत् क्षिप्रमायास्यति त्वरितमध्येष्ये।

## १३४। आशंसावचने लिङ्।

वाञ्छार्थयोगे लिङ् स्यात्। स चेदागच्छेत् कामये युक्तोऽधीयीय। "आशंसा न हि न प्रेते जीवेम दशमूर्धनि"।

## १३५। नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः।

भूतभविष्यदनद्यतने लङ्लुटावुक्तौ। तौ तु निषिध्येते क्रियासातत्ये सामीप्ये च। यावज्जीवं भृशमन्नमदाद् दास्यति च। सामीप्ये। अनन्तरायां पौर्णमास्यां गुरुर्धर्ममवोचत्। आगामिन्यां वक्ष्यति।

## १३६। भविष्यतिमर्य्यादावचनेऽवरस्मिन्।

मर्य्यादोक्तावबरभागे भविष्यति नानद्यतनवत् स्यात्। योऽयमा पर्वताद् गन्तव्यः पन्थास्तस्य यदवरं नद्यास्तत्र तिलौदनं भोक्ष्यामहे।

---

(58) कथं काली करालवक्त्रान्तर्दुर्दर्शदशनोज्ज्वलेति देवीमाहात्म्ये? "न शास्त्रमनुवर्तन्ते स्वतन्त्रा ऋषयः किल।" दुर्शब्देन प्रादिसमासो वा।

## १३७ । कालविभागे चानहोरात्राणाम् ।

कालविभागे च पूर्ववन्नानद्यतनवत् स्यात् । आगामिवत्सरस्य यदवरं वैशाख्यास्तत्र गयां यास्यामः । अहोरात्रसम्बन्धिनि तु कालविभागे । आगामिनि मासि पञ्चदशरात्रादवरस्मिन् महाबोधिं गन्तास्मः ।

## १३८ । परस्मिन् विभाषा ।

परस्मिन् कालविभागे भविष्यति नानद्यतनवद्वा स्यात् । आगामि-वत्सरस्याग्रहायण्याः परस्मिन् धर्मं श्रोष्यामि श्रोतास्मि वा ।

## १३९ । लिङ्निमित्ते लृङ् क्रियातिपत्तौ ।

हेतुहेतुमदादौ लिङ्विषये क्रियातिपाते भविष्यति लृङ् स्यात् । यदि वर्षसहस्रमजीविष्यं तदा पुत्रशतमजनयिष्यम् ।

## १४० । भूते च ।

भूते च पूर्ववल्लृङ् स्यात् । यदि शिलाः कोमला अभविष्यंस्तदा क्रोष्टुभिरेवाभक्षयिष्यन्त ।

## १४१ । वोतापयोः ।

उतापिशब्दात् (३।३।१५२) प्राग् भूते लृङ् वा स्यादित्यधिक्रियते ।

## १४२ । गर्हायां लडपिजात्वोः ।

कालसामान्ये जात्वपियुक्ताद् धातो र्लट् स्यान्निन्दा चेत् । अपि स-भवाञ् शूद्रं याजयति ? "मन्ये जातु वदन्त्यन्नास्त्वं तानप्यनुमन्यसे" ।

## १४३ । विभाषा कथमि लिङ् च ।

कथंयुक्ताद् गर्हायां लिङ् लट् च वा स्यात् । स कथं शूद्रं याजयेत् याजयति वा ? पक्षे याजयिता याजयिष्यति अयीयजत् याजयाञ्चकार वा । क्रियातिपत्तौ भूते वा लृङ् । अयाजयिष्यत् । "काकुत्स्थ दयितां साध्वीं त्वमाशङ्किष्यथाः कथम्" । भविष्यति तु लिङ्निमित्ते क्रियातिपत्तौ सर्वत्रात्र प्रकरणे नित्यो लृङ् बोद्धव्यः ।

## १४४ । किंवृत्ते लिङ्लृटौ ।

किंवृत्तयोगे गर्हायां लिङ्लृटौ स्याताम् । सर्वलकाराणां बाधा । को नाम कतरो नाम शूद्रं याजयेद् याजयिष्यति वा ?

## १४५ । अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।

अश्रद्धाक्षमयोर्योगेऽकिंवृत्तेऽपि लिङ्लृटौ स्याताम् । नावकल्पयामि सभवान् हस्तिरथं प्रतिगृह्णीयात् प्रतिग्रहीष्यति वा । न श्रद्दधे न क्षमे दुर्जनः प्रतिष्ठां लभेत लप्स्यते वा ।

## १४६ । किंकिलास्त्यर्थेषु लृट् ।

किंकिलास्त्यर्थयोगे लृट् स्यात् । किंकिल सभवान् सुरां पास्यति ! "किं क्रमिष्यति किलैष वामनः" । अस्ति नाम शूद्रो वेदं व्याख्यास्यति । न श्रद्दधे न क्षमे ।

## १४७ । जातुयदोर्लिङ् ।

## १४८ । यच्चयत्रयोः ।

(क) यदाययोश्च । जातुयद्यदायदियच्चयत्रोपपदे लिङेव स्यात् । "न पृथग्जनवज्जातु प्रमुह्येत् पण्डितो जनः" । "नावकल्प्यमिदं श्लाघेद् यत् कृच्छ्रेषु भवानपि" । यदा भवद्विधः शूद्रं याजयेदित्यादि ।

## १४९ । गर्हायाञ्च ।

यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् । "यच्च यत्र भवान् सीदेत्महाग्निस्तद् विगर्हितम् ।"

## १५० । चित्रीकरणे च ।

आश्चर्य्ये च पूर्ववल्लिङेव स्यात् । "आश्चर्य्यं यच्च यत्र त्वां प्रब्रूयाम वयं हितम् ।"

## १५१ । शेषे लृड़यदौ ।

यच्चयत्राभ्यामन्यः शेषः । तस्मादुपपदादाश्चर्य्ये लृड़ेव स्यात् । अद्भुतमन्धो

नाम गिरिमारोक्ष्यति । वधिरो नाम व्याकरणमध्येष्यते । अयदौ किम् ? चित्रं नाम यदि स भुञ्जीत ।

## १५२ । उताप्योः समर्थयोर्लिङ् ।

वाढ़ार्थयोरुताप्योर्योगे लिङेव स्यात् । उत कुर्य्यात् । अपि कुर्य्यात् ।

## १५३ । कामप्रवेदनेऽकच्चिति ।

इच्छाप्रकाशने सर्वलकारापवादो लिङेव स्यात् । कामो मे शृणुयाद् भवान् । अकच्चिति किम् ? कच्चिज्जीवति ते पिता ? अयं विधिर्नोपपदाश्रयः । कामप्रवेदनस्य गम्यमानतयाभ्युपगमात् । इच्छार्थेषु लिङ्लोटाविलेष (३।३।१५७) तूपपदाश्रय इत्यनयोर्भिन्नविषयता । यत् पुनरत्र सूत्रे कामो मइति प्रयोगः स गम्यमानार्थस्यैव स्पष्टार्थो बोद्धव्यः ।

## १५४ । सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे ।

अलमिति चेत् सम्भाव्यतेऽलञ्च न प्रयुज्यते तदा धातोर्लिङेव स्यात् । अपि शिरसा गिरिं भिन्द्यात् । अलमिति किम् ? विदेशस्थः प्रायेणायास्यति । अलंयोगे तु । अलं हस्तिनं हनिष्यति ।

## १५५ । विभाषा धातौ सम्भावनवचनेऽयदि ।

अनन्तरोक्तो लिङ् सम्भावनवाचिधातूपपदे वा स्यात् । सम्भावयामि स भुञ्जीत । स भोक्ष्यते वा । अयदि किम् ? श्रद्दधे यत् स भुञ्जीत ।

## १५६ । हेतुहेतुमतोर्लिङ् ।

हेतुहेतुफलार्थाद् धातोर्लिङ् वा स्यात् । दक्षिणश्चेद् यायान्न शकटं पर्य्याभवेत् (59) । पक्षे लृट् ।

## १५७ । इच्छार्थेषु लिङ्लोटौ ।

इच्छार्थयोगे सर्वलकारापवादौ लिङ्लोटौ स्याताम् । कामये त्वं भुञ्जीथाः । इच्छामि स गच्छतु ।

---

(59) पर्य्याभवनं भङ्ग इत्यर्थः ।

## १५८। समानकर्त्तृकेषु तुमुन्।

## १५९। लिङ् च।

एककर्त्तृके इच्छार्थयोगे तुमुन् स्याल्लिङ् च। इच्छति भोक्तुम्। गच्छेय-मिति वाञ्छति।

## १६०। इच्छार्थेभ्यो विभाषा वर्त्तमाने।

इच्छार्थाद् वर्त्तमाने लिङ् वा स्यात्। इच्छति इच्छेद्वा। "इच्छेः कामयितुं त्वं माम्।" वष्टि उश्याद्वा।

## १६१। विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्।

एष्वर्थेषु सर्वलकारापवादो लिङ् स्यात्। विधौ। दानं दद्यात्। नियोगतः करणे। इह भुञ्जीथाः। कामचारे। यथारुचि भुञ्जीत। अध्येषणे। अध्यापयेत्। संप्रश्ने। किंनु तर्कमधीयीय? याच्ञायाम्। लभेय भिक्षाम्।

## १६२। लोट च।

विध्यादौ लोट् च स्यात्। करोतु। चिनोतु। अधीताम्।

## १६३। प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च।

इष्टाज्ञातज्ञापनं प्रेषणम्। विधिरुक्तः। प्रैषस्तु प्रेषणमात्रम्। अतिसर्गः कामचाराभ्यनुज्ञा। प्राप्तकालता क्रियानिमित्तं कालप्राप्तिः। प्रैषादौ गम्ये कृत्याः स्युर्लोट् च। त्वया कटः कर्त्तव्यः। त्वं कटं कुरु। कृत्य-ग्रहणच्चैतल्लोटा समावेशार्थं वासरूपविधेः (३।१।९४) स्त्र्यधिकारात् परेण प्रायिकत्वं ज्ञापयति।

## १६४। लिङ् चोर्द्ध्वमौहूर्त्तिके।

ऊर्द्ध्वमौहूर्त्तिकार्थाद्धातोः प्रैषादौ गम्ये लिङ्लोटौ कृत्याश्च स्युः। मुहूर्त्तस्योपरि कटं कुर्य्याः। कटं कुरु। कटस्त्वया कर्त्तव्यः।

## १६५। स्मे लोट्।

अनन्तरविषये स्मयोगे लोड़ेव स्यात्। मुहूर्त्तस्योपरि कटं कुरु स्म।

## १६६। अधीष्टे च।

अत्र स्मयोगे लोड़ेव स्यात्। भवान् मां पाठयतु स्म।

## १६७। कालसमयवेलासु तुमुन्।

## १६८। लिङ् यदि।

कालादियोगे तुमुन् स्यात् प्रैषादौ गम्ये। कालो भोक्तुम्। समयो भोक्तुम्। वेला भोक्तुम्। यच्छब्दे तु लिङ्। कालोऽयं यद् भुञ्जीथाः।

## १६९। अर्हे कृत्यतृचश्च।

अर्हे कर्त्तरि कृत्यतृज्लिङः स्युः। यूना कन्या वोढ़व्या। युवा कन्याया वोढ़ा। युवा कन्यां वहेत्।

## १७०। आवश्यकाधमर्ण्ययो र्णिनिः।

## १७१। कृत्याश्च।

एतयोर्णिनिः स्यात्। अवश्यंकारी कटस्य। शतं दायी ऋणस्य। कृत्याश्च। त्वयावश्यं कटः कार्य्यः। दातव्यं शतम्। कृत्यग्रहणं वासरूपविधिना (३।१।९४) णिनिसमावेशार्थम्।

## १७२। शकि लिङ् च।

शक्तौ लिङ् स्यात्। कृत्याश्च। स भारं वहेत्। तेन वाह्यो भारः। वहनीयः।

## १७३। आशिषि लिङ्लोटौ।

आशिषि विषये लिङ्लोटौ स्याताम्। "कल्याणं वः क्रियासुः।" बौद्धो जिनः पातु वः (60)। शिवः पातु।

## १७४। क्तिच्क्तौ च संज्ञायाम्।

आशिषि धातोः क्तिच् स्यात् क्तश्च संज्ञा चेत्। तनुतात् तन्तिः। भवताद् भूतिः। वीरो भूयाद् वीरभूतिः। अग्निरस्य भूयादग्निभूतिः। ब्रह्मभूतिः। वृद्धिः। बुद्धिः। देवैरसौ दासीष्ट देवदत्तः। ब्रह्मदत्तः। बुद्धः।

---

(60) विपदि जिनः पातु व इति क्वचित् पाठान्तरम्।

## १७५। माङि लुङ्।

धातोर्माङ्योगे सर्वलकारापवादो लुङ् स्यात्। मा त्वं कार्षीः पापम्। "मोज्झिग्रहः स्वपौरुषम्"।

## १७६। स्मोत्तरे लङ् च।

मास्मयोगे लङ् स्यात्। मास्म करोत्। लुङ् च। "मास्म द्राक्षीर्मृषा दोषम्।"

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवस्य भाषावृत्तौ
तृतीयाध्यायस्य तृतीयः पादः ॥३।३॥

समाप्तश्च बहुलपादः।

अथ

# भाषावृत्तिः ।

---

## तृतीयोऽध्यायः । चतुर्थःपादः ।

### १ । धातुसम्बन्धे प्रत्ययाः ।

धात्वर्थद्वयसम्बन्धे भिन्नकाला अपि प्रत्ययाः साधवः स्युः । पितृव्यघाती पुत्रो जनिता । "गतो वनं श्वो भवितेति रामः" । दौवारिकः संपतृस्यते । गोमानयमासीत् । "वसन् ददर्श" । भुक्तवानस्मि । योत्स्यमानो जगाम । धातुसम्बन्धे विधान मा कर्त्तरि क्तः (३।४।६७) ।

### २ । क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः ।

क्रियासमभिहारे (61) गम्ये धातोः कालत्रयेऽपि लोट् स्यात् । तस्य च हिस्वौ कर्त्तव्यौ । तध्वंविषये हिस्वौ वा स्याताम् । लुनीहि लुनीहीत्येवायमलावीत् । लविष्यति । लुनाति वा । लुनीहि लुनीहीत्येवेमावलाविष्टाम् । लविष्यतः । लुनीतो वा । लुनीहि लुनीहीत्येवेमेऽलाविषुः । लविष्यन्ति । लुनन्ति वा । अधीष्वधीष्वेत्येवायमध्यगीष्ट । अध्येष्यते । अधीते वा । तध्वंविषये हिस्वौ वा । लुनीत लुनीतेत्येवं लुनीहि लुनीहीत्येवं वा यूयं लुनीथ । लविष्यथ । अलाविष्ट वा । अधीध्वमधीध्वमित्येवमधीष्वाधीष्वेत्येवं वा यूयमधीध्वे । अध्येष्यध्वे । अध्यगीढ्वं वा । सर्वत्र चेह प्रकरणे प्रत्ययान्तानुप्रयोगधात्वर्थयोः सामान्यविशेषभावेन सम्बन्धः ।

### ३ । समुच्चयेऽन्यतरस्याम् ।

क्रियासमुच्चये लोड़ादिकं वा स्यात् । खमट धामट द्मामटेत्येवायमटति । इमावटतः । इमेऽटन्ति वा । ओदनं भुङ्क्ष्व सक्तून् पिव धानाः खादेत्येवायमभ्यवहरति । एवं सर्वेषु कालेषु सर्वेषु वचनेषु चोन्नेयम् ।

---

(61) क्रियासमभिहारः पौनःपुन्यम् भृशार्थो वा ।

## ४ । यथाविध्यनुप्रयोगः पूर्वस्मिन् ।

प्रथमे लोड्विधौ यस्माद् धातोर् लोड् विहितः स एवानुप्रयोज्यः । लुनीहि लुनीहीत्येवायं लुनाति । नतु छिनत्ति ।

## ५ । समुच्चये सामान्यवचनस्य ।

समुच्चये लोड्विधौ सामान्यवचनस्यानुप्रयोगः कार्य्यः । यथा भुङ्क्ष्व पिव खादेत्येवायमभ्यवहरति (62) । अत्र च्छन्दःसूत्राणि द्वादश (63) ।

## १८ । अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ।

तुमर्थ इत्यनुवर्त्तते यावदव्ययकृतां विधानम् (३।४।६६) । तुमर्थश्च भाव इत्युक्तम् । प्रतिषेधवाच्यलंखलूपपदाद् धातोः क्त्वा स्यात् । अलं कृत्वा । खलु कृत्वा । न कर्त्तव्यमित्यर्थः । बाह्यकर्मसम्बन्धे तु । "अलमालम्ब्य व्यवसायबन्ध्यताम्" । "खलूक्त्वा खलु वाचिकम्" । न लोकेति (२।३।६९) कर्म्मणि षष्ठीनिषेधाच्चात्र द्वितीया । भावेऽपि हि प्रत्यये सकर्मकाद् धातोः पश्चात् कर्मसम्बन्धो भवत्येव पाक ओदनस्य कटं कृत्वा शेते गम्यते मया ग्राममिति भागवृत्तावुक्तम् । प्राचांग्रहणं पूजार्थम् ।

## १९ । उदीचां माङो व्यतीहारे ।

माङिति मेङः कृतात्वस्य ग्रहणम् । तस्यैव व्यतिहारवृत्तित्वात् । तस्मादुदीचां मतेन पूर्वकालापवादः क्त्वा स्यात् । पूर्वं याचते ततोऽपमयते-ऽपमित्य याचते । अपमातुं याचत इत्यर्थः ।

---

(62) तथा च—"पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्य महर्दिवं दिवः ॥"—इति माघः ।

(63) तानि चेमानि—

६ । छन्दसि लुङ्लङ्लिटः ।　७ । लिङर्थे लेट् ।　८ । उपसंवादाशङ्कयोश्च ।

९ । तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैञ्शध्यैशध्यैंस्तवैतवेङ्तवेनः ।

१० । प्रयै रोहिष्यै अव्यथिष्यै ।　११ । दृशे विख्ये च ।　१२ । शकि णमुल्कमुलौ ।

१३ । ईश्वरे तोसुन्कसुनौ ।　१४ । कृत्यार्थे तवैकेन्केन्यत्वनः ।　१५ । अवचक्षे च ।

१६ । भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ।　१७ । सृपितृदोः कसुन् ।

## २० । परावरयोगे च ।

अनयोर्योगे गम्ये क्त्वा स्यात् । बाल्यमतिक्रम्य यौवनम् । ततः परमित्यर्थः । अप्राप्य नदीं गिरिः । नद्या अवर इत्यर्थः ।

## २१ । समानकर्त्तृकयोः पूर्वकाले ।

पूर्वकालार्थाद् धातोः क्त्वा स्यात् समानश्चेत् कर्त्ता भवति । पीत्वा हसति । स्नात्वा भुक्त्वा पीत्वा व्रजति । स्नात्वा भुक्त्वा श्रुत्वा व्रजति । पूर्वकाले किम् ? भुङ्क्ते जल्पति च । समानकर्त्तृकयोः किम् ? ब्राह्मणे भुक्तवति सेवको व्रजति । इह

(क) भनत्क्त्वा पतति अक्षिणी सम्मील्य हसतीत्यादिकमुपसंख्येयम् । इह तु स्नात्वा सुखं भवति पापं कृत्वानुतापः स्यादित्यादौ स्थितस्येति पदमध्याहार्य्यम् (64) ।

## २२ । आभीक्ष्ण्ये णमुल् च ।

पौनःपुण्ये धातोर्णमुल् स्यात् क्त्वा च । भोजं भोजं भुक्त्वा भुक्त्वा वा व्रजति । "स्थायं स्थायं क्वचिद् यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।"

## २३ । न यद्यनाकाङ्क्षे ।

धातोर्यद्युपपदात् क्त्वाणमुलौ न स्याताम् । यदयं भुङ्क्ते ततः पठति । यदयमधीते ततः शेते । वाक्ये साकाङ्क्षे तु यदयं भुक्त्वा व्रजति नूनमयं पठिष्यति ।

## २४ । विभाषाग्रेप्रथमपूर्वेषु ।

आभीक्ष्ण्यं निवृत्तम् । एषूपपदेषु धातोस्तौ वा स्याताम् । अग्रे भोजमग्रे भुक्त्वा वा व्रजति । एवं प्रथमं पूर्वम् ।

## २५ । कर्मण्याक्रोशे कृञः खमुञ् ।

कर्मणि कृञः खमुञ् स्यादाक्रोशश्चेत् । चौरङ्कारमाक्षिपति । "तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत ।"

---

(64) एवं – दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् । पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थित इति सुरतानि च तानि ते रहः स्मर संस्मृत्य न शान्तिरस्ति मे इति कालिदासस्य, निरीक्ष्य संरम्भनिरस्तधैर्य्यं नाथेत मृत्योरपि पक्षपात इति भारवेः, रथे च वाममं दृष्ट्वा पुनर्जन्म न विद्यत इत्यादिश्च प्रयोगः समर्थितः ।

२६। स्वादुमि णमुल्।

स्वाद्वर्थोपपदात् कृञो णमुल् स्यात्। स्वादुङ्कारं भुङ्क्ते। निपातनादनुस्वार:। मिष्टंकारं भुङ्क्ते।

२७। अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्।

एषु कृञो णमुल् स्यात् सिद्धश्चेदप्रयोग: करोते:। गतार्थत्वात्। अन्यथा भुङ्क्ते अन्यथाकारं भुङ्क्ते। एवंकारं वक्ति। कथङ्कारमागच्छति। इत्थंकारं शेते। सिद्धाप्रयोगे किम्? अन्यथा कृत्वा शिरो भुङ्क्ते।

२८। यथातथयोरसूयाप्रतिवचने।

यथातथयोर्योगेऽसूयोक्तौ कृञ: स स्यात्। यथाकारं तथाकारं भुङ्क्ते किं तवात्र? यथातथयोरिति सौत्रो निर्देश:।

२९। कर्मणि दृशिविदो: साकल्ये।

साकल्यवति कर्मणि दृशिविदो: स स्यात्। ब्राह्मणदर्शं प्रणमति। भिक्षुवेदं भोजयति। सर्वान् भिक्षूनित्यर्थ:। कर्मणि विधि: प्राक् करणे हन:(३।४।३७)।

३०। यावति विन्दजीवो:।

अत्रानयो: स स्यात्। यावज्जीवमधीते। यावद्वेदं भुङ्क्ते।

३१। चर्मोदरयो: पूरे:।

अनयो: पूरे: स स्यात्। चर्म्मपूरं तिलान् ददाति। उदरपूरं भुङ्क्ते।

३२। वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्।

वृष्टिप्रमाणगतौ पूरे: स स्यादूकारलोपश्च वा। गोष्पदप्रं गोष्पदपूरं वा वृष्टो देव:।

३३। चेले क्नोपे:।

चेलार्थोपपदे क्नोपे: स स्याद्वर्षप्रमाणे। वस्त्रक्नोपं वृष्टो देव:।

३४। निमूलसमूलयो: कष:।

अनयो: कषे: स स्यात्। निमूलकाषं कषति। "समूलकाषं चकषु वदन्त:।"

## ३५। शुष्कचूर्णरूक्षेषु पिषः।

एषु पिषेः स स्यात्। शुष्कपेषं पिनष्टि। चूर्णपेषम्। रूक्षपेषम्।

## ३६। समूलाकृतजीवेषु हन्कृञ्ग्रहः।

समूलादिषु हनादेः स स्यात्। "समूलघातं न्यवधीदरींश्च"। समूलं न्यवधीदित्यर्थः। कषादयो हि गतार्था एव। सर्वत्रानुप्रयुज्यन्त इति। अकृतकारं करुते। जीवग्राहं गृह्णाति। उक्तं कर्मणि।

## ३७। करणे हनः।

करणोपपदाद् धन्तेः स स्यात्। पाणिघातं हन्ति। पाणिना हन्तीत्यर्थः। शरघातमरीन् हन्ति।

## ३८। स्नेहने पिषः।

स्नेहने करणे पिषेः स स्यात्। घृतपेषं पिनष्टि घृतेन पिनष्टीत्यर्थः। तैलपेषम् पिनष्टि।

## ३९। हस्ते वर्त्तिग्रहोः।

हस्ते करणे वर्त्तिग्रहोः स स्यात्। हस्तवर्त्तं वर्त्तयति। करवर्त्तं वर्त्तयति। हस्तग्राहं गृह्णाति। पाणिग्राहं गृह्णाति।

## ४०। स्वे पुषः।

आत्मात्मीयधनज्ञातिवाचिन्युपपदे करणे पुषेः स स्यात्। स्वेनापुषत् स्वपोषमपुषत्। आत्मीयपोषं रैपोषम् आत्मपोषं गोपोषं धनपोषम् पितृपोषम् बन्धुपोषं वा पुष्णाति।

## ४१। अधिकरणे बन्धः।

## ४२। संज्ञायाम्।

आधारोपपदाद् बध्नातेः स स्यात्। गुप्तौ बध्नाति गुप्तिबन्धं बध्नाति। चक्रे बध्नाति चक्रबन्धं बध्नाति। इहतु मयूरिकाबन्धं बद्ध्याट्टालिकाबन्धं बद्धोऽट्टालिकाबन्धं बद्ध इत्युपमाने कर्मणि चेति (३।४।४५) णमुलिति भाष्यम्।

**४३। कर्त्त्रोर्जीवपुरुषयोर्नशिवहोः।**

जीवे पुरुषे च कर्त्तर्य्युपपदे नशिवहिभ्यां स स्यात्। जीवन्नेव नष्टो जीवनाशं नष्टः। पुरुषः सन् वहति पुरुषवाहं वहति।

**४४। ऊर्द्ध्वे शुषिपूरोः।**

ऊर्द्ध्वे कर्त्तरि शुषिपूरोः स स्यात्। ऊर्द्ध्वः शुष्यति ऊर्द्ध्वशोषं शुष्यति। ऊर्द्ध्वपूरं पूर्य्यते।

**४५। उपमाने कर्म्मणि च।**

उपमाने कर्म्मणि कर्त्तरि च धातोः स स्यात्। कर्म्मणि। रत्ननिधायं निहितः। घृतविलायं विलीनः। कर्त्तरि। मृगनाशं नष्टः। अजकनाशं नष्टः।

**४६। कषादिषु यथाविध्यनुप्रयोगः।**

निमूलसमूलयोः कष (३।४।३४) इत्यादिषु णमुल्प्रकृतेरेवानुप्रयोगः कार्य्यः। तथैवोदाहृतम्। स च क्रियासमभिहारानुप्रयोगवद् व्यवधानेऽपि भवति यथा घृतनिधायमुदकं निदधातीति भागवृत्तिः।

**४७। उपदंशस्तृतीयायाम्।**

तृतीयान्तोपपदादुपदंशः स स्यात्। मूलकेनोपदंशं मूलकोपदंशं वा भुङ्क्ते। इतः प्रभृति विकल्पेनोपपदसमासः। मूलकेनोपदंशं भुङ्क्त इति वा।

**४८। हिंसार्थानाञ्च समानकर्म्मकाणाम्।**

तृतीयान्तोपपदे हिंसार्थात् स स्यात्। दण्डोपघातं गाः कालयति (65)। दण्डेनोपघातं वा। समानकर्म्मकाणां किम्? दण्डेनाहत्य व्याघ्रं गाः कालयति।

**४९। सप्तम्याञ्चोपपीड़रुधकर्षः।**

सप्तम्यन्ते तृतीयान्ते चोपपदे उपपूर्वात् पीड़े (66) रुधिकृषिभ्याञ्च स

---

(65) द्रावयतीत्यर्थः।

(66) उपशब्देन केवलं पीड़ेरेव योग इति भागवृत्तौ भर्त्तृहरिः। प्रत्येकं योग इति जयादित्यजिनेन्द्रबुद्धि-हरदत्तमाधवभट्टोजिप्रभृतयः। तथाच धातुवृत्तौ माधवः—'अत्र णमुल्विधौ उपसर्गग्रहणं पीड़ेरेव विशेषणमिति भागवृत्तौ। भट्टिकारस्वतन्त्रं मन्यते यदाह धनुररिभिरसह्यं मुष्टिपीड़ं दधान इति। इदं

स्यात् । पार्श्वोपपीड़ं शेते । पार्श्वयोरुपपीड़ं वा । स्तनोपपीड़माश्लिष्यति । स्तनाभ्यामुपपीड़ं वा । एवं हस्तरोधं दधद्धनुरिति भट्टिः । पाणिकर्षं वटकानत्ति । पाणिना कर्षं वा । विशेषानुपादानात् पाण्युपकर्षम् । (67)

## ५० । समासत्तौ ।

सन्निधानगतौ तृतीयासप्तम्यन्तोपपदाद् धातोः स स्यात् । केशग्राहं युध्यन्ते । केशैर्ग्राहं केशेषु ग्राहं वा ।

## ५१ । प्रमाणे च ।

आयामगतौ पूर्वोक्तोपपदात् स स्यात् । द्व्यङ्गुलोत्कर्षं दण्डिकां (68) छिनत्ति । "द्व्यङ्गुलोत्कर्षमङ्गानि च्छिन्दानो द्विषतां युधि ।"

## ५२ । अपादाने परीप्सायाम् ।

अपादानोपपदाद्धातोस्त्वरायां स स्यात् । शय्योत्थायं भुङ्क्ते ।

## ५३ । द्वितीयायाञ्च ।

कर्मोपपदाद् धातो स्त्वरायां स स्यात् । लोष्टग्राहं युध्यन्ते । इह त्वरायामिति नानुवर्त्तत इत्याहुः । तेनैकवर्जमिति (६।१।१५८) णमुल् सिध्यति ।

## ५४ । स्वाङ्गेऽध्रुवे ।

स्वाङ्गे कर्मणि धातोः स स्यात् । अक्षिनिकोचं हसति । भ्रूक्षेपं वक्ति । अध्रुवे किम् ? उत्क्षिप्य शिरः कथयति । यत्र च्छिन्ने प्राणी म्रियते तद् ध्रुवम् ।

---

तावत् साहसमात्रं यदाचार्य्येण प्रयुक्तस्यातन्त्रत्वाङ्गीकरणम् । यदपि पीड़िनैव सम्बन्धकथनं तदपि न न्याय्यम् । बह्वच्कस्यास्य पूर्वनिपातायोगात् । अतएव वृत्तिन्यासपदमञ्जर्य्यादिषु सम्बन्धोऽङ्गीकृतः ।" इति । अतएवाह हरिदीक्षितः—"धनुररिभिरसह्यं मुष्टिपीड़ं दधान इति भट्टिप्रयोगे तु न णमुलन्तम् । किन्तु घञन्तम् । क्रियाविशेषणत्वाच्च द्वितीयेति बोध्यम् ।" इति (शब्दरत्ने) । किञ्च बाहूपपीड़माश्लिष्य जगाहे द्यां निशाचर इति भट्टौ णमुल्प्रयोगः । दण्डिना च—"तामेव संहितोरुमूरूपपीड़ं भुजोपपीड़ञ्चोपगुह्य तल्पेऽभिरमयन्नल्पामिव तां निशामत्यनैषम् ।" इति (दशकुमारचरिते ।) यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुरिति च भट्टिप्रयोगो भागवृत्तिमतसंवादी । पुरुषोत्तमेन च भर्तृहरिमतमेवानुसृतम् ।

(67) "पाणिभ्यामुपरुध्य हन्त स कथं कण्ठे मया नार्पित इति क्वापि स्यादेवेति भाषावृत्त्यर्थविवृतौ सृष्टिधरचक्रवर्त्ती ।

(68) अल्पो दण्डो दण्डी । दण्डोऽव दण्डिकेति सृष्टिधरः । वृत्तौ तु खण्डिकामिति पाठः ।

## ५५। परिक्लिश्यमाने च।

क्लेशिनि स्वाङ्गे कर्मणि स स्यात्। उरःप्रतिपेषं युद्धन्ते। ध्रुवार्थोऽयं योगः।

## ५६। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः।

कर्मण्युपपदे विशादेः स स्याद् द्रव्यस्य व्याप्तिः क्रियायाश्च नित्यता चेत्। गेहप्रवेशमास्ते। "लतानुपातं कुसुमान्यगृह्णात्।" मण्डपानुप्रपादमास्ते। नद्यवस्कन्दमाचामति। असमासे तु नित्यवीप्सयो (८।१।४) रिति द्विरुक्तिः। गेहं गेहं प्रवेशमिति गेहं प्रवेशं प्रवेशमिति वेत्यादि।

## ५७। अस्यतितृषोः क्रियान्तरे कालेषु।

काले कर्मणि क्रियाव्यवधायकेऽस्यतितृषिभ्यां स स्यात्। द्व्यहात्यासं गाः पाययति। द्व्यहतर्षम्। द्व्यहमतिक्रम्येत्यर्थः।

## ५८। नाम्न्यादिशिग्रहोः।

नाम्नि कर्मण्यादिशिग्रहिभ्याञ्च स स्यात्। नामादेशमाचष्टे। नामग्राहं स्तौति।

## ५९। अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ।

अव्ययोपपदात् कृञः क्त्वाणमुलौ स्यातामनिष्टाख्यानञ्चेत्। ब्राह्मण पुत्रस्ते जातः। किं तर्हि वृषलो नीचैःकृत्याचष्टे? नीचैःकारं वा। उच्चैर्हि प्रियाख्यानं युक्तम्। "आवेदयन्तः क्षितिपालमुच्चैःकारं मृतं रामवियोगशोकात्।" उच्चैःकृत्य वा। नीचैरिहाप्रियाख्यानं युक्तम्।

## ६०। तिर्य्यच्यपवर्गे।

तिर्य्यगुपपदात् कृञस्तौ स्यातां समाप्तौ। तिर्य्यक्कृत्य गतः। तिर्य्यक्कारं वा। समाप्येत्यर्थः।

## ६१। स्वाङ्गे तस्प्रत्यये कृभ्वोः।

तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृभूभ्यां तौ स्याताम्। मुखतःकृत्य गतः। मुखतःकारं वा। पृष्ठतोभूय पृष्ठतोभावं वा।

## ६२। नाधार्थप्रत्यये च्व्यर्थे।

नार्थे धार्थे च च्व्यर्थे उपपदे कृभूभ्यां तौ स्याताम्। नानाकृत्य गतः। नानाकारं वा। नानाभूय नानाभावं वा। धार्थे। द्विधाकृत्य द्विधाकारं वा। द्वैधंभावं द्वैधम्भूय वा। प्रत्ययग्रहणं किम्? पृथक् कृत्वा।

## ६३। तूष्णीमि भुवः।

तूष्णींशब्द उपपदे भुवस्तौ स्याताम्। तूष्णीम्भूयास्ते। तूष्णीम्भावं वा।

## ६४। अन्वच्यानुलोम्ये।

अन्वगुपपदाद् भुवस्तौ स्यातामानुकूल्यञ्चेत्। अन्वग्भूयास्ते। अन्वग्भावं वा। उक्तानि तृतीयाप्रभृतीनि यान्यमा क्त्वाप्रत्ययेन च वा समस्यन्ते।

## ६५। शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्।

शकाद्यर्थोपपदाद् धातो स्तुमुन् स्यात्। शक्नोति भोक्तुं बालकः। अर्हति दातुम्। अस्ति भोक्तुम्। विद्यते भोक्तुम्। अक्रियार्थोपपदार्थोऽयं विधिः।

## ६६। पर्य्याप्तिवचनेष्वलमर्थेषु।

पर्य्याप्तिः परिपूर्णता। तद्वचनेष्वलमर्थविशिष्टेषु धातो स्तुमुन् स्यात्। अलं भोक्तुम्। पारयति दातुम्। पर्य्याप्तिवचनेषु किम्? अलं भुक्त्वा। अलं कृत्वा। गतं धातुसम्बन्धतुमर्थाभ्याम्।

## ६७। कर्त्तरि कृत्।

अनुक्तार्थाः कृतः कर्त्तरि स्युः। ओदनस्य पाचकः। पक्ववान्। नन्दनः। ग्राही। पचः।

(क) अव्ययकृतो भावे भवन्तीत्युक्तम्।

## ६८। भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा।

सप्तैते कर्त्तरि वा स्युः। भव्योऽयम्। भव्यमनेन। गेयोऽयं साम्नाम्। गेयान्यनेन सामानि।

६९। लः कर्मणि च भावे चाकर्मकेभ्यः।

लकाराः कर्त्तरि स्युः कर्मणि च। अन्नं पचति। पच्यतेऽन्नम्। अकर्मकेभ्यो भावे कर्त्तरि च। शेते विप्रः। शय्यते विप्रेण।

७०। तयोरेव कृत्यक्तखलर्थाः।

एते भावकर्मणोरेव स्युः। कर्त्तव्यः कटोऽनेन। कार्य्यः। कृतः। खलर्थे। ईषत्करः। अकर्मकाद् भावे। भवितव्यमनेन। भूतम्। दुराढ्यम्भवम्। ईषदाढ्यम्भवम्।

७१। आदिकर्मणि क्तः कर्त्तरि च।

क्रियारम्भे क्तः कर्त्तरि स्यात्। भावकर्मणोश्च। प्रभुक्त ओदनं विप्रः। प्रभुक्त ओदनो विप्रेण।

७२। गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च।

एभ्यः क्तः कर्त्तरि स्यात्। ग्रामं गतः पान्थः। प्रस्थितः। यातः। अकर्मकात्। आसितः। स्थितः। आङ्पूर्वश्लिषादेः। आश्लिष्टः कन्याम्। अतिशयितो गुरुम्। उपास्थितस्तम्। उपासितस्तम्। अनूषितस्तम्। अनुजातस्तम्। आरूढस्तरुम्। अनुजीर्णस्तम्। चकाराद् यथाप्राप्तञ्च। गतो ग्रामोऽनेन। गतमनेन। चकारोऽत्रानुवर्त्तते। ततोऽधिकविधानाद् व्यवसितप्रतिपन्नादिसिद्धिः। (69)

७३। दाशगोघ्नौ संप्रदाने।

एतावच्च निपात्येते। गुणवान् ब्राह्मणो दाशः (70)। गोघ्नोऽतिथिः।

७४। भीमादयोऽपादाने।

एतेऽत्र साधवः स्युः। भीमः। भीष्मः। भयानकः। रुद्रः। स्खलतिः। रक्षः। प्रपतनः। समुद्रः।

७५। ताभ्यामन्यत्रोणादयः।

सम्प्रदानापादानाभ्यामन्यत्रोणादयो ज्ञेयाः। वृत्तं वर्त्म। भसितं भस्म।

---

(69) व्यवसितप्रतिपन्नादिसिद्धिरिति पाठान्तरम्।

(70) दाश दान इत्यस्माद् दीयतेऽस्मायिति दाशशब्दः सम्प्रदाने

## ७६ । क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।

एभ्योऽधिकरणे क्तः स्यात् । चकाराद् यथाप्राप्तञ्च । ध्रौव्यार्था अकर्मकाः । इदमेषामासितम् । इहानेनासितम् । अयमत्रासितः । इदमहेः सृप्तम् । इदमहिना सृप्तम् । अयमहिना सृप्तो देशः । इहाहिः सृप्तः । भक्षणार्थात् । इदमस्य भुक्तं स्थानम् । इहानेन भुक्तम् । भुक्तोऽनेनौदनः । इह च विभक्ता भ्रातरो भुक्ता ब्राह्मणाः पीता गाव इति भावक्तान्तान् मत्वर्थीयोऽकारः । (71) उक्ताः क्तः ।

## ७७ । लस्य ।

अधिकारोऽयम् ।

## ७८ । तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ।

लस्य स्थानेऽमी तिबादयःस्युः । भवति भवतो भवन्ति । पचते पचेते पचन्ते । भूयते भावे । पच्यते कर्म्मणि । एवं लिङादावुन्नेयम् ।

## ७९ । टित आत्मनेपदानां टेरे ।

टिल्लकारात्मनेपदे टिभागस्यैकारादेशः स्यात् । पचते । पचन्ते । पेचाते । पक्तासाथे । पच्यते । कथं पचमानः ? प्रकृतस्य तङो ग्रहणात् ।

## ८० । थासः से ।

टिल्लकारस्य थासः सेः स्यात् । पचसे । क्रियसे ।

## ८१ । लिटस्तझयोरेशिरेच् ।

लिटो यौ तझौ तयोरेशिरेचौ स्याताम् । पेचे । पेचिरे ।

## ८२ । परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।

लिटः परस्मैपदानां णलादयः स्युः । अर्थान्तरतम्येन स्थान्यादेशव्यवस्था ।

---

(71) एवञ्च स वर्त्तिलिङ्गी विदितः समाययावित पातुं न प्रथमं व्यवस्यति जलं युष्माष्वपीतेषु येत्यादि प्रयोगाः समाधेया इत्याहुः ।

शब्दसाम्याभावात्। चकार चक्रतुश्चक्रुः। चकर्थ चक्रथुः। थस्यान्तादेशे प्रयोजनाभावात् सर्वादेशोऽकारः। चक्र। चकार चकर चकृव चकृम।

८३। विदो लटो वा।

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद विदतुर्विदुः। वेत्थ विदथुर्वेद। वेद विद्व विद्म। पक्षे वेत्ति वित्तः विदन्तीत्यादि।

८४। ब्रुवःपञ्चानामादित आहो ब्रुवः।

ब्रूञो लटः परस्मैपदादिपञ्चकस्य पञ्चैव णलादयो वा स्युः। ब्रुवश्चाहादेशः। आह। आहतुः। आहुः। आत्थ। आहथुः। पक्षे ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रवीषि। ब्रूथः।

८५। लोटो लङ्वत्।

लोटो लङ्वत् कार्य्यं स्यात्। तांतंतसलोपश्च। पचताम्। पचतम्। पचत। पचाव। पचाम।

८६। एरुः।

लोड़िकारस्य उः स्यात्। पचतु। पचन्तु।

( क ) हिन्योरुत्वप्रतिषेधो वक्तव्यः। लुनीहि। करवाणि। पचानि।

८७। सेर्ह्यपिच्च।

लोटः सिपो हिः स्यात्। स चापित्। लुनीहि। राध्नुहि।

८८। वा छन्दसि।

छान्दसम्।

८९। मेर्निः।

लोटो मिपो निः स्यात्। भवानि। पचानि।

९०। आमेतः।

लोड़ेकारस्याम् स्यात्। कुरुताम्। कुर्वाताम्।

९१। सवाभ्यां वामौ।

लोटः सवाभ्यामेकारस्य वामौ स्याताम्। आद्यं कुरुष्व। कुरुध्वम्।

## ९२ । आडुत्तमस्य पिच्च ।

लोडुत्तमपुरुषस्याड़ागमः स्यात् । स च पित् । करवाणि । तनवानि । करवाव । तनवाव ।

## ९३ । एत ऐ ।

लोडुत्तमपुरुषस्य एत ऐकारादेशः स्यात् । आमपवादः । तनवै । तनवावहै । अत्र लेटः पञ्चसूत्री छन्दोभागः (72) ।

लोपः परस्मैपदेषु (३।४।९७)। स उत्तमस्य (३।४।९८)त्येतद्द्वयमधिक्रियते ।

## ९९ । नित्यं ङितः ।

ङितो लकारस्योत्तमपुरुषसकारस्य लोपः स्यात् । नित्यग्रहणमेकवृत्तौ (73) सार्थकम् । अपचाव । अपचाम । पचेव । पचेम । अपाक्ष्व । अपाक्ष्म । अपक्ष्याव । अपक्ष्याम ।

## १०० । इतश्च ।

ङिल्लकारस्येकारस्य लोपः स्यात् । अपचत् । पचेत् । अपचः । परस्मैपदेष्वित्येव । अपचावहि ।

## १०१ । तस्थस्थमिपां तान्तन्तामः ।

ङिल्लकारस्य तसादेस्तामादयः स्युः । अपचताम् । अपचतम् । अपचत । अपचम् ।

## १०२ । लिङः सीयुट् ।

लिङः सीयुड़ागमः स्यात् । कुर्वीत । कुर्वीयाताम् । कृषीष्ट । कृषीयास्ताम् ।

---

(72) । इयञ्च सा पञ्चसूत्री—

९४ । लेटोऽडाटौ । ९५ । आत ऐ । ९६ । वैतोऽन्यत्र । ९७ । इतश्च लोपः परस्मैपदेषु । ९८ । स उत्तमस्य ।

(73) एकवृत्ती मुख्यवृत्तौ प्रधानवृत्तौ यत्र च्छान्दसलौकिकभागौ विभ्रियेते इति यावत् । छन्दसि सलोपस्य पाक्षिकत्वाद् भाषायान्तु नित्यत्वात् । केवललौकिकवृत्तौ तु नित्यग्रहणं निरर्थकमिति भावः । Vide the note on 1. 1. 16.

## १०३ । यासुट् परस्मैपदेषूदात्तो ङिच्च ।

लिङः परस्मैपदेषु यासुडागमः स्यात् । स च ङित्कार्य्यं करोति । कुर्य्यात् । कुर्य्याताम् । कुर्य्युः । क्रियात् । क्रियास्ताम् । क्रियासुः ।

## १०४ । किदाशिषि ।

आशिषि लिङो यासुट् कित् स्यात् । इज्यात् । जागर्य्यात् । आशिषि किम् ? विध्यादौ । यजेत् । जागृयात् ।

## १०५ । झस्य रन् ।

लिङो झस्य रन् स्यात् । पचेरन् । कुर्वीरन् । कृषीरन् ।

## १०६ । इटोऽत् ।

लिङ इटोऽत् स्यात् । कुर्वीय । कृषीय ।

## १०७ । सुट तिथोः ।

लिङस्तथयोः सुडागमः स्यात् । कृषीष्ट । कृषीष्ठाः ।

## १०८ । झेर्जुस् ।

लिङो झि जुंस् स्यात् । पचेयुः । पच्यासुः ।

## १०९ । सिजभ्यस्तविदिभ्यश्च ।

एभ्यः परस्य ङिल्लकारस्य झेर्जुस् स्यात् । सिच् । अकार्षुः । अभ्यस्तस्य । अजागरुः । विदेः । अविदुः ।

## ११० । आतः ।

आदन्तादेव सिज्लुगन्ताज् झेर्जुस् स्यात् । अदुः । अधुः । नेह । अभूवन् ।

## १११ । लङः शाकटायनस्यैव ।

## ११२ । द्विषश्च ।

आदन्ताद् धातो र्द्विषश्च परस्य लङः शाकटायनस्य मतेन झेर्जुस् स्यात् । अयुः । अवुः । अद्विषुः । अन्येषाम् । अयान् । अवान् । अद्विषन् । उक्तास्तिङः ।

## ११३ । तिङ् शित् सार्वधातुकम् ।

तिङ् शिच्च प्रत्ययः सार्वधातुकनामा स्यात् । नयति । रोदिति । पच्यते । उत्पिबः । शूरम्मन्यः । कुर्वाणः । कुर्वन् ।

## ११४ । आर्द्धधातुकं शेषः ।

धातोरित्येवं (३।१।७) विहितस्तिङ्शिद्भ्यामन्यः शेष आर्द्धधातुकनामा स्यात् । भविता । भविष्यति । भवितव्यम् । भवितुम् ।

## ११५ । लिट् च ।

एवकारोऽनुवर्त्तते । लिडादेश आर्द्धधातुकसंज्ञ एव स्यात् । पेचिथ । शेकिथ । जग्ले ।

## ११६ । लिङाशिषि ।

आशीर्लिङार्द्धधातुकसंज्ञ एव स्यात् । पविषीष्ट । आशिषि किम् ? पुनीयात् ।

## ११७ । छन्दस्युभयथा ।

छान्दसम् । उक्तं धातोः (३।१।७) ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ तृतीयाध्यायस्य चतुर्थः पादः ॥ ३।४ ॥ समाप्तश्च तृतीयोऽध्यायः ।

धातुसम्बन्धपादश्च समाप्तः ।

अथ

# भाषावृत्तिः ।

## चतुर्थोऽध्यायः । प्रथमः पादः ।

### १ । ङ्याप्प्रातिपदिकात् ।

स्वादिटाबादितद्धितानां प्रकृतिरधिक्रियते ।

### २ । स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्-ङसोसाम्ङ्योस्सुप् ।

एते सुपो ङ्यन्तावन्तप्रातिपदिकेभ्यः परे स्युः । नदी नद्यौ नद्यः । रामा रामे रामाः । वृक्षः वृक्षौ वृक्षाः ।

### ३ । स्त्रियाम् ।

अधिकारोऽयम् । समर्थानां प्रथमाद्वेति (४।१।८२) यावत् ।

### ४ । अजाद्यतष्टाप् ।

अजादेर्गणाददन्ताच्च स्त्रियां टाप् स्यात् । अजा । अश्वा । कोकिला जातिः । पूर्वहायना टित् । ज्येष्ठा कनिष्ठा मध्यमा पुंयोगे । दंष्ट्रा ।

(1) सम्भस्त्राजिनशणपिण्डेभ्यः फलात् । सम्फलेत्यादि ।

(2) सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात् । सत्पुष्पा । एकपुष्पा ।

(3) शूद्रा चामहत्पूर्वा जातिः । महत्पूर्वस्य तु महाशूद्री ।

(4) मूलान्नञः । अमूला । अजादिपाठोऽयं जात्यादिलक्षणङीषादेर्बाधकः । अदन्तात् । खट्वा । देवदत्ता । तपरः किम् ? शंस्याः स्त्री ।

### ५ । ऋन्नेभ्यो ङीप् ।

ऋकारनकारान्तेभ्यः स्त्रियां ङीप् स्यात् । कर्त्री । दण्डिनी ।

## ६ । उगितश्च ।

उगितो ङीप् स्यात् । गोमती । श्रेयसी । पचन्ती । अतिभवती ।

(क) धातोरुगितः प्रतिषेधः । उखास्रत् । पर्णध्वत् ।

(ख) अञ्चतेश्चोपसंख्यानम् । प्राचो । प्रतीची ।

## ७ । वनो र च ।

वन्नन्ताद् ङीप् स्याद्रश्चान्तादेशः । धीवरी । पीवरी । परलोकदृश्वरी । स्वर्लोकदृश्वरी । सहकृत्वरी । सुत्वरी । कथमतिशुनी निःशुनी ? अर्थवद्-ग्रहणात् ।

(क) वनो न हश इति वक्तव्यम् । हशः परो यो वंस्तदन्तान् ङीब्रौ न स्तः । राजयुध्वा स्त्री । शर्वरीशब्दस्त्वौणादिको वरट्प्रत्ययान्तः ।

## ८ । पादोऽन्यतरस्याम् ।

पादन्तान् ङीप् स्याद्वा । द्विपदी द्विपाद्वा ।

## ९ । टाबृचि ।

ऋच्यर्थे पादन्तात् टाप् स्यात् । द्विपदा त्रिपदा ऋक् ।

## १० । न षट्स्वस्रादिभ्यः ।

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च (1) स्त्रीप्रत्ययौ न स्यात् । पञ्च स्त्रियः । एवं सप्त । नव । कति । तदन्तेऽपि निषेधः । प्रियपञ्चानो वेश्याः । स्वस्रादेः । स्वसा । तिस्रः । चतस्रः । ननान्दा । दुहिता । याता । माता । नप्तेति भागुरिः । (2)

## ११ । मनः ।

मन्नन्तान् ङीब्न स्यात् । पामा । पामानौ । सीमा । सीमानौ । तदन्तेऽपि । अतिपटिमा । अतिपटिमानौ ।

---

(1) "स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥" इति ।

(2) अन्ये तु नप्त्रीति । यथाचामरः—नप्त्री पौत्री सुतात्मजेति ।

## १२ । अनो बहुव्रीहेः ।

अन्नन्ताद् बहुव्रीहे र्ङीन्न स्यात् । सुपर्वा । सुपर्वाणौ । बहुव्रीहेः किम् ? सुराज्ञी । (3)

## १३ । डाबुभाभ्यामन्यतरस्याम् ।

मन्नन्तादन्नन्ताच्च बहुव्रीहेर्डाब् वा स्यात् । सीमाः सीमानः । सुपर्वाः सुपर्वाणः । अनिनस्मन्ग्रहणान्यर्थवद्ग्रहणाभावात् । सुपटिमाः सुपटिमानः स्त्रियः । निर्गरिमाः निर्गरिमाणः । अन्यतरस्यांग्रहणाड् डाप्प्रतिषेधाभ्यां मुक्ते ङीब्नाविति भाष्यम् । बहुसुत्वरी नगरी ।

## १४ । अनुपसर्जनात् ।

वक्ष्यमाणस्त्रीप्रत्यय उपसर्जनान्न स्यात् । बहुकुरुचरा नगरी । बहुकुक्कुटा अटवी ।

## १५ । टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्-क्वरप्ख्युनाम् । (4)

एतदन्तेभ्यः स्त्रियां ङीप् स्यात् । टित् । कुरुचरी । गायनी । सायन्तनी । टित्वसामर्थ्याद् नदट् नदी। घेट् स्तनन्धयी। ढः । वैनतेयी । अण् । कुम्भकारी। भङ्गकारी सेना । औपगवी । अञ् । औत्सी । वैदी । द्वयसच् । जानुद्वयसी । दघ्नच् । जानुदघ्नी । मात्रच् । जानुमात्री । तयप् । द्वितयी । द्वयी । उभयी । पञ्चतयी । ठक् । आह्निकी । ठञ् । लावणिकी । कञ् । यादृशी । तादृशी । क्वरप् । नश्वरी । जित्वरी । गत्वरी । ख्युन् । सुभगङ्करणी ।

(क) नञ्स्नञीकक: । स्त्रैणी । पौंस्नी । शाक्तीकी । तार्त्तीयीकी । द्वैतीयीकी । तीयादीकक् (४।२।७, वा) ।

## १६ । यञश्च ।

अपत्ययञन्तात् ङीप् स्यात् । गार्गी । वात्सी ।

---

(3) एवमतिपर्वणी निःशर्मणीत्यादयोऽपि तत्पुरुष एवेति ।

(4) टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप इत्येवार्षं सूत्रम् । ख्युनामिति तु बौद्धैः प्रक्षिप्तम् ।

## १७ । प्राचां ष्फ स्तद्धितः ।

यञन्तात् तद्धितसंज्ञकः ष्फः स्यात् । षित्त्वान् ङीष् । गार्ग्यायणी । वात्स्यायनी । प्राचां किम् ? गार्गी । वात्सी ।

## १८ । सर्वत्र लोहितादिकतन्तेभ्यः ।

गर्गाद्यन्तर्गणाल्लोहितादेः कतशब्दान्ताद् यञन्तान् नित्यं ष्फः स्यात् । लौहित्यायनी । सांशित्यायनी । कात्यायनी । सर्वत्रग्रहणाच्चाव्विषयेऽपि । आवट्यायनीति स्मृतिः ।

## १९ । कौरव्यमाण्डूकाभ्याञ्च ।

ण्यान्तात् कुरुशब्दादपत्याणन्ताच्च मण्डूकात् ष्फः स्यात् । कौरव्यायणी । माण्डूकायनी । तस्येद (४।३।१२०) मित्यणन्तात्तु कौरवी सेना । माण्डूकी भार्य्या ।

(क) इञन्तादासुरेरुपसंख्यानम् । आसुरायणी कन्या । ष्फस्य तद्धितत्वे यस्येति चेति (६।४।१४८) लोपः ।

## २० । वयसि प्रथमे ।

प्रथमवयोवचनान् ङीप् स्यात् । प्रथमग्रहणमचरमोपलक्षणार्थम् (5) । कुमारी । वर्करी । तरुणी । वधूटी । चिरण्टी । कथं कन्या ? निपातनात् ।

## २१ । द्विगोः ।

द्विगो ङीप् स्यात् । पञ्चपूली । त्रिलोकी । षड्चरी । त्रिफलेति तु वैद्यकरूढ़ेः ।

## २२ । अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि ।

एतदन्ताद् द्विगोस्तद्धितलुकि ङीप् न स्यात् । अपरिमाणान्तात् । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । त्रिशता । द्विवर्षा । कालः संख्या च न परिमाणम् । विस्ताद्यन्तात् । द्विविस्ता । द्व्याचिता । त्रिकम्बल्या । तद्धित-लुकि किम् ? समाहारे दशशती ।

---

(5) "बाल्यं स्यात् पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरं मा पञ्चदशाद् यौवनं स्याद् ततः परम् ॥"

## २३ । काण्डान्तात् क्षेत्रे ।

काण्डान्ताद् द्विगोस्तद्धितलुकि ङीप् न स्यात् । द्वे काण्डे प्रमाणमस्याः । द्विकाण्डा क्षेत्रभक्तिः । प्रमाणे लो द्विगो (५।२।३७, वा) रिति मात्रचो लुक् । क्षेत्रे किम् ? द्विकाण्डी रज्जुः ।

## २४ । पुरुषात् प्रमाणेऽन्यतरस्याम् ।

पुरुषात् प्रमाणार्थाद् द्विगोस्तद्धितलुकि ङीप् वा स्यात् । द्विपुरुषी द्विपुरुषा वा परिखा ।

## २५ । बहुव्रीहेरूधसो ङीष् ।

ऊधसन्ताद्बहुव्रीहेर्ङीष् स्यात् । डाप्-प्रतिषेध-ङीपां बाधा । कुण्डोध्नी । घटोध्नी ।

## २६ । संख्याव्ययादेर्ङीप् ।

एतदादेर्बहुव्रीहेरूधसन्तान् ङीप् स्यात् । चतुरूध्नी । निरूध्नी । स्वरे भेदः ।

## २७ । दामहायनान्ताच्च ।

संख्यादेरित्येव । दामहायनान्ताद् बहुव्रीहेर्ङीप् स्यात् । द्विदाम्नी । त्रिदाम्नी । हायनान्ताद्वयस्यभिधानम् । त्रिचतुर्भ्यां णत्वञ्च । द्विहायनी । त्रिहायणी । चतुर्हायणी ।

## २८ । अन उपधालोपिनोऽन्यतरस्याम् ।

उपधालोपयोग्यादन्नन्ताद्बहुव्रीहेर्वा ङीप् स्यात् । सुराज्ञी । बहुतक्ष्णी । सुदाम्नी । भूरिधाम्नी विद्या । ङीपा मुक्ते डाप्-प्रतिषेधौ । सुराजे सुराजाना-विति । उपधालोपिनः किम् ? सुपर्वाणी सुपर्वे ।

## २९ । नित्यं संज्ञाच्छन्दसोः ।

ङीप् स्यात् । सुराज्ञी नाम नगरी । छन्दसि नोदाह्रियते ।

## ३० । केवलमामकभागधेयपापापरसमानार्य्यकृतसुमङ्गल-भेषजाच्च ।

एभ्यो नवभ्यः संज्ञायां ङीप् स्यात् । केवली नाम ज्योतिः । मामकी

देवता । पापी । अपरी । समानी छन्दः । सुमङ्गली । संज्ञायामित्येव । मासिका बुद्धिः । सुमङ्गला नारी ।

## ३१ । रात्रेश्चाजसौ ।

रात्रिशब्दात् संज्ञायां ङीप् स्यात् । रात्री । अजसौ किम् ? रात्रयः ।

(क) अजसादिष्विति वक्तव्यम् । रात्रिम् । रात्रिभिरित्यादि । कथं तिमिरपटलैरवगुण्ठिताश्च रात्रय इति ? कृदिकारादिति (४।१।४५, ग, सू) ङीष् ।

## ३२ । अन्तर्वत्पतिवतोर्नुक् ।

अनयो ङीप् स्यान्नुगागमश्च । मतोर्वत्वञ्च निपातनात् । अन्तर्वत्नी गर्भिणी । पतिवत्नी सभर्त्तृका ।

## ३३ । पत्युर्नो यज्ञसंयोगे ।

पत्युर्ङीप् स्यान्नश्चान्तादेशो यज्ञसंयोगश्चेत् । पत्नी ब्राह्मणस्य । कथं पत्नी शूद्रस्येति ? उपमानात् । (6)

## ३४ । विभाषा सपूर्वस्य ।

सपूर्वपदस्य पत्युर्ङीन्नकारौ वा स्याताम् । वृद्धपत्नी वृद्धपतिः । "दृष्टा मया रामपतिः प्रमन्युः ।"

## ३५ । नित्यं सपत्न्यादिषु ।

एषु नित्यं ङीम्नकारौ स्याताम् । सपत्नी । "कामिकपत्नीव्रतदुःखशीलाम् ।" वीरपत्नी । भ्रातृपत्नी । पुत्रपत्नी ।

## ३६ । पूतक्रतोरै च ।

अतो ङीप् स्यादैकारश्चान्तादेशः । पूतक्रतोर्भार्य्या पूतक्रतायी ।

## ३७ । वृषाकप्यग्निकुसितकुसीदानामुदात्तः ।

एषां ङीप् स्यादैकारश्चान्तादेशः । वृषाकपायी वृषाकपे भार्य्या । अग्नायी ।

---

(6) उपचारादिति पाठान्तरम् ।

३८ । मनो रौ वा ।

मनोर्ङीप् स्यादैकारौकारादेशौ च । मनोः स्त्री मनायी मनावी । मनुरपीत्येके । नेत्यन्ये ।

३९ । वर्णादनुदात्तात् तोपधात्तो नः ।

तोपधाद्वर्णवाचिनो ङीप् स्याद्वा । तकारस्य च नकारः । एनी । श्येनी । हरिणी । रोहिणी । पक्ष एता । श्येता । हरिता । रोहिता । अनुदात्तात् किम् ? श्वेता । अत इत्येव । शितिः स्त्री ।

(क) असितपलितयोः प्रतिषेधः । असिता । पलिता ।

(ख) क्नमित्येके । "गतो गणस्तूर्णमसिक्निकानाम् ।" पलिक्नी ।

(ग) पिशङ्गादुपसंख्यानम् । "मध्येसमुद्रं ककुभः पिशङ्गीः ।"

४० । अन्यतो ङीष् ।

तोपधादन्यतो वर्णादनुदात्तान् ङीष् स्यात् । सारङ्गी । कल्माषी । शबली । अनुदात्तात् किम् ? कृष्णा । कपिला ।

४१ । षिद्गौरादिभ्यश्च ।

षितो गौरादेश्च ङीष् स्यात् । नर्त्तकी । रजकी । खनकी । दंष्ट्रेत्यजादि-पाठात् । गौरी । मत्सी । मनुषी । द्रोणी । आमलकी । वदरी । धातकी । विम्बी । रेवती । पिप्पली । पृथिवी । शमी ।

४२ । जानपदकुण्डगोणस्थलभाजनागकालनीलकुशका-मुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु ।

जानपदाद्येकादशकाद् यथाक्रमं वृत्त्यादावर्थे ङीष् स्यात् । जानपदी वृत्तिः । कुण्डी भाण्डम् । गोणी आवपनम् । स्थली अकृत्रिमा भूः । भाजी श्राणा । पक्वेत्यर्थः । नागी स्थौल्यवती । काली कृष्णवर्णा ।

(क) नीलात् प्राण्योषध्योः । नीली वड़वा । नीली ओषधिः ।

(ख) संज्ञायां वेत्येके । नीली नीला । कुशी लोहविकारः । कामुकी मैथुनेच्छावती । कवरी केशवेशः ।

### ४३ । शोणात् प्राचाम् ।

शोणी । प्राचां किम् ? शोणा ।

### ४४ । वोतो गुणवचनात् (7) ।

गुणवचनादुदन्ताद्वा ङीष् स्यात् । पट्वी पटुः । तन्वी तनुः । गुर्वी गुरुः । 

(क) खरुसंयोगोपधयोः प्रतिषेधः । खरुः । कद्रुः । पाण्डुः स्त्री ।

### ४५ । बह्वादिभ्यश्च ।

बह्वादेर्वा ङीष् स्यात् । बह्वी । बहवः । रात्रिः । रात्री । जग्रसे कालरात्रीवेति भट्टिः । एवं शकटि । शाटि । शक्ति । शारि । यष्टि । पद्धति । युवति (8) । कल्याण । उदार । चण्ड । विकट । विशङ्कट ।

(1) इतः प्राण्यङ्गात् । कटी । धमनी । श्रोणी ।

(2) कृदिकारादक्तिनः । धरणी ।

(3) सर्वतोऽक्तिन्नर्थादित्येके । रजनी । राजी । सुरभी । भूमी । अक्तिन्नर्थात् किम् ? अकरणिः । इतश्छन्दःसूत्रे हे ।

### ४६ । नित्यञ्छन्दसि ।

### ४७ । भुवश्च ।

### ४८ । पुंयोगादाख्यायाम् ।

यत् पुमाख्यं पुंयोगात् स्त्रियां वर्त्तते ततो ङीष् स्यात् । गणकी । प्रष्ठी ।

(क) गोपालिकादीनां प्रतिषेधः । गोपालिका स्त्री ।

(ख) सूर्य्याद् देवतायां चाप् वक्तव्यः । सूर्य्यस्य देवता स्त्री सूर्य्या । अन्या तु सूरी ।

---

(7) यत् तु सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृति गुणः ॥१॥ इति, उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि । वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥२॥ इति वा गुणलक्षण 'तदेकदेशयुक्तिमात्रम् । बहुविशेषणानां वैयर्थ्यात् । भाष्यकृताऽव्याख्यानाच्च ।" इति नागेशः । वस्तुतस्त्वत्र गुणवचनशब्देन कृदन्त-तद्धितान्त-समस्त-सर्वनाम-जाति-संख्या संज्ञाशब्दातिरिक्तशब्दो गृह्यते । आकड़ारसूत्र-(१।४।१) भाष्यत स्तथैव लाभात् । अतएव दयालुशयालुप्रभृतीनां व्यावृत्तिः ।

(8) युवतिशब्दस्यैव पाठः । तेन पक्षे ङीष् । युवती । नतु युवन्नित्यस्य । तेन यूनीति रूपमपाणिनीयम् । Vide note on 4. 1. 77.

४६ । इन्द्रवरुणभवशर्व्वरुद्रमृड़हिमारण्ययवयवनमातुलाचार्य्याणामानुक् ।

एभ्यो ङीष् स्यादानुगागमश्च । इन्द्रादेः स्त्री इन्द्राणी । वरुणानी । मृड़ानी ।

(क) हिमारण्ययोर्महत्त्वे । हिमानी । अरण्यानी ।

(ख) यवाद्दोषे । यवानी ।

(ग) यवनाल्लिप्याम् । यवनानी लिपिः (9) ।

(घ) उपाध्यायमातुलाभ्यामानुग्वा । उपध्यायानी । मातुलानी । पक्षे उपाध्यायी । मातुली ।

(ङ) आचार्य्यादणत्वञ्च । आचार्य्यानी ।

(च) अर्य्यक्षत्रियाभ्यां वा ङीषानुकौ । अर्य्या अर्य्याणी । क्षत्रिया क्षत्रियाणी । पुंयोगे त्वर्य्यी क्षत्रियी ।

५० । क्रीतात् करणपूर्व्वात् ।

ङीष् स्यात् । धनक्रीती । मनसाक्रीती । सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसीति टाबन्तेन समासः ।

५१ । क्तादल्पाख्यायाम् ।

करणपूर्व्वात् क्तादल्पाख्यायां ङीष् स्यात् । अभ्रविलिप्ती द्यौः । सूपविलिप्ती पात्री । अक्षरविलिप्ती जिह्वा ।

५२ । बहुव्रीहेश्चान्तोदात्तात् ।

अन्तोदात्तात् क्तान्तबहुव्रीहे ङीष् स्यात् । उरुभिन्नी । केशविलूनी । इह पाणिगृहीती भार्य्याविशेषे । दन्तजाताऽकृतामासजाताच्छणजाता-सुखजातासुकृतादयस्त्वजादिपाठात् ।

---

(9) Some say यवनानी लिपिः refers to the Greek alphabet or the letters used by the Bactrians. Others assert that the Egyptian Hieroglyphics were meant by it.

### ५३। अस्वाङ्गपूर्वपदाद्वा।

अस्वाङ्गपूर्वपदादनन्तरो ङीष् वा स्यात्। सारङ्गजग्धी सारङ्गजग्धा वा। सुरापीती सुरापीता वा।

### ५४। स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। (10)

उपसर्जनस्वाङ्गात् प्रातिपदिकाद्वा ङीष् स्यात्। चन्द्रमुखी चन्द्रमुखा वा। निष्क्रान्ता केशान् निष्केशी निष्केशा वा यूका। असंयोगोपधात् किम्? सुगुल्फा। सुपार्श्वा। उपसर्जनात् किम्? दीर्घशिखा।

(क) अङ्गगात्रनेत्रकण्ठेभ्योऽपि वेत्येके। मृदङ्गी मृदङ्गा वेत्यादि। (11)

### ५५। नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च।

नासिकाद्यन्ताद्वा ङीष् स्यात्। तुङ्गनासिकी तुङ्गनासिका वा। तनूदरी तनूदरा वा। बिम्बोष्ठी बिम्बोष्ठा वा।

(क) पुच्छाच्च। कल्याणपुच्छी कल्याणपुच्छा वा।

(ख) कबरमणिविषशरेभ्यो नित्यम्। कबरपुच्छी। शरपुच्छी।

(ग) उपमानात् पक्षात् पुच्छाच्च। उलूकपक्षी शाला। काकपुच्छी सेना।

### ५६। न क्रोडादिबह्वचः।

क्रोडाद्यन्तात् बह्वजन्ताच्च स्वाङ्गादिति (४।१।५४) ङीष् न स्यात्। सुक्रोडा। कल्याणखुरा। सुगुदा। दुर्भगा। सुभगा। आकृतिगणोऽयम्। बह्वचः। पृथुजघना।

### ५७। सहनञ्विद्यमानपूर्वाच्च।

सहादिपूर्वादुक्तो ङीष् न स्यात्। सकेशा। अकेशा। विद्यमानकेशा। अनासिका।

---

(10) अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टञ्च तेन चेत् तत् तथा युतमिति स्वाङ्गलक्षणम्।

(11) एतद्धि भाष्यानुक्तम्। वार्त्तिकपाठेऽपि नास्ति। अनुक्तसमुच्चयार्थकेन तर्हि चकारेण संग्राह्यमित्येके। अप्रमाणमित्यन्ये। कवयस्तु प्रयुञ्जते। तथाच किमिदं किन्नरकण्ठि सुप्यत इति, बध्नाति मे बन्धुरगात्रि चक्षुरिति, यतः सतां सन्नतगात्रि सङ्गतमिति च कालिदासः।

## ५८। नखमुखात् संज्ञायाम्।

आभ्यां नाम्नि नास्ति ङीष्। शूर्पणखा। कालमुखा। दीर्घणखा।

## ५९। दीर्घजिह्वी च छन्दसि।

छन्दः सूत्रम्।

## ६०। दिक्पूर्वपदान् ङीप्।

इह स्वाङ्गादिति (४।१।५४) ङीषि सिद्धे दिक्पूर्वपदान् ङीबिति स्वरार्थम्। प्राङ्मुखी प्राङ्मुखा।

## ६१। वाहः।

वाह इत्यपि छान्दसम्। वहेश्छन्दसीति (३।२।६४) ण्विविधानात्।

## ६२। सख्यशिश्वीति भाषायाम्।

सखी। अशिश्वी। भाषायां स्यात्। न वेदे।

## ६३। जातेरस्त्रीविषयादयोपधात्। (12)

जातिवाचिनः स्त्रियां ङीष् स्यात्। कुक्कुटी। मयूरी। यक्षी। सर्पी। विहगी। भूती। प्रेती। भ्रमरी। पुरी। तटी। दूती। असुरी। कुष्माण्डी। नटी। शाटी। नाड़ायनी। कठी। अस्त्रीविषयात् किम्? सर्वदा स्त्रीलिङ्गान्मा भूत्। मक्षिका। पिपीलिका। माला। बलाका। अयोपधात् किम्? क्षत्रिया।

(क) योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणां ङीष्। हयी। गवयी। मुकयी। मत्सी। मनुषी।

## ६४। पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च।

पाकाद्युत्तरपदान् ङीष् स्यात्। स्त्रीविषयार्थं वचनम्। ओदनपाकी। पिष्टकपाकी। श्लिष्टपर्णी। शङ्खपुष्पी।

---

(12) आकृतिग्रहणा जाति र्लिङ्गानाञ्च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह॥ १॥
प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः। असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥ २॥
इति जातिलक्षणे।

### ६५ । इतो मनुष्यजातेः ।

इदन्तान् मनुष्यजातिवाचिनो ङीष् स्यात् । दाक्षी । अवन्ती । कुन्ती । पुनर्जातिग्रहणाद् योपधादपि भवति । औदमेयी । इतः किम् ? दरत् । नृजातिः किम् ? तित्तिरिः । अगोत्रेऽन्ताच्च ङीष् स्यात् । सौतङ्गमी पुरी ।

### ६६ । ऊङुतः ।

उदन्तान् मनुष्यजातेरूङ् स्यात् । कुरूः । धीवन्धूः । ब्रह्मबन्धूः (13) । भीरूः । (14)

(क) अप्राणिजातेश्चारज्ज्वादीनाम् । अलावूः । कर्कन्धूः । अप्राणिजातिः किम् ? आखुः । कृकवाकुः । रज्ज्वादिषु । रज्जुः । हनुः ।

### ६७ । बाह्वन्तात् संज्ञायाम् ।

बाहुशब्दान्तादूङ् स्यात् । भद्रबाहूः काचित् । संज्ञायां किम् ? वृहद्बाहुः स्त्री ।

### ६८ । पङ्गोश्च ।

स्यादूङ् । पङ्गूः ।

(क) श्वशुरस्योकाराकारयोर्लोपश्च । श्वश्रूः ।

### ६९ । ऊरूत्तरपदादौपम्ये ।

ऊर्वन्तादौपम्ये स्यादूङ् । रम्भोरूः । करभोरूः ।

### ७० । संहितशफलक्षणवामादेश्च ।

संहिताद्यादेरूरोः स्यादूङ् । संहितोरूः । "वामोरूरतिशयमाप विभ्रमस्य" ।

(क) सहितसहाभ्याञ्च । सहितोरूः । सहोरूः ।

### ७१ । कद्रुकमण्डल्वोश्छन्दसि ।

छन्दः सूत्रम् ।

---

(13) "कस्याञ्चिद् ब्राह्मणजातौ शब्दाविमौ"—इति सृष्टिधरः ।

(14) श्रीपति refers to this—"स्त्रीभेदवाचिनो भीरोरप्यूङा भवितव्यमिति मतम् । श्रीकण्ठपुरुषोत्तमयोरपि मतमेतत् ।"—परिशिष्ट (स्त्रील, Rule 92). अस्य स्त्रीभेदवाचित्वे भीरू विद्याधराङ्गनेत्यमरः ।

## ७२ । संज्ञायाम् ।

आभ्यां नाम्नि स्यादूङ् । कद्रूः । कमण्डलूः ।

## ७३ । शार्ङ्गरवाद्यञो ङीन् ।

जातेरित्येव । शार्ङ्गरवादेरञन्ताच्च ङीन् स्यात् । शार्ङ्गरवी । गौतमी । पुत्री (15) । (1) नृनरयोर्वृद्धिश्च । नारी । अञः खल्वपि । बैदी । औत्सी ।

## ७४ । यङश्चाप् ।

यङन्ताच्चाप् स्यात् । ञ्यङ् । आम्बष्ठ्या । कौशल्या । ष्यङ् । कारीषगन्ध्या । वाराह्या ।

## ७५ । आवट्याच्च ।

गर्गादियञन्ता-(४।१।१०५) दावट्यशब्दाच्चाप् स्यात् । आवट्या ।

## ७६ । तद्धिताः ।

इतस्तद्धितसंज्ञकाः प्रत्यया वाच्याः कपं यावत् (५।४।१५१) तद् यथा ।

## ७७ । यूनस्तिः । (16)

युवशब्दात् तिः स्यात् । युवतिः ।

## ७८ । अणिञोरनार्षयो र्गुरूपोत्तमयोः ष्यङ् गोत्रे ।

गोत्रे यावणिञौ तयोः स्त्रियां ष्यङादिश्यते । अण् कारीषगन्ध्या ।

---

(15) असंशयं पर्वतराजपुत्रेति कुमारे । कुर्वे तदुर्वीपतिपुत्रि सर्व्वमिति नैषधे । मा भैषीः पुत्रि सीते व्रजति मम पुरो नैष दूरं दुरात्मेति महानाटके । पुत्रीव हर्षं हृदये तनोतीति च । तथाच पुत्रशब्दस्य कन्यायां वृत्तिः—आत्मज स्तनयः सूनुःसुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वे ऽपत्यं तोकं तयोः समे इत्यमरात् । न यासयोरित्यत्र (७।३।४५) वा सूतकापुत्रकावृन्दारकाणामिति वार्त्तिकाच्च । यत्तु शार्ङ्गरवादिगणे पुत्रशब्दस्य पाठोऽ साम्प्रदायिको ऽनार्षो वेति केषाञ्चिन् मतं तत् तु न सर्व्वैरादृतम् ।

(16) शिञ्जितं युवतिनैपुणं तयेति कुमारसम्भवम् । तिरिति ङीपोऽपवाद इति वृत्तिकारः । कथं तर्हि यूनी काममयी दुनोति च मनो वैधव्यभावाद वधूरिति, यूनी वेशविधायिनी पतिभयाद वाला वधूस्त्रासिनीति च ? युवति युंवती यूनीति विकाण्डशेषेऽपि ? अपाणिनीयम् । कथं युवतीकरनिर्मथितं दधीति भोजप्रबन्धे ? विषविषमा मधुरा हि युवत्य इति च ? यौतेः शत्रन्तात् ङीपि युवतीति भट्टोजिः । सर्वतोऽक्तिन्नर्थादित्येक इति (४।१।४ ग) ङीषि युवतीति पुरुषोत्तम-माधवादयः ।

इञ् वाराह्या । अनार्षयोः किम् ? वासिष्ठी । गुरूपोत्तमयोः किम् ? औपगवी । त्रिप्रभृतीनामचामन्त्यमुत्तमम् । तत्समीपमुपोत्तमम् ।

७९ । गोत्रावयवात् ।

गोत्रावयवाः पुणिकादयः । तेभ्योऽणिञोः ष्यङ् ङादिश्यते । पौणिक्या । भौणिक्या । मौखर्य्या ।

८० । क्रौड्यादिभ्यश्च ।

एभ्यः स्त्रियां ष्यङ् स्यात् । क्रौड्या । लाड्या । दैवदत्त्या । भोजात् क्षत्रियजातौ । भोज्या ।

८१ । दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ।

एभ्य इञः ष्यङ् वा स्यात् । दैवयज्ञ्या । शौचवृक्ष्या । पक्षे इतो मनुष्यजाते (४।१ ६५) रिति ङीष् । दैवयज्ञी । काण्ठेविद्धी । पूर्व्वः स्त्र्यधिकारः ।

८२ । समर्थानां प्रथमाद्वा ।

स्वार्थिकात् (५।४।१) प्रागयमधिकारः । समर्थानां पदानां मध्ये सूत्रे प्रथमनिर्दिष्टाद्वा तद्धिताः स्युः । वाग्रहणाद् वाक्यञ्च । वक्ष्यति तस्यापत्यमिति (४।१।९२) । उपगोरपत्यमौपगवः । समर्थानां किम् ? कम्बलमुपगोरपत्यं देवदत्तस्येति ।

८३ । प्राग्दीव्यतोऽण् ।

तेन दीव्यतीत्यतः ( ४।४।२ ) प्रागर्थेष्वणधिक्रियते । तथैवोदाहर्त्तव्यम् ।

८४ । अश्वपत्यादिभ्यश्च ।

एभ्योऽण् स्यात् । आश्वपतम् । गाणपतम् । पाशुपतम् । ण्ये प्राप्ते वचनम् ।

८५ । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।

एभ्योऽणपवादो ण्यः स्यात् । दितेः क्तिजन्ताद् दैत्यः (17) । अदितेरपत्य-

---

(17) कथं दैतेय इति ? क्तिजन्ताद् दितिशब्दात् कृदिकारादक्तिन इति (४।१।४५) ङीषि कृते स्त्रीभ्यो ढक् (४।१।१२०) । अदितिशब्दादपि क्तिजन्तात् पूर्ववत् ङीषि कृते ढक् । आदितेयः । एवञ्चादितेया दिविषद इति सिद्ध मित्याहुः ।

मादित्यः। आदित्यशब्दात् तस्यापत्यमादित्य्यम्। पत्यन्तात्। सैनापत्यम्। गार्हपत्यम्। प्राजापत्यम्।

(क) यमाच्च। याम्यम्। (18)

(ख) पृथिव्या ञाञौ। पार्थिवा पार्थिवी।

(ग) देवस्य यञञौ। दैव्यं दैव्या। दैवं दैवी।

(घ) बहिषष्टिलोपश्च। बहिर्भवो बाह्यः।

(ङ) ईकक् च। बाहीकः।

(च) स्थाम्नोऽकारः। अश्वत्थामः। मह्यास्थामः।

(छ) लोम्नोऽपत्येषु बहुषु। अकार इत्येव। उडुलोमाः। बहुषु किम्? औडुलोमिः। औडुलोमी। बाह्वादिः।

(ज) सर्वत्र गोरजादिप्रसङ्गे यत्। गव्यम्।

## ८६। उत्सादिभ्योऽञ्।

एभ्योऽञ् स्यात्। औत्सः। औदपानः।

## ८७। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्।

भवनात् (५।२।१) प्रागर्थेषु भवसमूहहितादिषु स्त्रिया नञ् पुंसः स्नञ् स्यात्। पुंसः संयोगान्तलोपः (८।२।२३)। "सङ्गच्छ पौंस्नि स्त्रैणं माम्।" कथं स्त्रीवत् पुंवत्? स्त्रीत्वं पुंस्त्वमिति च? स्त्री पुंवच्चेति (१।२।६६) निर्देशेनास्यानित्यत्वज्ञापनात्।

## ८८। द्विगोर्लुगनपत्ये।

द्विगोः सम्बन्धिनः प्राग्दीव्यतीयतद्धितस्याजादेर्लुक् स्यात्। तत्र संस्कृतम् (४।४।३)। पञ्चकपालः। तदधीते तद्वेद (४।२।५९)। द्विवेदः। अनपत्ये किम्? पाञ्चनापितिः। अजादेः किम्? पञ्चगर्गरूप्यम्।

## ८९। गोत्रेऽलुगचि।

यस्कादिभ्यो गोत्र (२।४।६३) इत्यादिभिर्येषां लुगुक्तस्तेषामजादौ प्राग्दी-

---

(18) वार्त्तिक मिदं जयादित्यधृत मनार्षमित्येके। प्रयोगस्तु वर्त्तते यथा याम्येन चाभवन् केशा बाहवो विष्णुतेजसेति देवीमाहात्म्ये। याते चेतसि नाप्नुयाम भवतो याम्याः पुनर्यातना इति कुसुमाञ्जलावाचार्य्य उदयनस्य।

व्यतीये कर्त्तव्ये स निषिध्यते । गर्गाणां छात्रा गार्गीयाः । आत्रेयीयाः । अचि किम् ? गर्गेभ्य आगतं गर्गरूप्यम् ।

## ९० । यूनि लुक् ।

अजादौ प्राग्दीव्यतीये कर्त्तव्ये यूनि विहितस्य लुक् स्यात् । अत इञ् (४।१।९५) । फाण्टाहृतिः । तस्यापत्यं युवा फाण्टाहृतः । फाण्टाहृतिमिमताभ्यां णफिञौ (४।१।१५०) । तस्य च्छात्राः । णस्य लुक् । तत इञश्चेत्यण् (४।२।११२) । फाण्टाहृताश्छात्राः ।

## ९१ । फक्फिञोरन्यतरस्याम् ।

यूनि विहितयोः फक्फिञोर्लुग् वा स्यात् । यञिञोश्चेति (४।१।१०१) फक् । गार्ग्यायणः । तस्य च्छात्रा गार्गीया गार्ग्यायणीया वा । अणो द्व्यच इति फिञ् (४।१।१५६) । यास्कायनिः । तस्य च्छात्रा यास्कीया यास्कायनीया वा ।

## ९२ । तस्यापत्यम् ।

अत्रार्थे यथाविहितं प्रत्ययः स्यात् । औपगवः । दैत्यः । स्त्रैणः । भानोरपत्यं भानवः । आपादान्तमपत्याधिकारः ।

## ९३ । एको गोत्रे ।

आद्यप्रकृतेर्गोत्रे एक एव प्रत्ययः स्यात् । उक्तञ्च भाष्ये एको गोत्र इति । गोत्रे एकः प्रथमशब्द एव प्रत्ययमुत्पादयतीति । गर्गस्य गोत्रापत्यं गार्ग्यः । तत्पुत्रोऽपि गार्ग्यः ।

## ९४ । गोत्राद् यून्यस्त्रियाम् ।

यून्यपत्ये गोत्रादेव प्रत्ययः स्यात् । नान्यप्रकृतेः । वात्स्यस्यापत्यं युवा वात्स्यायनः । अस्त्रियां किम् ? वात्सी । युवसंज्ञैव निषिध्यत इति स्मृतिः ।

## ९५ । अत इञ् ।

अदन्तादिञ् स्यात् । दाक्षिः । दाशरथिः । कथं प्रदीयतां दाशरथाय मैथिलीति ? तस्येद (४।३।१२०) मिति विवक्षायामण् ।

## ९६। बाह्वादिभ्यश्च।

बाह्वादेराकृतिगणादिञ् स्यात्। बाहविः। चौड़िः। सौमित्रिः। औडु-लोमिः। कार्ष्णिः। ऋष्यणो (४।१।११४)ऽत्र बाधकः।

## ९७। सुधातुरकङ् च।

सुधातुरिञ् स्यादकङ् चान्तादेशः। सौधातकिः।

(क) व्यासवरुड़निषादचण्डालविम्बानामिति वक्तव्यम्। वैयासकिः। वारुड़किः। नैषादकिः। चाण्डालकिः। वैम्बकिः।

## ९८। गोत्रे कुञ्जादिभ्यश्च्फञ्।

कुञ्जादेर्गोत्रापत्ये च्फञ् स्यात्। ततः स्वार्थे ञ्यः (५।३।११)। कौञ्जा-यन्यः। ब्राध्नायन्यः। गोत्रे किम्? कुञ्जस्यानन्तरापत्यं कौञ्जिः। गोत्रापत्ये विधिः शिवाद्यणं यावत् (४।१।११२)। यस्तु गोत्रादेव विधीयते स तु यूनि बोध्यः।

## ९९। नड़ादिभ्यः फक्।

नड़ादेर्गोत्रापत्ये फक् स्यात्। नाड़ायनः। चारायणः। नड़। चर। उपक। लमक। शकट। कितव। अमुष्य। ब्राह्मण। उदुम्बर। नर। इतिक।

(1) शलङ्कु शलङ्कञ्च। शालङ्कायनः।

## १००। हरितादिभ्योऽञः।

विदाद्यञन्ताद्धरितादेर्यूनि फक् स्यात्। हारितायनः। कौत्सायनः।

## १०१। यञिञोश्च।

गोत्रे यौ यञिञौ तदन्तयोर्यूनि फक् स्यात्। वात्स्यायनः। दाक्षायणः।

## १०२। शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु।

एभ्यो भृग्वादौ गोत्रे फक् स्यात्। शारद्वतायनो भार्गवः। शौनकायनो वात्स्यः। दार्भायणोऽयमाग्रायणः।

१०३ । द्रोणपर्वतजीवन्तादन्यतरस्याम् ।

द्रोणादेर्गोत्रापत्ये फग् वा स्यात् । द्रौणायणो द्रौणिर्वा । पार्वतायनः पार्वतिर्वा । जैवन्तायनो जैवन्तिर्वा ।

१०४ । अनृष्यानन्तर्य्ये बिदादिभ्योऽञ् ।

बिदादेर्गोत्रेऽञ् स्यात् । बैदः । और्व्वः । हारीतः । कश्यप । कुशिक । शुनक । शिगु । ये त्वनृषिशब्दाः पठ्यन्ते तेभ्योऽनन्तरापत्येऽञ् । पौत्रः । दौहित्रः । नानान्द्रः ।

(1) परस्त्री परशुश्च । पारशवः ।

१०५ । गर्गादिभ्यो यञ् ।

एभ्यो गोत्रापत्ये यञ् स्यात् । गार्ग्यः । गर्ग । वत्स । लोहित । व्याघ्रपात् । कत । ऋक्ष । शकल । कुण्डिनी । जमदग्नि । नृकुटि । शण्डिल ।

१०६ । मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ।

आभ्यामनयोर्यञ् स्यात् । माधव्यो ब्राह्मणः । बाभ्रव्यः कौशिकः ।

१०७ । कपिबोधादाङ्गिरसे ।

आभ्यामाङ्गिरसे यञ् स्यात् । काप्यः । बौध्यः । कपेर्गर्गादिपाठः फक्स्य सिद्ध्यर्थः । काप्यायनी ।

१०८ । वतण्डाच्च ।

अस्मादाङ्गिरसे यञ् स्यात् । वातण्डः ।

१०९ । लुक् स्त्रियाम् ।

वतण्डात् स्त्रियां यञो लुक् स्यात् । वतण्डी । शार्ङ्गरवादिः (४।१।७३) ।

११० । अश्वादिभ्यः फञ् ।

अश्वादिभ्यो गोत्रे फञ् स्यात् । आश्वायनः । आविष्ठायनः । आनडुह्यो गर्गादिः । तस्यापत्यमानडुह्यायनः ।

१११ । भर्गात् त्रैगर्त्ते ।

भर्गात् फञ् स्यात् । भार्गायणः । त्रैगर्त्ते किम् ? भार्गिः । उक्तं गोत्रे ।

## ११२। शिवादिभ्योऽण्।

शिवादिभ्योऽपत्यमात्रेऽण् स्यात्। इञादेर्बाधा। शैवः। भौमः। गाङ्गः। सापत्नः। विश्रवसोऽपत्यमिति वाक्ये विश्रवणरवणाभ्यां वृत्तिः। वैश्रवणो रावणः।

## ११३। अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः।

नदीमानुषीनाम्नोऽण् स्यात्। ढको बाधा। यामुनः। ऐरावतः। मानुषीभ्यः। चैन्तितः। शैच्चितः। गौतमः। अवृद्धाभ्यः किम्? चान्द्रभागेयः। वासवदत्तेयः।

## ११४। ऋष्यन्धकवृष्णिकुरुभ्यश्च।

एभ्योऽण् स्यात्। इञो बाधा। वासिष्ठः। वैश्वामित्रः। अन्धकात्। आन्धकः। श्वाफल्कः। वृष्णेः। वासुदेवः। आनिरुद्धः। कुरोः। नाकुलः। साहदेवः। अन्धकादिवंशाः केऽप्यनादयः।

## ११५। मातुरुत्संख्यासम्भद्रपूर्वायाः।

संख्यादिपूर्वाया मातुरण् स्यात्। उच्चान्तादेशः। द्वैमातुरः। त्रैमातुरः। षाण्मातुरः। साम्मातुरः। भाद्रमातुरः।

## ११६। कन्यायाः कनीन च।

कन्यायाः स्यादण् कनीनादेशश्च। कानीनो व्यासः।

## ११७। विकर्णशुङ्गच्छगलाद् वत्सभरद्वाजात्रिषु।

एभ्य एष्वण् स्यात्। वैकर्णो वात्स्यः। शौङ्गो भारद्वाजः। छागलोऽप्यात्रेयः। वत्सादिभि स्तदपत्यं लक्ष्यते।

## ११८। पीलाया वा।

पीलाशब्दादण् स्याद्वा। पैलः पैलेयो वा।

## ११९। ढक् च मण्डूकात्।

मण्डूकादण्ढकौ स्याताम्। मण्डूको माण्डूकेयः। वेत्येव। माण्डूकिः।

## १२०। स्त्रीभ्यो ढक्।

स्त्रीप्रत्ययान्ताड् ढक् स्यात्। सौपर्णेयः। सौभद्रेयः। कौम्भकारेयः।

(क) वड़वाया वृषे वाच्यः । ढक् स्यात् । वाड़वेयो वृषः ।

(ख) अण् क्रुञ्चाकोकिलात् स्मृतः । क्रौञ्चः । कौकिलः ।

## १२१ । द्व्यचः ।

द्व्यच स्त्रनाम्निकाया अणोऽपवादो ढक् स्यात् । दात्तेयः । गौप्तेयः । पार्थस्तु शिवादिपाठात् ।

## १२२ । इतश्चानिञः ।

इदन्ताद् द्व्यचो ढक् स्यात् । आत्रेयः । वैधेयः । अनिञः किम् ? दाचायणः । द्व्यच इत्येव । अण् । मारीचः ।

## १२३ । शुभ्रादिभ्यश्च ।

एभ्यो ढक् स्यात् । शौभ्रेयः । लैखाभ्रेयः । काद्रवेयः । पाण्डवेयः । गाङ्गेयः । तिकादिरप्ययङ्गङ्गाशब्दः । ततो गाङ्गायनिरित्यके ।

## १२४ । विकर्णकुषीतकात् काश्यपे ।

आभ्यामत्रापत्ये ढक् स्यात् । वैकर्णेयः । कौषीतकेयः ।

## १२५ । भ्रुवो वुक् च ।

भ्रुवो ढकि वुक् स्यात् । भ्रौवेयः ।

## १२६ । कल्याण्यादीनामिनङ् ।

एभ्यो ढक् स्यादिनङ् चान्तादेशः । काल्याणिनेयः । सुभगा । दुर्भगा । ज्येष्ठा । मध्यमा । कनिष्ठा । रजकी । बन्धकी । परस्त्री । बलीवर्दीति च ।

## १२७ । कुलटाया वा ।

अस्या ढक् स्यादिनङ् वा । कौलटिनेयः कौलटेयो वा । कौलटेरस्तु शीलहीनाया अपत्यविवक्षायाम् ।

## १२८ । चटकाया ऐरक् ।

स्यात् । चाटकैरः ।

(क) स्त्र्यपत्ये लुग् वक्तव्यः । चटका ।

१२९ । गोधाया ढ्रक् ।

१३० । आरगुदीचाम् ।

गोधाया अपत्यं गौधेरः । गौधारः । गौधेयस्तु शुभ्रादिपाठात् ।

१३१ । क्षुद्राभ्यो वा ।

अङ्गहीनशीलहीनाः क्षुद्राः । ताभ्यो ढ्रक् स्याद्वा । काणेरः काणेयो वा । दासेरः दासेयो वा ।

१३२ । पितृष्वसुश्छण् ।

स्यात् । पैतृष्वस्रीयः ।

१३३ । ढकि लोपः ।

ढकि चान्त्यलोपः स्यात् । पैतृष्वसेयः ।

१३४ । मातृष्वसुश्च ।

अस्याश्च तथा स्यात् । मातृष्वस्रीयः । मातृष्वसेयः ।

१३५ । चतुष्पाद्भ्यो ढञ् ।

स्यात् । अणादेर्बाधा । कामण्डलेयः । जाम्बेयः ।

१३६ । गृष्ट्यादिभ्यश्च ।

एभ्यो ढञ् स्यात् । गार्ष्टेयः । मैत्रेयः ।

१३७ । राजश्वशुराद् यत् ।

आभ्यां यत् स्यात् । राजन्यः क्षत्रियः । श्वशुर्यौ देवरश्यालौ ।

१३८ । क्षत्राद् घः ।

स्यात् । क्षत्रियः । जातावभिधानम् ।

१३९ । कुलात् खः ।

कुलीनः । आढ्यकुलीनः ।

१४० । अपूर्वपदादन्यतरस्यां यड्ढकञौ ।

अविद्यमानपूर्वपदात् कुलाद् यड्ढकञौ वा स्याताम् । कुल्यः कौलेयकः कुलीनो वा ।

## १४१ । महाकुलादञ्खञौ ।

स्याताम् । माहाकुलः । माहाकुलीनः । वेत्येव । महाकुलीनः ।

## १४२ । दुष्कुलाड्ढक् ।

स्यात् । दौष्कुलेयः । वेत्येव । दुष्कुलीनः ।

## १४३ । स्वसुश्छः ।

स्यात् । स्वस्रीयः ।

## १४४ । भ्रातुर्व्यच्च ।

भ्रातुर्व्यत् स्यात् । छश्च । भ्रातृव्यः । भ्रात्रीयो वा ।

## १४५ । व्यन् सपत्ने । [19]

भ्रातुरपत्ये शत्रौ व्यन् स्यात् । भ्रातृव्यो दायादः । भ्रातृव्यः कण्टक इतुरपमानात् ।

## १४६ । रेवत्यादिभ्यष्ठक् ।

रेवत्यादेर्गणात् ठक् स्यात् । ढगादेर्बाधा । रैवतिकः । दौवारपालिकः ।

## १४७ । गोत्रस्त्रियाः कुत्सने ण च ।

गोत्रस्त्रीवचनात्त्वः स्यात् । ठक् च । गार्ग्या अपत्यं गार्गो जाल्मो गार्गिको वा । कुत्सने किम् ? गार्गेयः । गोत्र इति किम् ? कारिकाया अपत्यं कारिकेयः । गोत्रापत्ये विधयो यूनि विज्ञेयाः ।

## १४८ । वृद्धाट्ठक् सौवीरेषु बहुलम् ।

वृद्धात् सौवीरगोत्रात् कुत्सने ठक् स्यात् । भागवित्तिकः । पक्षे फक् । भागवित्तायनः ।

## १४९ । फेश्छ च ।

फिञन्तात् सौवीरगोत्रात् कुत्सने छः स्यात् । ठक् च । तिकादिभ्यः फिञ् ( ४।१।१५४ ) । यामुन्दायनिः । तस्यापत्यं यामुन्दायनीयः । यामुन्दायनिको वा ।

---

(19) भ्रातृव्यौ भ्रातृजद्विषावित्यमरः ।

## १५० । फाण्टाहृतिमिमताभ्यां णफिञौ ।

आभ्यां सौवीरेषु णफिञौ स्याताम् । फाण्टाहृतः फाण्टाहृतायनिः । मैमतो मैमतायनिः ।

## १५१ । कुर्वादिभ्यो ण्यः ।

एभ्योऽपत्ये ण्यः स्यात् । कौरव्यः कौरव्यौ कौरव्याः । "कौरव्याः पशवः ।" कुरुशब्दोऽत्र मुनिवचन इत्याहुः । कुरु । गर्दभ । शकुनि । कवि । कपिञ्जल ।

## १५२ । सेनान्तलक्षणकारिभ्यश्च ।

एभ्यो ण्यः स्यात् । सेनान्तात् । हारिषेण्यः । माहासेन्यः । लाक्षण्यः । कारिशब्दः शिल्पिवचनः । तान्तुवाय्यः । कौम्भकार्य्यः ।

## १५३ । उदीचामिञ् ।

तेभ्य उदीचामिञ् स्यात् । माहासेनिः । लाक्षणिः । तान्तुवायिः ।

## १५४ । तिकादिभ्यः फिञ् ।

एभ्योऽपत्ये फिञ् स्यात् । तैकायनिः । कौरव्यायणिः । कैतवायनिः ।

## १५५ । कौशलयकार्माय्यभ्याञ्च ।

(क) दगुकोशलकर्मारच्छागवृषाणां (20) युड् वादिष्टस्येति स्मृत्यन्तरम् ।

एभ्योऽपत्ये फिञ् स्यात् । युट् चागमः । दागव्यायनिः । कौशल्यायनिः । कार्माय्यायणिः । छाग्यायनिः । वार्ष्यायणिः ।

## १५६ । अणो द्व्यचः ।

अणन्ताद् द्व्यचः फिञ् स्यात् । कार्त्त्रायणिः । यास्कायनिः ।

## १५७ । उदीचां वृद्धादगोत्रात् ।

वृद्धादुदीचां मते फिञ् स्यात् । आम्रगुप्तायनिः । शालगुप्तायनिः । कारिवचनादपि । परत्वात् । नापितायनिः । अन्येषां मते आम्रगुप्तिः । वृद्धात् किम् । याज्ञदत्तिः । अगोत्रात् किम् ? औपगविः ।

---

(२०) छगलेति पाठान्तरम् । तत्र च्छागल्यायनिरित्युदाहरणम् ।

### १५८ । वाकिनादीनां कुक् च ।

वाकिनादेरुदीचां मते फिञ् स्यात् । कुगागमश्च । वाकिनकायनिः । कार्कव्यकायनिः । अन्येषां वाकिनिः । कार्कव्यिः ।

### १५९ । पुत्रान्तादन्यतरस्याम् ।

पुत्रान्ताद् वृद्धात् फिञ् वा स्यात् । कुक् च वा । वात्सीपुत्रकायणिः । वात्सीपुत्रायणिः । वात्सीपुत्रिर्वा ।

### १६० । प्राचामवृद्धात् फिन् बहुलम् ।

अवृद्धात् फिन् स्यात् । ग्लुचुकायनिः । प्राचां किम् ? ग्लौचुकिः । बाहुल्यान्नेह । दाक्षिः ।

### १६१ । मनोर्जातावञ्यतौ षुक् च ।

मनोरञ्यती स्यातां षुक् च जातिश्चेत् । मानुषः । मनुष्यः । माणवस्तूपसंख्यानात् (21) ।

### १६२ । अपत्यं पौत्रप्रभृति गोत्रम् ।

पौत्राद्यपत्यं गोत्रमुच्यते । गर्गस्यापत्यं पौत्रादारभ्य गार्ग्यः । पौत्रप्रभृति किम् ? अनन्तरापत्ये गार्गिः ।

### १६३ । जीवति तु वंश्ये युवा ।

पितृपितामहादौ वंश्ये जीवति पौत्रप्रभृतेरपत्यं युवा स्यात् । न गोत्रम् । गर्गे गार्गौ गार्ग्ये वा जीवति गार्ग्यस्यापत्यं युवा गार्ग्यायणः । मृते तु गार्ग्य एव । पौत्रप्रभृतीति षष्ठ्यात्र विपरिणम्यते ।

### १६४ । भ्रातरि च ज्यायसि ।

ज्येष्ठे भ्रातरि जीवति पौत्रादेरपत्यं युवा स्यात् । ज्येष्ठे भ्रातरि जीवति कनीयान् भ्राता गार्ग्यायणः ।

---

(21) तथाच श्लोकवार्त्तिकम्—"अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्य स्तेन सिध्यति माणवः" ॥ १ ॥ इति । कनि माणवक इति । अनधीतवेदत्वान् मूढत्वम् । विहिताकरणात् प्रतिषिद्धसेवनाच्च कुत्सितत्वम् । जातौ किम् ? अपत्यार्थे लण्णेव । मानवः । मानवी प्रजा ।

### १६५। वान्यस्मिन् सपिण्डे स्थविरतरे जीवति।

सप्तमपुरुषावधिज्ञातयः सपिण्डाः (22)। तत्र भ्रातुरन्यस्मिन्नपि सपिण्डे वृद्धतरे जीवति पौत्रादेरपत्यं जीवदेव युवसंज्ञकं वा स्यात्। पितृव्ये पितामहे वा जीवति गार्ग्यायणो गार्ग्यो वा। स्थविरतराभावे गार्ग्य एव।

### १६६। वृद्धस्य च पूजायाम्।

गोत्रमेव पूर्वाचार्य्यैर्वृद्धमुच्यते। तस्य पूजायां युवसंज्ञा वा स्यात्। सभवान् गार्ग्यायणो गार्ग्यो वा।

### १६७। यूनश्च कुत्सायाम्।

युवसंज्ञा वा स्यात्। गार्ग्यायणो जाल्मो गार्ग्यो वा। यः पितरि जीवति स्वतन्त्रः स जाल्मः। उक्ता युवसंज्ञा।

### १६८। जनपदशब्दात् क्षत्रियादञ्।

जनपदशब्दात् क्षत्रियवचनादपत्येऽञ् स्यात्। पाञ्चालः। ऐक्ष्वाकः। वैदेहः। जनपदात् किम्? पौरवः।

### १६९। साल्वेयगान्धारिभ्याञ्च।

आभ्यामञ् स्यात्। साल्वेयः। गान्धारः।

### १७०। द्व्यञ्मगधकलिङ्गसूरमसादण्।

द्व्यचो मगधादेश्चाण् स्यात्। अञो बाधा। आङ्गः। वाङ्गः। सौह्मः। मागधः। कालिङ्गः। सौरमसः।

### १७१। वृद्धेत्कोशलाजादाञ्ञ्यङ्।

वृद्धादिदन्तात् कोशलाजादाभ्याञ्च ञ्यङ् स्यात्। आम्बष्ठ्यः। आवन्त्यः। कौन्त्यः। कौशल्यः। आजाद्यः।

(क) जनपदात् पाण्डोर्डॺण् वक्तव्यः। पाण्ड्यः। जनपदात् किम्? महाभारतपाण्डोः पाण्डव एव। नहि तस्य पाण्डुदेशः।

---

(22) लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥ १॥ इति मात्स्ये। सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तेत इति मानवे च।

## १७२ । कुरुनादिभ्यो ण्यः ।

कुरोः क्षत्रियाज्जनपदान्नकारादेश्च ण्यः स्यात् । कौरव्यः कौरव्यौ कुरवः । "चिराय तस्मिन् कुरवश्चकासति ।" नैधन्यः । नैषध्यः । कथं माघे "परिरेभिरे कुकुरकौरवस्त्रियः" इति । तथा वेणीसंहारे "रक्ष्यन्तां कौरवाः" इति ? अजनपदविवक्षयेत्येके । विषयो देशे ( ४।२।५२ ) इत्यणि तातृस्थ्यादित्यन्ये । तस्येदमिति (४।३।१२०) विवक्षयेत्यपरे ।

## १७३ । साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।

साल्वावयवा उदुम्बरादयः षट् (23) । तेभ्यः प्रत्यग्रथादेश्चेञ् स्यात् । औदुम्बरिः । यौगन्धरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः ।

## १७४ । ते तद्राजाः ।

तेऽञादयस्तद्राजसंज्ञकाः स्युः । पञ्चालानां राजा पाञ्चालः । कौरव्यः । औदुम्बरिः ।

(क) क्षत्रियसमानशब्दाज्जनपदात् तस्य राजन्यपत्यवत् । उक्ताः प्रत्ययास्तस्यापत्यमितिवद् राजनि च भवन्ति । पञ्चालानामपत्यानि राजानो वा पञ्चालाः । वङ्गाः । अवन्तयः । कुरवः । तद्राजस्येति ( २।४।६२ ) बहुषु लुक् ।

## १७५ । कम्बोजाल्लुक् ।

कम्बोजादिभ्यस्तद्राजस्य लुग्वचनमिति स्मृतिः । कम्बोजानामपत्यं राजा वा कम्बोजः । चोलः । शकः । केरलः ।

## १७६ । स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।

एभ्यः स्त्रियां तद्राजस्य लुक् स्यात् । इयमवन्ती । कुन्ती । कुरूः ।

## १७७ । अतश्च ।

अकारस्य तद्राजस्य स्त्रियां लुक् स्यात् । शूरसेनी । मद्री । दरत् । इड्विट् । अतः किम् ? आम्बष्ठ्या । यङश्चाप् (४।१।७४) ।

---

(23) "उदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः" ॥ १ ॥ इति काशिका ।

## १७८। न प्राच्यभर्गादियौधेयादिभ्यः।

एभ्योऽतश्चेति (४।१।१७७) लुङ् नास्ति। प्राच्यात्। पाञ्चाली। वैदेही। मागधी। आङ्गी। वाङ्गी। भर्गादेः। भार्गी। कैकेयी। "कैकेयी लघयिष्यते प्रियसुताम्।" कथं "प्राक् केकयीतो भरतस्ततोऽभूदिति"? आद्यप्रकृतेरेव कुलद्वारेण सोऽयमिति स्त्रीवृत्तेः। शार्ङ्गरवाद्यञो ङीनिति (४।१।७३) भागवृत्तिः (24)। यौधेयादिभ्यः पञ्चमेऽध्याये तद्राजमञं वक्ष्यति। तस्याप्यतश्चेति (४।१।१७७) लुक् प्राप्तो निषिध्यते। यौधेयी। शौभ्रेयी। इत्यपत्याधिकारः सम्पूर्णः।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवस्य भाषावृत्तौ
चतुर्थाध्यायस्य प्रथमः पादः ॥४।१॥

समाप्तश्च ङ्याप्पादः।

---

(24) So भर्तृहरि the author of the भागवृत्ति and the वाक्यपदीय had flourished after भट्टि। It-sing, the Chinese traveller, Who had travelled over India, about nineteen years, from 671 A. D. to 691 A. D. gave 651. A. D. as the year of Bhatrihari's death and 661 A. D. as that of Joyaditya's.

अथ

# भाषावृत्तिः ।

## चतुर्थोऽध्यायः । द्वितीयःपादः ॥

### १ । तेन रक्तं रागात् ।

रागवाचिन स्तेन रक्तमित्यर्थेऽण् स्यात् । कषायेण रक्तं काषायं वस्त्रम् । कौङ्कुमम् । माञ्जिष्ठी पताका । तेनेति वर्त्तते यावद् द्वैपवै याघ्रादञ् (४।२।१२) ।

### २ । लाक्षारोचनाशकलकर्द्दमाट् ठक् ।

लाक्षादेः पूर्वार्थे ठक् स्यात् । लाक्षिकं वस्त्रम् । रौचनिकी शाटी । शाकलिकः पटः । कार्द्दमिकम् । शकलकर्द्दमाभ्यामणपीत्येके । शाकलम् । कार्द्दमम् । (25)

(क) नील्या अन् । नीलं वस्त्रम् ।

(ख) पीतात् कन् । पीतकम् ।

(ग) हरिद्रामहारजनाभ्यामञ् च । हारिद्रम् । माहारजनम् ।

### ३ । नक्षत्रेण युक्तः कालः ।

अत्रार्थेऽण् स्यात् । पुष्येण युक्ता पौषी रात्रिः । माघी । पौषमहः । माघम् । कालः किम् ? पुष्येण युक्तः शशी ।

### ४ । लुबविशेषे ।

नक्षत्राणो लुप् स्यात् । अद्य पुष्यः । अद्य कृत्तिकाः । अविशेषे किम् ? पौषी रात्रिः । पौषमहः ।

---

(25) "रञ्जनार्थं यद् द्रव्यमुचितं तस्य शकलेन । कर्द्दमो रञ्जनद्रव्यपङ्क" इति सृष्टिधरः ।

५ । संज्ञायां श्रवणाश्वत्थाभ्याम् ।

आभ्यां नक्षत्राणो विशेषेऽपि लुप् स्यात् । श्रवणा रात्रिः । अश्वत्थो मुहूर्त्तः (26) । संज्ञायां किम् ? श्रावणी रात्रिः ।

६ । द्वन्द्वाच्छः ।

नक्षत्रद्वन्द्वाच्छः स्यात् । राधानुराधीया रात्रिः । लुप् चानेन बाध्यते । परत्वात् । तिष्यपुनर्वसवीयमह्न ।

७ । दृष्टं साम ।

अत्रार्थेऽण् स्यात् । वसिष्ठेन दृष्टं साम वासिष्ठम् । वैश्वामित्रम् ।

८ । कलेर्ढक् ।

स्यात् । कलिना दृष्टं साम कालेयम् ।

(क) सर्वत्राग्निकलिभ्याम् । आभ्यां प्राग्दीव्यतीये सर्वत्रार्थे ढग् वक्तव्यः । तेन दृष्टं तत्र भवं तत आगतं सास्य देवतेति । आग्नेयम् । कालेयम् ।

(ख) दृष्टे सामनि जाते च द्विरण् डिद्वा विधीयते । औशसनसम् औशनं वा साम । शातभिषः शातभिषजो वा बालः ।

(ग) तीयादीकग् न विद्यायाः ।

स्वार्थे तीयादीकक् स्यात् । द्वैतीयीकम् । द्वैतीयीकी । नेह । द्वितीया विद्या ।

(घ) गोत्रादङ्कवदिष्यते । औपगवकं साम । गोत्रचरणाद् वुञ् (४।२।१२६) ।

९ । वामदेवाड् ड्यड्ड्यौ ।

अस्मादिमौ स्याताम् । तेन दृष्टं सामेति । वामदेव्यम् । स्वरार्थोऽनुबन्धः ।

१० । परिवृतो रथः ।

रथश्चेद् भवति अत्रार्थेऽण् स्यात् । वस्त्रेण परिवृतो रथो वास्त्रः । चार्मणो रथः ।

(26) विष्णुदैवतत्वादश्वत्थश्च श्रवणनक्षत्र एव ।

११ । पाण्डुकम्बलादिनिः ।

अस्मादिनिः स्यात् पूर्वार्थे । पाण्डुकम्बली रथः ।

१२ । द्वैपवैयाघ्रादञ् ।

आभ्यामञ् स्यात् पूर्वार्थे । द्वैपिन चर्मणा परिवृतो द्वैपो रथः । वैयाघ्रः । तेनेति निवृत्तम् ।

१३ । कौमारापूर्ववचने ।

अणन्तः कौमारो निपात्यतेऽपूर्वस्याऽनूढ़ाया विवाहस्य वचने । प्रथमोढ़ा कुमारी कौमारी । तस्याः पतिश्च कौमारः । "उपलब्धग्रामपश्यन्तः कौमारीं पततां वर ।"

१४ । तत्रोद्धृतममत्रेभ्यः ।

अत्रार्थे पात्रेभ्योऽण् स्यात् । शरावेषूद्धृतं शारावं दधि । कार्पर ओदनः । द्वच भुक्तोत्सृष्टमुद्धृतम् । तत्रेति वर्त्तते यावत् चीराड् ढञ् (४।२।२०) ।

१५ । स्थण्डिलाच्छयितरि व्रते ।

अत्र स्थण्डिलादण् स्यात् । स्थण्डिले शेते स्थाण्डिलः ।

१६ । संस्कृतं भक्षाः ।

अत्र संस्कृतमित्यर्थेऽण् स्याद् भक्षाश्चेत् । भ्राष्ट्रा अपूपाः । पैठराः ।

१७ । शूलोखाद् यत् ।

आभ्यां तत्रार्थे यत् स्यात् । शूले संस्कृतं शूल्यम् मांसम् । उख्यम् ।

१८ । दध्नष्ठक् ।

स्यात् । दध्नि संस्कृतं दाधिकम् ।

१९ । उदश्वितोऽन्यतरस्याम् ।

अत्रष्ठक् स्याद्वा । उदश्विति संस्कृतमौदश्वित्कम् । औदश्वितम् । (27)

२० । चीराड् ढञ् ।

स्यात् । चीरे संस्कृता चैरेयी यवागूः । तत्रेति निवृत्तम् ।

---

(27) तक्रं ह्युदश्विन् मथितं पादाम्ब्वर्द्धाम्बु निर्जलमित्यमरः । A sort of whey.

## २१ । सास्मिन् पौर्णमासीति संज्ञायाम् ।

अत्रार्थेऽण् स्यात् संज्ञा चेत् । पौषी पौर्णमास्यस्मिन् पौषो मासोऽर्द्धमासः संवत्सरो वा । माघः । चैत्रः । वैशाखः ।

## २२ । आग्रहायण्यश्वत्थाट् ठक् ।

आभ्यां पूर्वार्थे ठक् स्यात् । आग्रहायणी पौर्णमास्यस्मिन् आग्रहायणिको मासः पक्षो वत्सरो वा । आश्वत्थिकः (28) ।

## २३ । विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ।

आभ्यः पूर्वार्थे ठक् स्याद्वा । फाल्गुनिकः फाल्गुनो वा मासो ऽर्द्धमासो वत्सरो वा । श्रावणिकः श्रावणो वा । कार्त्तिकिकः कार्त्तिको वा । चैत्रिकश्चैत्रो वा ।

## २४ । सास्य देवता ।

अत्र यथाविहितं प्रत्ययः स्यात् । इन्द्रो देवतास्य ऐन्द्रं हविः । बार्हस्पत्यो मन्त्रः । यागे पुरोडाशादिसंप्रदानं मन्त्रस्तुत्यश्च देवतेत्याहुः । सास्य देवतेत्यधिकारः प्राक् पितृव्यात् (४।२।३६) ।

## २५ । कस्येत् ।

कशब्दादण् स्यादिकारश्चान्तादेशः । को (29) देवतास्य कायं हविः ।

## २६ । शुक्राद् घन् ।

स्यात् । शुक्रियोऽध्यायः ।

## २७ । अपोनप्त्रपान्नप्तृभ्यां घः ।

आभ्यां पूर्वार्थे घः स्यात् । अपोनप्त्रियम् । अपान्नप्त्रियम् । (30)

## २८ । छ च ।

आभ्यां छः स्यात् । अपोनप्त्रीयम् । अपान्नप्त्रीयं हविः ।

(क) पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् । पैङ्गाक्षीपुत्रीयम् । (31) तार्णबिन्दवीयम् ।

---

(28) अश्वत्थ इत्यर्थः । (29) कः प्रजापतिः । (30) इदं देवताद्वयमग्निवाचकमिति पौराणिकाः ।

(31) पिङ्गाक्षः कुबेरः । तत्कन्या पैङ्गाक्षीति च पौराणिकाः ।

(ख) शतरुद्राद् घश्च। शतरुद्राद् घच्छौ स्याताम्। शतरुद्रीयम्। शतरुद्रियम्।

## २९। महेन्द्राद् घाणौ च।

अस्माद् घाणौ स्यातां छश्च। माहेन्द्रम्। महेन्द्रीयम्।

## ३०। सोमाट् ट्यण्।

पूर्वार्थे ट्यण् स्यात्। सौम्यं हविः। सौमी ऋक्।

## ३१। वाय्वृतुपित्रुषसो यत्।

पूर्वार्थे एभ्यो यत् स्यात्। वायव्यो मन्त्रः। ऋतव्यम्। उषस्यम्। पित्र्यम्।

## ३२। द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति-गृहमेधाच्छ च।

एभ्यः षड्भ्यश्छः स्याद् यच्च पूर्वार्थे। द्यावापृथिवीयम्। द्यावापृथिव्यम्। शुनासीरीयम्। (32) शुनासीर्य्यम्। मरुत्वतीयम्। मरुत्वत्यम्। अग्नि-षोमीयम्। अग्नीषोम्यम्। वास्तोष्पतीयम्। वास्तोष्पत्यम्। गृहमेधीयम्। गृहमेध्यम्।

## ३३। अग्नेर्ढक्।

स्यात्। आग्नेयश्चरुः।

## ३४। कालेभ्यो भववत्।

कालवाचिभ्यः सास्य देवतेत्यर्थे भवार्थवत् प्रत्ययाः स्युः। मासिकम्। प्रावृषेण्यम्। हैमनम्। वासन्तम्।

## ३५। महाराजप्रोष्ठपदाट् ठञ्। (33)

आभ्यां पूर्वार्थे ठञ् स्यात्। माहाराजिकम्। प्रौष्ठपदिकम्।

(क) तदस्मिन् वर्त्तत इति नवयज्ञादिभ्यः। ठञ् स्यात्। नवयज्ञोऽस्मिन् वर्त्तते नावयज्ञिकः कालः। स्वाध्यायिकः। औत्पातिकः।

---

(32) शुनासीर इन्द्रः। (33) महाराज इन्द्रः।

(ख) पूर्णमासादण्। पूर्णमासोऽस्यां वर्त्तते पौर्णमासी तिथिः। सास्य-देवतेत्यधिकारः पूर्णः।

## ३६। पितृव्यमातुलमातामहपितामहाः।

एते निपात्यन्ते। गौरादिङीषि पितामही। मातामही।

(क) अवेर्दुग्धे सोढ़दूसमरीसचः। अविशब्दादेते स्युर्दुग्धश्चेत्। अवि-सोढ़म्। अविदूसम्। अविमरीसम्।

(ख) तिलान्निष्फलात् पिञ्जपेजौ। स्याताम्। तिलपिञ्जः। तिलपेजः।

## ३७। तस्य समूहः।

अत्रार्थेऽण् स्यात्। काकानां समूहः काकम्। वाकम्। शौकम्। समूहाधिकारः कल्यचं यावत् (४।२।५१)।

## ३८। भिक्षादिभ्योऽण्।

एभ्यो बाधकं बाधित्वाण् स्यात्। भिक्षाणां समूहो भैक्षम्। गार्भिणम्। चार्मिणम्। धार्मिणम्। (34) साहस्रम्। पादातम्। युवतिशब्दाद् यौवतमिति जयादित्यः। भस्याढ़े तद्धित (६।३।३५, वा) इति पुंवद्भावे यौवनमिति भागवृत्तिः। (35)

## ३९। गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्।

गोत्रान्तादुक्षादिभ्यश्च समूहे वुञ् स्यात्। दाक्षकम्। गार्गकम्।

---

(34) According to some चर्मन् and धर्मन् occur in the भिक्षादि and not चर्मिन् and धर्मिन्; so चार्मणम्। धार्मणम्।

(35) एवञ्च तारुण्ये युवतिस्तोमे यौवनं जलमब्ध, चेत्यनेकार्थध्वनिमञ्जरी। पद्येऽपि "रूपलावण्यसम्पन्नं कलाकुशलयौवतम्। यस्य पुण्यकृतः प्रेष्यं सफलं तस्य जीवित"मिति। नैषधे च "अदः समित्सम्मुखवीर-यौवतत्रुटद्भुजाकाण्ड मृणालहारिणी"ति। वस्तुतस्तु युवतिशब्दे औत्सर्गिकोऽण्। ततो भस्याढे तद्धित (6. 3. 35. वा) इति पुंवद्भावे यौवनमेव स्यात्। नतु भिक्षादित्वादस्तित्याहुः। भिक्षादिगणे युवतिशब्दपाठस्य भाष्यवार्त्तिकयोः प्रत्याख्यानात्। तथाहि वार्त्तिकम्—भिक्षादिषु युवतिग्रहणमनर्थकम् पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधाविति ( 4.2.38, वा )। कथं तर्हि यौवतमिति ? यौतेः शत्रन्तान् ङीप्यनुदात्तादेरञिति (4.2.43) समूहार्थेऽञा सिद्धम्। एवञ्च गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गण इत्यमरे केषाञ्चित् पाठः।

औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्त्रकम् । वात्सकम् । मानुष्यकम् । आजकम् ।

(क) वृद्धाच्च । वार्द्धकम् ।

## ४० । केदाराद् यञ्च ।

केदाराद् यञ् वुञ् च स्यात् । कैदार्य्यम् । कैदारकम् । अचित्तठको बाधा ।

(क) गणिकायाश्च । गाणिक्यम् ।

## ४१ । ठञ् कवचिनश्च ।

कवचिनः केदाराच्च ठञ् स्यात् । कावचिकम् । कैदारिकम् ।

## ४२ । ब्राह्मणमाणववाड़वाद् यन् ।

स्यात् । ब्राह्मण्यम् । माणव्यम् । वाड़व्यम् ।

(क) पृष्ठाच्च । पृष्ठ्यम् ।

(ख) अह्नः खः क्रतौ । क्रतुविषयेऽह्नः समूहे खः स्यात् । अहीनः ।

(ग) पर्श्वा णस् । समूहे । पार्श्वम् । पर्शूणां समूह इत्यर्थः ।

## ४३ । ग्रामजनबन्धुसहायेभ्यस्तल् ।

एभ्यः समूहे तल् स्यात् । ग्रामता । बन्धुता । जनता । सहायता । (36)

(क) गजाच्च । गजता ।

## ४४ । अनुदात्तादेरञ् ।

## ४५ । खण्डिकादिभ्यश्च ।

एभ्योऽञ् स्यात् । कापोतम् । मायूरम् । खाण्डिकम् । वड़वानां वृन्दं वाड़वम् ।

## ४६ । चरणेभ्यो धर्म्मवत् ।

समूहे चरणार्थेभ्यो धर्म्मवत् प्रत्ययाः स्युः । काठकम् । छान्दोग्यम् । आथर्व्वणम् ।

---

(36) कथं सुरतेति ? यस्याः समस्तसुरता समुदीरणेनेति देवीमाहात्म्ये ? आर्षोऽयं प्रयोगः । "सुरतानुरक्तो गुरुरिवेति" वासवदत्तास्लेषे तु बृहस्पतिः सुरेष्वनुरक्त इत्यर्थोऽपाणिनीयः ।

### ४७। अचित्तहस्तिधेनोष्ठक्।

अचित्तार्थेभ्यो हस्तिधेनुभ्याञ्च समूहे ठक् स्यात्। आपूपिकम्। शाष्कुलिकम्। हास्तिकम्। धैनुकम्। धेनोरञपि। धैनवम्।

### ४८। केशाश्वाभ्यां यञ्छावन्यतरस्याम्।

यथासंख्यमेतौ स्याताम्। केशाद् यञ् वा स्यात्। कैश्यम्। पूर्वेण ठक्। कैशिकम्। अश्वाच्छो वा। अश्वीयम्। आश्वम्। पक्षे ऽण्।

### ४९। पाशादिभ्यो यः।

पाशादे र्वृन्दे यः स्यात्। पाश्या। तृण्या। वन्या। वात्या। धूम्या।

### ५०। खलगोरथात्।

एभ्यो यः स्यात्। खल्या। गव्या। रथ्या।

### ५१। इनित्रकत्यचश्च।

खलादिभ्यः क्रमेणैते स्युः। खलिनी। गोत्रा। "सञ्जग्मे मत्स्यगोत्रया।" रथकट्या।

(क) खलादिभ्य इनि र्वक्तव्यः। खलिनी। उलूकिनी। पद्मिनी। उक्तं समूहे। तस्येति वर्त्तत एव।

### ५२। विषयो देशे।

षष्ठ्यन्तात् तस्य विषयेऽण् स्याद् देशश्चेत्। शिवीनां विषयो देशः शैवः। आङ्गः। पौरवः।

### ५३। राजन्यादिभ्यो वुञ्।

एभ्यः पूर्वार्थे वुञ् स्यात्। राजन्यको देशः। मालवकः।

### ५४। भौरिक्याद्यैषुकार्य्यादिभ्यो विधल्भक्तलौ।

गणाभ्यामाभ्यां पूर्वार्थे विधल्भक्तलौ स्याताम्। भौरिकिविधः। ऐषुकारिभक्तः।

## ५५ । सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ।

प्रगाथेषु च्छन्दसोऽण् स्यान् मन्त्रविशेषः प्रगाथश्चेत् । (37) पङ्क्तिरादिरस्य प्रगाथस्य पाङ्क्तः । आनुष्टुभः । जागतः ।

(क) छन्दसः क्लीबे स्वार्थे उपसंख्यानम् । त्रिष्टुबेव त्रैष्टुभम् । जागतम् । आनुष्टुभम् ।

## ५६ । संग्रामे प्रयोजनयोद्धृभ्यः ।

तदस्यार्थे प्रयोजनयोद्धृभ्यो यथाविहितं स्यात् संग्रामश्चेत् । सुभद्रा प्रयोजनमस्य सौभद्रो रणः । द्रौपदः । सैतः । स्त्रैणः । पौंस्नः । भरता योद्धारोऽस्य भारतः संग्रामः । पादातः । आश्वः ।

## ५७ । तदस्यां प्रहरणमिति क्रीड़ायां णः ।

अत्रार्थे णः स्यात् क्रीड़ा चेत् । दण्डः प्रहरणमस्यां दाण्डा क्रीड़ा । मौष्टा । पाल्लवा ।

## ५८ । घञः सास्यां क्रियेति ञः ।

घञन्तादत्रार्थे ञः स्यात् । श्येनपातः क्रियास्यां श्यैनम्पाता मृगया । मौसलपाता भूमिः ।

## ५९ । तदधीते तद्वेद ।

अनयोरर्थयोरण् स्यात् । व्याकरणमधीते वेद वा वैयाकरणः । छान्दसः । ज्यौतिषः । निमित्तान्यधीते वेद वा नैमित्तः ।

## ६० । क्रतूक्थादिसूत्रान्ताट्ठक् ।

एभ्यः पूर्वार्थे ठक् स्यात् । क्रतुः । आग्निष्टोमिकः । उक्थादिः । औक्थिकः । याज्ञिकः । उक्थ । यज्ञ । लोकायत । न्याय । न्यास । तर्क ।

(1) विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिति गणसूत्रम् । वायसविद्यिकः । धानुर्विद्यिकः । चातुर्वैद्य इति तु तत्र कुशलार्थे क्रतलब्धक्रीतकुशला (४।३।३८) इत्यणि । लक्षणाद्यन्तात् । गौलक्षणिकः । प्राथमकल्पिकः । वार्त्तिकसूत्रिकः । नेह काल्पसूत्रः ।

---

(37) यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते स प्रग्रथनात् प्रकर्षगानाद्वा प्रगाथ इत्युच्यते ।

(२) विद्या चानङ्गक्षत्त्रधर्मत्रिपूर्वा। अङ्गादिपूर्वाया विद्याया न ठक् स्यात्। आङ्गविद्यः। त्रैविद्यः।

(क) आख्यानाख्यायिकेतिहासपुराणेभ्यश्च। ठक् स्यात्। आख्यानाख्यायिकयोरर्थग्रहणम्। इतिहासपुराणयोस्तु स्वरूपग्रहणम्। यावक्रीतिकः। वासवदत्तिकः। ऐतिहासिकः। पौराणिकः।

(ख) सर्वसादेर्द्विगोश्च लः। एभ्यो लुक् स्यात्। सर्वादिः। सर्ववेदः। सादिः। सवार्त्तिकः। द्विगोः। पञ्चकल्पः। द्विवेदः। द्वितन्त्रः।

(ग) इकन् पदोत्तरपदात्। पदोत्तरपदिकः।

(घ) शतषष्टेः षिकन् पथः। शतपथिकः। षष्टिपथिकी।

## ६१। क्रमादिभ्यो वुन्।

स्यात्। क्रममधीते वेद वा क्रमकः। पदकः। शिक्षा। मीमांसा। उपनिषत्।

## ६२। अनुब्राह्मणादिनिः।

पूर्वार्थे इनिः स्यात्। ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणम्। तदधीते वेद वानुब्राह्मणी।

## ६३। वसन्तादिभ्यष्ठक्।

पूर्वार्थे ठक् स्यात्। वासन्तिकः। वार्षिकः। वसन्तादिसहचरितो ग्रन्थस्तथा।

## ६४। प्रोक्ताल्लुक्।

प्रोक्तप्रत्ययान्तादध्येतृवेदितृोरुत्पन्नस्य प्रत्ययस्य लुक् स्यात्। पाणिनिना प्रोक्तो ग्रन्थो वृद्धाच्छः (४।२।११४) पाणिनीयः। तमधीते वेद वा पाणिनीयश्छात्रः। आपिशलिना प्रोक्तमितीञश्चेत्यण् (४।२।११२)। आपिशलम्। आपिशलमधीते वेद वाऽऽपिशला ब्राह्मणी।

## ६५। सूत्राच्च कोपधात्।

सूत्रवाचिनः कोपधादध्येतृवेदितृोरुत्पन्नस्य प्रत्ययस्य लुक् स्यात्। अष्टकं

पाणिनिसूत्रमधीयते विदन्ति वाऽष्टकाः पाणिनीयाः । दशका वैयाघ्रपदीयाः । द्वादशका मीमांसकाः ।

(क) संख्याप्रकृतेरेवाभिधानम् । नेह । महावार्त्तिकसूत्रमधीते माहावार्त्तिकः । कोपधात् किम् ? चतुष्टयमधीते चातुष्टयः ।

## ६६ । छन्दोब्राह्मणानि च तद्विषयाणि ।

मण्डूकप्लुत्या प्रोक्तादित्येव । प्रोक्तप्रत्ययान्तानि च्छन्दांसि ब्राह्मणानि च चकारात् केचन पुराणप्रोक्ताः कल्पाः सूत्राणि च तद्विषयाणि अध्येतृवेदितृविषयाणि स्युः । न प्रोक्तप्रत्ययान्तानि । कठेन प्रोक्तच्छन्दोऽधीयते कठाः । मौदाः । ताण्ड्येन प्रोक्तं ब्राह्मण मधीयते ताण्डिनः । कल्पे काश्यपिनः । सूत्रे पाराशरिणः ।

## ६७ । तदस्मिन्नस्तीति देशे तन्नाम्नि ।

अत्रार्थेऽण् स्याद् देशस्तन्नामा चेत् । उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः । पार्वतः ।

## ६८ । तेन निर्वृत्तम् ।

अत्रार्थेऽण् स्यात् । कुशाम्बेन निर्वृत्ता कौशाम्बी पुरी । साहस्री परिखा ।

## ६९ । तस्य निवासः ।

अत्रार्थेऽण् स्यात् । शिवीनां निवासः शैवः ।

## ७० । अदूरभवश्च ।

अत्रार्थेऽण् स्यात् । विदिशाया अदूरभवं वैदिशं नगरम् । पाम्पानि वनानि । एते चत्वारोऽर्था अनुवर्त्तन्ते शेषाधिकारं (४।२।९२) यावत् ।

## ७१ । ओरञ् ।

उवर्णान्ताच्चातुरर्थिकोऽञ् स्यात् कार्कटवम् । अञधिकारः प्राक् सुवास्त्वादिभ्योऽणः (४।२।७७) ।

## ७२। मतोश्च बह्वजङ्गात्।

बह्वजङ्गं यस्य मतुपस्तदन्तादञ् स्यात्। ऐक्षटावतो नाम देशः।

## ७३। बह्वचः कूपेषु।

बह्वचोऽञ् स्यात् कूपश्चेत्। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः। वृक्षमूलस्यादूरभवो वार्क्षमूलः।

## ७४। उदक् च विपाशः।

विपाशाया उत्तरकूलकूपेष्वञ् स्यात्। दत्तेन निर्वृत्तो दात्तः कूपः। गौप्तः। (38)

## ७५। सङ्कलादिभ्यश्च।

एभ्यश्चातुरर्थिकोऽञ् स्यात्। साङ्कलः। पौष्कलो देशभेदः।

## ७६। स्त्रीषु सौवीरसाल्वप्राक्षु।

स्त्रीलिङ्गे सौवीरादिदेशेऽञ् स्यात्। दत्तामित्रेण निर्वृत्ता पुरी दात्तामित्री। साल्वे वैधूमाग्नी। प्राचि माकन्दी नगरी।

## ७७। सुवास्त्वादिभ्योऽण्।

एभ्योऽण् स्यात्। सौवास्तवं नगरम्। सौवास्तवी नगरी। सौवास्तवी नदी। वार्णवम्। वार्णवी।

## ७८। रोणी।

रोण्यन्तादण् स्यात्। आजकरोणः। केवलाच्च। रोण्या निर्वृत्तो रौणः कूपः।

## ७९। कोपधाच्च।

अण् स्यात्। कार्णच्छिद्रकः। कार्णच्छिद्रकः। त्रैशङ्कवम्।

---

(38) अत्रेदं सूत्रकारं प्रति सविस्मयप्रशंसापरं वामनजयादित्ययोर्वाक्यम्—"उदगिति किम्? दक्षिणतो विपाशः कूपेष्वणेव। दात्तः। गौप्तः। स्वरे विशेषः। महती सूक्ष्मेक्षिका वर्त्तते सूत्रकारस्य।"—इति।

**८० । वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्ष-कर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ।**

एभ्यः सप्तदशभ्यो गणेभ्यो यथासम्भवं चतुर्ष्वर्थेषु वुञादयः स्युः । अरीहणादेर्वुञ् । आरीहणकम् । कृशाश्वादेश्छण् । कार्शाश्वीयः । ऋश्यादेः कः । ऋश्यकः । कुमुदादेष्ठच् । कुमुदिकम् । काशादेरिलः । काशिलम् । तृणादेः सः । तृणसा । नड्सा । वीरणसा । प्रेक्षादेरिनिः । प्रेक्षी । फलकी । अश्मादिभ्यो रः । अश्मरः । सख्यादेर्ढञ् । साखेयम् । सङ्काशा-देर्ण्यः । साङ्काश्यम् । काम्पिल्यम् । बलादिभ्यो यः । बल्यम् । पक्षादेः फक् । पाक्षायणः । कर्णादेः फिञ् । कार्णायनिः । सुतङ्गमादेरिञ् । सौतङ्गमिः । प्रगदिन्नादेर्ञ्यः । प्रागद्यम् । वराहादेः कक् । वाराहकम् । पालाशकम् । शार्करकम् । कुमुदादेष्ठक् । कौमुदिकम् । गौमथिकम् ।

**८१ । जनपदे लुप् ।**

जनपदे तन्नाम्नि देशे चातुरर्थिकस्य लुप् स्यात् । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । वङ्गाः । जनपदो देशभेदः ।

**८२ । वरणादिभ्यश्च ।**

एभ्यश्चातुरर्थिकस्य लुप् स्यात् । वरणा ग्रामः । गोदौ ग्रामः । खलतिकं वनानि । एवं शिरीषाः । शृङ्गी । गया । उज्जयिनी ।

**८३ । शर्कराया वा ।**

अस्या लुप् स्याद्वा । शर्कराभिर्निर्वृत्तं शर्कराः शार्करं वा ।

**८४ । ठक्छौ च ।**

अस्याष्ठक्छौ स्याताम् । शार्करिकम् । शर्करीयम् ।

**८५ । नद्यां मतुप् ।**

नद्याश्चतुर्ष्वर्थेषु मतुप् स्यात् । उदुम्बरावती नदी । इक्षुमती ।

## ८६। मध्वादिभ्यश्च।

एभ्यश्चतुर्थ्यर्थेषु मतुप् स्यात्। मधुमान्। विसवान् देशः।

## ८७। कुमुदनड़वेतसेभ्यो ड्मतुप्।

(क) महिषाच्च।

एभ्यो ड्मतुप् स्यात्। डिति टिलोपः। कुमुद्वान्। नड्वान्। वेतस्वान्। वेतस्वती सरित्। महिष्मान् नाम देशः।

## ८८। नडशादाड् ड्वलच्।

आभ्यां ड्वलच् स्यात्। नड्वलः। शाद्वलः। "शय्या शाद्वलमासनं शुचिशिला।"

## ८९। शिखाया वलच्।

स्यात्। शिखावलं नगरम्।

## ९०। उत्करादिभ्यश्छः।

उत्करीयम्।

## ९१। नड़ादीनां कुक् च।

एषां छः स्यात् कुक् च। नड़कीयम्। नड़। वेणु। प्लक्ष। बिल्व।

(1) कुञ्चाया ह्रस्वत्वञ्च। कुञ्चकीयम्।

(2) तक्षन्नलोपश्च। तक्षकीयम्। उक्ताश्चातुरर्थिकाः।

## ९२। शेषे।

शेषे तत्र जातादावर्थे प्रत्यया वाच्याः। राष्ट्रे जातो राष्ट्रादागतो राष्ट्रे भवो वा राष्ट्रियः। शालीयः। इह चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। अश्वैरुह्यते आश्वो रथः। चातुरं शकटम्। दृषदि पिष्टा दार्षदा माषाः। औदूखलाः सक्तवः। चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति सामान्येन तस्येदमिति (४।३।१२०) विवक्षायामिति भागवृत्तिः। शेष इत्यधिकारो लक्षणञ्चेति जयादित्यः।

## ९३ । राष्ट्रावारपाराद् घखौ ।

आभ्यां घखौ स्याताम् । राष्ट्रियः । अवारपारीणः ।

(क) विगृहीताच्च । अवारीणः । पारीणः ।

(ख) विपरीताच्च । पारावारीण इति चेष्यते ।

## ९४ । ग्रामाद् यखञौ ।

स्याताम् । ग्राम्यो ग्रामीणः ।

## ९५ । कत्त्र्यादिभ्यो ढकञ् ।

कत्त्रीत्येवमादिभ्यो ढकञ् स्यात् । कत्त्रि कात्त्रेयकः । उम्भि औम्भेयकः । ग्रामेयकः । नागरेयकः ।

(1) कु (ल्या) छाया यलोपश्च । कौ(ले)ड़ेयकः ।

## ९६ । कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।

कुलादेः श्वादौ वाच्ये ढकञ् स्यात् । कौलेयकः श्वा । कौक्षेयकोऽसिः । ग्रैवेयकः कण्ठालङ्कारः (39) ।

## ९७ । नद्यादिभ्यो ढक् ।

स्यात् । नादेयं जलम् । वाराणसेयो जनः । श्रावस्तेयः ।

## ९८ । दक्षिणापश्चात्पुरसस्त्यक् ।

एभ्यः शेषे त्यक् स्यात् । आच्प्रत्ययान्तो दक्षिणाशब्दः । न स्त्रीलिङ्ग इति सर्वनाम्नो वृत्तिमात्रे न पुंवद्भावः (२।१।२६, वा) । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

## ९९ । कापिश्याः ष्फक् ।

अस्याः ष्फक् स्यात् । कापिशायनं मधु । कापिशायनी द्राक्षा ।

(क) बाह्ल्युर्दिपर्दिभ्यश्च । ष्फक् स्यात् । बाह्लायनी । और्दायनी । पार्दायनी ।

---

(39) नूपुरौ विमलौ तद्वद् ग्रैवेयकमनुत्तममिति देवीमाहात्म्ये ।

१०० । रङ्कोरमनुष्येऽण् च ।

रङ्कोरन्नार्थेऽण् स्यात्। ष्फक् च। राङ्कवः। राङ्कवायणः।

१०१ । द्युप्रागपा(वा)गुदक्प्रतीचो यत् ।

एभ्यो यत् स्यात्। दिव्यम्। प्राच्यम्। अपा (वा) च्यम्। उदीच्यम्। प्रतीच्यम्। अव्ययात् ट्युट्युलौ तुट् च (४।३।२३)। प्राक्तनम्।

१०२ । कन्थायाष्ठक् ।

कान्थिकम्।

१०३ । वर्णौ वुक् ।

वर्णौ देशे कन्थाया वुक् स्यात्। कान्थकम्।

१०४ । अव्ययात् त्यप्।

अमेहक्वतसित्रेभ्योऽभिधानम्। अमात्यः। "क्वत्येयं दुर्मतिस्तव।" ततस्त्यः। यतस्त्यः। कुतस्त्यः। यत्रत्यः। अत्रत्यः। तत्रत्यः।

(क) त्यब् ने र्ध्रुवे। नित्यम्।

(ख) निसो गते त्यप्। निर्गतो देशान्निष्ट्यश्चाण्डालादिः।

(ग) अरण्याण्णः। आरण्याः सुमनसः।

(घ) दूरादेत्यः। दूरेत्यः पथिकः।

(ङ) उत्तरादाहञ्। औत्तराहः।

१०५ । ऐषमोह्यःश्वसोऽन्यतरस्याम् ।

एभ्यस्त्यप् स्याद्वा। ऐषमस्त्यम्। ह्यस्त्यम्। श्वस्त्यम्। पक्षे ऐषमस्तनम्। ह्यस्तनम्। श्वस्तनम्।

१०६ । तीररूप्योत्तरपदादञ्ञौ ।

तीरोत्तरपदादञ् रूप्योत्तरपदाञ् ञः स्यात्। वार्कतीरम्। वार्करूप्यम्।

१०७ । दिक्पूर्वपदादसंज्ञायां ञः ।

दिक्पूर्वपदादनाम्नि ञः स्यात्। पौर्वशालः। औत्तरशालः।

१०८ । मद्रेभ्योऽञ् ।

दिक्पूर्वपदान्मद्रेभ्योऽञ् स्यात् । पौर्वमद्रः ।

१०९ । उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।

उदीच्यग्रामवाचिनोऽञ् स्यात् । शैवपुरम् । माहानगरम् । बह्वचः किम् ? ध्वाजम् ।

११० । प्रस्थोत्तरपदपलद्यादिकोपधादण् ।

एभ्योऽण् स्यात् । प्रस्थान्तात् । माद्रीप्रस्थो ग्रामः । पलद्यादेः । पालदः । पारिषदः । कोपधात् । वैत्रातकः । उदीच्यग्रामादञोऽपवादः ।

१११ । कण्वादिभ्यो गोत्रे ।

गोत्रप्रत्ययान्तात् कण्वादेरण् स्यात् । छस्य बाधा । कण्वादिर्गर्गादित्वाद् यञ् (४।१।१०५) । काण्व्यः । तस्यच्छात्राः काण्वाः । गौकक्षाः ।

११२ । इञश्च ।

गोत्रे इञन्तादण् स्यात् । छापवादः । दाक्षेरमी दाक्षाः । प्लाक्षाः ।

११३ । न द्व्यचः प्राच्यभरतेषु ।

प्राच्यभरतयोर्गोत्रे द्व्यच इञन्तादण् न स्यात् । वैङ्गीयाः । काशीयाः ।

११४ । वृद्धाच्छः ।

वृद्धसंज्ञकाच्छः स्याच् शैषिकः । शालीयः । आचार्यीयः । बौद्धीयं मतम् । त्वदीयः । मदीयः ।

११५ । भवतष्ठक्छसौ ।

अस्मादिमौ स्याताम् । छस्य बाधा । भावत्कः । भवदीयः ।

११६ । काश्यादिभ्यष्ठञ्ञिठौ ।

एभ्य इमौ स्याताम् । काशिकी काशिका । वैदिकी वैदिका । चैदिकी चैदिका ।

११७ । वाहीकग्रामेभ्यश्च ।

एभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्याताम् । शाकलिकी शाकलिका ।

## ११८। विभाषोशीनरेषु।

एषु वाहीकग्रामेभ्यस्तौ स्यातां वा। आह्वजालिकी आह्वजालिका आह्वजालीया वा।

## ११९। ओर्देशे ठञ्।

उवर्णान्ताद्देशे ठञ् स्याच्छेषे। शावरजम्बुकः।

## १२०। वृद्धात् प्राचाम्।

प्राग्देशे वृद्धादेवोवर्णान्तात् ठञ् स्यात्। आढ़कजम्बुकः। वृद्धात् किम्? मल्लवास्तु माल्लवास्तवः।

## १२१। धन्वयोपधाद् वुञ्।

धन्वान्ताद् देशवाचिनो वृद्धाद् योपधाच्च वुञ् स्यात्। धन्वा मरुदेशः। पारेधन्वकः। साङ्काश्यकः।

## १२२। प्रस्थपुरवहान्ताच्च।

एतदन्ताद् वृद्धाद् देशाद्वुञ् स्यात्। मालाप्रस्थकः। नान्दीपुरकः। पैलुवहकः।

## १२३। रोपधेतोः प्राचाम्।

रेफोपधादीदन्ताच्च वृद्धात् प्राग्देशाद् वुञ् स्यात्। पाटलिपुत्रकः। ऐकचक्रकः। ईतः। माकन्दकः।

## १२४। जनपदतदवध्योश्च।

वृद्धाज्जनपदाद् वुञ् स्यात्। आभिसारकः। अवधिभूताज्जनपदात्। त्रैगर्त्तकः। गर्त्तोत्तरपदाच्छस्य (४।२।१३७) बाधा।

## १२५। अवृद्धादपि बहुवचनविषयात्।

बहुवचनविषयाज्जनपदाद् वृद्धादवृद्धाच्च वुञ् स्यात्। छाणोरपवादः। आङ्गकः। आजमीढ़कः। वृद्धात्। जाम्बकः। कालञ्जरकः।

१२६ । कच्छाग्निवक्त्रगर्त्तोत्तरपदात् ।

कच्छाद्यन्ताद् देशाद् वुञ् स्यात् । दारुकच्छकः । काण्डाग्नकः । सैन्धुवक्त्रकः । बाहुगर्त्तकः ।

१२७ । धूमादिभ्यश्च ।

एभ्यो देशे वुञ् स्याच् छादेर्बाधकः । धौमकः । वैदेहकम् । एवं साकेत । राजगृह । उज्जयिनी । दक्षिणापथ । "दक्षिणापथी वृत्ति"रिति तु चिन्त्यम् ।

(1) समुद्रान्नौमनुष्ययोः । वुञ् स्यात् । सामुद्रिका नौः । सामुद्रको मनुष्यः । नेह । सामुद्रं जलम् । सामुद्रं लवणम् ।

१२८ । नगरात् कुत्सनप्रावीण्ययोः ।

वुञ् स्यात् । खलो नागरकः । कुशला नागरकाः । कुत्सनप्रावीण्ययोः किम् ? नागरा विप्राः ।

१२९ । अरण्यान् मनुष्ये ।

वुञ् स्यात् । आरण्यको मनुष्यः ।

(क) पथ्यध्यायन्यायविहारहस्तिषु । आरण्यकः पन्था इत्यादि ।

(ख) वा गोमयेषु । आरण्यकमारण्यं वा गोमयम् ।

१३० । विभाषा कुरुयुगन्धराभ्याम् ।

आभ्यां वुञ् स्याद्वा । कौरवकः कौरवो वा । यौगन्धरको यौगन्धरो वा ।

१३१ । मद्रवृज्योः कन् ।

आभ्यां कन् स्यात् । मद्रकः । वृजिकः ।

१३२ । कोपधादण् ।

कोपधाज्जनपदादण् स्यात् । वुञो बाधा । ऋषिकेषु जात आर्षिकः । माहिषिकः । आर्ष्यकः । अण्ग्रहणादुवर्णादपि देशे । ऐक्ष्वाक इत्येके ।

१३३ । कच्छादिभ्यश्च ।

देशेऽण् स्यात् । काच्छः । सैन्धवः । तदन्ताच्चेष्टम् । सौरसैन्धवम् । कच्छ । सिन्धु । कम्बोज । गन्धार । कश्मीर । साल्व । कुरु । रङ्कु ।

## १३४। मनुष्यतत्स्थयोर्वुञ्।

अनयोरर्थयोः कच्छादिभ्यो वुञ् स्यात्। काच्छको मनुष्यः। सैन्धवकः। साल्वकः। तत्स्थे। काच्छकमस्य हसितम्। काच्छिका चूड़ा। सैन्धविका।

## १३५। अपदातौ साल्वात्।

अपदाताविव साल्वाद् वुञ् स्यात्। साल्वको मनुष्यः। नेह। साल्वः पदातिः।

## १३६। गोयवाग्वोश्च।

अनयोः साल्वाद्वुञ् स्यात्। साल्वको गौः। साल्विका यवागूः।

## १३७। गर्त्तोत्तरपदाच्छः।

गर्त्तान्ताद् देशाच्छः स्यात्। वृकगर्त्तीयः। हस्तगर्त्तीयः।

## १३८। गहादिभ्यश्च।

एभ्यश्छः स्यात्। गहीयः। अन्तस्थीयः। नान्तरीयः। एकग्रामीयः। गह। अन्तस्थ। नान्तर। सम। विषम। आकृतिगणोऽयम्। तेनाङ्गाधिकारीयः। नगरीयः। पूर्वत्वासिद्धीय इत्यादि सिध्यति।

(क) पृथिवीमध्यस्य मध्यमश्च। मध्यमीयः।

(ख) चरणेऽण् च। माध्यमः। मध्यमीयः।

(1) मुखपार्श्वतसोर्लोपः। मुखतीयः। पार्श्वतीयः।

(2) कुग् जनस्य परस्य च। जनकीयम्। परकीयम्।

(3) देवस्य चेति वक्तव्यम्। देवकीयम्। चान्द्रास्तु परजनदेवराज्ञां कुक् चेति पठन्ति। स्वस्य च। स्वकीयम्। वामनस्तु स्वशब्दादपि दारादीनाञ्चेत्यैजागम (७।३।४) मुदाहरिष्यति स्वस्येदं सौवमिति।

(4) वेणुकादिभ्यो छण्श्च। वैणुकीयम्। चैत्रकीयम्।

## १३९। प्राचां कटादेः।

कटपूर्वात् प्राग्देशाच्छः स्यात्। कटनगरीयम्। कटघोषीयम्।

१४० । राज्ञः क च ।

राज्ञश्छः स्यात् कश्चान्तादेशः । राजकीयम् ।

१४१ । वृद्धादकेकान्तखोपधात् ।

वृद्धादकेकान्तात् खोपधाच्च देशाच्छः स्यात् । आरीहणकीयम् । आश्वत्थिकीयम् । कौटशिखीयम् ।

१४२ । कन्थापलदनगरग्रामह्रदोत्तरपदात् ।

कन्थाद्यन्ताद् देशाच्छः स्यात् । वाहीकग्रामविधेरपवादः । दाक्षिकन्थीयः । दाक्षिपलदीयः । दाक्षिनगरीयः । वाहीकग्रामीयः । माहिषग्रामीयः । वाहीकह्रदीयः । माहिषह्रदीयः ।

१४३ । पर्वताच्च ।

छः स्यात् । "पर्वतीय इति मावजीगणः" ।

१४४ । विभाषाऽमनुष्ये ।

मनुष्यादन्यत्र पर्वताज्जातादौ छो वा स्यात् । पर्वतीयं फलम् पार्वतं वा ।

१४५ । कृकणपर्णाद् भारद्वाजे ।

भारद्वाजदेशे कृकणपर्णाभ्यां छः स्यात् । कृकणीयम् । पर्णीयम् । उक्तं देशे ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४।२ ॥ समाप्तश्च रक्तपादः ।

अथ

# भाषावृत्तिः ।

## चतुर्थोऽध्यायः । तृतीयः पादः ।

### १ । युष्मदस्मदोरन्यतरस्यां खञ्च ।

शेष इत्येव । युष्मदस्मदोः खञ् छश्च स्याद्वा । यौष्माकीणम् । आस्माकीनम् । युष्मदीयम् । अस्मदीयम् । पक्षेऽण् च । यौष्माकम् । आस्माकम् ।

### २ । तस्मिन्नणि च युष्माकास्माकौ ।

तस्मिन् खञि अणि च युष्मदस्मदोर्युष्माकास्माकादेशौ स्याताम् । तथैवोदाहृतम् ।

### ३ । तवकममकावेकवचने ।

एकार्थे युष्मदस्मदोस्तवकममकौ स्यातां खञि । अणि च । तावकीनम् । मामकीनम् । तावकम् । मामकम् ।

### ४ । अर्द्धाद् यत् ।

अस्माद् यत् स्यात् । अर्द्धंग्रम् ।

(क) सपूर्वपदाट् ठञ् वक्तव्यः । गौतमार्द्धिकम् ।

### ५ । परावराधमोत्तमपूर्वाच्च ।

एतत्पूर्वपदादर्धाद् यत् स्यात् । परार्द्धंग्रम् । अवरार्द्धंग्रम् । अधमार्द्धंग्रम् । उत्तमार्द्धंग्रम् ।

## ६ । दिक्पूर्वपदाट् ठञ्च ।

दिक्पूर्वपदादर्द्धाट् ठञ् स्यात् । यच्च । पौर्वार्द्धिकम् । पूर्वार्द्ध्यम् । दाक्षिणार्द्धिकम् । दक्षिणार्द्ध्यम् ।

## ७ । ग्रामजनपदैकदेशादञ्ठञौ ।

अनयोरेकदेशाद् दिक्पूर्वपदादर्द्धादञ्ठञौ स्याताम् । इमेऽस्य ग्रामस्य जनपदस्य वा पौर्वार्द्धाः पौर्वार्द्धिकाः ।

## ८ । मध्यान्मः ।

मध्यशब्दाच्छेषे मः स्यात् । मध्यमः ।

(क) आदेश्च । आदिमः ।

(ख) अवोऽधसोर्लोपश्चेल्येके । अवमः । अधमः ।

## ९ । अ सांप्रतिके ।

मध्यादकारःस्यान्न्याय्ये नात्युच्चैर्नातिनीचैः । मध्यं काष्ठम् । मध्यस्तार्किकः ।

## १० । द्वीपादनुसमुद्रं यञ् ।

समुद्रसमीपे द्वीपाद् यञ् स्यात् । द्वैप्या वणिजः ।

## ११ । कालाट् ठञ् ।

शेषे कालवाचिनष्ठञ् स्यात् । द्विवार्षिकः । द्वैवर्षिकः । मासिकः । सांवत्सरिकः । आह्निकः । मौहूर्त्तिकः । कालाधिकारः प्राक् तत्र जातात् (४।३।२५) ।

## १२ । श्राद्धे शरदः ।

श्राद्धे शरदष्ठञ् स्यात् । शारदिकं श्राद्धम् । शारदमन्यत् ।

## १३ । विभाषा रोगातपयोः ।

अनयोरर्थयोः शारदष्ठञ् स्याद्वा । शारदिकः शारदो वा रोग आतपो वा । ठञा मुक्ते ऋतव्यण् (४।३।१६) ।

### १४। निशाप्रदोषाभ्याञ्च।

आभ्याञ्च ठञ् वा स्यात्। नैशिकं नैशं वा तमः। प्रादोषिकः प्रादोषो वा।

### १५। श्वसस्तुट् च।

श्वःशब्दात् ठञ् वा स्यात्। तुट् चागमः। श्वो भविता शौवस्तिकः। "शौवस्तिकत्वं विभवा न येषाम्।" पक्षे श्वस्त्यम्। श्वस्तनम्।

### १६। सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्।

एभ्यः शेषेऽण् स्यात्। सन्धिवेलादिः। सान्धिवेलम्। सान्ध्यम्। आमावास्यम्। पौर्णमासम्। त्रायोदशम्। चातुर्द्दशम्। प्रातिपदम्। ऋतोः। ग्रैष्मम्। शैशिरम्। नक्षत्रात्। तैषम्। तिष्यपुष्ययोर्नक्षत्राणीति (६।४।१४९, वा) यलोपः। पौषम्।

(1) संवत्सरात् फलपर्वणोरेव। सांवत्सरं फलं पर्व वा। नेह। सांवत्सरिको व्याधिः।

### १७। प्रावृष एण्यः।

स्यात्। प्रावृषेण्यो मेघः। "प्रावृषेण्यं पयोवाहम्"।

### १८। वर्षाभ्यष्ठक्।

स्यात्। वार्षिकम्। तदन्ताच्च। पौर्ववर्षिकम्।

### १९। छन्दसि ठञ्।

### २०। वसन्ताच्च।

छन्दःसूत्रद्वयम्।

### २१। हेमन्ताच्च।

### २२। सर्वत्राण् तलोपश्च।

हेमन्तादण् स्यात् तलोपश्च। हैमनम्। "रजनीष्वपि हैमनीषु"। ऋत्वणपीष्यते। हैमन्तम्। पूर्वसूत्रे ठञ्प्रत्ययेनाभिसम्बन्धाद् भाषायामपि। हैमन्तिकः। सर्वत्रेत्येकवचनो (40) छन्दोऽधिकारनिवृत्त्यर्थम्।

---

(40) एकवचनाविति प्रधानवचनावित्यर्थः। Vide the notes on 1. 1. 16 and on 3. 4. 99.

## २३ । सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्टुट्युलौ तुट् च ।

सायमादिभ्युटुट्युलौ स्याताम् । तुट् चागमः । सायन्तनम् । चिरन्तनम् । निपातनान्मकारः । "सायन्तनीं तिथिप्रण्यः" । प्राह्णेतनम् । प्रगेतनम् । निपातनादेकारः । अव्ययात् । दिवातनम् । दोषातनम् । इह टुट्युलौ भवतो विप्रतिषेधेन । प्राक्तनम् । प्रातस्तनम् । चिरपरुत्परारिभ्यस्त्न इति जयादित्यः । चिरत्नम् । परुत्नम् । परारित्नम् । अग्रपश्चाड्डिमजिति च्छान्दसमिति भागवृत्तिः । अग्रिमम् । पश्चिमम् । अन्ताच्च डिमजिति जयादित्यः । अन्तिमम् ।

## २४ । विभाषा पूर्वाह्णापराह्णाभ्याम् ।

आभ्यां टुट्युलौ वा स्याताम् । तुट् च । पूर्वाह्णेतनम् । अपराह्णेतनम् । घकालतनेष्विति (६।३।१७) सप्तम्या अलुक् । पक्षे कालाट्ठञ् (४।३।११) । पौर्वाह्णिकः । आपराह्णिकः । पूर्णः कालाधिकारः ।

## २५ । तत्र जातः ।

अत्रार्थे यथाविहितमणादयो घादयश्च स्युः । माथुरः । स्रौघ्नः । औत्सः । राष्ट्रियः । कालेयकः ।

## २६ । प्रावृष ठप् ।

प्रावृषो जातार्थे ठप् स्यात् । प्रावृषिकः ।

## २७ । संज्ञायां शरदो वुञ् ।

नाम्नि शरदो वुञ् स्यात् । शारदका मुद्गाः । शारदमन्यत् ।

## २८ । पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करात् वुन् ।

एभ्यो जातार्थे नाम्नि वुन् स्यात् । पूर्वाह्णकः । अपराह्णकः । आर्द्रकम् । मूलकम् । प्रदोषकः । अवस्करकः ।

## २९ । पथः पन्थ च ।

पथो वुन् स्यात् । पन्थादेशश्च जातार्थे । पन्थको वत्सः ।

## ३०। अमावास्याया वा।

अतो वा वुन् स्यात्। अमावास्यकः। आमावास्यो वा।

## ३१। अ च।

अस्या अकारश्च स्यात्। अमावास्यः।

## ३२। सिन्ध्वपकराभ्यां कन्।

जातार्थे आभ्यां कन् स्यात्। सिन्धुकः। अपकरकः।

## ३३। अणञौ च।

आभ्यामिमौ स्याताम्। सैन्धवः। आपकरः। स्वरे भेदः।

## ३४। श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तवि-शाखाषाढ़ाबहुलाल्लुक्।

एभ्यो जातार्थे नक्षत्राणो लुक् स्यात्। लुक् तद्धितलुकीति ( १।२।४९ ) स्त्रीप्रत्ययस्य लुक्। श्रविष्ठः। फल्गुन्योऽर्जुनः। स्वार्थेऽपि "फाल्गुनो मासे चार्जुने" इति। पुनर्वसुर्वररुचिः। बहुलः।

(क) चित्रारेवतीरोहिणीभ्यः स्त्रियां लुक्। चित्रा। रेवती। रोहिणी। प्रत्यये लुप्ते पुनष्टाप्। यथासम्भवं गौरादिङीष् वा।

(ख) फल्गुन्याषाढ़ाभ्यां टानौ। आभ्यां स्त्रियां टानौ स्यात्। फल्गुनी। अषाढ़ा।

(ग) श्रविष्ठाषाढ़ाभ्याञ्छण्। श्राविष्ठीयः। आषाढ़ीयः।

## ३५। स्थानान्तगोशालखरशालाच्च।

एभ्यो जातार्थप्रत्ययस्य लुक् स्यात्। गोस्थाने जातो गोस्थानः। अश्व-स्थानः। गोशालः। खरशालः।

## ३६। वत्सशालाभिजिदश्वयुक्शतभिषजो वा।

एभ्यो जातार्थप्रत्ययस्य लुग् वा स्यात्। वत्सशालो वात्सशालो वा। अभि-जित् आभिजितो वा। अश्वयुक् आश्वयुजो वा। शतभिषक् शातभिषजो वा।

## ३७ । नक्षत्रेभ्यो बहुलम् ।

नक्षत्रवाचिभ्यो बहुलं सन्धिवेलाद्यणो (४।३।१६) लुक् स्यात् । रौहिणः । रोहिणः । मार्गशीर्षः । मृगशिराः । पूर्णो जातार्थः । तत्रेति वर्त्तते यावत् तदस्य सोढ़म् (४।३।५२) ।

## ३८ । कृतलब्धक्रीतकुशलाः ।

अत्र कृतादिषु यथाविहितं स्यात् । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः । राष्ट्रियः ।

## ३९ । प्रायभवः ।

प्रायभव इत्यर्थे यथाविहितं स्यात् । स्रुघ्ने प्रायेण भवति स्रौघ्नः । राष्ट्रियः ।

## ४० । उपजानूपकर्णोपनीवे ठक् ।

एभ्यः प्रायभवेऽर्थे ठक् स्यात् । "पाणी यस्यौपजानुकौ" । "औपकर्णिक-लोचनः ।" "औपनीविकमरुद्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम् ।"

## ४१ । सम्भूते ।

अत्रार्थे यथाविहितं स्यात् । स्रुघ्ने सम्भवति स्रौघ्नः च्छाम्भृत् । स्थानमिह सम्भवार्थः ।

## ४२ । कोशाड् ढञ् ।

कौशेयम् । रूढ्या वस्त्रमेव , विकारेऽभिधानम् ।

## ४३ । कालात् साधुपुष्प्यत्पच्यमानेषु ।

एष्वर्थेषु कालाद् यथाविहितं स्यात् । हैमन्ते साधु हैमनं वासः । शैशिर-मनुलेपनम् । ग्रैष्मम् । वसन्ते पुष्प्यति वासन्ती लता । माधवी । शरदि पच्यन्ते शारदा माषाः । कालादित्यधिकारः प्राक् तत्र भवात् (४।३।५३) ।

## ४४ । उप्ते च ।

उप्तेऽर्थे कालाद् यथाविहितं स्यात् । हैमना यवाः । ग्रैष्माः शालयः । तत्रोप्ता इत्यर्थः ।

**४५। आश्वयुज्या वुञ्।**

आश्वयुजीशब्दाद् वुञ् स्यादुक्तेऽर्थे। ठञो बाधा। आश्वयुज्यां पौर्णमास्यामुप्ता आश्वयुजका माषाः।

**४६। ग्रीष्मवसन्तादन्यतरस्याम्।**

आभ्यामुक्तेऽर्थे वुञ् वा स्यात्। ग्रैष्मकम्। वासन्तकम्। पक्षे ऋत्वण् (४।३।१६)। ग्रैष्मम्। वासन्तम्।

**४७। देयमृणे।**

अत्रार्थे यथाविहितं स्यात्। मासे देयमृणम् मासिकम्। सांवत्सरिकम्।

**४८। कलाप्यश्वत्थयवबुसाद्वुन्।**

यत्र मयूराः कलापिनोऽश्वत्थाः फलिनो यवबुसा श्चोत्पद्यन्ते स कालस्तथा। तस्मात् पूर्वार्थे वुन् स्यात्। कलापिनि काले देयमृणं कलापकम्। अश्वत्थकम्। यवबुसकम्।

**४९। ग्रीष्मावरसमाद्वुञ्।**

आभ्यां पूर्वार्थे वुञ् स्यात्। ग्रैष्मकम्। आवरसमकम्।

**५०। संवत्सराग्रहायणीभ्यां ठञ्च।**

आभ्यां ठञ् स्याद्वुञ् च। संवत्सरे देयमृणं सांवत्सरिकं सांवत्सरकं वा। आग्रहायणिकम्। आग्रहायणकं वा।

**५१। व्याहरति मृगः।**

अत्रार्थे कालाद् यथाविहितं स्यात्। निशायां व्याहरति नैशो मृगः। नैशिको वा। तत्रेति निवृत्तम्।

**५२। तदस्य सोढ़म्।**

अत्रार्थे कालाद् यथाविहितं स्यात्। निशासहचरितं कर्म निशा। तत् सोढ़ं जितमभ्यस्तमस्य नैशिकश्छात्रो नैशो वा। प्रादोषिकः प्रादोषो वा। उक्तं कालात्।

**५३ । तत्र भवः ।**

अत्रार्थे यथाविहितं स्यात् । स्रुघ्ने भवो विद्यमानः स्रौघ्नः । राष्ट्रियः । तत्रभवाधिकारः प्राक् तत आगत इत्यस्मात् (४।३।७४) ।

**५४ । दिगादिभ्यो यत् ।**

एभ्यो यत् स्यात् । दिशि भवं दिश्यम् । वन्यम् । रहस्यम् । आद्यम् । अन्त्यम् । यूथ्यम् । गव्यम् । रस्यम् ।

(1) उदकात् संज्ञायाम् । उदक्या रजस्वला । अन्यत्र औदकौ मत्स्यः ।

**५५ । शरीरावयवाच्च ।**

यत् स्यात् । दन्त्यम् । तालव्यम् । कण्ठ्यम् । ओष्ठ्यम् । ऊरव्यम् । उरस्यम् । मूर्धन्यम् । मुख्यम् ।

**५६ । दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।**

एभ्यो ढञ् स्यात् । दार्त्तेयम् । कौक्षेयोऽसिः । कालशेयं जलम् । वास्तेयम् । आस्तेयम् । आहेयम् । "भोगान् भोगानिवाहेयानि"ति ।

**५७ । ग्रीवाभ्योऽण् च ।**

अस्मा अण्ढञौ स्याताम् । ग्रैवम् । ग्रैवेयम् । बहुवचनं वैचित्र्यार्थम् ।

**५८ । गम्भीराञ् ञ्यः ।**

स्यात् । गाम्भीर्यम् ।

(क) बहिर्देवपञ्चजनेभ्यश्च । बहिषष्टिलोपः । बाह्यम् । दैव्यम् । पाञ्चजन्यम् ।

**५९ । अव्ययीभावाच्च ।**

अस्माद् भवार्थे ञ्यः स्यात् । पारिमुख्यम् । पारिहनव्यम् । नोपकूलादिभ्यः । औपकूलः । औपशालः ।

**६० । अन्तःपूर्व्वपदाट् ठञ् ।**

अन्तःपूर्वपदादव्ययीभावाट् ठञ् स्यात् । आन्तर्दैहिकः । आन्तर्वेश्मिकः । आन्तर्वैंशिकः ।

(क) अध्यात्मादिभ्यश्च । भवार्थे ठञ् स्यात् । आध्यात्मिकम् । आधिभौतिकम् । आधिदैविकम् । औपसर्गिकम् । चातुरर्थिकम् । त्रैवर्णिकम् । साम्प्रतिकम् । गैरिकमित्यादि । आकृतिगणोऽयम् ।

(ख) समानस्य तदादेश्च । सामानिकः । सामानग्रामिकः ।

(ग) ऊर्ध्वंदमोर्ध्वदेहाच्च । और्ध्वन्दमिकः । और्ध्वदेहिकः । (41)

(घ) लोकोत्तरपदस्य च । ऐहलौकिकः । पारलौकिकः ।

(ङ) मुखपार्श्वतसोरीयः । मुखतीयः । पार्श्वतीयः । अव्ययानां भमात्रे टिलोपः ।

(च) कुग्जनस्य परस्य च । जनकीयः । परकीयः ।

(छ) ईयः कार्य्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा । मध्यीयः । माध्यमः । मध्यमीयः ।

(ज) मध्यस्य मध्यं दिनण् च प्रत्ययः । माध्यन्दिनमुपगायति ।

(झ) लुक् स्याम्नोऽजिनान्ताच्च । अश्वत्थामा । कृष्णाजिनः ।

## ६१ । ग्रामात् पर्य्यनुपूर्वात् ।

अस्मादव्ययीभावाट् ठञ् स्यात् । पारिग्रामिकः । आनुग्रामिकः ।

## ६२ । जिह्वामूलाङ्गुलेश्छः ।

आभ्यां छः स्यात् । यतो बाधा । जिह्वामूलीयम् । अङ्गुलीयम् ।

## ६३ । वर्गान्ताच्च ।

वर्गान्ताच्छः स्यात् । कवर्गीयः । पवर्गीयः । चवर्गीयः ।

## ६४ । अशब्दे यत्खावन्यतरस्याम् ।

वर्गान्तादशब्दे यत्खौ वा स्याताम् । मित्रवर्ग्यः । मित्रवर्गीणः । मित्रवर्गीयो वा । अशब्दे किम् ? कवर्गीयो वर्णः ।

## ६५ । कर्णललाटात् कनलङ्कारे ।

आभ्यामलङ्कृतौ कन् स्यात् । कर्णे भवोऽलङ्कारः कर्णिका । ललाटिका ।

---

(41) ऊर्ध्वदेहशब्दौ नानुशतिकादिरित्येव सद्भवः ।

## ६६। तस्य व्याख्यान इति व्याख्यातव्यनाम्नः।

तस्य व्याख्यानार्थे चकाराद् भवार्थे च व्याख्येयनाम्नो यथाविहितं स्यात्। सुपां व्याख्यानो ग्रन्थः सुप्सु भवो वा सौपो ग्रन्थः। तैङः। कार्त्तः।

## ६७। बह्वचोऽन्तोदात्ताट् ठञ्।

व्याख्येयनाम्नो बह्वचः प्रातिपदिकाट् ठञ् स्याद् भवव्याख्यानयोः। षात्वणत्विकः। कार्त्तकृतिकः। समासस्वरेणान्तोदात्ता प्रकृतिः।

## ६८। क्रतुयज्ञेभ्यश्च। (42)

क्रतुभ्यो यज्ञेभ्यश्च भवव्याख्यानयो ठञ् स्यात्। आग्निष्टोमिकः। पाञ्चौदनिकः। पाकयज्ञिकः। नावयज्ञिकः।

## ६९। अध्यायेष्वेवर्षेः।

ऋषिवाचिनो व्याख्येयनाम्नः पूर्वार्थयो ठञ् स्यादध्यायश्चेत्। वासिष्ठिकोऽध्यायः। वैश्वामित्रिकः।

## ७०। पौरोडाशपुरोडाशात् ष्ठन्।

आभ्यां पूर्वार्थयोः ष्ठन् स्यात्। पौरोडाशिकी। पुरोडाशिकी।

## ७१। छन्दसो यदणौ।

अस्मादिमौ स्याताम्। छन्दस्यः। छान्दसः।

## ७२। द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट् ठक्।

द्व्यजादिभ्यः पूर्वार्थयो ठक् स्यात्। द्व्यचः। नैष्ठिकः। ऋतः। चातुर्होत्रिकः। ऋचः। आर्चिकः। ब्राह्मणिकः। प्राथमिकः। आध्वरिकः। पौरश्चरणिकः। नामाख्यातिकः।

(क) विगृहीताच्च। नामिकः। आख्यातिकः।

---

(42) क्रतुभ्य इत्येव सिद्धे यज्ञग्रहणमसोमयागेभ्योऽपि यथा स्यात्। पाञ्चौदनिकः। दाशौदनिक इति।

## ७३। अण् ऋगयनादिभ्यः।

ऋगयनादेः पूर्वार्थयोरण् स्यात्। आर्गयनः। नैरुक्तः। शैक्षः। नैगमः। वैयाकरणः। यौगः। पदस्य व्याख्यानः पादः। भवव्याख्याने निवृत्ते।

## ७४। तत आगतः।

अत्रार्थे यथाविहितं स्यात्। स्रुघ्नादागतः स्रौघ्नः। माथुरः। राष्ट्रियः। अधिकारोऽयं प्रभवतीति (४।३।८३) यावत्।

## ७५। ठगायस्थानेभ्यः।

आयस्थानवाचिभ्य ठक् स्यात्। आपणादागत आपणिकः। शौल्क-शालिकः।

## ७६। शुण्डिकादिभ्योऽण्।

एभ्य आयस्थानवाचिभ्य ठगपवादोऽण् स्यात्। शौण्डिकः। कार्कणः।

## ७७। विद्यायोनिसम्बन्धेभ्यो वुञ्।

विद्यायोनिकृतः सम्बन्धो येषां तेभ्य आगतार्थे वुञ् स्यात्। औपाध्याय-कम्। आचार्य्यकम्। पैतामहकम्। मातुलकम्।

## ७८। ऋतष्ठञ्।

विद्यायोनिसम्बन्धादृतष्ठञ् स्यात्। हौतृकम्। मातृकम्। स्वासृकम्। भ्रातृकम्।

## ७९। पितुर्यच्च।

पितुर्य्यत् स्यात् ठञ् च। पित्र्यम्। पैतृकम्।

## ८०। गोत्रादङ्कवत्।

गोत्रान्तादागतार्थेऽङ्कवत् प्रत्ययः स्यात्। अङ्कग्रहणं तस्येदमित्यर्थोप-लक्षणार्थम् ( ४।३।१२० )। औपगवेभ्य आगत औपगवकः। नाडायनकः। गोत्रचरणाद् वुञिति वुञ् (४।३।१२६)।

## ८१ । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।

हेतोर्मनुष्याच्चागतार्थे रूप्यो वा स्यात् । समादागतं समरूप्यं समीयं वा । गहादित्वाच्छः (४।२।१३८) । देवदत्तरूप्यं देवदत्तीयं वा ।

## ८२ । मयट् च ।

आभ्यां मयट् च स्यात् । सममयम् । देवदत्तमयम् । पूर्णं आगताधिकारः । तत इति वर्त्तत एव ।

## ८३ । प्रभवति ।

ततः प्रभवतीत्यर्थे यथाविहितं स्यात् । हिमवतः प्रभवति हैमवती गङ्गा । दारदो नदः । दारदी सिन्धुः ।

## ८४ । विदूराञ् ञ्यः ।

अतो ञ्यः स्यात् । विदूरात् प्रभवति वैदूर्य्यो मणिः । (43)

## ८५ । तद्गच्छति पथिदूतयोः ।

तद् गच्छतीत्यर्थे यथाविहितं स्यात् पथिदूतौ चेत् । स्रुघ्नं गच्छति स्रौघ्नः पन्थाः । माथुरो दूतः ।

## ८६ । अभिनिष्क्रामति द्वारम् ।

अभिनिष्क्रामत्यर्थे यथाप्राप्तं स्याद् द्वारञ्चेत् । स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् । उपचाराद् द्वारं कर्तृ ।

## ८७ । अधिकृत्य कृते ग्रन्थे ।

अत्र यथाप्राप्तं स्यात् । सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः । भैमरथी आख्यायिका । साहचर्य्याद् वासवदत्ता आख्यायिका । कादम्बरी कथा ।

---

(43) मणिरयं वस्तुतो वालवायनाम्नि पर्वत उत्पद्यते । विदूराख्यनगरे तु संस्क्रियते । अतोऽत्र वार्त्तिकम्—"वालवायो विदूरञ्च प्रकृत्यन्तरमेव वा । न वै तत्रास्ति चेद् ब्रूयाज्जित्वरीवदुपाचरेत्" ॥१॥ इति । माघे च—"अभवन् यदङ्गनभुवः सन्नद्धवालवायजमणिस्थलाङ्कुरा" इति । कालिदासप्रयोगस्तु सूत्रानुसारी यथा "विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेवेति" ।

## ८८ । शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।

एभ्यः पूर्वार्थे छः स्यात् । शिशुक्रन्दं रोगमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमसभीयः । द्वन्द्वात् । श्येनकपोतीयः । वाक्यपदीयम् । शब्दार्थसम्बन्धीयं प्रकरणम् । किरातार्जुनीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयः । शिष्योपनयनीयोऽध्यायः । सीतान्वेषणीयं काव्यम् । प्रद्युम्नागमनीयम् ।

(क) द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः । दैवासुरम् । गौणमुख्यम् ।

## ८९ । सोऽस्य निवासः ।

अत्रार्थे यथाप्राप्तं स्यात् । स्रुघ्नो निवासोऽस्य स्रौघ्नः । राष्ट्रियः । माथुरः । सोऽस्येत्यधिकारो यावत् तेन प्रोक्तमिति (४।३।१०१) ।

## ९० । अभिजनश्च ।

सोऽस्याभिजन इत्यर्थे यथाविहितं स्यात् । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । माथुरः । राष्ट्रियः । कुलस्थानमभिजनः ।

## ९१ । आयुधजीविभ्यश्छः पर्वते ।

पर्वतात् पूर्वार्थे छः स्यादायुधजीविषु । लोहितगिरिः पर्वतोऽभिजन एषां लोहितगिरीयाः शस्त्रजीविनः । आयुधजीविभ्यः किम् ? अर्चोदः पर्वतोऽभिजन एषामार्चोदा ब्राह्मणाः ।

## ९२ । शण्डिकादिभ्यो ञ्यः ।

शण्डिकोऽभिजनोऽस्य शाण्डिक्यः । चाणक्यः । शाक्यः ।

## ९३ । सिन्धुतक्षशिलादिभ्योऽणञौ ।

सिन्ध्वादेरण् स्यात् । सिन्धुरेषामभिजनः सैन्धवाः । काश्मीराः । तक्षशिलादेरञ् । ताक्षशिलः । पार्वतः ।

## ९४। तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः।

एभ्य एते स्युः। तूद्यभिजनोऽस्य तौदेयः। शालातुरीयः (44)। वार्मतेयः। कौचवार्य्यः।

## ९५। भक्तिः।

भज्यते सेव्यतेऽसौ भक्तिः। अत्रार्थे यथाविहितं स्यात्। बुघ्नो भक्तिरस्य बौघ्नः। शैवः। सौरः। वाघ्नः। स्रौघ्नः। माथुरः।

## ९६। अचित्तादेशकालाट्ठक्।

अदेशकालादचित्ताट् ठक् स्यात्। अपूपो भक्तिरस्य आपूपिकः। मौदकिकः। अदेशकालात् किम्? स्रौघ्नः। शैषः।

## ९७। महाराजाट् ठञ्।

अस्माट् ठञ् स्यात्। महाराजो भक्तिरस्य माहाराजिकः।

## ९८। वासुदेवार्जुनाभ्यां वुन्।

आभ्यां वुन् स्यात्। वासुदेवकः (45)। अर्जुनकः। सोऽस्य भक्तिः।

## ९९। गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्।

गोत्रप्रत्ययान्तेभ्यः क्षत्रियाख्येभ्यश्च बहुलं वुञ् स्यात्। औपगवो भक्तिरस्य औपगवकः। नाकुलकः। बाहुल्यान्नेह। पाणिनीयः। सौरमसीयः। पौरवीयः।

## १००। जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने।

बहुले जनपदेन तुल्यशब्दानां जनपदिनां जनपदवत् सर्वं कार्य्यं स्यात्। जनपदतदवध्यो (४।२।१२४) रित्युक्ताः प्रत्यया जनपदिभ्योऽप्यतिदिश्यन्ते।

---

(44) शालातुरीयः पाणिनिरिति न्यासादावुक्तम्।

(45) वासुदेवोऽयं परमात्मरूपी देवताविशेषः। न गोत्राख्यः। नापि क्षत्रियः।

यथा अङ्गानां निवासो जनपदोऽङ्गाः। तत्र जात इत्यण्वादपीति (४।२।१२५) वुञ्। आङ्गकः। सौह्मकः। तद्दङ्गा जनपदिनः क्षत्रिया भक्तिरस्य आङ्गकः। सौह्मकः। पूर्णावधिर्भक्त्यधिकारः। सोऽस्येत्यधिकारः सम्पूर्णः।

## १०१। तेन प्रोक्तम्।

अत्रार्थे यथाविहितं स्यात्। अन्येन कृता माथुरेण प्रोक्ता व्याख्याता माथुरी वृत्तिः।

## १०२। तित्तिरिवरतन्तुखण्डिकोखाच्छण्।

एभ्यश्छण् स्यात्। तद्विषयता चात्रोक्ता। तित्तिरिणा प्रोक्तं छन्दोऽधीयते तैत्तिरीयाः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः।

## १०३। काश्यपकौशिकाभ्यामृषिभ्यां णिनिः।

आभ्यां तेन प्रोक्ते णिनिः स्यात्। तद्विषयता च। काश्यपेन प्रोक्तं छन्दोऽधीयते काश्यपिनः। कौशिकिनः।

## १०४। कलापिवैशम्पायनान्तेवासिभ्यश्च।

कलाप्यन्तेवासिभ्यश्चतुर्भ्यो णिनिः स्यात्। हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः। तुम्बुरु। उलप। छगलिन्। वैशम्पायनशिष्येभ्यो नवभ्यश्च। आलम्बिनः। कामलिनः। एवं पलङ्ग। ऋचाभ। आरुणि। ताण्ड्य। श्यामायन। कठ। कलापिन्।

## १०५। पुराणप्रोक्तेषु ब्राह्मणकल्पेषु।

पुराणैर्महर्षिभिः प्रोक्तेषु ब्राह्मणेषु कल्पेषु च णिनिः स्यात्। भाल्लविनो ब्राह्मणाः। पैङ्गी कल्पः।

## १०६। शौनकादिभ्यश्छन्दसि।

छन्दसि विषये शौनकादेर्णिनिः स्यात्। शौनकेन प्रोक्तं छन्दोऽधीयते शौनकिनः। वाजसनेयिनः।

१०७ । कठचरकाल्लुक् ।

आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् । कठेन प्रोक्तं छन्दोऽधीयते कठाः । चरकाः ।

१०८ । कलापिनोऽण् ।

स्यात् । कलापिना प्रोक्तं छन्दोऽधीयते कालापाः । सब्रह्मचारीति (६।४।१४४, वा) टिलोपः । अण्ग्रहणमधिकविध्यर्थम् । मौदाः ।

१०९ । छगलिनो ढिनुक् ।

अतो ढिनुक् स्यात् । छागलेयिनः । न स्तद्धित इति (६।४।१४४) टिलोपः ।

११० । पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।

पाराशर्य्याद् भिक्षुसूत्रे शिलालिनो नटसूत्रे प्रोक्तार्थे णिनिः स्यात् । पाराशर्य्येण प्रोक्तं भिक्षुसूत्र मधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः । अन्यत्र पाराशरीयाः श्लोकाः ।

१११ । कर्म्मन्दकृशाश्वादिनिः ।

आभ्यां प्रोक्ते तयोः सूत्रे स्यादिनिः । कर्मन्दी भिक्षुः । कृशाश्वी नटः । गतः प्रोक्ताधिकारः ।

११२ । तेनैकदिक् ।

अत्रार्थे यथाविहितं स्यात् । सुदाम्ना एकदिक् सौदामनी विद्युत् । सौरी वलाका ।

११३ । तसिश्च ।

पूर्वार्थे तसिः स्यात् । सुदामतः । सूर्य्यतः ।

११४ । उरसो यच्च ।

उरसो यत्तसी स्याताम् । उरसा एकदिक् उरस्यो हारः । उरस्तः ।

## ११५। उपज्ञाते।

अत्रार्थे यथाविहितं स्यात्। पाणिनिना उपज्ञातं प्रथमं कृतं पाणिनीयमकालकं व्याकरणम्। सौरः संग्रहः।

## ११६। कृते ग्रन्थे।

तेन कृते ग्रन्थे यथाविहितं स्यात्। वाररुचाः श्लोकाः।

## ११७। संज्ञायाम्।

नाम्नि तेन कृते यथाविहितं स्यात्। माक्षिकं मधु। सारघम्।

## ११८। कुलालादिभ्यो वुञ्।

एभ्यस्तेन कृते संज्ञायां वुञ् स्यात्। कौलालकं पात्रम्। वारुड़कम्। ऐन्द्रियकं ज्ञानम्।

## ११९। क्षुद्राभ्रमरवटरपादपादञ्।

एभ्योऽञ् स्यात्। क्षौद्रं मधु। भ्रामरम्। वाटरम्। पादपम्। पूर्वेणैव सिद्धे वचनं — 

पूर्णस्तेन कृतार्थः।

## १२०। तस्येदम्।

अत्रार्थे यथाविहितं स्यात्। उपगोरिदमौपगवम्। राष्ट्रियम्। शास्त्रीयं कार्य्यम्। तस्येदमित्यधिकारो विकारं यावत् (४।३।१३४) वर्त्तते।

(क) संवहेस्तृजन्तादणिट् च। संवोढ़ुरिदं सांवहित्रम्।

(ख) अग्नीधः शरणे रण् भत्वञ्च। आग्नीध्रं शरणम्। भत्वात् पदकार्य्यं जश्त्वं न भवति।

(ग) समिधामाधाने षेण्यण्। सामिधेनी ऋक्।

## १२१। रथाद् यत्।

रथस्येदं रथ्यं चक्रम्। रथोत्तरपदाच्च। परमरथ्यम्।

## १२२। पत्रपूर्वादञ्।

वाहनपूर्वाद् रथादञ् स्यात्। आश्वरथं चक्रम्।

## १२३ । पत्राध्वर्य्युपरिषदश्च ।

एभ्योऽञ् स्यात् । अश्वस्येदमाश्वम् । औष्ट्रो भारः । आध्वर्य्यवं शकटम् । पारिषदो दासः । पारिषदः समयः ।

## १२४ । हलसीराट् ठक् ।

हलस्येदं हालिकम् । सैरिकम् ।

## १२५ । द्वन्द्वाद्वुन् वैरमैथुनिकयोः ।

द्वन्द्वाद् वुन् स्यात् । वैरे । काकोलूकिका । अश्वमहिषिका । मैथुनिकायां विवाहे । अत्रिभारद्वाजिका ।

(क) द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः । दैवासुरं वैरम् । (46)

## १२६ । गोत्रचरणाद् वुञ् ।

आभ्यां वुञ् स्यात् । औपगवानामिदमौपगवकम् ।

(क) चरणाद् धर्म्माम्नाययोरभिधानम् । काठकम् । कालापकम् । मौदकम् ।

## १२७ । संघाङ्कलक्षणेष्वञ्यञिञामण् ।

अञाद्यन्तादण् स्यात् संघादौ वाच्ये । घोषग्रहणञ्चात्र । अञन्तात् । विदानामयं संघोऽङ्को लक्षणं घोषो वा वैदः । यञन्तात् । गार्गः । इञन्तात् । दाक्षः ।

## १२८ । शाकलाद्वा ।

शाकलादण् वा स्यात् । पक्षे वुञ् । शाकलः संघादिः । शाकलको वा ।

## १२९ । छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।

एभ्यो ञ्यः स्यात् । सङ्घादयो निवृत्ताः । सामान्येन तस्येदमित्यर्थे । धर्म्माम्नाययोर्विधिरित्यन्ये । छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् ।

---

(46) अयं दैवासुरमभूद् युद्धं पूर्णमब्दशतं पुरेति देवीमाहात्म्ये ? अयं आदित्वादचा ( ४।२।१२७ ) सिद्धम् । देवा असुराश्च प्रहर्त्तारो यत्रेति ।

## १३० । न दण्डमाणवान्तेवासिषु ।

एषु गोत्रचरणाद् वुञ् न स्यात् । गौकक्षा दण्डमाणवाः । दाक्षा अन्तेवासिनः ।

## १३१ । रैवतिकादिभ्यश्छः ।

एभ्यो गोत्रचरणाद् वुञपवादश्छः स्यात् । रैवतिकीयम् । स्वापिशीयम् ।

## १३२ । कौपिञ्जलहास्तिपदादण् ।

आभ्यामण् स्यात् । कौपिञ्जलः । हास्तिपादः ।

## १३३ । आथर्वणिकस्येकलोपश्च ।

आथर्वणिकादण् स्यादिकलोपश्च । आथर्वणो धर्म्म आम्नायो वा । पूर्णः शेषाधिकारः ।

## १३४ । तस्य विकारः ।

अत्रार्थे यथाविहितं स्यात् । अश्मनो विकार आश्मः (47) प्रासादः । "यस्यापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्वहम् ।" भास्मनः । मार्त्तिकः ।

## १३५ । अवयवे च प्राण्योषधिवृक्षेभ्यः ।

प्राण्यादिभ्यो विकारावयवयोर्यथाविहितं स्यात् । प्राणिभ्योऽञ् वक्ष्यति । ओषधेः । मौर्वं काण्डं भस्म वा । वृक्षात् । कारवीरम् । अतःपरं प्राण्यादेर्विकारावयवयोः प्रत्ययः । इतरेभ्यो विकारमात्रे ।

## १३६ । बिल्वादिभ्योऽण् ।

विकारेऽवयवे च स्यात् । बैल्वः । व्रैहः । मौद्गः ।

## १३७ । कोपधाच्च ।

कोपधादण् स्यात् । माधूकम् । वार्त्ताकवम् । तैन्तिड़ीकम् ।

## १३८ । त्रपुजतुनोः षुक् ।

आभ्यामण् स्यात् । षुगागमश्च । त्रापुषम् । जातुषम् ।

---

(47) अश्मनो विकार उपसंख्यानमिति (६।४।१४४, वा) विकारार्थे नकारलोपे आश्मः । अन्यत्राश्मनः ।

### १३९ । ओरञ् ।

उवर्णान्तादञ् स्यात् । दैवदारवम् ।

### १४० । अनुदात्तादेश्च ।

एभ्योऽञ् स्यात् । कापित्थम् । दाधित्थम् ।

### १४१ । पलाशादिभ्यो वा ।

अञ् वा स्यात् । पालाशम् । खादिरम् । पक्षेऽण् । स्वरे भेदः ।

### १४२ । शम्याष्ट्लञ् ।

ट्लञ् स्यात् । शामीलम् भस्म । शामीली स्रुक् ।

### १४३ । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।

विकारावयवयोर्भाषायां मयड् वा स्यात् । अश्ममयम् । आश्मं वा । दूर्वामयं दौर्वं वा । कपोतमयं कापोतं वा । लोहमयं लौहं वा । अभक्ष्याच्छादनयोरिति किम् ? मौद्गः सूपः । कार्पासं वासः ।

### १४४ । नित्यं वृद्धशरादिभ्यः ।

वृद्धसंज्ञकाच्छरादेश्च नित्यं मयट् स्यात् । आम्रमयम् । शालमयम् । शरमयम् । मृन्मयम् (48) । दर्भमयम् । तृणमयम् । नित्यमेकाचोऽशरादेरपीच्छन्ति । त्वङ्मयम् । वाङ्मयम् ।

### १४५ । गोश्च पुरीषे ।

मयट् स्यात् । गोः पुरीषं गोमयम् । गव्यमन्यत् ।

### १४६ । पिष्टाच्च ।

नित्यं मयट् स्यात् । पिष्टमयं भस्म ।

---

(48) यरोऽनुनासिकेऽनुनासिको वेत्यत्र (८।४।४५) प्रत्यये भाषायां नित्यवचनमित्युपसंख्यानात् मृन्मयमित्यत्र पदान्ते दकारस्य नित्यं नत्वम् । ततो नत्वस्यासिद्धत्वेन दकारत्वात् पदान्ते नलोपः प्रातिपदिकान्तस्येति (८।२।७) तस्य न लोपः । तथा पदान्तस्येत्यस्य (८।४।३७) भाष्यकृता प्रत्याख्यातत्वेऽपि पूर्व्ववदसिद्धत्वेन दकारत्वादस्य रषाभ्यामित्यनेनापि ( ८।४।१ ) न णत्वम् ।

## १४७। संज्ञायां कन्।

पिष्टान्नाम्नि कन् स्यात्। पिष्टकः। पिष्टिका।

## १४८। व्रीहेः पुरोडाशे।

अस्मादत्र मयट् स्यात्। व्रीहिमयः पुरोडाशः। व्रैहमन्यत्।

## १४९। असंज्ञायां तिलयवाभ्याम्।

आभ्यां मयट् स्यात्। तिलमयम्। यवमयम्। असंज्ञायां किम्? तैलम्। यावकः।

## १५०। द्व्यचश्छन्दसि।

## १५१। नोत्वद्वर्ध्रबिल्वात्।

इह च्छन्दःसूत्रद्वयम्।

## १५२। तालादिभ्योऽण्।

एभ्यः स्यादण्। मयड़ादेर्बाधा। तालं धनुः। वार्हिणम्।

## १५३। जातरूपेभ्यः परिमाणे।

सुवर्णवाचिभ्यः परिमाणे विकारेऽण् स्यात्। हाटकस्य विकारो निष्को हाटकः। जातरूपं कार्षापणम्। परिमाणे किम्? हाटकमयी यष्टिः।

## १५४। प्राणिरजतादिभ्योऽञ्।

प्राणिभ्यो रजतादेश्च मयड्बाधकोऽञ् स्यात्। कापोतम्। मायूरम्। श्यैनम्। राजतम्। दारवं पात्रादि। सैसम्। लौहम्। औडुम्बरम्। "पुरीं द्रक्ष्यथ काञ्चनीम्।" "काञ्चनी वासयष्टिः"।

## १५५। ञितश्च तत्प्रत्ययात्।

विकारावयवयो र्यो ञित्प्रत्ययस्तदन्तात् पुनस्तयोरञ् स्यात्। मयटो बाधा। दैवदारवस्य विकारोऽवयवो वा दैवदारवो यूपः। दाधित्थम्। पालाशम्। शामीलस्य विकारः शामीलः। ञितः किम्? अणन्तात्। बैल्वमयम्।

### १५६ । क्रीतवत् परिमाणात् ।

संख्याप्यत्र परिमाणं गृह्यते । न रूढ़िमात्रम् । परिमाणवाचिनो विकारे क्रीतार्थवत् प्रत्ययो वाच्यः । यथा निष्केण क्रीतो नैष्किक स्तथा निष्कस्य विकारोऽपि नैष्किकः । शत्यः । शतिकः । लुक् च क्रीतवत् । द्विसहस्रः । द्विसाहस्रः ।

### १५७ । उष्ट्राद् वुञ् ।

स्यात् । उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः ।

### १५८ । उमोर्णयो र्वा ।

आभ्यां वुञ् वा स्यात् । औमकम् । औमं वा । और्णकम् । और्णं वा ।

### १५९ । एण्या ढञ् ।

स्यात् । ऐणेयं मांसम् । ऐणेयी जङ्घा । एणादञे्व । ऐणम् ।

### १६० । गोपयसो र्यत् ।

आभ्यां यत् स्यात् । गव्यम् । पयस्यम् ।

### १६१ । द्रोश्च ।

द्रोर्यत् स्यात् । द्रव्यम् ।

### १६२ । माने वयः ।

द्रोर्माने वयः स्यात् । द्रुवयम् मानम् ।

### १६३ । फले लुक् ।

विकारावयवयोरुत्तस्य फले लुक् स्यात् । वदर्य्या विकारोऽवयवो वा फलं वदरम् । वकुलम् । कदलम् । आमलकम् । कुवलम् । लुक् तद्धित-लुकीति (१।२।४९) ङीषो लुक् ।

### १६४ । प्लक्षादिभ्योऽण् ।

प्लक्षादेः फले वाच्येऽण् स्यात् । लुको वाधा । प्लाक्षम् । नैयग्रोधम् । काकुभम् । वार्हतम् । आश्वत्थम् ।

## १६५। जम्ब्वा वा।

जम्बुशब्दात् फलेऽण् वा स्यात्। जाम्बवं फलम्। पक्षे ओरञ् (४।३।१३९)। फले लुक् (४।३।१६३)। जम्बु फलम्।

## १६६। लुप् च।

जम्ब्वाः फलेऽणो वा लुप् स्यात्। लुग्लुपोर्युक्तवद्भावकृतो विशेषः। जम्बूः फलम्। जम्ब्वः फलानि। लुकि तु जम्बूनि फलानि। अभिधेयस्यैव लिङ्गसंख्ये।

(क) फलपाकशुषाञ्च। यवादीनां प्रत्ययस्य लुप् स्यात्। यवानां फलानि यवाः। तिलाः। मुद्गाः। व्रीहयः। गोधूमाः।

(ख) पुष्पफलमूलेषु बहुलम्। विकारावयवयोः प्रत्ययस्य लुप् स्यात्। मल्लिकायाः पुष्पं मल्लिका। करवीरम्। जाती। क्रमुकस्य फलं क्रमुकः। विदार्या मूलं विदारी। बाहुल्यान्नेह। पाटलम्। आशोकम् पुष्पम्। बैल्वानि फलानि।

## १६७। हरीतक्यादिभ्यश्च।

हरीतक्यादेः फले लुप् स्यात्। लुको बाधा। हरीतक्याः फलं हरीतकी। हरीतक्यः फलानि। कोषातकी। द्राक्षा। शेफालिका। कण्टकारिका।

## १६८। कंसीयपरशव्ययोर्यञञौ लुक् च।

प्राक् क्रीताच्छः (५।१।१)। कंसीयः। उगवादिभ्यो यत् (५।१।२)। परशव्यः। ताभ्यां यञञौ स्याताम्। लुक् च छयतोः। कंसीयस्य विकारः कांस्यः। परशव्यस्य विकारः पारशवः। विकारावयवौ प्राग्दीव्यतीयाश्च पूर्णाः।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

चतुर्थाध्यायस्य तृतीयः पादः॥४।३॥

समाप्तश्च युष्मत्पादः।

अथ

# भाषावृत्तिः ।

## चतुर्थोऽध्यायः । चतुर्थः पादः ।

### १ । प्राग् वहतेष्ठक् ।

तद्वहतीति (४।४।७६) वक्ष्यति । ततः प्रागर्थेषु ठग् वाच्यः ।

(क) तदाहेति माशब्दादिभ्यः । ठक् स्यात् । माशब्दमाह माशब्दिकः । नैत्यशब्दिकः । प्रभूतमाह प्राभूतिकः । पर्य्याप्तमाह पार्य्याप्तिकः ।

(ख) पृच्छतौ सुस्नातादिभ्यः । सुस्नातं पृच्छति सौस्नातिकः । "सौस्नातिको यस्य भवत्यगस्त्यः ।" सौखरात्रिकः ।

(ग) गच्छतौ परदारादिभ्यः । परदारान् गच्छति पारदारिकः । गौरुतल्पिकः ।

### २ । तेन दीव्यति खनति जयति जितम् ।

अत्रार्थे ठक् स्यात् । अक्षैर्दीव्यति जयति वा आक्षिकः । हलेन दीव्यति खनति जयति जितं वा हालिकः । कुद्दालेन खनति कौद्दालिकः । अक्षैर्जितं द्रव्यमाक्षिकम् । मुद्गरेण जयति मौद्गरिकः । आख्यातार्थेऽपि विहितस्तद्धितः स्वभावात् साधनप्रधानः ।

### ३ । संस्कृतम् ।

तेन संस्कृतमित्यर्थे ठक् स्यात् । दध्ना संस्कृतं दाधिकम् । उत्कर्षाधानं संस्कारः ।

### ४ । कुलत्थकोपधादण् ।

आभ्यामण् स्यात् । कुलत्थैः संस्कृतं कौलत्थम् । तैन्तिड़ीकम् ।

## ५। तरति।

तेन तरतीत्यर्थे ठक् स्यात्। उडुपप्लवेन तरति तार्णप्लविकः। शरप्लवेन तरति शारप्लविकः।

## ६। गोपुच्छाट् ठञ्।

स्यात्। गोपुच्छेन तरति गौपुच्छिकः। ठक्ठञोः स्वरे भेदः।

## ७। नौद्व्यचष्ठन्।

आभ्यां ठन् स्यात्। नावा तरति नाविकः। द्व्यचः। घटिकः। घटिका स्त्री। बाहुकः। कुम्भिकः। षकारः सांहितिकः। नानुबन्धः।

## ८। चरति।

तेन चरतीत्यर्थे ठक् स्यात्। चर गतौ भक्षणे च। शाकटिकः। दाधिकः।

## ९। आकर्षात् ष्ठल्। (49)

अस्माद् ष्ठल् स्यात्। आकर्षेण चरति आकर्षिकः। आकर्षिकी। आकर्षो निकषोपल उच्यते।

## १०। पर्पादिभ्यः ष्ठन्।

पर्पेण चरति पर्पिकः। अश्विकः। रथिकः। षित्त्वात् ङीष्। पर्पिकी। अश्विकी। रथिकी। तदुक्तम्—

(क) आकर्षा(षा)त् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च।
आवसथात् किशरादेः षितः षडेते ठगधिकारे॥१॥ इति।

## ११। श्वगणाट् ठञ्च।

श्वगणशब्दाट् ठञ् स्यात्। श्वगणेन चरति श्वागणिकः। श्वागणिकी। चकारात् ठन्नपि। श्वगणिकः। श्वगणिका।

## १२। वेतनादिभ्यो जीवति।

एभ्यस्तेन जीवतीत्यर्थे ठक् स्यात्। वैतनिकः। वाहिकः। जालिकः। वाम्रिकः।

---

(49) अस्मिन् सूत्रे सर्वत्राकर्षशब्दस्थाने आकष इति पाठान्तरम्।

## १३ । वस्नक्रयविक्रयाट्ठन् ।

आभ्यां ठन् स्यात् । वस्नेन जीवति वस्निकः । क्रयविक्रयिकः । विग्रहीताच्च । क्रयिकः । विक्रयिकः ।

## १४ । आयुधाच्छ च ।

छः स्यात् । ठंश्च । आयुधीयः । आयुधिकः ।

## १५ । हरत्युत्सङ्गादिभ्यः ।

उत्सङ्गादिभ्यस्तेन हरतीत्यर्थे ठक् स्यात् । उत्सङ्गेन हरति औत्सङ्गिकः । औडुपिकः ।

## १६ । भस्त्रादिभ्यः ष्ठन् ।

स्यात् । भस्त्रया हरति भस्त्रिकः । भस्त्रिकी ।

## १७ । विभाषा विवधवीवधात् ।

आभ्यां ष्ठन् वा स्यात् । पक्षे ठक् । विवधेन हरति विवधिकः विवधिकी । वीवधिकः वीवधिकी । पक्षे ठक् । वैवधिकः । एतौ पर्य्याहारे वर्त्तेते । (50)

## १८ । अण् कुटिलिकायाः ।

अस्या अण् स्यात् । कुटिलिकया गत्या हरति कौटिलिको मृगः । कौटिलिकी वेश्या ।

## १९ । निर्वृत्तेऽक्षद्यूतादिभ्यः ।

एभ्यो निर्वृत्तार्थे ठक् स्यात् । अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् । गातागतिकं प्रेम । जाङ्घोपघातिकं कार्य्यम् ।

## २० । त्रे मम् नित्यम् ।

त्रान्तान्नित्यं मप् स्यात् । शुद्धं त्रान्तं न प्रयुज्यते । पाकेन निर्वृत्तं पक्त्रिमम् । संस्कृत्रिमम् । लब्ध्रिमम् ।

---

(50) पर्य्याहार उभयतो बद्धशिक्यः स्कन्धवाह्यः काष्ठविशेषः । विवधो वीवधश्चापि पर्य्याहारेऽध्वभारयोरिति विश्वः । पर्य्याहारश्च मार्गश्च विवधौ वीवधौ च तावित्यमरः । A yoke to carry burdens ;—a highway. अतएव उदविवध इत्यस्य जलप्रयाणपथ इत्यप्यर्थः ।

(क) भावप्रत्ययान्तादिमब् वक्तव्यः। कारिमः। पाकिमं फलम्। कुट्टिमा भूः। सेकिमा लता। दाहिमम्। दाहिमा। पूर्णिमा।

## २१। अपमित्ययाचिताभ्यां कक्कनौ।

निर्वृत्तार्थे आभ्यां कक्कनौ स्याताम्। आपमित्यकं धनम्। याचितकं मण्डनम्। अपमित्येति मेङो ल्यप्।

## २२। संसृष्टे।

अत्र यथाविहितं स्यात्। दध्ना संसृष्टमेकीभूतं दाधिकमन्नम्। गौड़िकं पयः।

## २३। चूर्णादिनिः।

चूर्णेन संसृष्टा चूर्णिनोऽपूपाः।

## २४। लवणाल्लुक्।

लवणशब्दात् संसृष्टार्थे प्रत्ययस्य लुक् स्यात्। लवणः सूपः।

## २५। मुद्गादण्।

मुद्गेन संसृष्टा मौद्गी यवागूः।

## २६। व्यञ्जनै रुपसिक्ते।

अत्रार्थे यथाप्राप्तं ठक् स्यात्। दध्ना उपसिक्तं दाधिकम्। सौपिकम्।

## २७। ओजःसहोऽम्भसा वर्त्तते।

एभ्यो वर्त्तत इत्यर्थे ठक् स्यात्। ओजसा वर्त्तते औजसिकः। साहसिकः। आम्भसिकः। तेनेति निवृत्तम्।

## २८। तत्प्रत्यनुपूर्वमीपलोमकूलम्।

तदिति द्वितीयासमर्थात् प्रत्यनुपूर्वादीपादे र्वर्त्तत इत्यर्थे ठक् स्यात्। प्रतीपं वर्त्तते प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। तां प्रातिकूलिकीं मत्वेति भट्टी। "आनुकूलिकतया हि नराणाम्"। इह प्रतीपादयः क्रियाविशेषणानि। क्रियायाश्च साध्यत्वेन तद्विशेषणानामपि साध्यत्वात्

कर्म्मणि द्वितीया (२।३।२)। क्रियायाश्चासत्त्वभूतत्वात् सामान्यलिङ्गेन विना विशेषणस्य निर्द्देष्टुमशक्यत्वान्नपुंसकलिङ्गतेति न्यायः। तदिति वर्त्तते यावत् तस्य धर्म्यम् (४।४।४७)।

## २९। परिमुखञ्च ।

परिमुखं वर्त्तते पारिमुखिकः सेवकः। चकारात् पारिपार्श्विकः।

## ३०। प्रयच्छति गर्ह्यम् ।

अत्रार्थे ठक् स्यात्। द्विगुणार्थं द्रव्यं द्विगुणम्। अल्पकालत्वाच्च गर्ह्य निन्द्यम्। तत् प्रयच्छति द्वैगुणिकः। त्रैगुणिको धनी।

(क) ठकि वृद्धेर्वृधुषिभावश्च। वृद्धिं गर्ह्यां प्रयच्छति वार्धुषिकः।

## ३१। कुसीददशैकादशात् ष्ठन्ष्ठचौ ।

आभ्यामेतौ स्याताम्। कुसीदं गर्ह्यं प्रयच्छति कुसीदिकः (51)। एकादशार्थान् दश प्रयच्छति दशैकादशिकः। दशैकादशिकी।

## ३२। उञ्छति ।

अत्रार्थे ठक् स्यात्। शाकानुञ्छति शाकिकः। बादरिकः।

## ३३। रक्षति ।

अत्रार्थे ठक् स्यात्। समाजं रक्षति सामाजिकः। सान्निवेशिकः।

## ३४। शब्ददर्दुरं करोति ।

आभ्यां करोत्यर्थे ठक् स्यात्। शाब्दिकः पटहश्च्छात्रो वा। दार्दुरिकः कुलालः।

## ३५। पक्षिमत्स्यमृगान् हन्ति ।

एभ्यो हन्त्यर्थे ठक् स्यात्। स्वरूपस्य तत्पर्य्यायाणां तद्विशेषणानाञ्च ग्रहणम्। पाक्षिकः। शाकुनिकः। मायूरिकः। मात्स्यिकः। मैनिकः। माद्गुरिकः। शाकुलिकः। प्रौष्ठिकः। मार्गिकः। हारिणिकः। शौकरिकः।

---

(51) ष्ठन्ष्ठचोः स्वरे विशेषः। ञ्नित्यादिर्नित्यमिति (६।१।१९७) ष्ठन्नन्त आद्युदात्तः। ष्ठजन्तस्त्वन्तोदात्तः। चित्त्वात् (६।१।१६३)।

## ३६। परिपन्थञ्च तिष्ठति।

परिपन्थशब्दोऽव्ययीभावः। अतएव निपातनात् साधुः। तत् तिष्ठति चकाराद्धन्ति वा पारिपन्थिकश्चौरः।

## ३७। माथोत्तरपदपदव्यनुपदं धावति।

एभ्यो धावत्यर्थे ठक् स्यात्। माथः पन्थाः। तदुत्तरपदात्। दण्डमाथं धावति दाण्डमाथिकः। पदवी पादविकः। अनुपदमानुपदिकः।

## ३८। आक्रन्दाट् ठञ्च।

अस्मात् ठञ् स्यात्। ठक् च। आक्रन्दिकः। (52)

## ३९। पदोत्तरपदं गृह्णाति।

पदान्ताद् गृह्णात्यर्थे ठक् स्यात्। पूर्वपदं गृह्णाति पौर्व्वपदिकः। औत्तरपदिकः। प्रातिपदिकम्।

## ४०। प्रतिकण्ठार्थललामञ्च।

एभ्यष्ठक् स्यात्। प्रतिकण्ठं गृह्णाति प्रातिकण्ठिको वल्लभः। आर्थिकः। लालामिकः।

## ४१। धर्मं चरति।

धार्मिकः।

(क) अधर्माच्चेति वक्तव्यम्। आधर्मिकः।

## ४२। प्रतिपथमेति ठंश्च।

प्रतिपथादेतीत्यर्थे ठण्ठकौ स्याताम्। प्रतिपथिकः। प्रातिपथिकः।

## ४३। समवायान् समवैति।

पर्य्यायग्रहणमत्र। समूहवाचिभ्योऽत्रार्थे ठक् स्यात्। सामवायिकः। सामुदायिकः। सामूहिकः।

---

(52) ठञ्ठकोः स्वरे विशेषः। ठञन्तो ञ्नित्यादिर्नित्यमित्याद्युदात्तः (६।१।१९७)। ठगन्तः कित इति (६।१।१६५) अन्तोदात्तः।

४४ । परिषदो ण्यः ।

स्यात् । परिषदं समवैति पारिषद्यः ।

४५ । सेनाया वा ।

ण्यः स्याद्वा । सेनां समवैति सैन्यः । पक्षे ठक् । सैनिकः ।

४६ । संज्ञायां ललाटकुक्कुट्यौ पश्यति ।

संज्ञा चेत् ललाटकुक्कुटीभ्यां पश्यत्यर्थे ठक् स्यात् । अर्थनियमश्चात्र संज्ञा । न रूढ़िः । य एव ललाटमात्रं दूरात् पश्यति नतु कार्य्ये व्याप्रियते स लालाटिकः सेवकादिः । य एवाविच्छिन्नदृष्टिः कुक्कुटीपादपतनयोग्यमल्प-देशं पश्यन् याति स कौक्कुटिकस्तपस्व्यादिः ।

४७ । तस्य धर्म्यम् ।

अत्रार्थे ठक् स्यात् । धर्म्यं न्याय्यमाचार इत्यर्थः । शुल्कस्य धर्म्यं शौल्किकम् । आपणिकम् ।

४८ । अण् महिष्यादिभ्यः ।

महिष्या धर्म्यं माहिषम् मूल्यम् । पौरोहितम् । प्राजापतम् ।

४९ । ऋतोऽञ् ।

ऋदन्तादञ् स्यात् । होतुर्धर्म्यं हौत्रम् । औद्गात्रम् ।

(क) नृनराभ्याञ्च । नु र्नरस्य धर्म्यं नारम् । नारी । जातिशब्दोऽय-मित्यागमः ।

(ख) विशसितुरिड्लोपश्च । वैशस्त्रम् ।

(ग) विभाजयितुर्णिलोपश्च । वैभाजित्रम् ।

५० । अवक्रयः ।

तस्यावक्रय इत्यर्थे ठक् स्यात् । शुल्कस्यावक्रयः पारिभाषिकं मूल्यं शौल्किकः पिण्डः । आपणिकः ।

५१ । तदस्य पण्यम् ।

अत्रार्थे ठक् स्यात् । मोदकाः पण्यमस्य मौदकिकः । आपूपिकः ।

## ५२। लवणाट्ठञ्।

लवणं पण्यमस्य लावणिकः।

## ५३। किशरादिभ्यः ष्ठन्।

## ५४। शलालुनोऽन्यतरस्याम्।

किशरादेर्गन्धद्रव्यवाचकात् ष्ठन् स्यात्। तदस्य पण्यम् (४।४।५१)। किशरिकः। किशरिकी। शलालुकः। पक्षे ठक्। शालालुकः। पण्यमिति निवृत्तम्। तदस्येति वर्त्तते यावत् तदस्मै दीयते (४।४।६६)।

## ५५। शिल्पम्।

अत्र ठक् स्यात्। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः। पाणविकः।

## ५६। मड्डुकझर्झरादणन्यतरस्याम्।

आभ्यामण् वा स्यात्। तदस्य शिल्पम्। माड्डुकः। झार्झरः। पक्षे माड्डुकिकः। झार्झरिकः।

## ५७। प्रहरणम्।

अत्र ठक् स्यात्। असिः प्रहरणमस्य आसिकः। प्रासिकः। धानुष्कः। चाक्रिकः। पाशिकः।

## ५८। परश्वधाट्ठञ् च।

परश्वधात् ठञ्ठकौ स्याताम्। पारश्वधिकः। स्वरे भेदः।

## ५९। शक्तियष्ट्योरीकक्।

आभ्यामीकक् स्यात्। शक्तिः प्रहरणमस्य शाक्तीकः। याष्टीकः। याष्टिकी।

## ६०। अस्तिनास्तिदिष्टं मतिः।

अत्रार्थे ठक् स्यात्। अस्ति मतिरस्य आस्तिकः। नास्तिकः। दैष्टिकः। अस्तिनास्तीति शब्दौ तिङन्तावित्येके। तिङन्तप्रतिरूपकौ निपातावित्यन्ये।

## ६१ । शीलम् ।

अत्रार्थे ठक् स्यात् । परुषवचनं शीलमस्य पारुषिकः । आक्रोशिकः । कारुणिकः ।

## ६२ । छत्रादिभ्यो णः ।

छादनं छत्रं शीलमस्य च्छात्रः । शैक्षः । तापसः । चुरा चौरः ।

## ६३ । कर्माध्ययने वृत्तम् ।

अत्रार्थे ठक् स्यात् । एकमन्यदध्ययनेऽपपाठलक्षणं कर्म वृत्तमस्य ऐकान्यिकः । द्वैयन्यिकः । तद्धितार्थ इति (२।१।५१) समासः । ऐकरूपिकः । ऐकग्रन्थिकः ।

## ६४ । बह्वच्पूर्वपदाट् ठच् ।

बह्वच्पूर्वाट् ठच् स्यात् पूर्वार्थे । द्वादशान्यिकः । त्रयोदशग्रन्थिकः ।

## ६५ । हितं भक्षाः ।

अत्रार्थे ठक् स्यात् । अपूपा हितमस्मै आपूपिकः । औदनिकः । मौदकिकः । हितयोगे चतुर्थी ।

## ६६ । तदस्मै दीयते नियुक्तम् ।

अत्रार्थे ठक् स्यात् । नियुक्तं कल्पितमग्रभोजनमस्मै दीयते आग्रभोजनिकः । प्राथमकल्पिकः ।

## ६७ । श्राणामांसौदनाट् टिठन् ।

आभ्यां पूर्वार्थे एव टिठन् स्यात् । इकार उच्चारणार्थः । श्राणिकः । मांसौदनिकः । विगृहीताच्च । मांसिकः । औदनिकः । मांसिकी ।

## ६८ । भक्तादणन्यतरस्याम् ।

वा स्यात् । भक्तमस्मै दीयते भाक्तः । भाक्तिको वा ।

## ६९ । तत्र नियुक्तः ।

अत्रार्थे ठक् स्यात् । द्वारे नियुक्तो दौवारिकः । शौल्किकः । तत्रेति वर्त्तते यावत् तदर्हति (४।४।७६) ।

## ७०। अगारान्तात् ठन्।

देवागारे नियुक्तो देवागारिकः। भाण्डागारिकः। केवलात् ठगेव। आगारिकः।

## ७१। अध्यायिन्यदेशकालात्।

अदेशकालाच्चाध्यायिन्यर्थे ठक् स्यात्। श्मशानेऽधीते श्माशानिकः। चातुष्पथिकः। अकालात्। चातुर्दशिकः। आष्टमिकः। शास्त्रे निषिद्धौ देशकालौ प्रकृती।

## ७२। कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति।

एभ्यो व्यवहरत्यर्थे ठक् स्यात्। वंशकठिने व्यवहरति वांशकठिनिकः। प्रास्तारिकः। सांस्थानिकः।

## ७३। निकटे वसति।

निकटाद् वसत्यर्थे ठक् स्यात्। नैकटिको भिक्षुः।

## ७४। आवसथात् ष्ठल्।

आवसथे वसति आवसथिकः। आवसथिकी। ठकः पूर्णोऽधिकारः।

## ७५। प्राग्घिताद् यत्।

(५।१।५) तस्मै हितमित्यतः प्रागर्थेषु यद् वेदितव्यः।

## ७६। तद्वहति रथयुगप्रासङ्गम्।

तद्वहतीत्यर्थे रथादे यत् स्यात्। द्वौ रथौ वहति तद्धितार्थे (२।१।५१) द्विगुसमासः। द्विरथ्यः। त्रिरथ्यः। केवलात्तु रथाद् यतोऽसिद्धिरिति स्मृतिः (53)। युग्यः। प्रासङ्ग्यः।

## ७७। धुरो यड्ढकौ।

स्याताम्। धुरं वहति धुर्य्यः। धौरेयः।

---

(53) एतच्च काशिकादिविरुद्धम्। रथं वहति रथ्य इति काशिकोदाहरणात्। रथ्यो वोढा रथस्य य इत्यमराच्च। तथाच माघे सूर्य्यस्य रथ्याः परितः स्फुरन्तीति।

## ७८ । खः सर्वधुरात् ।

स्यात् । सर्वधुरां वहति सर्वधुरीणः । योगविभागादुत्तरधुरीणदक्षिण-धुरीणौ चेत्येके । धुरीणश्चेत्यन्ये ।

## ७९ । एकधुराल्लुक् च ।

एकधुरात् खस्य लुक् स्यात् । अवणश्च । एकधुरः । एकधुरीणः ।

## ८० । शकटादण् ।

शकटं वहति शाकटः । द्वैशकटः ।

## ८१ । हलसीराट्ठक् ।

हालिकः । द्वैहलिकः । सैरिकः । द्वैसीरिकः । त्रैसीरिकः ।

## ८२ । सञ्ज्ञायां जन्याः ।

नाम्नि जन्याः स्युः । जनीं वधूं वहन्ति जन्या जामातुर्वयस्याः ।

## ८३ । विध्यत्यधनुषा ।

तद् विध्यतीत्यर्थे कर्मणो यत् स्यान् न चेद् धनुः करणं भवति । पादौ विध्यति पद्याः पाषाणाः । ऊरव्याः कण्टकाः । नेह । चौरं विध्यति धानुष्कः ।

## ८४ । धनगणं लब्धा ।

आभ्यां लब्धेत्यर्थे यत् स्यात् । धनं लब्धा धन्यो बालकः । गण्यो मृगः । लब्धेति तृन् ।

## ८५ । अन्नाण्णः ।

अन्नं लब्धा आन्नश्छात्रः ।

## ८६ । वशं गतः ।

वशाद् गत इत्यर्थे यत् स्यात् । "वश्यः सर्वो जनः स्त्रीणाम् ।"

## ८७ । पदमस्मिन् दृश्यम् ।

द्रष्टुं शक्यात् पदादधिकरणे यत् स्यात् । पदं दृश्यमस्मिन् पद्यः कर्दमः । पद्यः पन्थाः ।

## ८८ । मूलमस्यावर्हि ।

अत्रार्थे यत् स्यात् । मूलमेषामावर्हि (54) कोमलत्वाद् ग्रहण-मात्रेणोत्पटति मूल्या मुद्गाः । वृह उद्यमे ।

## ८९ । संज्ञायां धेनुष्या ।

इयं नाम्नि निपात्यते । धेनुष्या गौ महिषी वा यावद् या दुग्ध-बन्धके स्थिता ।

## ९० । गृहपतिना संयुक्ते ञ्यः ।

गृहपतिशब्दान्नाम्नि ञ्यः स्यात् । गार्हपत्योऽग्निभेदः ।

## ९१ । नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्य्यतुल्यप्राप्य-वध्यानाम्यसमसमितसम्मितेषु ।

नावाद्यष्टकात् तार्य्यादौ यत् स्यात् । नावा तार्य्यं नाव्यम् । "नाव्यं पयः केचिदतारिषुर्भुजैः ।" वयसा तुल्यो वयस्यः । धर्मेण प्राप्यो धर्म्यो भोगः । विषेण वध्यो विष्यः शत्रुः । मूलेन अनाम्य मनभिभवनीयं मूल्यं क्षेत्रम् । मूलेन समो मूल्यः पटो जातः । सीतया समितं सीत्यम् । द्विसीत्यम् । त्रिसीत्यम् । तुलया सम्मितं तुल्यं कनकम् । रथसीताहलेभ्यो यद्विधौ तदन्तविधिः । (२।१।७२, वा) बहुसीत्यम् ।

## ९२ । धर्मपथ्यर्थन्यायादनपेते ।

एभ्योऽनपेते यत् स्यात् । धर्मादनपेतो धर्म्यो नृपः । पथ्यम् । अर्थ्यम् । न्याय्यम् ।

## ९३ । छन्दसो निर्मिते ।

छन्दसोऽत्र यत् स्यात् । छन्दसा इच्छया निर्मितं छन्दस्यं जगत् ।

## ९४ । उरसोऽण् च ।

उरसा निर्मित औरसः पुत्रः । यच्च । उरस्यः ।

---

(54) आवर्हणमावर्ह उत्पाटनम् । आवर्होऽस्यास्तीत्यावर्हि ।

## ९५ । हृदयस्य प्रियः ।

हृदयात् प्रिय इत्यर्थे यत् स्यात् । हृद्यः । पुत्रेऽनभिधानम् ।

## ९६ । बन्धने चर्षौ ।

ऋषौ वेदे हृदयाद् यत् स्याद्बन्धने मन्त्रे । हृदयस्य बन्धनं हृद्यो वशी-करणमन्त्रः ।

## ९७ । मतजनहलात् करणजल्पकर्षेषु ।

मतादेः करणादौ यत् स्यात् । मतस्य करणं मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । द्विहल्यः ।

## ९८ । तत्र साधुः ।

अत्रार्थे यत् स्यात् । सामसु साधुः सामन्यो विप्रः । ब्रह्मण्यः । कर्मण्यः । वंश्यः । साधुरिह प्रवीणो योग्यो वा ।

## ९९ । प्रतिजनादिभ्यः खञ् ।

एभ्यः खञ् स्यात् । प्रतिजने साधुः प्रातिजनीनः । सांयुगीनः । सार्व-जनीनः ।

## १०० । भक्ताण्णः ।

भक्ते साधवो भाक्तास्तण्डुलाः ।

## १०१ । परिषदो ण्यः ।

परिषदि साधुः पारिषद्यः । णोऽपीष्यत इति जयादित्यः । पारिषदः ।

## १०२ । कथादिभ्य ठक् ।

कथायां साधुः काथिकः । वैकथिकः । वार्त्तिकः ।

## १०३ । गुडादिभ्यष्ठञ् ।

गुडे साधुर् गौड़िक इक्षुः । कौल्माषिका यवाः । सांग्रामिको भटः । प्रावासिको वणिक् ।

## १०४ । पथ्यतिथिवसतिस्वपतेर्ढञ् ।

पथ्यः साधौ ढञ् स्यात् । पथि साधु पाथेयम् । आतिथेयम् । वासतेयम् । वासतेयी । स्वापतेयं धनम् ।

## १०५ । सभाया यः ।

स्यात् । सभायां साधुः सभ्यः ।

## १०६ । ढश्छन्दसि ।

छन्दः सूत्रमिकम् ।

## १०७ । समानतीर्थे वासी ।

समानतीर्थात् तत्र वासीत्यर्थे यः स्यात् । सतीर्थ्याश्चैकगुरवः । तीर्थे ये (६।३।८७) इति सभावः । तीर्थं दर्शनं गुरुश्च ।

## १०८ । समानोदरे शयित ओ चोदात्तः ।

अत्रार्थे यः स्यात् । समानोदर्य्यो भ्राता ।

## १०९ । सोदराद् यः ।

अस्माद् यः स्यात् । समानोदरे शयितः सोदर्य्यः । विभाषोदरे (६।३।८८) इति समानस्य सभावः । इहेदानीमापादपरिसमाप्तेश्छन्दोऽधिकारः । तत्रापि भवार्थे । (55)

## ११४ । सगर्भसयूथसनुताद् यन् ।

स्यात् । सगर्भ्यो भ्राता । सयूथ्यो वत्सः । सनुत्यः प्रसादः ।

## ११६ । अग्राद् यत् ।

स्यात् । अग्र्यम् ।

## ११७ । घच्छौ च ।

स्याताम् । अग्रियम् । अग्रीयम् ।

---

(55) The Sutras omitted here by the author are the following :—

११० । भवे च्छन्दसि । १११ । पाथोनदीभ्यां ड्यण् । ११२ । वेशन्तहिमवद्भ्यामण् । ११३ । स्रोतसो विभाषा ड्यड्ड्यौ । ११५ । तुग्राद् घन् । ११९ । बर्हिषि दत्तम् । १२१ । रक्षोयातूनां हननी ।

## ११९ । समुद्राभ्राद् घः ।

आभ्यां घः स्यात् । समुद्रियम् । अभ्रियम् । छश्च । समुद्रीयम् । अभ्रीयम् ।

## १२० । दूतस्य भागकर्मणी ।

अस्माद् यत् स्यात् । दूत्यम् ।

## १२८ । मत्वर्थे मासतन्वोः ।

आभ्यां यत् स्यात् । नभांसि यत्र सन्ति नभस्यो मासः । सहस्यः । तपस्यः । तेजस्या तनुः ।

## १२९ । मधो ञ च ।

माधवो मासः । तथा

(क) लुगकारेकाररेफाश्चेति वक्तव्यम् । लुक् । मधु अत्रास्ति मधुर्मासः । अकारः । इट् अत्रास्ति इषः । ऊर्क् अस्मिन्नस्ति ऊर्जो मासः । इकारः । शुगस्मिन्नस्ति शुचिर्मासः । रेफः । शुक्रो मासः ।

## १४१ । नक्षत्राद् घः ।

नक्षत्रियम् । छश्च । नक्षत्रीयम् ।

## १४२ । सर्वदेवात् तातिल् ।

## १४३ । शिवशमरिष्टस्य करे ।

एभ्यः करे स्यात् तातिल् । शिवतातिः । शन्तातिः । अरिष्टतातिः ।

---

१२२ । रेवतीजगतीहविष्याभ्यः प्रशस्ये । १२३ । असुरस्य स्वम् । १२४ । मायायामण् । १२५ । तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः । १२६ । अश्विमानण् । १२७ । वयस्यासु मूर्ध्नो मतुप् । १३० । ओजसोऽहनि यत्खौ । १३१ । वेशोयशआदेर्भगाद्यल् । १३२ । ख च १३३ । पूर्वैः कृतमिनयौ च । १३४ । अन्नैः संस्कृतम् । १३५ । सहस्रेण सम्मितौ घः । १३६ । मतौ च १३७ । सोममर्हति यः । १३८ । मये च । १३९ । मधोः । १४० । वसोः समूहे च ।

अमी शब्दाश्छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति त्रिकाण्डे (56) भागुरिनिबन्धनाद्वा ऽव्युत्पन्नसंज्ञाशब्दत्वाद्वा सर्वथा भाषायां साधवः ।

१४४ । भावे च ।

छन्दःसूत्रम् ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४।४ ॥
समासश्च ठक्पादश्चतुर्थोऽध्यायश्च ॥

---

(56) So त्रिकाण्ड is the name of the lexicography by भागुरि. Says सृष्टिधर in his अर्थविवृति—"त्रिकाण्डे कोषविशेषे भागुरेरेवाचार्य्यस्य यदेषां निबन्धनं तस्माच्च ।"

अथ

# भाषावृत्तिः।

---

## पञ्चमोऽध्यायः। प्रथमः पादः।

### १। प्राक् क्रीताच्छः।

क्रीतात् प्राग् हितं प्रकृतिरस्येत्यस्मिन्नर्थे छो वाच्यः।

### २। उगवादिभ्यो यत्।

उवर्णान्ताद् गवादेश्छापवादो यत् स्यात्। शङ्कव्यं दारु। चरव्या स्तण्डुलाः। कमण्डलव्या मृत्। सक्तव्या धानाः। गवादेः। गव्यम्।

(1) नाभि नभञ्च। नाभ्यर्था प्रकृतिः। नभ्यं काष्ठम्।

(2) शुनः संप्रसारणं वा च दीर्घः। शुने हितं शुन्यं शून्यं वा।

(3) ऊधसोऽनङ् च। ऊधसो यत्स्यादनङादेशश्च। ऊधन्यः। (1)

### ३। कम्बलाच्च संज्ञायाम्।

कम्बलनाम्नि यत् स्यात्। कम्बल्यमूर्णापलशतम्।

### ४। विभाषा हविरपूपादिभ्यः।

एभ्यो यद्वा स्यात्। हविर्वाचिनः। आमिक्ष्यमामिक्षीयं वा दधि। पुरोडाश्यं पुरोडाशीयं वौषधम्। हविःशब्दाद् गवादिपाठान्नित्यं यत्। हविष्यम्। अपूपादेः। अपूप्यमपूपीयं वा। तण्डुल्यं तण्डुलीयं वा। अन्नविकारेभ्यश्च। सुरीयाः सुर्य्या (2) वा तण्डुलाः।

---

(1) अत्र सक्तव्या यवाः। पशव्यं वनम्। वधूभ्यो हितं वधव्यं गृहमिति क्वचिदधिकः पाठः। परन्त्वर्थविवृतौ व्येतानि प्रायशो दृश्यन्ते। नतु मूले।

(2) सुरायै हिता इति विग्रहः। नभकुर्कुरामिति (८।२।७९) न दीर्घः।

## ५। तस्मै हितम्।

अत्रार्थे यथाविहितं प्रत्ययः स्यात्। वत्सेभ्यो हितं वत्सीयं नवलणम्। पश्वव्यम्। गव्यम्। पटव्यम्।

## ६। शरीरावयवाद् यत्।

स्यात्। दण्डेभ्यो हितं दण्ड्यम्। कण्ठ्यम्। तालव्यम्। नाभ्यं तैलम्। ओष्ठ्यम्। मूर्धन्यम्।

(क) रथाच्च। रथाय हिता रथ्या प्रतोली।

## ७। खलयवमाषतिलवृषब्रह्मणश्च।

एभ्यो हिते यत् स्यात्। खलाय हितं खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मणे हितो ब्रह्मण्यो राजा।

## ८। अजाविभ्यां थ्यन्।

आभ्यां हिते थ्यन् स्यात्। अजथ्या भूमिः। अविथ्या।

## ९। आत्मन्विश्वजनभोगोत्तरपदात् खः।

एभ्यो हिते खः स्यात्। आत्मन्निति नकारोच्चारणमवधिज्ञापनार्थम्। आत्मने हितमात्मनीनम्। "त्वयं मया विश्वजनीनमुच्यते"। मातृभोगीणः। आचार्य्यादणत्वञ्च (४।१।४९, वा)। आचार्य्यभोगीनः। स्वभोगीनः। भोगः शरीरमिति वृत्तिः।

(क) पञ्चजनाच्च। खः स्यात्। "गायनवादकनर्त्तकदासीभण्डरतः (3) खलु पञ्चजनीनः।"

(ख) सर्वजनाट् ठञ् खश्च। सार्वजनिकः। सर्वजनीनः।

(ग) महाजनान्नित्यं ठञ्। माहाजनिकः।

विश्वजनादेः कर्मधारयादभिधानम्। तेन षष्ठीसमासादौ न भवति। विश्वजनीयमिति।

---

(3) भडि परिभाषणे पचाद्यच्। भण्डः परिहासचतुरः। गायनवादकनर्त्तकदासीभण्डेषु रत इत्यर्थः। भण्ड is a buffoon.

## १० । सर्वपुरुषाभ्यां णढञौ ।

आभ्यां हिते णढञौ स्याताम् ।

(क) तत्र सर्वासस्य वा वचनं कर्त्तव्यम् । सार्वः । सर्व्वीयः ।

(ख) पुरुषाद् वधविकारसमूहतेनकृतेषु ढञ् । पौरुषेयो वधादिः ।

## ११ । माणवचरकाभ्यां खञ् ।

आभ्यां हिते खञ् स्यात् । माणवीनः । चारकीणः ।

## १२ । तदर्थं विकृतेः प्रकृतौ ।

विकृतार्थे यथाविहितं प्रत्ययः स्यात् तदर्था प्रकृतिश्चेद् वाच्या भवति । अङ्गारेभ्य एतानि अङ्गारीयाणि काष्ठानि । यूपीयं दारु । शङ्कव्यम् । पिचव्यः कार्पासः । (4)

## १३ । छदिरुपधिबलेर् ढञ् ।

एभ्यस्तदर्थायां प्रकृतौ ढञ् स्यात् । छादिषेयाणि तृणानि । उपधेः स्वार्थे ढञिति स्मृतिः । औपधेयं रथदारु । बल्यर्थास्तण्डुला बालेयाः ।

## १४ । ऋषभोपानहोर्ञ्यः ।

आभ्यां तथैव ञ्यः स्यात् । आर्षभ्यो वत्सः । औपानह्यं चर्म्म ।

## १५ । चर्मणोऽञ् ।

चर्मणो विकृतेरञ् स्यात् तदर्थायां प्रकृतौ । वार्ध्रम् । वारत्रं चर्म । (5)

## १६ । तदस्य तदस्मिन् स्यादिति ।

अत्रार्थद्वये यथाविहितं प्रत्ययः स्यात् । प्राकार आसामिष्टकानां स्यात् सम्भवेत् प्राकारीया इष्टकाः । प्रासादोऽस्यां भूमौ सम्भवेत् प्रासादीया भूमिः ।

## १७ । परिखाया ढञ् ।

अस्याःप्रागर्थे ढञ् स्यात् । पारिखेयी भूमिः । क्रयतो पूर्णावधी ।

---

(4) पिचुस्तूलः, cotton.

(5) चर्मरज्जुः Leather rope, नध्री वाध्री वरत्रा स्यादित्यमरः—i. é. a thong.

## १८। प्राग् वते ष्ठञ्।

तेन तुल्यं क्रिया चेद् वति (५।१।११५) रित्यतः प्रागर्थेषु ठञ् वेदितव्यः। गोपुच्छेन क्रीतं गौपुच्छिकम्। पारायणं वर्त्तयति पारायणिकः। द्वैपारायणिकः। साप्ततिकम्।

## १९। आऽर्हादगोपुच्छसंख्यापरिमाणाट् ठक्।

अभिविधावाङ्। तदर्हतीति (५।१।६३) पर्य्यन्तेषु क्रीतंनिमित्तमीश्वरोविदितोवापस्तदस्मिंस्तज्जरतिवहत्यावहतिसम्भवत्यवहरतिपचतिसोऽस्यतदस्यतदर्हतीत्यर्थेषु ठग् वक्तव्यः। नैष्किकः। गोपुच्छादेः पर्य्युदासात् प्राग् वते ष्ठञेव (५।१।१८)। गौपुच्छिकः। साप्ततिकः। प्रास्थिकः। स्वरे भेदः।

## २०। असमासे निष्कादिभ्यः।

निष्कादेरसमासे ठक् स्यादार्हीयेष्वर्थेषु। नैष्किकः। निष्क। पण। माष। द्रोण। षष्टि। पाद। समासे तु ठञेव स्यात्। द्विनैष्किकम्। अतएवासमासग्रहणात् पूर्वत्र तदन्तविधिः। तेन गव्यमतिगव्यम्। दन्त्यं राजदन्त्यमित्यादि। इत उत्तरञ्च—

(क) प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति स्मृतिः। पारायणिकः। द्वैपारायणिकः।

## २१। शताच्च ठन्यतावशते।

शतादार्हीयार्थेषु ठन्यतौ स्याताम्। कनो बाधा। शत्यः अश्वः। शतिकः कम्बलः। शतिकं वासः। शत्यं वा। अशते किम्? शतमध्यायाः परिमाणमस्य शतकं निदानम्। शतकं काव्यम्। शतमेव।

## २२। संख्याया अतिशदन्तायाः कन्।

संख्याया आर्हीयेषु कन् स्यात्। पञ्चकः। बहुकः। गणकः। अ-तिशदन्तायाः किम्? साप्ततिकः। पाञ्चाशत्कः। डतेरप्रतिषेधः। कतिकः।

## २३। वतोरिड् वा।

वतोः संख्यायाः कन इड् वा स्यात्। तावतिकः। तावत्को वा।

## २४ । विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् ।

योगविभागोऽत्र क्रियते । आभ्यामार्हीयेषु कन् स्यात् । विंशतिकः । त्रिंशत्कः । असंज्ञायां ड्वुन् । विंशकः । त्रिंशकः । ति विंशतेर्डितीति (६।४।१४२) टिलोपः ।

## २५ । कंसाट् टिठन् ।

कंसात् परिमाणादार्हीयेषु टिठन् स्यात् । कंसिकः पटः । कंसिकी । इकार उच्चारणार्थः ।

(क) अर्द्धाच्च । अर्द्धिकः । अर्द्धिकी ।

(ख) कार्षापणाद्वा प्रतिरादेशश्च । कार्षापणिकः । प्रतिको वा ।

## २६ । शूर्पादञन्यतरस्याम् ।

शूर्पादञ् वा स्यादार्हीयेषु । शौर्पं शौर्पिकं वा ।

## २७ । शतमानविंशतिकसहस्रवसनादण् ।

एभ्य आर्हीयेष्वण् स्यात् । शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ।

## २८ । अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम् ।

अध्यर्द्धपूर्वाद् द्विगोश्चार्हीयस्य लुक् स्यात् । अध्यर्द्धकंसेन क्रीतमध्यर्द्धकंसम् । द्विगोः । द्विकंसम् । त्रिकंसम् । असंज्ञायां किम् । पाञ्चकपालिकः ।

## २९ । विभाषा कार्षापणसहस्राभ्याम् ।

(क) सुवर्णशतमानयोश्च ।

एतदन्तात् पूर्वको लुग् वा स्यात् । अध्यर्द्धकार्षापणम् । अध्यर्द्धकार्षापणिकं वा । द्विकार्षापणिकम् । द्विकार्षापणं वा । अध्यर्द्धसहस्रम् । अध्यर्द्धसाहस्रं वा । संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः (७।३।१५) । अध्यर्द्धसुवर्णम् । अध्यर्द्धसौवर्णिकं वा । अध्यर्द्धशतमानम् । अध्यर्द्धशतमानं वा । द्विसुवर्णं द्विसौवर्णिकं वा । द्विशतमानं द्विशातमानं वा । परिमाणान्तस्येत्युत्तरपदवृद्धिः ( ७।३।१७ ) ।

## ३० । द्वित्रिपूर्वान्निष्कात् ।

(क) बहुपूर्वाच्च ।

द्व्यादिपूर्वान्निष्कादार्हीयस्य लुग् वा स्यात् । द्विनिष्कं द्विनैष्किकं वा । त्रिनिष्कं त्रिनैष्किकं वा । बहुनिष्कं बहुनैष्किकं वा ।

## ३१ । बिस्ताच्च ।

बिस्ताच्च तथा स्यात् । द्विबिस्तं द्विबैस्तिकं वा । त्रिबिस्तं त्रिबैस्तिकं वा । बहुबिस्तं बहुबैस्तिकं वा ।

## ३२ । विंशतिकात् खः ।

अस्मादार्हीयस्य लुग्विषये खः स्यात् । अध्यर्द्धविंशतिकीनम् । द्विविंशतिकीनम् ।

## ३३ । खार्य्या ईकन् ।

लुको विषये खार्य्या ईकन् स्यात् । अध्यर्द्धखारीकम् । द्विखारीकम् ।

(क) काकिण्याश्च । अध्यर्द्धकाकिणीकम् । द्विकाकिणीकम् ।

(ख) केवलाभ्याश्च । खारीकम् । काकिणीकम् ।

## ३४ । पणपादमाषशताद् यत् ।

एभ्यो यत् स्यात् । अध्यर्द्धपण्यम् । द्विपण्यम् । अध्यर्द्धपाद्यम् । द्विपाद्यम् । अध्यर्द्धमाष्यम् । अध्यर्द्धशत्यम् ।

## ३५ । शाणाद्वा ।

शाणाद् यद्वा स्यात् । अध्यर्द्धशाण्यम् । पक्षे ठञो लुगेव । अध्यर्द्धशाणम् । द्विशाणम् ।

(क) शताच्च । अध्यर्द्धशत्यम् । अध्यर्द्धशतं वा । द्विशत्यम् । द्विशतं वा ।

## ३६ । द्वित्रिपूर्वादण् च ।

द्वित्रिपूर्वाच्छाणादण् यच्च वा स्यात् । द्वैशाणं द्विशाण्यं वा । लुक् च । द्विशाणम् ।

## ३७ । तेन क्रीतम् ।

अत्रार्थे प्राग्वते ठञादयस्त्रयोदश प्रत्यया वेदितव्याः । सप्तत्या क्रीतं साप्ततिकम् । नैष्किकम् । मुद्गैः क्रीतं मौद्गिकम् । शत्यं शतिकम् । संख्याया अतिशदन्तायाः (५।१।२२) कन् । द्विकम् । त्रिकम् । पञ्चकम् ।

## ३८ । तस्य निमित्तं संयोगोत्पातौ ।

संयोग आकस्मिकः सम्बन्धः । शुभाशुभसूचक उत्पातः । अत्रार्थे ठञादयो वेदितव्याः । शतस्य निमित्तमधमर्णेन संयोगः शत्यः शतिकः । सहस्रस्य निमित्तं दक्षिणाक्षिस्पन्दनं साहस्रम् ।

(क) वातपित्तश्लेष्मसन्निपातेभ्यश्च । शमनकोपनयोरभिधानम् । वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । सान्निपातिकम् ।

## ३९ । गोद्व्यचो ऽसंख्यापरिमाणाश्वादे र्यत् ।

गोशब्दाद् द्व्यचश्च निमित्तार्थे यत् स्यात् । ठञादेर्बाधा । गोनिमित्तं संयोग उत्पातो वा गव्यः (6) । द्व्यः । धन्यः । स्वर्ग्यः । यशस्यम् । आयुष्यम् । संख्यादेर्निषेधः किम् ? पञ्चानां निमित्तं पञ्चकः । प्रास्थिकः । अश्वादिर्गणः । आश्विकः । हास्तिकः ।

## ४० । पुत्राच्छ च ।

पुत्राच्छः स्याद् यच्च । पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयः पुत्र्यः ।

## ४१ । सर्वभूमिपृथिवीभ्यामणञौ ।

आभ्यां निमित्तार्थे यथासंख्यमणञौ स्याताम् । सार्वभौमः । अनुशतिकादिः (७।३।२०) । पृथिव्या निमित्तं पार्थिवः ।

## ४२ । तस्येश्वरः ।

अत्रार्थे ताभ्यां तौ स्याताम् । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ।

---

(6) 'मेषराशि शनिवारपञ्चकौ गोविनाशसूचक उत्पातो वा गव्यः । तथा धन्या षड्ग्रही धनविनाशसूचिकेत्यर्थः । 'षण्णां ग्रहाणां गुरुवर्जितानामैक्ये मही निर्धनतां प्रयाती'ति । एवं लग्ने चतुर्ग्रही धन्या । तत्र जातस्य धनवृद्धिकरीत्यर्थः" ।—इति सृष्टिधरः ।

## ४३। तत्र विदित इति च।

अत्रार्थे ताभ्यामणञौ स्याताम्। सार्वभौमः। पार्थिवः।

## ४४। लोकसर्वलोकाट् ठञ्।

आभ्यां तत्र विदित इत्यर्थे ठञ् स्यात्। लौकिकः। "स रामःसार्वलौकिकः"। अनुशतिकादिः (७।३।२०)।

## ४५। तस्य वापः।

अत्रार्थे यथाविहितं प्रत्ययः स्यात्। प्रस्थस्य वापः क्षेत्रं प्रास्थिकम्। द्रौणिकम्। उप्यतेऽस्मिन्निति वापः।

## ४६। पात्रात् ष्ठन्।

स्यात्। पात्रस्य वापः क्षेत्रं पात्रिकम्। षित्त्वान् ङीष्। पात्रिकी भूमिः।

## ४७। तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते।

अत्रार्थे यथाविहितं प्रत्ययः स्यात्। पञ्चास्मिन् वृद्धिरायो लाभः शुल्क उपदा वा दीयते पञ्चकः। शतिकः। शत्यः।

(क) चतुर्थ्यर्थे चोपसंख्यानम्। शतमस्मै वृद्ध्यादिकं दीयते शत्यो विप्रः।

## ४८। पूरणार्द्धाट् ठन्।

पूरणान्तादर्द्धाच्च ठन् स्यात्। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः। पञ्चमिकः। अर्द्धिकः।

## ४९। भागाद् यच्च।

भागशब्दाद् यट्ठनौ स्याताम्। भागो वृद्ध्यादिरस्मिन् दीयते भाग्यः। भागिकः।

## ५०। तद्धरति वहत्यावहति भाराद् वंशादिभ्यः।

वंशादेः परस्माद् भारादर्थत्रये ठक् स्यात्। वंशभारं हरति वहति आवहति उत्पादयति वा वांशभारिकः। वाल्वजभारिकः।

## ५१ । वस्नद्रव्याभ्यां ठन्कनौ ।

आभ्यामिमौ स्याताम् । वस्नं हरति वहत्यावहति वस्निकः । द्रव्यकः ।

## ५२ । सम्भवत्यवहरतिपचति ।

एषु यथाविहितं स्यात् । प्रस्थं सम्भवति पचति वा प्रास्थिकः कटाहः । खारीकः । प्रमाणानतिरेकः सम्भवः । संहरणमवहारः ।

(क) पचतौ द्रोणादण् च । द्रोणं पचति द्रौणः कटाहः । द्रौणी द्रौणिकी वा स्थाली ।

## ५३ । आढ़काचितपात्रात् खोऽन्यतरस्याम् ।

एभ्यः पूर्वार्थेषु खो वा स्यात् । आढ़कं सम्भवत्यवहरति पचति वा आढ़कीना । आढ़किकी वा । आचितीना । आचितिकी वा । पात्रीणा पात्रिकी वा ।

## ५४ । द्विगोःष्ठंश्च ।

द्विगोः पूर्वार्थेष्वाढ़काद्यन्तात् ष्ठन् वा स्यात् । खश्च । षित्त्वान् ङीष् । द्व्याढ़किकी द्व्याढ़कीना वा । द्व्याचितिकी द्व्याचितीना वा । पक्षे ठञ् । तस्याध्यर्द्धेति (५।१।२८) लुक् । द्व्याढ़की । द्विगोरिति (४।१।२१) ङीप् । द्व्याचिता ।

## ५५ । कुलिजाल्लुक्खौ च ।

द्विगोः कुलिजाल्लुक्खौ वा स्याताम् । चकारात् ष्ठंश्च । द्विकुलिजी (7) । द्विकुलिजीना । द्विकुलिजिकी वा । पक्षे ठञः श्रुतिरेव । द्वैकुलिजिकी ।

## ५६ । सोऽस्यांशवस्नभृतयः ।

अत्रार्थे यथाविहितं स्यात् । पञ्चांशा वस्नानि भृतयो वाऽस्य पञ्चकः । शत्यः । शतिकः । साप्तकः ।

---

(7) द्विगोरिति (४।१।२१) ङीप् । मुद्रितकाशिकायान्तु द्विकुलिजेति टाब् दृश्यते । स मुद्राकर-भ्रम इति प्रतिभाति ।

## ५७। तदस्य परिमाणम् ।

प्रथमासमर्थात् परिमाणार्थे यथाविहितं स्यात्। प्रस्थः परिमाणमस्य प्रास्थिको राशिः। खारीकः। वार्षशतिको यागः। षष्टिर्जीवितपरिमाणमस्य षष्टिकः। इह द्वे षष्टी जीवितपरिमाणमस्येति ठञोऽध्यर्द्धपूर्वेति (५।१।२८) लुक्। सोऽस्येति प्रकृतेः पुनस्तदस्येति निर्द्देशात् पुनष्ठञ्। तस्य च विधानसामर्थ्यादलुगिति जयादित्यः। संख्यायाः संवत्सरसंख्यस्य (७।३।१५) चेत्युत्तरपदवृद्धिः। द्विषाष्टिकः। द्विसाप्ततिकः। त्रिसाप्ततिकः।

## ५८। संख्यायाः संज्ञासंघसूत्राध्ययनेषु।

संख्यावाचिनः पूर्वार्थे यथाविहितं स्यात्। संज्ञायां स्वार्थे विधिः। पञ्चैव पञ्चका नकुलाः। पञ्च परिमाणमस्य पञ्चकः सङ्घः। सूत्रे। अष्टावध्यायाः परिमाणमस्याष्टकं पाणिनीयं सूत्रम्। पञ्चावृत्तयः परिमाणमस्य पञ्चकमध्ययनम्।

## ५९। पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्।

पङ्क्त्यादयः साधवः स्युः। सहस्रादिवत् संज्ञाशब्दा एते। द्वौ पञ्चतौ पङ्क्तिः। द्वौ दशतौ विंशतिरित्यादि व्युत्पत्तिमात्रम्। नान्वयः। तदुक्तं भाष्ये अनारम्भो वा प्रातिपदिकविज्ञानाद् यथा सहस्रादिष्विति।

## ६०। पञ्चद्दशतौ वर्गे वा।

एतौ वर्गे निपात्येते वा। पञ्च परिमाणमस्य पञ्चद् वर्गः। पक्षे कन्। पञ्चकः। दशद् वर्गो दशको वा।

## ६१। सप्तनोऽञ्छन्दसि।

छन्दः सूत्रम्।

## ६२। त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्।

आभ्यां ब्राह्मणे वाच्ये डण् स्यात्। त्रिंशदध्यायाः परिमाणमेषां त्रैंशानि ब्राह्मणानि। चात्वारिंशानि।

## ६३। तदर्हति।

अत्रार्थे यथाविहितं स्यात्। छत्रमर्हति च्छात्रिकः। शत्यः। शतिकः। तदिति वर्त्तते प्रागुत्तरपथात् (५।१।७७)।

## ६४। छेदादिभ्यो नित्यम्।

छेदादेर्नित्यमर्हतीत्यर्थे यथाविहितं स्यात्। छैदिकः। भैदिकः। नित्य-मिति क्रियाविशेषणम्।

## ६५। शीर्षच्छेदाद् यच्च।

अस्मात् तदर्हतीत्यर्थे यत् स्यात्। ठक् च। शीर्षच्छेद्यः। शैर्षच्छेदिको वा। प्रत्ययसन्नियोगेन शिरसो निपातनाच्छीर्षादेशः।

## ६६। दण्डादिभ्यो यः।

एभ्यो यः स्यात्। दण्डमर्हति दण्ड्यः। वध्यः। कण्ठ्यः। मधुपर्क्यः। युग्यः। कश्यः। धन्यः।

## ६७। छन्दसि च।

छन्दः सूत्रम्।

## ६८। पात्राद् घंश्च।

पात्राद् घन् स्यात्। यच्च। पात्रमर्हति पात्रियः। पात्र्यः।

## ६९। कड़ङ्गरदक्षिणाच्छ च। (8)

आभ्यां छः स्याद् यच्च। कड़ङ्गरमर्हति कड़ङ्गरीयो वृषः। कड़ङ्गर्य्यः। दक्षिणीयः। दक्षिण्यः।

## ७०। स्थालीबिलात्।

अस्माच्छः स्याद् यच्च। 'स्थालीबिलमर्हन्ति स्थालीबिलीयाः स्थालीबिल्या वा तण्डुलाः। पाकयोग्या इत्यर्थः।

---

(8) मतान्तरे कड़ङ्करशब्दोऽयम्। तथाच हरदत्तः—कड़ मदे। कड़तीति कड़ः। कड़ं करोतीत्यत एव निपातनात् खच्। कड़ंकरी माषमुद्गादिकाष्ठमुच्यते। कड़ंकरो बुसं क्लीबे इत्यमरः।

## ७१। यज्ञर्त्विग्भ्यां घखञौ।

आभ्यां घखञौ स्याताम्। यज्ञमर्हति यज्ञियो ब्राह्मणः। आर्त्विजीनो यजमानः।

(क) तत्कर्मार्हतीत्युपसंख्यानम्। यज्ञियो देशः। आर्त्विजीनं विप्रकुलम्। आर्हीयाः पूर्णाः। अतः परं प्राग्वति ठञेव (५।१।१८)।

## ७२। पारायणतुरायणचान्द्रायणं वर्त्तयति।

एभ्यो वर्त्तयतीत्यर्थे ठञ् स्यात्। पारायणिकः। द्वैपारायणिकः। तौरायणिकः। चान्द्रायणिकः।

## ७३। संशयमापन्नः।

ठञ् स्यात्। सांशयिकः।

## ७४। योजनं गच्छति।

ठञ् स्यात्। यौजनिकः।

(क) क्रोशशतिकयोजनशतिकावुपसंख्यानात्।

## ७५। पथःष्कन्।

पन्थानं गच्छति पथिकः। षित्वान् ङीष्। पथिकी।

## ७६। पन्थो ण नित्यम्।

पथो णः स्यात् पन्थादेशश्च नित्यं गन्तरि। "पान्थः प्रसुप्तो युवा"। स्त्रियां टाप्। पान्था स्त्री।

## ७७। उत्तरपथेनाहृतञ्च।

उत्तरपथात् ठञ् स्यात्। तेनाहृत मौत्तरपथिकं दारु। चकारात् तेन गच्छति। औत्तरपथिको दूतः।

(क) वारिजङ्गलस्थलकान्ताराजशङ्कुपूर्वाच्च। एतत् पूर्वात् पथष्ठञ् स्यात्। तेनाहृतं गच्छति वा। वारिपथिकम्। जाङ्गलपथिकम्। स्थालपथिकम्। कान्तारपथिकम्। आजपथिकम्। शाङ्कुपथिकम्।

(ख) स्थलवारिभ्यां पथो मधुकमरिचयोरण् । स्थालपथं वारिपथं मधुकं मरिचं वा ।

७८। कालात् ।

कालवाचिनः प्रत्यया वाच्याः । व्युष्टादिभ्योऽणिति (५।१।९७) यावत् ।

७९। तेन निर्वृत्तम् ।

अत्रार्थे कालाट् ठञ् स्यात् । अह्ना निर्वृत्तमाह्निकम् । अह्नष्टखोरेवेति (६।४।१४५) नियमान्न टिलोपः । मासिकः । द्विसांवत्सरिकः । संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः (७।३।१५) ।

८०। तमधीष्टो भृतो भूतो भावी ।

तमिति द्वितीयासमर्थात् कालवाचिशब्दादधीष्टाद्यर्थे ठञ् स्यात् । मासमधीष्टो भृतो भूतो भावी वा मासिकः । सांवत्सरिको गुरुर्दासो व्याधिरुत्सवो वा ।

८१। मासाद् वयसि यत्खञौ ।

वयसि गम्ये मासादिमौ स्याताम् । मासं भूतो भावी वा मास्यः । मासीनः शिशुः । वयसि किम् ? मासिकः कर्मकरः ।

८२। द्विगोर्यप् ।

द्विगोर्मासाद् वयसि यप् स्यात् । द्वौ मासौ भूतो भावी वा द्विमास्यः । त्रिमास्यः ।

८३। षण्मासाण्ण्यच्च ।

षण्मासाद् वयसि ण्यत् स्यात् । यप् च । षाण्मास्यः । षण्मास्यः । ठञपीत्येके । षाण्मासिकः ।

८४। अवयसि ठंश्च ।

अवयसि षण्मासाट् ठन् स्यात् । ण्यच्च । षण्मासिको रोगः । षाण्मास्यः । ठञपीत्येके । षाण्मासिकः ।

८५। समायाः खः।

समाशब्दान्निर्वृत्ताद्यर्थपञ्चके खः स्यात्। समीनः।

८६। द्विगोर्वा।

द्विगोः समान्तान्निर्वृत्तादौ खः स्याद्वा। द्विसमीनः। द्वैसमिको वा।

८७। रात्र्यहःसंवत्सराच्च।

रात्र्याद्यन्ताद् द्विगोर्निर्वृत्तादौ खो वा स्यात्। पक्षे ठञ्। द्विरात्रीणः। द्वैरात्रिको वा। द्व्यह्नीनः। द्वैयह्निको वा। द्विसंवत्सरीणः। द्विसांवत्सरिको वा। इह द्व्यह्नीन इत्यत्र समासान्तविधेरनित्यत्वान्न टच्। ततो नाह्नादेशः। तस्य टचि विधानात्।

८८। वर्षाल्लुक् च।

वर्षान्ताद् द्विगो र्निर्वृत्तादौ खठञौ वा स्याताम्। तल्लुक् च वा। द्विवर्षीणो व्याधिः। द्विवार्षिको वा। पक्षे लुक्। द्विवर्षः। वर्षस्याभविष्यतीत्युत्तरपदवृद्धिः (७।३।१६)। भाविनि तु द्वैवर्षिकः।

८९। चित्तवति नित्यम्।

प्राणिनि वर्षान्ताद् द्विगोर्निर्वृत्तादौ नित्यं लुक् स्यात्। द्विवर्षो बालकः। द्विवर्षो वत्सः।

९०। षष्टिकाः षष्टिरात्रेण पच्यन्ते।

षष्टिरात्रात् कन् स्यादुत्तरपदलोपश्च निपात्यते। षष्टिकाः। बहुलमतन्त्रम्। तेन षष्टिको व्रीहिरित्याहुः।

९१। वत्सरान्ताच्छश्छन्दसि।

९२। संपरिपूर्वात् ख च।

छन्दः सूत्रद्वयम्।

९३। तेन परिजय्यलभ्यकार्य्यसुकरम्।

एष्वर्थेषु कालात् ठञ् स्यात्। मासेन परिजेतुं शक्यो लभ्यः कार्य्यः सुकरो वा मासिकः। सांवत्सरिकः।

## ९४ । तदस्य ब्रह्मचर्य्यम् ।

कालादत्रार्थे ठञ् स्यात् । मासं ब्रह्मचर्य्यमस्य मासिको विप्रः । मासमित्यत्यन्तसंयोगे द्वितीया ( २।३।५ ) । तदिति प्रथमान्तम् । तेन मासोऽस्य ब्रह्मचर्य्यस्य मासिकं ब्रह्मचर्य्यमित्येके ।

(क) तच्चरति महानाम्न्यादिभ्यः । ठञ् स्यात् । महानाम्न्यो नाम ऋचस्तत्सहचरितं व्रतं महानाम्न्यः । ताश्चरति माहानाम्निकः (9) आदित्यव्रतिकः ।

(ख) अवान्तरदीक्षादिभ्यो डिनिः । पूर्वार्थे डिनिः स्यात् । तच्चरति । अवान्तरदीक्षी । देवव्रती ।

(ग) अष्टचत्वारिंशतो ड्वुण् डिनिश्च । अष्टचत्वारिंशद् वर्षाणि व्रतं चरति अष्टचत्वारिंशकः । अष्टचत्वारिंशी (10) विप्रः ।

(घ) चातुर्मास्यानां यलोपश्च । चातुर्मास्यानि व्रतानि चरति चातुर्मासकः । चातुर्मासी ।

(ङ) चतुर्मासाण् ण्यो यज्ञे तत्र भवे । चतुर्मासे भवो यज्ञश्चातुर्मास्यः ।

(च) संज्ञायामण् । चातुर्मासी । पौर्णमास्याः संज्ञा ।

## ९५ । तस्य च दक्षिणा यज्ञाख्येभ्यः ।

यज्ञनाम्नस्तस्य दक्षिणेत्यर्थे ठञ् स्यात् । अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । राजसूयिकी ।

## ९६ । तत्र च दीयते कार्यं भववत् ।

तत्रेति सप्तम्यन्ताद् दीयते कार्य्यमित्यर्थयोस्तत्रभववत्प्रत्ययाः स्युः । मासे दीयते कार्य्यं वा मासिकम् । प्रावृषेण्यम् । हैमनम् । उक्तः कालाधिकारः ।

---

(9) हरदत्तस्तु माहानामिक इत्याह । भस्याढे इति पुंवद्भावात् ( ६।३।१५ वा ) । महन्नाम यासां ता महानाम्न्यो विदामघवन्नित्याद्या ऋचः । नित्यं संज्ञाच्छन्दसोरिति ( ४।१।२९ ) ङीप् । चरणमनुष्ठानमित्यर्थः । तच्च क्रियाविषयमिति तत्सहचरितं व्रतञ्च ।

(10) प्रतिवेदं द्वादशवर्षाणि व्रतं चरन्नेवमुच्यते ।

९७। व्युष्टादिभ्योऽण्।

एभ्योऽण् स्यात्। व्युष्टे दीयते कार्यं वा वैयुष्टम्। नैत्यम्।

९८। तेन यथाकथाचहस्ताभ्यां णयतौ।

आभ्यां णयतौ स्याताम्। तेन दीयते कार्य्यं वा। याथाकथाचम्। हस्त्यम्। यथाकथाचेत्यव्ययसमुदायोऽनादरार्थकः।

९९। सम्पादिनि।

अत्र ठञ् स्यात्। चन्दनेन सम्पादि शोभि चान्दनिकम्। "वपुश्चान्दनिकं यस्य कार्णवेष्टकिकं मुखम्।" वास्त्रयुगिकं शरीरम्।

१००। कर्मवेशाद् यत्।

आभ्यां यत् स्यात् तेन सम्पाद्यर्थे। कर्मण्यं शरीरम्। वेश्या स्त्री। वेश्यं वपुः।

१०१। तस्मै प्रभवति सन्तापादिभ्यः।

सन्तापादिभ्यष्ठञ् स्यात्। सन्तापाय प्रभवति सान्तापिकम्। सांग्रामिकम्। साक्तुमांसौदनिकः। साक्तुकः। मांसिकः। औदनिकः।

१०२। योगाद् यच्च।

योगाय प्रभवति योग्यम्। ठञ् च। यौगिकम्।

१०३। कर्मण उकञ्।

कर्मणे प्रभवतीति कार्मुकं धनुः।

१०४। समयस्तदस्य प्राप्तम्।

समयादत्रार्थे ठञ् स्यात्। समयः प्राप्तोऽस्य सामयिकं कार्य्यम्। "किमसामयिकं वितन्वता"। तदस्यानुवृत्तिः प्राग् वतेः (५।१।११५)।

१०५। ऋतोरण्।

तस्मादण् स्यात्। ऋतुः प्राप्तोऽस्यार्त्तवं पुष्पम्। आर्त्तवं फलम्।

१०६। छन्दसि घस्।

छन्दः सूत्रम्।

## १०७ । कालाद् यत् ।

कालः प्राप्तोऽस्य काल्यं वस्त्रम् । काल्या गौः प्रजने । काल्यं शीतम् ।

## १०८ । प्रकृष्टे ठञ् ।

प्रकृष्टः कालोऽस्य कालिकं वैरम् । ठञिति विस्पष्टार्थम् । कालिक-मृणम् ।

## १०९ । प्रयोजनम् ।

तदस्य प्रयोजनमित्यर्थे ठञ् स्यात् । ऐन्द्रमहिकम् । औत्सविकम् ।

## ११० । विशाखाषाढादण् मन्यदण्डयोः ।

आभ्यामनयोरण् स्यात् । वैशाखो मन्थः । "द्रुततरकरदक्षाः क्षिप्तवैशाखशैले ।" आषाढो दण्डः (11) । "अथाजिनाषाढधरस्तपस्वी" । (12)

(क) चूडादिभ्यश्च । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् । खाट्वः ।

## १११ । अनुप्रवचनादिभ्यश्छः ।

एभ्यश्छः स्यात् तदस्य प्रयोजनमित्यर्थे । अनुप्रवचनीयम् । अनुप्रयोजनीयम् । उत्थापनीयम् ।

(क) विशिपदिपूरिरुहिप्रकृतेरनान्तात् सपूर्वपदात् । गेहानुप्रवेशनीयम् । प्रपापूरणीयम् । अश्वारोहणीयम् । अश्वप्रपदनीयम् । प्रासादारोहणीयम् ।

(ख) स्वर्गादिभ्यो यत् । स्वर्गः प्रयोजनमस्य स्वर्ग्यः । आयुष्यः । यशस्यः । धन्यम् ।

(ग) पुण्याहवाचनादिभ्यो लुग् वक्तव्यः । पुण्याहवाचनं कर्म । स्वस्तिवाचनम् ।

## ११२ । समापनात् सपूर्वपदात् ।

विद्यमानपूर्वपदात् समापनाच्छः स्यात् तदस्य प्रयोजनमित्यर्थे । व्रतसमापनीयं भोजनम् । कलहसमापनीयं दानम् । छन्दःसमापनीयम् ।

---

(11) "पूर्वाषाढायां यतिभिर्दण्डो गृह्यत इति प्रयोजनम्" ।—इति सृष्टिधरः ।

(12) अथाजिनाषाढधरः प्रगल्भवागिति कुमारे पाठः ।

११३। ऐकागारिकट् चौरे।

अयं चौरे निपात्यते। ऐकागारिकश्चौरः। "ऐकागारिकवद् भूमौ दूराज्-जग्मुरदर्शनम्"। ऐकागारिकी। टित्त्वान् ङीप्।

११४। आकालिकडाद्यन्तवचने।

स्तोककालयोराद्यन्तयोर्वचनेऽयं निपात्यते। आकालिको मेघः। टित्त्वा-दाकालिकी। "आकालिकीं वीक्ष्य मधुप्रवृत्तिम्"। प्राग्वतेष्ठञुक्तः।

११५। तेन तुल्यं क्रिया चेद् वतिः।

तृतीयासमर्थात् क्रियातौल्ये वतिः स्यात्। विप्रेण तुल्यं विप्रवदधीते। इह क्रियया तुल्यत्वं क्रियाया एव सम्भवति। विप्रवदधीत इति विप्रकर्तृका-ध्ययनक्रियावृत्तेर्विप्रशब्दाद्वतिः। विप्रेण तुल्यं विप्रकर्तृकाध्ययनेन तुल्यं यथा स्यादेवमधीत इत्यर्थः। एवं "पुत्रं मित्रवदाचरेत्।" मित्रकर्मका-चरणक्रियया तुल्यं यथा स्यादेवं पुत्रमाचरेत्। तथा पूर्ववत् सन (१।३।६२) इत्यात्मनेपदं भवति। पूर्वशास्त्रापादानकात्मनेपदभवनक्रियया तुल्यं यथा स्यात् तथा सन्नन्तादात्मनेपदं भवति। एवं गुरुवद् गुरुपुत्रेषु प्रवर्त्तितव्यम्। पूर्वाधिकरणकप्रवर्त्तनक्रियया तुल्यं तत्पुत्रेषु प्रवर्त्तनमिति। क्रियाग्रहणं किम्? गुणतुल्ये मा भूत्। तेन पुत्रेण तुल्यः स्थूलः।

११६। तत्र तस्येव।

सप्तमीषष्ठीसमर्थादिवार्थे वतिः स्यात्। मथुरावत् स्रुघ्ने प्राकाराः। ब्राह्मणवत् क्षत्रियस्य दन्ताः शुक्लाः।

११७। तदर्हम्।

अत्रार्थे वतिः स्यात्। अर्हतीत्यर्हम्। पचाद्यच्। राजानमर्हति राजवत् वृत्तम्। मुनिवच्चरित्रम्। नेह विप्रमर्हति दधीति। अनभिधानात्।

११८। उपसर्गाच्छन्दसि धात्वर्थे।

छन्दः सूत्रम्।

११९। तस्य भावस्त्वतलौ।

भवतोऽस्मादभिधान-प्रत्ययाविति भावः शब्दप्रवृत्तिनिमित्तं जात्यादि-

वस्तुधर्म्मः। तस्य भाव इत्यर्थे त्वतलौ स्याताम्। गोत्वं गोता। शुक्लत्वं शुक्लता। रूपत्वं रूपता। क्रियात्वं क्रियाता। रसत्वं रसता। समासकृत्तद्धितेषु सम्बन्धः प्रवृत्तिनिमित्तम्। राजपुरुषत्वम्। पाचकत्वम्। गार्ग्यत्वम्। यौष्माकीणत्वम्। यदृच्छाशब्दात् स्वरूपमात्रेऽभिधानम्। डित्थत्वम्। डवित्थत्वम्। कुत्वम्। चुत्वम्।

## १२०। आ च त्वात्।

आ ब्रह्मण त्वा-(५।२।१३६)दपवादैः सह त्वतलौ समाविशतः। चकारान्नञ्स्नञ्भ्याञ्च। प्रथिमा पृथुत्वं पृथुता। एवं पाटवं पटुत्वं पटुता। स्त्रैणं स्त्रीत्वं स्त्रीता। पौंस्नं पुंस्त्वं पुंस्ता।

## १२१। न नञ्पूर्वात् तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः।

नञ्तत्पुरुषाद् वक्ष्यमाणभावप्रत्ययो न स्यात्। यथा पत्यन्तपुरोहितादिभ्यो यक् (५।१।१२८)। वार्हस्पत्यम्। नञ्पूर्वान्न भवति। अपतित्वम्। अपतिता। अचतुरादिभ्यः किम्? आचतुर्य्यम्। आसङ्गत्यम्। आलवण्यम्। आवट्यम्। आबुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्।

## १२२। पृथ्वादिभ्य इमनिज् वा।

एभ्य इमनिज् स्याद्वा। वावचनमणा समावेशार्थम्। पृथोर्भावः प्रथिमा पार्थवं पृथुत्वम् पृथुता वा। तनिमा तानवं तनुता तनुत्वं वा। पृथुमृदुपटुमहद्गुरुलघुप्रियक्षिप्रक्षुद्रदीर्घबहुलादिः पृथ्वादिः।

## १२३। वर्णदृढादिभ्यः ष्यञ् च।

एभ्यः ष्यञिमनिचौ स्याताम्। वर्णात्। शौक्ल्यं शुक्लिमा। कार्ष्ण्यं कृष्णिमा। दृढादेः। दार्ढ्यं द्रढिमा। माधुर्य्यं मधुरिमा। वैमनस्यं विमनिमा (13)। षकारो ङीषर्थः। औचिती। आनुपूर्वी। वैदग्धी। त्वतलौ सर्वतोदाहर्त्तव्यौ। इह गुणवचनादेव ष्यञि सिद्धे वर्णग्रहणमिमनिजर्थम्।

(13) अत्र (1) वैयातख्याभमतिमनःशारदानाम्। (2) समो मतिमनसोरिति गणसूत्रद्वयम्। तेन विमनसः ष्यञिमनिचौ।

वधिरकृशशीतोष्णमधुरादीनाञ्च दृढ़ादौ पाठः पक्षे इमनिजर्थः। कर्मणि च ष्यञ् मा भूत्।

## १२४। गुणवचनब्राह्मणादिभ्यः कर्मणि च।

एभ्यो भावे क्रियायाञ्च ष्यञ् स्यात्। गुणवचनात्। जड़स्य भावः क्रिया वा जाड्यम्। मौढ्यम्। कार्श्यम्। स्थौल्यम्। ब्राह्मणादेराकृतिगणाद्। ब्राह्मण्यम्। दौत्यम्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद् दूतीनां कर्म दौत्यम्। "आगतप्रियसखैरभिदौत्यम्।" ब्राह्मण दूत चोर मध्यस्थ कुशल चपल निपुण पिशुन दायाद कवि अर्हतञ्च। आकृतिगणोऽयम्। "चापल्यादथ सरसस्तरङ्गहस्तैः"।

(क) अर्हतो नुम् च। आर्हन्त्यमार्हन्ती।

(ख) चातुर्वर्ण्यादीनां स्वार्थे ष्यञ्। चातुर्वर्ण्यम्। आन्यभाव्यम्। आन्यभाव्यं तु कालशब्दव्यवायादिति वररुचिः (14)। औपम्यम्। यौगपद्यम्। सान्निध्यम्। चातुर्वैद्यम्। षाड्गुण्यम्। तादर्थ्यम्। त्रैलोक्यम्। साहित्यम् (15)। अतःपरं भावे कर्मणि चेत्यापादमनुवर्त्तते।

## १२५। स्तेनाद् यन्नलोपश्च।

स्तेनशब्दाद् यत् स्यात्। नकारलोपश्च। स्तेन श्चौरः। तस्य भावः क्रिया वा स्तेयम्। स्तैन्यशब्दस्तु पाञ्चायतलौहितिक इतिवदागमिक इति भागवृत्तिः (16)। योगविभागात् ष्यञिति जयादित्यः।

## १२६। सख्युर्यः।

स्यात्। सख्यम्। दूतवणिग्भ्याञ्चेति जयादित्यः। दूत्यम्। वणिज्या। ब्राह्मणादिपाठाद् वाणिज्यम्। दौत्यञ्च।

---

(14) This is a वार्त्तिक (in the अइउण् प्रत्याहार) by कात्यायन who is also called वररुचि।

(15) निर्दोषौ गुणसम्पन्नौ सालङ्कारौ रसान्वितौ। शब्दार्थौ सहितौ काव्यमतः साहित्यमुच्यते ॥१॥" इति।

(16) अत्र सृष्टिधरः—"पञ्चायतस्य भावः पाञ्चायतम्। लौहितको मणिः। तस्य भावो लौहितकम्। एतौ शब्दौ ते। नचानयोरञोऽणौ वा विधाने सूत्रमस्ति। तथाचाणिति योगविभागाद् यथेदं तथा स्तेनात् स्तैन्यमिति च कल्प्यमिति भावः। आगमः परम्परा। तत आगत आगमिकः। चौरिका स्तैन्यचौर्य्ये चेत्यमरोऽपि"। इति।

१२७ । कपिज्ञात्योर्ढक् ।

आभ्यां ढक् स्यात् । कापेयम् (17) । ज्ञातेयम् । भावः कर्म वेत्यर्थे ।

१२८ । पत्यन्तपुरोहितादिभ्यो यक् ।

एभ्यो यक् स्यात् । पत्यन्तात् । सैनापत्यम् । प्राजापत्यम् । गार्हपत्यम् । पुरोहितादेः । पौरोहित्यम् । राज्यम् । सैन्यम् ।

१२९ । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।

एभ्योऽञ् स्यात् । प्राणिजातेः । औष्ट्रम् । वयोवचनात् । कौमारम् । उद्गात्रादेः । औद्गात्रम् । औन्नेत्रम् ।

१३० । हायनान्तयुवादिभ्योऽण् ।

एभ्योऽण् स्यात् । हायनान्तात् । द्वैहायनम् । यूनो भावः कर्म वा यौवनम् । स्थाविरम् । पौरुषम् । सुहृद् । दुर्हृद् । चपल । निपुण । कुशल । अचेतस्र । पिशुन । कुतूहल ।

(क) श्रोत्रियस्य घलोपश्च । श्रौत्रम् ।

१३१ । इगन्ताच्च लघुपूर्वात् ।

इग् यस्यान्ते तत्पूर्वश्च यो लघु स्तस्मादण् स्यात् । मौनम् । गौरवम् । शौचम् । पाटवम् । लाघवम् । हारीतकम् । लघुपूर्वात् किम् ? पाण्डुत्वम् । काव्यं तु ब्राह्मणादित्वात् ।

१३२ । योपधाद् गुरूपोत्तमाद् वुञ् ।

त्रिप्रभृतीनामन्त्यमुत्तमम् । तत्समीपमुपोत्तमम् । गुरूपोत्तमाद् योपधाद् वुञ् स्यात् । रामणीयकम् । आचार्य्यकम् । साहायकम् । साहाय्यमित्यपि ब्राह्मणादित्वादिति जयादित्यः । नेति भागवृत्तिः । गुरूपोत्तमात् किम् ? क्षत्रियत्वम् ।

---

(17) "बहूनामप्यचित्तानामेको भवति चित्तवान् । पश्य वानरसैन्येऽस्मिन् यदर्कमुपतिष्ठते ॥१॥ मैवं मंस्थाः सचित्तोऽयमेषोऽपि हि यथा वयम् । एतदप्यस्य कापेयं यदर्कमुपतिष्ठति" ॥२॥ इति ।

१३३। द्वन्द्वमनोज्ञादिभ्यश्च।

एभ्यो वुञ् स्यात्। द्वन्द्वात्। शैष्योपाध्यायिका। पैतापुत्रिका। कौत्सकुशिकिका। मनोज्ञादेः। मानोज्ञकम्। प्रैयरूपकम्। आभिरूपकम्। अमुष्यपुत्र। अमुष्यकुल। आढ्य। छान्त्र।

१३४। गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु।

आभ्यां श्लाघाधिक्षेपे तत्प्राप्तिविषये भावे कर्मणि च वुञ् स्यात्। गोत्रात्। गार्गिकया श्लाघते। गार्गिकयात्याकुरुते। दाक्षिकामवेतः। चरणात्। काठिकया श्लाघते। काठिकयात्याकुरुते। बाह्वृचिकामवेतः। श्लाघादिभ्योऽन्यत्र गार्ग्यत्वमित्येव।

१३५। होत्राभ्यश्छः।

होत्राशब्दोऽयमृत्विजां वाचकः। बहुवचनं स्वरूपविधिनिरासार्थम्। होत्रावाचिभ्यश्छः स्यात्। अच्छावाकीयम्। मित्रावरुणीयम्। ब्राह्मणाच्छंसीयम्।

१३६। ब्रह्मणस्त्वः।

होत्रावाचिनो ब्रह्मन्शब्दाच्छापवादस्त्वः स्यात्। ब्रह्मत्वम्। पूर्णो भावकर्माधिकारः।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

पञ्चमाध्यायस्य प्रथमः पादः ॥५।१॥

समाप्तश्च क्रीतपादः॥

अथ

# भाषावृत्तिः ।

---

## पञ्चमोऽध्यायः । द्वितीयः पादः ।

### १ । धान्यानां भवने क्षेत्रे खञ् । (18)

धान्यवाचिभ्योऽत्र खञ् स्यात् । भवन्त्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् । धान्यीनम् । कौलत्थीनम् । कौद्रवीणम् ।

### २ । व्रीहिशाल्योर्ढक् ।

आभ्यां ढक् स्यात् । व्रैहेयम् । शालेयम् ।

### ३ । यवयवकषष्टिकाद् यत् । (19)

एभ्यो यत् स्यात् । यव्यं क्षेत्रम् । यवक्यम् । षष्टिक्यम् ।

### ४ । विभाषा तिलमाषोमाभङ्गाणुभ्यः ।

एभ्यो यद्वा स्यात् । तिल्यं क्षेत्रम् । तैलीनं वा । माष्यं माषीणं वा । उम्यमौमीनं वा । भङ्ग्यं भाङ्गीनं वा । अणव्यमाणवीनं वा । (20)

---

(18) "यवगोधूमधान्यानि तिलाः कङ्गुकुलत्थकाः । माषा मुद्गा मसूराश्च निष्पावाः श्यामसर्षपाः ॥ १ ॥ गवेधुकाश्च नीवारा आढक्यश्च सतीनकाः । चणकाश्चीणकाश्चैव धान्यान्यष्टादशैव तु" ॥२॥ इति स्कान्दे। यव is barley, गोधूम = wheat, धान्य = व्रीहि, कङ्गु = प्रियङ्गु = काउनि = panick seed, मसूर = Lentil, श्याम = श्यामाक, नीवार = आरण्यव्रीहि । आढ़की = रहरी = तुवरी ; सतीनक = कलाय = कलद्र = सतीन = peas. चणक = छोला = बुट = gram. कोरदूषस्तु कोद्रव इत्यमरः । = Some grain. मतान्तरे कोद्रव is भङ्गा । कुलत्थ is some corn.

(19) यवकं वोरकधान्यम् = वोरोधान ।

(20) माष = माषकलाय । अतसी स्यादुमा क्षुमेत्यमरः । उमा = अतसी = तिसि = Linseed. भङ्गा = कुसुम्भः = कोद्रवः = काश्मीरादिजातशस्यविशेषः । भङ्गा मतान्तरे कार्पासः । अणु = चीणक = चीणा ।

## ५। सर्वचर्मणः कृतः खखञौ।

अस्मात् कृतार्थे खखञौ स्याताम्। सर्व एव चर्मणा कृतः सर्वचर्मीणो रथः। सार्वचर्मीणः।

## ६। यथामुखसंमुखस्य दर्शनः खः।

आभ्यां दर्शनार्थे खः स्यात्। मुखस्य सादृश्यं यथामुखम्। निपातनात् समासः। समं मुखं सम्मुखम्। दृश्यतेऽस्मिन्निति दर्शनः। यथामुखस्य दर्शनो यथामुखीनो दर्पणः। "यथामुखीनः सीताया हेमरत्नमयो मृगः"(21)। सम्मुखस्य दर्शनः सम्मुखीनः।

## ७। तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति।

सर्वादिकात् पथ्यङ्गादेस्तद्व्याप्नोतीत्यर्थे खः स्यात्। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणं वासः। सर्वकर्मीणः पाणिः। सर्वपत्रीणः सारथिः। सर्वपात्रीण ओदनः।

## ८। आप्रपदं प्राप्नोति।

अत्रार्थे खः स्यात्। आप्रपदीनः पटः।

## ९। अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु।

अनुपदादेर्बद्धादौ खः स्यात्। अनुपदं बद्धा अनुपदीना पादुका पादप्रमाणेत्यर्थः। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयः प्रदक्षिणम्। अनयः प्रसव्यम्। अयानयं नेयो ऽयानयीनः शारः।

## १०। परोवरपरम्परपुत्रपौत्रमनुभवति।

एभ्योऽनुभवत्यर्थे खः स्यात्। परांश्चावरांश्चानुभवति। परस्योत्त्वं निपातनात्। परोवरीणः। "लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय"। परांश्च परांश्चेति। निपातनात्परत्वम्।

## ११। अवारपारात्यन्तानुकामं गामी।

एभ्यो गामीत्यर्थे खः स्यात्। अवारं गामी अवारीणः। पारीणः।

---

(21) यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्निति भट्टिः।

समुदायाच्च। अवारपारीणः। विपरीताच्च। पारावारीणः। अत्यन्तीनः। "अनुकामीनतां त्यज"। गामीति भविष्यन्निर्देशो वैचित्र्यार्थः। गन्तृमात्रे प्रत्ययः। (22)

## १२। समां समां विजायते।

अत्रार्थे खः स्यात्। समांसमीना गौः। प्रत्यब्दप्रसवेत्यर्थः। पूर्वपदे सुपोऽलुग्वक्तव्यः।

## १३। अद्यश्वीनावष्टब्धे।

इयमवष्टब्धे आसन्ने विजनने निपात्यते। अद्य श्वो वा विजायतेऽद्यश्वीना गौः। आसन्नप्रसवेत्यर्थः। कथमद्यश्वीनो वियोगः? विजायत इत्यस्याननुवृत्तेरिति जयादित्यः। स्त्रीलिङ्गनिर्देशादुपमानस्याप्यसम्भवान्नैतदिति भागवृत्तिः।

## १४। आगवीनः।

निपात्यते। आ गोः प्रतिपादनात् कर्मकारी आगवीनः।

## १५। अनुग्वलं गामी।

खः स्यात्। अनुगु गोः पश्चादलं गामी अनुगवीनो गोपः।

## १६। अध्वनो यत्खौ।

अस्माद् यत्खौ स्याताम्। अध्वानमलंगामी अध्वन्यः। अध्वनीनः।

## १७। अभ्यमित्राच्छ च।

अस्माच्छः स्यात्। यत्खौ च। अभ्यमित्रमलंगामी अभ्यमित्रीयः। अभ्यमित्र्यः। अभ्यमित्रीणः। अमित्रस्याभिमुखं सुष्ठु गच्छतीत्यर्थः।

## १८। गोष्ठात् खञ् भूतपूर्वे।

स्यात्। गोष्ठो भूतः पूर्वं यत्र स गौष्ठीनो देशः।

## १९। अश्वस्यैकाहगमः।

अश्वादेकाहगम्ये खञ् स्यात्। आश्वीनोऽध्वा।

---

(22) अत्यन्तीनो भृशं गन्तेत्यर्थः। अनुकामीनो यथेष्टं गन्तेत्यर्थः। अनुकामीनता स्वेच्छागमनम्।

## २० । शालीनकौपीने अधृष्टाकार्य्ययोः ।

एते द्वे निपात्येते । शालाप्रवेश मर्हति शालीना वधुः । अधृष्टेत्यर्थः । "शशाक शालीनतया न वक्तुम् ।" कूपप्रवेशमर्हति कौपीनमकार्य्यम् ।

## २१ । व्रातेन जीवति ।

ये शरीर मायास्य जीवन्ति ते व्राता व्याधादयः । तत् कर्मापि व्रातम् । तस्माज्जीवत्यर्थे खञ् स्यात् । व्रातीनो विप्रः । व्रातीनसंघाः प्रकटं नरेन्द्रे स्ते राक्षसाः सङ्कटमाशु नीता इति व्योषः ।

## २२ । साप्तपदीनं सख्यम् ।

इदं सख्ये निपात्यते । उपचाराद् तद्वति वृत्तेः साप्तपदीनः सखापि ।

## २३ । हैयङ्गवीनं संज्ञायाम् ।

इदं घृतविशेषस्य संज्ञायां निपात्यते ।

## २४ । तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ।

पील्वादेः पाके कुणप् स्यात् । पीलूनां पाकः पीलुकुणः । कर्कन्धुकुणः । शमीकुणः । करीर । कुवल । वदर । अश्वत्थ । खदिर । कर्णादे र्मूले जाहच् । कर्णस्य मूलं कर्णजाहम् । "कर्णजाहविलोचना" । अक्षिजाहम् । नख । मुख । केश । पाद । भ्रू । गुल्फ । ओष्ठ । शृङ्ग । आकृतिगणोऽयम् ।

## २५ । पक्षात् तिः ।

पक्षान्मूले तिः स्यात् । "चन्द्रलेखेव पक्षती" । "चञ्चत्पक्षतिभिः खगैः" । पक्षतिः प्रतिपत् ।

## २६ । तेन वित्तश्चुञ्चुप्चणपौ ।

तेन वित्तार्थे चुञ्चुप्चणपौ स्याताम् । विद्यया वित्तः प्रतीतो विद्याचुञ्चुः । विद्याचणः । "रामोऽपि मायाचणमस्त्रचुञ्चुः" ।

## २७ । विनञ्भ्यां नानाञौ नसह ।

असहायवृत्तिभ्यां विनञ्भ्यां नानाञौ स्याताम् । विना । नाना । स्वार्थे विधिः ।

२८ । वेः शालच्छङ्कटचौ ।

वेरिमौ स्याताम् । विशालः । विशङ्कटः । विवितताथः ।

२९ । संप्रोदश्च कटच् ।

एभ्यः कटच् स्यात् । संकटः । प्रकटः । उत्कटः । चकाराद् विकटः । निकटः ।

(क) अलाबूतिलमाषोमाभङ्गाणुभ्यो रजसि । एभ्यः कटच् स्यात् । अलाबूनां रजः अलाबूकटः । तिलकटः । उमाकटः । अणुकटः ।

(ख) गोष्ठादयः स्थानादिषु पशुनामादिभ्यः । गवां स्थानं गोगोष्ठम् । महिषीगोष्ठम् । उष्ट्रगोष्ठम् । अविगोष्ठम् ।

(ग) अवेः संघाते कटच् । अविकटः । तत्संघात इत्यर्थः ।

(घ) विस्तारे पटच् । अविपटः ।

(ङ) द्वित्वे गोयुगच् । गोगोयुगम् । अश्वगोयुगम् ।

(च) प्रकृत्यर्थषट्के षड्गवच् । हस्तिषड्गवम् । अश्वषड्गवम् ।

(छ) स्नेहने तैलच् । इङ्गुदीतैलम् । तिलतैलम् ।

(ज) भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ । इक्षुशाकटम् । मूलकशाकिनम् ।

३० । अवात् कुटारच्च ।

स्यात् । अवकुटारम् । चकारात् कटच । अवकटम् ।

३१ । नते नासिकायाः संज्ञायां टीटञ् नाटज्भ्रटचः ।

अवाट् टीटजादयः स्युर्नासिकाया नमने संज्ञा चेत् । अवटीटः । अवनाटः । अवभ्रटः ।

३२ । नेर्बिडज्बिरीसचौ ।

नेरिमौ स्याताम् । निबिडम् । निबिरीसम् । 'जघननिबिरीसनितम्बभारखेदि ।"

## ३३। इनच्पिटच् चिक चि च।

नेरिनच्पिटचौ स्यातां तत्सन्नियोगेन चिक चि चेत्येतावादेशौ स्तः। चिक्किनः। चिपिटः।

(क) कप्रत्यये चिक् चादेशो वक्तव्यः। चिक्कः।

गुणशब्दा एते यथाकथञ्चिद्‌ज्ञेयाः। अतएवैते चिल्लपिल्लादयः शब्दाः क्लिन्नाक्षिपर्य्यायाः सूत्रकारेणोपेक्षिताः।

## ३४। उपाधिभ्यां त्यकन्नासन्नारूढयोः।

आभ्यामनयो स्त्यकन् स्यात्। समुद्रस्यासन्ना भूमिरुपत्यका समुद्रस्य वनराजी। गिरिमधिरूढाऽधित्यका गिरेः। समुद्रोपत्यका हैमी पर्वताधित्यका पुरीति भट्टिः।

## ३५। कर्मणि घटोऽठच्।

कर्मणि घटते कर्मठः। घटत इति घटः। पचाद्यच्।

## ३६। तदस्य संजातं तारकादिभ्य इतच्।

अत्रार्थे तारकादेरितच् स्यात्। तारकाः संजाता अस्य तारकितं नभः। पुष्पितो वृक्षः। सुख। दुःख। फल। कुसुम। मुकुल। स्तवक। तन्द्रा। बुभुक्षा। पिपासा। ज्वर। व्रण। रोग। व्याधि। उत्कण्ठा। लज्जा।

(1) गर्भादप्राणिनि। गर्भिताः शालयः। अप्राणिनि किम्? गर्भिणी गौः। तदस्येति वर्त्तते यावत् तदस्मिन् ( ५।२।४५ )।

## ३७। प्रमाणे द्वयसज्दघ्नञ्मात्रचः।

अत्र एते स्युः। जरुः प्रमाण मस्य जरुद्वयसम् पयः। जानुद्वयसी नदी। जरुदघ्नम्। "गिरिकूटदघ्नैः।" द्वयसज्दघ्नचावूर्द्ध्वमाने। मात्रच् पुनरविशेषेण। प्रस्थमात्रं घृतम्। तन्मात्रम्। तावन्मात्रम्।

(क) प्रमाणे लश्च। लश्चेति लुकः पूर्वाचार्य्यसंज्ञा। प्रमाणशब्देभ्यो द्वयसजादेर्लुक् स्यात्। शमः प्रमाणमस्य शमः। मुष्टिः। वितस्तिः। हस्तः। शमश्चतुर्दशाङ्गुलः।

(ख) द्विगोर्नित्यं लुक् । द्विजानु जलम् । द्विवितस्तिः । नित्यग्रहणं भाविनोऽपि संशये मात्रचो लुगर्थम् ।

(ग) डट् स्तोमे । सप्तदशः स्तोमः । विंशः स्तोमः । एकविंशः । डित्त्वाट्टिलोपः ।

(घ) शन्शतोर्डिनिः । पञ्चदश प्रमाण मेषां पञ्चदशिनोऽर्द्धमासाः । त्रिंशिनो मासाः ।

(ङ) विंशतेश्च । विंशिनोऽङ्गिरसः ।

(च) प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रच् । प्रमाणात् । शमं प्रमाणमस्य स्यान्नवेति शममात्रम् । हस्तमात्रम् । परिमाणात् । प्रस्थमात्रम् । संख्यायाः । पञ्चमात्रम् । दशमात्रम् ।

(छ) वत्वन्तात् स्वार्थे द्वयसज्मात्रचौ । तावदेव तावद्द्वयसम् । तावन्मात्रम् ।

## ३८ । पुरुषहस्तिभ्यामण् च ।

आभ्यां प्रमाणेऽण् स्यात् । पुरुषोऽस्य प्रमाणं पौरुषमम्भः । हास्तिनम् । चकाराद् द्वयसज्दघ्नञ्मात्रच उदाहार्य्याः ।

## ३९ । यत्तदेतेभ्यः परिमाणे वतुप् ।

एभ्योऽस्यार्थे वतुप् स्यात् । यत् परिमाणमस्य यावान् । तावान् । एतावान् ।

## ४० । किमिदंभ्यां वो घः ।

आभ्यां परिमाणे वतुप् स्यात् । वस्य च घः । कियान् । कियती । इयान् । इयती ।

## ४१ । किमः संख्यापरिमाणे डति च ।

किमः संख्यायाः परिच्छेदे डतिः स्यात् । वतुप् च । तस्य वस्य च घादेशः । का संख्या एषां कति गुणिनः । कियन्तः सन्ति गुणिनः ।

## ४२ । संख्याया अवयवे तयप् ।

अवयववृत्तेः संख्याया स्तयप् स्यात् । पञ्चावयवा अस्य वृन्दस्य पञ्चतयम् । दशतयम् । चतुष्टयी रज्जुः ।

## ४३। द्वित्रिभ्यां तयस्यायज् वा।

आभ्यां तयपोऽयज् वा स्यात्। द्वयं द्वितयं वा (23)। त्रयं त्रितयं वा। द्वयी द्वितयी वा। त्रयी त्रितयी वा।

## ४४। उभादुदात्तो नित्यम्।

उभात् तयपो नित्यमयच् स्यात्। उभाववयवावस्य उभयो मणिः (24)। उभये देवमनुष्याः।

## ४५। तदस्मिन्नधिकमिति दशान्ताड् डः।

अत्रार्थे दशान्ताड् डः स्यात्। एकादश अधिका अस्मिन् शते एकादशं शतम्। द्वादशं शतम्। चतुर्दशं शतम्। सहस्रं वा। शतसहस्रयोरेवाभिधानम्। इह षष्ठं शतमिति मत्वर्थीयोऽच्।

## ४६। शदन्तविंशतेश्च।

शदन्ताद् विंशतेश्च पूर्वार्थे डः स्यात्। त्रिंशं शतम्। चत्वारिंशं शतं सहस्रं वा। विंशतेश्च। विंशं शतम्। तदन्ताच्च। एकविंशं शतं सहस्रं वा। द्वाविंशं सहस्रम्। संख्यापूर्वस्याभिधानाद् गोत्रिंशदादेरविधिः।

## ४७। संख्याया गुणस्य निमाने मयट्।

मण्डूकप्लुत्या तदस्येत्येव। गुणस्य भागस्य निमाने मूल्ये संख्याया मयट्

---

(23) तयप्प्रत्ययान्तस्य जस्येव प्रथमचरमेत्यादिना (१.१.३३) वा सर्वनामता। नत्वन्यत्र। कथं तर्हि "संमूर्च्छदुच्छृङ्खलशङ्खनिःस्वनैः स्वनैः प्रयाति पटहस्य शार्ङ्गिणि। सत्त्वानि निन्ये नितरां महान्त्यपि व्यथा द्वयेषामपि मेदिनीभृता" मिति माघः? मुनित्रयमतविरोधेऽधुना चाक्रवर्मणादिमतानामपि निरासान्न द्वयशब्दस्य सर्वासु विभक्तिषु सर्वनामत्वं वाच्यम्। कविभिरपि नैतदादृतम्। तथाहि कालिदासः—"अस्मिन् द्वये रूपविधानयत्न" इति। माघश्च "गुरुद्वयाय गुरुणी रुभयीरथ कार्य्ययो" रिति। श्रीहर्षश्च "अये ममोदासितमेव जिह्वया द्वयेऽपि तस्मिन्ननतिप्रयोजन" इति। अतो द्वयेषामित्यत्र द्वयं द्वैधमिष्यन्ति गच्छन्तीति द्वयेष स्तेषामितीष्यतेः क्विपि रूपं बोध्यम्। अन्ये च व्यथोभयेषामपीति पठन्ति। एतच्च यदा कर्मणि श्लोकस्य पाठ स्तदा सम्भवति। इदानीन्तु श्लोकस्य कर्त्तर्य्येव पाठ उपलभ्यते यथा संमूर्च्छदुच्छृङ्खलशङ्खनिस्वनः स्वनः प्रयाते पटहस्य शार्ङ्गिणि। सत्त्वानि निन्ये नितरां महान्त्यपि व्यथां द्वयेषामपि मेदिनीभृतामिति। तत्र क्विपैव समाधेयम्।

(24) उभौ शुक्लरक्तौ अवयवौ यस्य त्युभयः। उभयो मणिः कौस्तुभ इति केचित्।

स्यात् । द्वौ भागौ निमान मस्योदश्विद्भागस्य द्विमयमुदश्वित् यवानाम् । त्रिमयी द्राक्षा गुड़स्य । चतुर्मयम् ।

## ४८ । तस्य पूरणे डट् ।

अत्रार्थे संख्याया डट् स्यात् । एकादशानां पूरण एकादशः सर्गः । द्वादशः पुत्रः । विंशी कारिका । एकादशी तिथिः ।

## ४९ । नान्तादसंख्यादेर्मट् ।

नान्तादसंख्यादे र्डटो मड़ागमः स्यात् । पञ्चानां पूरणः पञ्चमः । सप्तमः । नान्तात् किम् ? विंशः । त्रिंशः । असंख्यादेः किम् ? एकादशः ।

## ५० । थट् च च्छन्दसि ।

इदं छन्दःसूत्रमेकम् ।

## ५१ । षट्कतिकतिपयचतुरां थुक् ।

एषां डटि थुगागमः स्यात् । षण्णां पूरणः षष्ठः । कतिथः । कतिपयथः । चतुर्थः । कतिथी । कतिपयथी ।

(क) चतुरश्छयतावाद्यक्षरलोपश्च । तुरीयः । तुर्य्यः ।

## ५२ । बहुपूगगणसंघस्य तिथुक् ।

एषां डटि तिथुगागमः स्यात् । बहूनां पूरणो बहुतिथः । पूगतिथः । गणतिथः । “भिन्दन् संघतिथान् द्विषः ।” इहच बह्वीनां पूरणीति भस्याढे तद्धिते विषयभूते पुंवद्भावः (६।३।३५, वा) । ततस्तिथुक् । बहुतिथी ।

## ५३ । वतोरिथुक् ।

वत्वन्ताड् डटि स्यादिथुक् । तावतां पूरण स्तावतिथः । यावतिथः ।

## ५४ । द्वे स्तीयः ।

द्वे स्तीयः स्यात् । डटो बाधा । द्वितीयः ।

## ५५ । त्रेः सम्प्रसारणञ्च ।

पूरणे त्रिशब्दात् संप्रसारणं तीयश्च स्यात् । तृतीयः ।

## ५६ । विंशत्यादिभ्य स्तमडन्यतरस्याम् ।

विंशत्यादे र्डटो वा तमड़ागमः स्यात्। विंशतेः पूरणो विंशतितमः। विंशो वा। त्रिंशत्तमो दिवसः। त्रिंशो वा। एकविंशतितमी। एकविंशी वा। एकत्रिंशत्तमम्। एकत्रिंशं वा।

## ५७। नित्यं शतादिमासार्द्धमाससंवत्सराच्च ।

शतादेः संख्याया मासार्द्धमाससंवत्सरेभ्यश्च परस्य डटो नित्यं तमट् स्यात्। शतस्य पूरणः शततमः। सहस्रतमः। लक्षतमः। एकशततमः। द्विसहस्रतमः। सप्तलक्षतमः। मासस्य पूरणो मासतमो दिवसः। अर्द्धमासतमः। संवत्सरतमः।

## ५८। षष्ट्यादेश्चासंख्यादेः।

षष्टिसप्तत्यशीतिनवतीनां डटो नित्यं तमट् स्यात्। विंशत्यादिविकल्पस्य बाधा। षष्टेः पूरणः षष्टितमः। सप्ततितमः। अशीतितमः। नवतितमः। असंख्यादेः किम्? एकषष्टः। एकषष्टितमो वा। उक्तो डट्।

## ५९। मतौ छः सूक्तसाम्नोः।

मत्वर्थे प्रातिपदिकाच्छः स्यात् सूक्ते साम्नि चाभिधेये। अच्छावाकशब्दोऽस्मिन्नस्तीत्यच्छावाकीयं सूक्तम्। वारतन्तवीयं साम।

## ६०। अध्यायानुवाकयोर्लुक्।

अनयोर्मत्वर्थे छस्य लुक् स्यात्। गर्दभाण्डोऽध्यायोऽनुवाको वा गर्दभाण्डः। श्रुतिमपीच्छन्ति। अन्यतरस्यांग्रहणस्य मण्डूकप्लुत्यानुवृत्तेः। गर्दभाण्डीयोऽध्यायः।

## ६१। विमुक्तादिभ्योऽण्।

एभ्यो मत्वर्थे तयोरण् स्यात्। विमुक्तोऽत्रास्ति अध्यायोऽनुवाको वा वैमुक्तः। दैवासुरः।

### ६२। गोषदादिभ्यो वुन्।

एभ्यस्तथैव वुन् स्यात्। गोषदशब्दोऽस्मिन्नस्ति गोषदकोऽध्यायोऽनुवाको वा। गोषद। इषेत्व। मातरिश्वन्।

### ६३। तत्र कुशलः पथः।

अत्रार्थे पथो वुन् स्यात्। पथि कुशलः पथकः।

### ६४। आकर्षादिभ्यः कन्।

आकर्षे कुशलः आकर्षकः। जयकः। त्सरुकः।

### ६५। धनहिरण्यात् कामे।

आभ्यां कामे कन् स्यात्। धने कामोऽभिलाषो धनकः। हिरण्यकः। "देहेऽपि निःस्पृहस्यास्य मुमुक्षोर्धनकः कुतः"।

### ६६। स्वाङ्गेभ्यः प्रसिते।

एभ्योऽत्र कन् स्यात्। केशेषु प्रसितः केशकः। नखकः। दन्तकः।

### ६७। उदराट् ठगाद्यूने।

स्यात्। उदरे प्रसित औदरिक आद्यूनः। आद्यूनोऽविजिगीषुः।

### ६८। सस्येन परिजातः।

सस्यात् कन् स्यात्। सस्येन गुणेन परिजातः सम्पन्नोऽयं सस्यको मणिः। सस्यकः शालिः। सस्यको वत्सः।

### ६९। अंशं हारी।

अत्रार्थे कन् स्यात्। अंशको दायादः।

### ७०। तन्त्रादचिरापहृते।

कन् स्यात्। तन्त्रको नवकर्पटः।

### ७१। ब्राह्मणकोष्णिके संज्ञायाम्।

एते कन्नन्तौ नाम्नि निपात्येते। ब्राह्मणको देशो यत्रायुधजीविनो ब्राह्मणाः। उष्णिका यवागूः।

## ७२। शीतोष्णाभ्यां कारिणि।

कन् स्यात्। शीतं शिथिलं कारी शीतकोऽलसः। उष्णं शीघ्रं कारी उष्णको दक्षः।

## ७३। अधिकम्।

इदं निपात्यते अध्यारूढार्थे। अध्यारूढात् कन् स्यादुत्तरपदलोपश्च।

## ७४। अनुकाभिकाभीकः कमिता।

अनुकमभिकमभीकश्च कमितरि निपात्यन्ते।

## ७५। पार्श्वेनान्विच्छति।

पार्श्वमनृजूपायोपलक्षणम्। तेनान्विच्छत्यनुसरतीति (25) कन् स्यात्। पार्श्वकः शठः।

## ७६। अयःशूलदण्डाजिनाभ्यां ठक्ठञौ।

तैक्ष्ण्यदम्भार्थाभ्यां ठक्ठञौ स्यातां तेनान्विच्छतीत्यर्थे। आयःशूलिक-स्तीक्ष्णकारी। दाण्डाजिनिको दाम्भिकः।

## ७७। तावतिथं ग्रहणमिति लुग् वा।

तावतां पूरणं तावतिथम्। तस्माद् ग्रहणभूतात् स्वार्थे कन् स्यात्। पूरणप्रत्ययस्य च लुग्वा। द्वितीयेन रूपेण ग्रन्थग्रहणं द्विकं द्वितीयकं वा। त्रिकं तृतीयकं वा। चतुष्कं चतुर्थकं वा।

(क) तावतिथेन गृह्णातीति कन् वक्तव्यो लुक् च नित्यम्। षष्ठेन रूपेण गृह्णाति षट्को मेधावी।

## ७८। स एषां ग्रामणीः।

अस्मिन्नर्थे कन् स्यात्। त्वं ग्रामणीरेषामिमे त्वकाः। मकाः। देवदत्तका इमे। मकं मतम्।

## ७९। शृङ्खलमस्य बन्धनं करभे।

शृङ्खलं बन्धनमस्येत्यर्थे कन् स्यात्। शृङ्खलकः करभस्य नाम।

---

(25) अनुसरतीत्यत्र जीवतीति पाठान्तरम्।

८०। उत्क उन्मनाः।

उत्कः स्यादुन्मनाश्चेत्।

८१। कालप्रयोजनाद् रोगे।

आभ्यां रोगे कन् स्यात्। कालात्। दिवसे सम्भवति दिवसको ज्वरः। मासकः। द्वितीयेऽह्नि भवो द्वितीयकः। चतुर्थकः। प्रयुज्यतेऽनेनेति प्रयोजनं कारणम्। विषपुष्पेण प्रयुक्तो विषपुष्पको ज्वरः। काशपुष्पकः। तापेन भाविना प्रयुक्तस्तापकः। शीतकः। फलञ्च प्रयोजनमिति जयादित्यः। शीतं कार्य्यमस्येति शीतको ज्वरः। इह चोत्तरं संज्ञाग्रहणं सम्बध्यते। तेनेष्टार्थपरिग्रहः।

८२। तदस्मिन्नन्नं प्रायेण संज्ञायाम्।

अत्रार्थे नाम्नि कन् स्यात्। गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पूर्णिमा। तिलापूपिका।

(क) वटकेभ्य इनि र्वक्तव्यः। वटकिनी पौर्णमासी। पृथुकिनी।

८३। कुल्माषादञ्।

पूर्वार्थेऽञ् स्यात्। कौल्माषी तिथिः। (26)

८४। श्रोत्रियंश्छन्दोऽधीते।

अयमत्रार्थे निपात्यते। घन् प्रत्ययः। तस्य नकारः स्वरार्थः। श्रोत्रियो ब्राह्मणः।

८५। श्राद्धमनेन भुक्तमिनिठनौ।

श्राद्धादनेन भुक्तमित्यर्थे इनिठनौ स्याताम्। श्राद्धी। श्राद्धिकः।

८६। पूर्वादिनिः।

अनेनेति कर्त्तानुवर्त्तते। स च क्रियापेक्षः। ततो यां काञ्चित् क्रियामध्याहृत्य पूर्वादिनिः स्यात्। पूर्वमनेनासितं गृहीतं गतं भुक्तं पीतं वा पूर्वी। पूर्विणौ। पूर्विणः।

---

(26) कुल्माषा मुद्गा इति हरदत्तः।

८७। सपूर्वाच्च।

सपूर्वपदाच्च पूर्वादिनिः स्यात्। कृतं पूर्वमनेनेति सुप्सुपेति समासः। कृतपूर्व्वी कटान्। भुक्तपूर्वी ओदनम्। भुक्तपूर्वी दधीनि।

८८। इष्टादिभ्यश्च।

इनिः स्यात्। इष्टमनेनेति इष्टी यागेषु। अधीती व्याकरणे। निराकृती। गृहीती। "कृती श्रुती वृद्धमतेषु धीमान्"।

८९। छन्दसि परिपन्थिपरिपरिणौ पर्य्यवस्थातरि।

छन्दः सूत्रमिकम्।

९०। अनुपद्यन्वेष्टा।

अनुपदी स्यादन्वेष्टा चेत्। "मृगस्यानुपदी रामः।"

९१। साक्षाद् द्रष्टरि संज्ञायाम्।

साक्षाच्छब्दादिनिः स्याद् द्रष्टरि वाच्ये संज्ञा चेत्। साक्षाद् द्रष्टा साक्षी। साक्षिणी।

९२। क्षेत्रियच् परक्षेत्रे चिकित्स्यः।

परक्षेत्रं जन्मान्तरशरीरम्। तत्र चिकित्स्य इत्यर्थे क्षेत्रियो निपात्यते। क्षेत्रियः कुष्ठव्याधिः। असाध्य इत्यर्थः।

९३। इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्र-दत्तमिति वा।

इन्द्रियं निपात्यते। इन्द्र आत्मा। तस्य लिङ्गं तेन वा दृष्टं सृष्टमित्या-दावर्थे। संज्ञाशब्दानां व्युत्पत्तेरनियमदर्शनार्थोऽयं योगः।

९४। तदस्यास्त्यस्मिन्निति मतुप्।

तदिति प्रथमान्तादस्त्युपाधिकात् षष्ठीसप्तम्योरर्थे मतुप् स्यात्। गावोऽस्य सन्ति गोमान्। यवा अस्मिन् सन्ति यवमान् देशः। इतिकरणादर्थनियमः।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥१॥

गोमान् । ककुदावर्त्ती । रूपवान् । क्षीरी वृक्षः । उदरिणी कन्या । दण्डी । छत्री ।

(क) गुणवचनेभ्यो मतुपो लुग् वक्तव्यः । शुक्लोऽस्यास्तीति शुक्लः पटः । यदा तु स्वभावाद् गुणिनि गुणे च शुक्लादयो वर्त्तन्त इत्युपगमस्तदा नार्थो लुका । मत्वर्थे विधानमापादम् ।

## ९५ । रसादिभ्यश्च ।

रसादेर्मतुबेव स्यात् । नान्ये मत्वर्थीयाः । रसवान् । रूपवान् । गन्ध । शब्द । स्पर्श । स्नेह । भाष्यकारस्य तु सूत्रस्यास्य प्रत्याख्यानमभिमतम् । रसिको राजा । रूपिण्योऽप्सरसः । स्पर्शी वायुरित्यादिदर्शनात् ।

## ९६ । प्राणिस्थादातो लजन्यतरस्याम् ।

प्राण्यङ्गादादन्तान्मत्वर्थे लज् वा स्यात् । चूडालः । शिरालः । जङ्घालः । विकल्पो मतुप्समुच्चयार्थः । चुडावानिति । प्राणिस्थात् किम् ? शिखावान् प्रदीपः ।

## ९७ । सिध्मादिभ्यश्च ।

एभ्यो लच् स्यात् । सिध्मलः । गडुलः ।

(1) वातदन्तबलललाटगलानामूङ् च । वातूलः । दन्तूलः । बलूलः ललाटूलः । गलूलः ।

(2) पार्ष्णिधमन्योर्दीर्घश्च । पार्ष्णीलः । धमनीलः ।

(3) जटाघटाकालात् क्षेपे । लच् स्यात् । जटालः । घटालः । कालालः ।

(4) क्षुद्रजन्तूपतापाच्च । यूकालः । मूर्च्छालः । विचर्चिकालः । विकल्पानुवृत्त्या सर्वत्र मतुप् समुच्चीयते । सिध्मवानिति ।

## ९८ । वत्सांसाभ्यां कामबले ।

आभ्यां कामबलयोर्मत्वर्थे लच् स्यात् । वत्सलः कामवान् । अंसलो बलवान् ।

## ९९ । फेनादिलच्च ।

फेनादिलच्लचौ स्याताम् । फेनिलः । फेनलः । मतुप् च । फेनवान् ।

## १०० । लोमादिपामादिपिच्छादिभ्यः शनेलचः ।

लोमादेर्मत्वर्थे शः स्यात् । लोमशः । लोमवान् । कपिशः । गिरिशः । पामादेर्नः । पामनः पामवान् । श्लेष्मणः । हेमनः । बलिनः ।

(1) लक्ष्म्या अच्च । लक्ष्मणः ।

(2) अङ्गात् कल्याणे । अङ्गना प्रशस्ताङ्गी ।

(क) दद्र्वा ह्रस्वत्वञ्च । दद्रुणः ।

पिच्छादेरिलच् । पिच्छिलः । जटिलः । उरसिलः ।

## १०१ । प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः ।

मत्वर्थे एभ्यो णः स्यात् । प्राज्ञः प्रज्ञावान् पण्डितः । प्राज्ञा स्त्री । श्राद्धः श्रद्धावान् । आर्चः । अर्चावान् । वार्त्तः । वृत्तिमान् ।

## १०२ । तपःसहस्राभ्यां विनीनी ।

आभ्यामितौ स्याताम् । तपस्वी । सहस्री । असन्ताददन्ताच्च विनीनि-सिद्धौ वचनमिदमणा बाधा मा भूदिति ।

## १०३ । अण् च ।

आभ्यामण् स्यात् । तापसः । साहस्रः ।

(क) ज्योत्स्नादिभ्य उपसंख्यानम् । अण् स्यात् । ज्यौत्स्नः पक्षः । तामिस्रः । कौण्डिनः ।

## १०४ । सिकताशर्कराभ्याञ्च ।

आभ्यामण् स्यात् । सैकतो घटः । शार्करं मधु ।

## १०५ । देशे लुबिलचौ च ।

आभ्यां देशे लुप् स्यात् । इलच्च । चकारादण् च । सिकता देशः । सिकतिलः । सैकतः । मतुप् च । सिकतावान् । शर्करा । शर्करिलः । शार्करः । शर्करावान् ।

## १०६ । दन्त उन्नत उरच् ।

दन्त उन्नतोऽस्यास्तीति दन्तुरः ।

### १०७ । ऊषसुषिमुष्कमधो रः ।

एभ्यो मत्वर्थे रः स्यात् । ऊषरः । सुषिरम् । मुष्करः । मधुरः ।

(क) खमुखकुञ्जनगनखपाण्डुपांसुभ्यश्च । खरः । मुखरः । कुञ्जरः । नगरम् । नखरः । पाण्डुरः । पांसुरः पादः । कच्छ्वा ह्रस्वश्चेति जयादित्यः । कच्छुरः ।

### १०८ । द्युद्रुभ्यां मः ।

आभ्यां मः स्यात् । द्युमः । द्रुमः ।

### १०९ । केशाद्वोऽन्यतरस्याम् ।

केशाद्वो वा स्यात् । केशवः केशी केशिको केशवान् वा ।

(क) अन्येभ्योऽपि दृश्यते इति वक्तव्यम् । वः स्यात् । मणिवः । हिरण्यवः । इष्टकावः । राजीवम् ।

(ख) अर्णसो लोपश्च । अर्णवः ।

(ग) मेधारथाभ्यामिरन्निरचावित्येके । मेधिरः । रथिरः । रथिररथिकौ रथीत्यमरः । (27)

### ११० । गाण्डयजगात् संज्ञायाम् ।

आभ्यां नाम्नि वः स्यात् । गाण्डीवं पार्थस्य धनुः । ह्रस्वादपि गाण्डिवमिति जयादित्यः (28) । अजगवं पिणाकः । अजो विष्णुः । को ब्रह्मा । तद्योगादजकवमित्यन्ये ।

### १११ । काण्डाण्डादीरन्नीरचौ ।

आभ्यामिमौ स्याताम् । काण्डीरः । अण्डीरः । स्वरे भेदः ।

### ११२ । रजःकृष्यासुतिपरिषदो वलच् ।

एभ्यो मत्वर्थे वलच् स्यात् । रजस्वला स्त्री । वल इति (६।३।११८) दीर्घः । कृषीवलः । आसुतीवलः शौण्डिकः । परिषद्वलो राजा । परिपूर्वात् सदेः सत्सूद्विषेत्यादिना (३।२।६१) क्विप् । सदिरप्रतेरिति (८।३।६६) षत्वम् ।

---

(27) रथिर is the owner of a car.

(28) गाण्डीवी कनकशिलानिभं भुजाभ्यामिति अधिरोहति गाण्डिवं महेषावित्युभयत्र भारविप्रयोगः ।

या संप्रति प्राक्परिषद्वलानामिति व्योष:। परिषद्वलान् महानाबौरिति भट्टि:। इह तु नवाक्षरैकपादेऽपि वृत्तभेदोऽस्यास्तीति यथा प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणामिति भागवृत्ति: (29)। पृषोदरादित्वादिकारलोप एकदेशविकारद्वारेण पर्षच्छब्दादपि वलजिति केशव:।

(क) अन्येभ्योऽपि दृश्यते इति वक्तव्यम्। वलच्। भ्रातृवल:। पुत्रवल:।

## ११३। दन्तशिखात् संज्ञायाम्।

आभ्यां वलच् स्यात्। दन्तावलो हस्ती। शिखावलो मयूर:।

## ११४। ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसा:।

अष्टा एते नाम्नि निपात्यन्ते। तमिस्रेति स्त्रीत्वमतन्त्रम्। अन्यत्रापि दृश्यते। तमिस्रं नभ:।

## ११५। अत इनिठनौ।

अदन्तादिनिठनौ स्याताम्। दण्डी दण्डिक:। मतुप् च सर्वत्र। दण्डवान्। तण्डुली तण्डुलिक:। कार्यी कार्यिक:। हार्यी हार्यिक:। क्वचिदनभिधानान्न। खवान्। कारकवान्। वृक्षवान्। व्याघ्रवान्। दण्डा अस्यां सन्ति दण्डवती शाला। तदुक्तम्।

"एकाक्षरात् कृतो जाते: सप्तम्याश्च न तौ स्मृतौ।
तद्धितानां विधाने यदभिधानमपेक्षते ॥१॥" इति।

## ११६। व्रीह्यादिभ्यश्च।

व्रीह्यादे र्यथाभिधानमिनिठनौ स्याताम्। व्रीही व्रीहिक:। मतुप् च सर्वत्रेत्युक्तम्। व्रीहिमान्। मायी मायिक:। शिखादिभ्य इनिरेव। शिखी। शिखावान्। माली। मालावान्। मेखली। वीणी। संज्ञी। मनीषी। पताकी (30)। कर्मी। वर्मी। नावादिभ्यष्ठन्नेव। नाविक:। यवखदिक:। यवखदवान्।

(29) Others changed it thus प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।

(30) पातकीति क्वचित् पाठ:।

## ११७ । तुन्दादिभ्य इलच्च ।

एभ्य इलच् स्यात् । तौ च । तुन्दिलः । तुन्दिकः । तुन्दी । तुन्दवान् । उदरिलः । उदरिकः । उदरी । पिचिण्डिलः । एवं पिचिन्द । यव । व्रीहि ।

(1) व्रीहीत्यर्थग्रहणम् । शालिलः । शालिकः । शाली । मतुप् सर्वत्रेत्युक्तम् ।

(2) स्वाङ्गाद् वृद्धौ च । स्थूलकर्णः कर्णी कर्णिलः कर्णिकः । अवृद्धौ तु कर्णवान् । नह्यत्र ।

## ११८ । एकगोपूर्वाट्ठञ् नित्यम् ।

एकपूर्वाद् गोपूर्वाच्च नित्यं ठञ् स्यात् । ऐकशतिकः । ऐकसहस्रिकः । गौसहस्रिकः । कथमेकदेशी अवयवी ? इतिकरणानुवृत्तेः । कर्मधारया-देवायं ठञिष्यते । नित्यग्रहणं प्रत्ययान्तरनिवृत्त्यर्थम् ।

## ११९ । शतसहस्रान्ताच्च निष्कात् ।

नित्यं ठञ् स्यात् । नैष्कशतिकः । नैष्कसहस्रिकः ।

## १२० । रूपादाहतप्रशंसयोर्यप् ।

रूपादाहते प्रशंसायाञ्च मत्वर्थे यप् स्यात् । आहतं ताड़नान्निष्पादितम् पुरुषादि । रूपमस्यास्तीति रूप्यो दीनारः । प्रशस्तं रूपमस्यास्ति रूप्यः पुरुषः ।

(क) अन्येभ्योऽपि दृश्यते । यप् । हिममत्रास्ति हिम्याः पर्वताः । पद्यं श्लोकः । गुण्या मुनयः । "अर्थिनं गुण्यगुण्य इति न व्यचारयत् ।"

## १२१ । अस्मायामेधास्रजो विनिः ।

एभ्यो विनिः स्यात् । असन्तात् । पयस्वी । यशस्वी । "भवन्ति माया-विषु ये न मायिनः" । मायी । मायिकः । मायाशब्दाद् व्रीह्यादित्वादिनि-ठनौ च । मेधावी । स्रग्वी । तसौ मत्वर्थे (१।४।१९) इत्यत्र पयस्वान् यश-स्वानिति भाष्योदाहरणादेकगोपूर्वाट्ठञ् नित्य (५।२।११८) मित्यतः परेणापि मतुप्समुच्चयोऽनुमीयते । सरस्वान् सरस्वतीत्यत्र विनिरनभिधानम् ।

## १२२ । बहुलञ्छन्दसि ।

छन्दः सूत्रम् ।

(क) आमयस्य दीर्घः। विनिश्च स्यात्। आमयावी।

(ख) शृङ्गवृन्दाभ्यामारकन्। आभ्यामारकन् स्यात्। शृङ्गारकः। वृन्दारकः।

(ग) फलबर्हाभ्यामिनच्। फलिनः। बर्हिणः। इनिश्च दृश्यते। फली। बर्ही।

(घ) हृदयादालुरन्यतरस्याम्। हृदयालुः। हृदयी। हृदयिकः। हृदयवान् वा।

(ङ) शीतोष्णतिम्मेभ्यस्तन्न सहते। शीतालुः। उष्णालुः। तिम्मालुः (31)। कुत्सायामभिधानम्।

(च) हिमाच्चेलुः। हिमेलुः।

(छ) बलादूलच्। बलं न सहते बलूलः।

(ज) वातात् समूहे च। वातूलः। वातासहो वातसंघो वा।

(झ) पर्वमरुद्भ्यां तप्। पर्वतः। मरुत्तः।

## १२३। ऊर्णाया युस्।

ऊर्णायुर्मेषकम्बलः।

## १२४। वाचो ग्मिनिः।

वागस्यास्ति वाग्ग्मी। द्विगकारः।

## १२५। आलजाटचौ बहुभाषिणि।

वाच इमौ स्याताम् बहुभाषिणि। वाचालः। वाचाटः। कुत्सायामभिधानम्।

## १२६। स्वामिन्नैश्वर्य्ये।

स्वामिन्नैश्वर्य्ये गम्ये स्यात्। स्वमस्यास्तीति स्वामी।

## १२७। अर्श आदिभ्योऽच्।

अर्शआदेराकृतिगणान् मत्वर्थेऽच् स्यात्। अर्शसः। उरसः। तुन्दः। काणः। खञ्जः। पलितः। मलिनः। लवणः। शुक्लः। नीलः। कालः। गोधूलः।

---

(31) The काशिका gives तृप and तृप्रालुः and not तिम्म and तिम्मालुः।

## १२८ । द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः ।

एभ्य इनिः स्यात् । ठनादेर्बाधा । द्वन्द्वात् । कटकवलयिनी । शङ्खनूपुरिणी । उपतापो रोगः । कुष्ठी । किलासी । "शूली कदन्नाशनात्" । गर्ह्यं निन्द्यम् । ककुदावर्त्ती । प्राणिस्थात् किम् ? पुष्पफलवांस्तरुः । प्राण्यङ्गान्नेष्यते । पाणि-पादवती । स्तनकेशवती । अत इत्येव । चित्रकललाटिकावती । मूर्च्छावान् ।

## १२९ । वातातिसाराभ्यां कुक् च ।

आभ्यामिनिः स्यात् कुक् चागमः । वातकी । अतिसारकी ।

(क) पिशाचाच्च । पिशाचकी वैश्रवणः ।

## १३० । वयसि पूरणात् ।

वयसि द्योत्ये पूरणान्तादिनिरेव स्यात् । पञ्चमो मासो वर्षं वास्यास्ति पञ्चमी उष्ट्रः । दशमी वृद्धः ।

## १३१ । सुखादिभ्यश्च ।

इनिः स्यात् । सुखी । कृच्छ्री । दुःखी ।

## १३२ । धर्मशीलवर्णान्ताच्च ।

धर्माद्यन्तादिनिः स्यात् । द्विजधर्मी । भिक्षुशीली । ब्राह्मणवर्णी ।

## १३३ । हस्ताज्जातौ ।

हस्तादिनिः स्यात् । हस्ती । जातौ किम् ? हस्तवान् ।

## १३४ । वर्णाद् ब्रह्मचारिणि ।

वर्णादिनिः स्याद् ब्रह्मचारी चेत् । वर्णी (32) ।

## १३५ । पुष्करादिभ्यो देशे ।

एभ्य इनिः स्यात् । पुष्करिणी । पद्मिनी । उत्पलिनी । देशे किम् ? पुष्करवान् ।

(क) बलाद् बाहूरुपूर्वात् । बलाद् बाहूरुपूर्वादिनिः स्यात् । बाहुबली । ऊरुबली कश्चित् ।

---

(32) त्रैवर्णिको ब्रह्मचारी वर्णीति परिकीर्त्त्यते इति स्मृतिः ।

(ख) सर्वादिश्च । सर्वधनी । सर्ववीजी । सर्वकेशी नटः ।

(ग) अर्थाच्चासन्निहिते । अर्थादिनिः स्यात् । असन्निहितोऽर्थो धनमस्यार्थी दरिद्रः । अन्यत्रार्थवान् । भाष्ये त्वेतत्प्रत्याख्यायार्थनमर्थ इति याच्ञावचनान् मत्वर्थीयं कृत्वार्थी अर्थिक इति च साधितम् । एवं च धनवचनादर्थशब्दादिनिर्याच्ञावचनाच्च मतुबनभिधानान्न भवतीति वाच्यम् ।

(घ) तदन्ताच्च । धनार्थी । हिरण्यार्थी ।

## १३६ । बलादिभ्यो मतुबन्यतरस्याम् ।

एभ्यो मतुब् वा स्यात् । बलवान् । बली । उत्साहवान् । उत्साही ।

## १३७ । संज्ञायां मन्माभ्याम् ।

नाम्नि मन्नन्तमान्ताभ्यामिनिः स्यात् । दामिनी । सामिनी । हेमिनी । मान्तात्सोमिनी । नाम्नि किम् ? सोमवान् ।

## १३८ । कंशंभ्यां बभयुस्तितुतयसः ।

कंशमिति स्वरादी उदककल्याणवचनौ । ताभ्यामिते सप्त प्रत्यया स्युः । वः । कंवो मेघः । शंवो वज्रः । भः । कम्भः शम्भः । युसः सित्त्वात् पदत्वेऽनुस्वारः । कंयुः । "कुर्वाणा पश्यतः शंयून् ।" तिः । कन्तिः । शन्तिः । तुः । कन्तुः । शन्तुः । तः । कन्तः । शन्तः । यस् । कंयः । शंयः ।

## १३९ । तुन्दिवलिवटेर्भः । (33)

एभ्यो मत्वर्थे भः स्यात् । तुन्दिभः । "दधाना वलिभं मध्यम् ।" पामादित्वाद् वलिनः । वटिभो वृत्तः ।

## १४० । अहंशुभमोर्युस् ।

अहंशुभमित्यहङ्कारकल्याणार्थौ । अव्यये । ताभ्यां मत्वर्थे युस् स्यात् । "अहंयुनाथः क्षितिपः शुभंयुः" । उक्ता मत्वर्थीयाः । अतः परं स्वार्थिकाः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

पञ्चमाध्यायस्य द्वितीयः पादः ॥ ५।२ ॥

समाप्तश्च धान्यपादः ।

---

(33) तुण्डिरिति च केषाञ्चित् पाठः । तथाच माधवः "मूर्धन्योपधोऽय"मिति ( माधवीयधातुवृत्तौ )

अथ

# भाषावृत्तिः ।



## पञ्चमोऽध्यायः । तृतीयः पादः ।

### १ । प्राग् दिशो विभक्तिः ।

दिक्शब्देभ्य ( ५।३।२७ ) इत्यतः प्राग् ये तसिलादयस्ते विभक्तिसंज्ञकाः स्युः । प्रयोजनं त्यदाद्यत्वादि ( ७।२।१०२ ) । इह समर्थानां प्रथमादिति (४।१।८२) निवृत्तम् । वेति वर्त्तत एव । ततः पक्षे तसिलादयः स्युः कुतः कस्मादिति ।

### २ । किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ।

द्व्यादिरहितात् सर्वनाम्नः किंबहुभ्याञ्च तसिलादयो विधेयाः । कुतः । कुत्र । यतो यत्र । बहुशब्दः संख्यार्थो गृह्यते । बहुतो बहुत्र । वैपुल्यार्थात् तु बह्वोः कालात् । अद्व्यादेः किम् ? द्वाभ्यां द्वयोः ।

### ३ । इदम इश् ।

प्राग्दिशीये प्रत्यये इदम इशादिश्यते । इतः । इह ।

### ४ । एतेतौ रथोः ।

इदम एतेतावादिश्येते क्रमेण रेफथकारयोः परतः । "भवन्तमेतर्हि मनस्विगर्हितम्" । "इत्थं प्रवादं युधि सम्प्रहारम् ।"

### ५ । एतदोऽश् ।

प्राग्दिशीये प्रत्यय एतदोऽशादिश्यते । अतः । अत्र । योगविभागोऽत्र कर्त्तव्यः । तेन एतर्हि ।

### ६ । सर्वस्य सोऽन्यतरस्यां दि ।

दाप्रत्यये सर्वस्य सो वा स्यात् । सदा सर्वदा वा ।

७। पञ्चम्यास्तसिल्।

स्यात्। कुतः। सर्वतः। बहुतः। विश्वतः। अथ कोऽयं तसिल्? पञ्चम्यन्तात् प्रत्ययः। पञ्चम्यादेशत्वे हि ततस्त्यो यतस्त्य इति सुपो धात्विति (२।४।७१) सुब्लुक् स्यात्। यदा तदेत्यनुदात्तौ सुप्पिताविति (३।१।४) स्वरः। कुत इति घेर्ङितीति (७।३।१११) गुणः। तर्हीति सुपि चेति दीर्घः। कुत्रेत्यत्र घे (७।३।१११) रित्यत्त्वौ स्याताम्। ततस्त्वेति स्मात्-स्मिनौ स्याताम्। तदुक्तं भाष्ये तसिलादयो विभक्त्यादेशाश्चेत् सुब्लुक्स्वर-गुणदीर्घात्त्वौत्त्वस्मादादिविधिः प्रसज्येतेति।

८। तसेश्च।

तसेश्चेति स्वरार्थं सूत्रम्।

९। पर्य्यभिभ्याञ्च।

आभ्यां तसिल् स्यात्। परितः। अभितः।

१०। सप्तम्यास्त्रल्।

सप्तम्यन्तात् त्रल् स्यात्। यत्र। तत्र। बहुत्र।

११। इदमो हः।

इदमः सप्तम्यन्ताद्धः स्यात्। इह।

१२। किमोऽत्।

किमः सप्तम्यन्तादत् स्यात्। क्व। त्रलमपि केचिदिच्छन्ति कुत्रेति जयादित्यः।

१३। वाह च च्छन्दसि।

छन्दः सूत्रम्।

१४। इतराभ्योऽपि दृश्यन्ते।

सर्वाभ्यो विभक्तिभ्यस्तसिलादयो विज्ञेयाः। दृशिग्रहणाद् भवदादियोगेऽभिधानम्। सभवान्। ततोभवान्। तत्रभवान्। तंततस्तत्रदीर्घायुषं ब्रवीमि। तेनतत स्तत्रदेवानां प्रियेण कृतमित्यादि।

## १५ । सर्वैकान्यकिंयत्तदः काले दा ।

एभ्यः सप्तम्यन्तेभ्यःकाले दा स्यात् । सदा सर्वदा । एकदा । अन्यदा । यदा । तदा । कदा । काले किम् ? सर्वत्र देशे । कालसामान्ये चायं दा । तेन कालविशेषे न भवति । यत्र तत्र दिवस इति । काले विधि रा थालः (५।३।२३) ।

## १६ । इदमोर्हिल् ।

सप्तम्यन्तादिदमो र्हिल् स्यात् । एतर्हि काले ।

## १७ । अधुना ।

निपात्यते ।

## १८ । दानीञ्च ।

सप्तम्यन्तादिदमो दानीञ्च स्यात् । इदानीम् ।

## १९ । तदो दा च ।

तदो दा स्यात् । दानीञ्च । तस्मिन् काले तदा । तदानीम् ।

## २० । तयोर्दार्हिलौ च च्छन्दसि ।

छन्दः सूत्रमिकम् ।

## २१ । अनद्यतने र्हिलन्यतरस्याम् ।

अनद्यतने काले किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यो र्हिल् स्याद् वा । कर्हि कदा वा । यर्हि यदा वा । तर्हि तदा वा ।

## २२ । सद्यःपरुत्परार्य्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।

चतुर्दशैतेऽहनि वर्षे च निपात्यन्ते । समानेऽहनि सद्यः । पूर्वस्मिन् संवत्सरे परुत् । पूर्वतरे वर्षे परारि । अस्मिन् वर्षे ऐषमः । परस्मिन्नहनि परेद्यवि । अस्मिन्नहनि अद्य । पूर्वस्मिन्नहनि पूर्वेद्यु रित्यादि ।

(क) द्युश्चोभयात् । उभयेद्युः । उभयद्युः ।

**२३। प्रकारवचने थाल्।**

साद्दश्यद्वत्तिभ्य स्थाल् स्यात्। तेन प्रकारेण तथा। यथा। सर्वथा।

**२४। इदमस्थमुः।**

**२५। किमश्च।**

इदंकिमोः प्रकारे थमुः स्यात्। इत्थम्। कथम्। उक्ताः किंसर्व-नामबहुभ्यः प्रत्ययविभक्तयः (34)। अतः परं स्वार्थिकाः।

**२६। था हेतौ च च्छन्दसि।**

छन्दः सूत्रम्।

**२७। दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देश-कालेष्वस्तातिः।**

दिग्वाचिभ्यः सप्तम्याद्यन्तेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः स्यात्। पूर्वस्त दिशि देशे काले वोषितः पुरस्तादुषितः। पञ्चम्यन्तात्। पुर-स्तादागतः। प्रथमान्तात्। पुरस्ताद् रम्या दिक्। अधस्ताद् रम्यो देशः। धाप्रत्ययं (५।३।४२) यावदस्तातिविषये विधिः।

**२८। दक्षिणोत्तराभ्यामतसुच्।**

आभ्यामतसुच् स्यात्। दक्षिणतः। उत्तरतः।

**२९। विभाषा परावराभ्याम्।**

आभ्यामतसुज् वा स्यात्। परतः परस्ताद्वा। अवरतः। अवरस्ताद्वा।

**३०। अञ्चेर्लुक्।**

अञ्चत्यन्ताद् दिक्शब्दादस्तातेर्लुक् स्यात्। लुक् तद्धितलुकीति (१।२।४९) ङीपो लुक्। प्राग् वसति प्रागागतः। प्राग्रमणीयम्। एवं प्रत्यक्।

**३१। उपर्य्युपरिष्टात्।**

ऊर्द्ध्वशब्दे एतौ निपात्येते अस्तात्यर्थे।

---

(34) प्रत्ययविभक्तय इत्यत्र विभक्तय इति पाठान्तरम्।

## ३२। पश्चात्।

अवरशब्दस्यातिप्रत्यये परे पश्चभावो निपात्यते। पश्चाद् वसत्यागतो-रमणीयं वा।

(1) दिक्पूर्वपदस्य च। दक्षिणपश्चात्। उत्तरपश्चात्।

(2) अर्द्धे च। पश्चभावो वक्तव्यः। पश्चार्द्धः। दक्षिणपश्चार्द्धः।

## ३३। पश्च पश्चा च च्छन्दसि।

छन्दः सूत्रम्।

## ३४। उत्तराधरदक्षिणादातिः।

एभ्य आति स्यात्। उत्तरात्। अधरात्। दक्षिणात्।

## ३५। एनबन्यतरस्यामदूरेऽपञ्चम्याः।

दिक्छब्दादेनब् वा स्याददूरश्चेदवधिमान्। अदूरे गम्ये इत्यर्थः। उत्तरेण उत्तराद्वा। दक्षिणेन दक्षिणाद् वा वसति रमणीयं वा। अदूरे किम्? उत्तरतो हिमवान्। अपञ्चम्याः किम्? ग्रामस्य दक्षिणतः पर्वतादागतः। अपञ्चम्या इत्यधिकारोऽयं प्रागसिप्रत्ययात् (५।३।३९)।

## ३६। दक्षिणादाच्।

दक्षिणाददूरे स्यादाच्। दक्षिणा वसति रम्यं वा।

## ३७। आहि च दूरे।

दूरे गम्ये दक्षिणादाहि च स्यात्। चकारादाच्च। दक्षिणाहि दक्षिणा।

## ३८। उत्तराच्च।

उत्तरादाजाही स्याताम्। उत्तरा उत्तराहि वसति रम्यं वा।

"उत्तरा हि वसन् रामः समुद्राद् रक्षसां पुरीम्।
अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम्॥"

अपञ्चम्या इति निवृत्तम्।

## ३९। पूर्वाधरावराणामसि पुरधवश्चैषाम्।

पुर् अध् अवादेशा एषामसिश्च स्यात्। पुरः अधः अवः वसत्यागतो रम्यं वा।

## ४०। अस्ताति च।

अस्तातौ च पूर्वादीनां पुरादयः स्युः। पुरस्तात्। अधस्तात्। अवस्तात्। कथं पुरत स्तर्हि ? चिन्त्यमेतद्। (35)

## ४१। विभाषाऽवरस्य।

अवरस्यावादेशोऽस्तातौ स्याद्वा। अवरस्तात् अवस्ताद्वा वसत्यागतो रम्यं वा। उक्ता अतसुजर्था यैर्योगे षष्ठी भवेत्। एनपा द्वितीया। अञ्चूत्तर-पदाजाहिभिस्तु पञ्चमी भवेत्।

## ४२। संख्याया विधार्थे धा।

क्रियाप्रकारवृत्तेः संख्याया धा स्यात्। जातीयरोऽपवादः। पञ्चधा भुङ्क्ते। सप्तधा। विंशतिधा। एकधा। द्विधा। षोढ़ा। कथमेकजातीयः ? द्रव्ये गुणे वा प्रकारवति भविष्यति।

## ४३। अधिकरणविचाले च।

द्रव्यविचालने च (36) संख्याया धा स्यात्। एकं द्विधा कुरु। पञ्चधा। षोढ़ा। अनेकमेकधा कुरु।

## ४४। एकाद्धो ध्यमुञन्यतरस्याम्।

एकाद्धास्थाने ध्यमुञ् स्याद्वा। एकधा ऐकध्यं वा भुङ्क्ते।

---

(35) अत्र भट्टोजि :—"अथ कथं पश्यामि तामत इतः पुरतश्च पश्चादिति भवभूतिः ? नीरसतरुरिह विलसति पुरत इति कश्चित्। स्यात् पुरः पुरतोऽग्रत इत्यमरः। पुरतः प्रथमे चाग्रे इति त्रिस्रश्च ? चिन्त्य-मेतदिति भाषावृत्तिः।"—इति मनोरमायाम् (P. 508). इयञ्च तेऽन्या पुरतो विडम्बनेति कालिदासश्च ? In fact पुरतः is a निपात। what is derived from पूर्व is पुरः वा पुरस्तात्। ज्ञानेन्द्र objects in his तत्त्वबोधिनी to the प्रामाणिकता of this word and पण्डितराज जगन्नाथ is furious against it, in his रसगङ्गाधर (2nd chap)। But 'इयन्त इति संख्यानं निपातानां न वर्त्तते। प्रयो-जनवशादेते निपात्यन्ते पदे पदे ॥१॥" अत्र नागेश :—"अन्ये तु दक्षिणोत्तराभ्यामतसुजित्यत्र (५।३।२८) तसुचैव पुंवद्भावे सिद्धेऽतसुज्विधान मन्यस्मादपीति ज्ञापनाय। तेन पचाद्यजन्तात् पुरशब्दादिष्टसिद्धिः। वस्तुतस्तु पुर अग्रगमन इति चौरादिकाद् णिजभावे इगुपधलक्षणे के सार्वविभक्तिकस्तसिरिति बोध्यम्।" इति

(36) विचालः परिवर्त्तनम्। संख्यान्तरापादनमिति यावत्। एकस्यानेकीकरणमनेकस्य वैकीकरण मित्यर्थः।

४५ । द्वित्र्योश्च धमुञ् ।

४६ । एधाच्च ।

द्वित्रिभ्यां धो धमुञ् स्याद्वा । एधाच्च । द्विधा द्वैधं द्वेधा वा । त्रिधा त्रैधं त्रेधा वा ।

(क) धमुञन्तात् स्वार्थे डः । "मती द्वैधानि संशय्य ।" त्रैधानि । तसिलादिरेधाजन्तोऽव्ययम् ।

४७ । याप्ये पाशप् ।

याप्यार्थात् पाशप् स्यात् । हीनो याज्ञिको याज्ञिकपाशः । शाब्दिकपाशः ।

४८ । पूरणाद् भागे तीयादन् ।

४९ । प्रागेकादशभ्योऽच्छन्दसि ।

छान्दसे सूत्रे । भागेऽन् ।

५० । षष्ठाष्टमाभ्यां ञ च ।

आभ्यां भागेऽन् स्यात् । ञश्च । षष्ठो भागः षाष्ठो वा । अष्टमः आष्टमो वा भागः । अन्निति नित् स्वरार्थ एव प्रसङ्गान्निबद्धः ।

५१ । मानपश्वङ्गयोः कन्लुकौ च ।

माने भागे षष्ठात् कन् स्यात् । षष्ठकः । पश्वङ्गभागेऽष्टमादनो ञस्य च वा लुक् । अष्टमः । चकाराञ् ञानौ च बोद्धव्यौ । षष्ठः । षाष्ठः । अष्टमः । आष्टमः ।

५२ । एकादाकिनिच्चासहाये ।

असहायार्थादेकादाकिनिच् स्यात् । कन्लुकौ च । एकाकी । एकः । एककः ।

५३ । भूतपूर्वे चरट् ।

स्यात् । आढ्यो भूतः पूर्वमाढ्यचरः । कुमारचरी वृद्धा ।

५४। षष्ठ्या रूप्य च।

षष्ठ्यन्ताद्रूप्यः स्यात्। चकाराच्चरट् च। ब्राह्मणस्य भूतः पूर्वं ब्राह्मणरूप्यो ग्रामः। ब्राह्मणचरः।

५५। अतिशायने तमबिष्ठनौ।

अतिशायनमतिप्रकर्षवन्तं करोति गुणिनमित्यतिशायनो गुणप्रकर्षः। तद्युक्तात् स्वार्थे तमबिष्ठनौ स्याताम्। अयमेषां शुक्लः शुक्लतमः शुक्लः। अयमेषां पटुः पटुतमः। पटिष्ठः। लघिष्ठः।

५६। तिङश्च।

सातिशायनात् तिङस्तमप् स्यात्। सर्वे पचन्ति। अयं पचतितमाम्। जल्पतितमाम्।

५७। द्विवचनविभज्योपपदे तरबीयसुनौ।

द्वयोर्वचनं द्विवचनम्। तत्रोपपदे सातिशायनात् तिङश्च तरबीयसुनौ स्याताम्। अयमनयोराढ्यतरः। आढ्यीयान्। पटुतरः। पटीयान्। पचतितराम्। विभज्यो विभक्तव्यः। तदुपपदाच्च। पाश्चात्या गौड़ेभ्य आढ्यतराः। पटुतराः। पटीयांसः।

५८। अजादी गुणवचनादेव।

इष्ठन्नीयसुनौ गुणवचनादेव स्याताम्। पटिष्ठः पटीयान्। गुणवचनात् किम्? पाचकतरः। पाचकतमः। पचतितराम्। पचतितमाम्।

५९। तुश्छन्दसि।

छन्दः सूत्रम्।

६०। प्रशस्यस्य श्रः।

६१। ज्य च।

प्रशस्यशब्दस्य आदेशो ज्यादेशश्च स्यादजाद्योः परतः। श्रेष्ठः। श्रेयान्। ज्येष्ठः। ज्यायान्। ज्यादादीयस (६।४।१६०) इत्यात्त्वम्। इह भाषायां

द्वितीयः प्रकर्षप्रत्ययो नेष्यते । तेन श्रेष्ठतरो ज्येष्ठतम इति न भवतीत्येके । भवतीति जयादित्यः । तेन युधिष्ठिरः श्रेष्ठतमः कुरूणामिति ।

### ६२ । वृद्धस्य च ।

अजाद्योर्वृद्धस्य च ज्यः स्यात् । अयमेषां ज्येष्ठः । अयमनयोर्ज्यायान् । प्रियस्थिरेति (६।४।१५७) वचनाद् वर्षभावश्च । वर्षिष्ठः । वर्षीयान् ।

### ६३ । अन्तिकबाढयोर्नेदसाधौ ।

अनयोरिमौ स्यातामिष्ठेयसोः परतः । नेदिष्ठम् । अन्तिकतमम् । नेदीयः । अन्तिकतरम् । अयमेषां बाढमधीते साधिष्ठमधीते । "साधीयो गुरुरभवद् भुजस्तरुण्याः ।" बाढं भृशं नित्यं क्रियाविशेषणमिति प्रत्ययान्तोऽपि तथा स्यात् ।

### ६४ । युवाल्पयोः कनन्यतरस्याम् ।

अनयोः कनादेशो वा स्यादिष्ठेयसोः परतः । अयमेषां कनिष्ठः । अयमनयोः कनीयान् । अतियुवाऽत्यल्पो वा । पक्षे यविष्ठः । यवीयान् । अल्पिष्ठः । अल्पीयान् ।

### ६५ । विन्मतोर्लुक् ।

विनेर्मतुपश्च लुक् स्यादिष्ठेयसोः परतः । इमे स्रग्विणः । अयमेषां स्रजिष्ठः । अयमनयोः स्रजीयान् । एवमोजिष्ठः । ओजीयान् । इमे त्वग्वन्तः । अयमेषां त्वचिष्ठः । त्वचीयान् । एवं धर्मिष्ठः । धर्मीयान् । पापिष्ठः । पापीयान् । सर्वत्रागुणवाचिभ्योऽस्मादेव वचनादिष्ठेयसुनौ ।

### ६६ । प्रशंसायां रूपप् ।

स्यात् । प्रशस्तम्छात्रम्छात्ररूपः । याज्ञिकरूपः । तिङश्चेत्येव (५।३।५६) । पचतिरूपम् । पचन्तिरूपम् । क्लीवत्वं लोकाश्रयत्वात् ।

### ६७ । ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।

ईषदसमाप्त्यर्थात् कल्पब्देश्यदेशीयरः स्युः । ईषदसमाप्तो भिक्षुर्भिक्षुकल्पः । पण्डितदेश्यः । बोधिसत्त्वदेशीयः । इन्द्रदेशीयो राजा । अष्टादश-

वर्षदेशीया कन्या। तिङश्च। पचतिकल्पम्। दीयतिकल्पम्। पचतिदेश्यम्। पचतिदेशीयम्। स्वार्थिका: प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपीति गुड़कल्पा द्राक्षा। पयस्कल्पा यवागू:। अयस्कल्पं घृतम्। अब्देशीयं घृतम्।

## ६८। विभाषा सुपो बहुच् पुरस्तात् तु।

ईषदसमाप्त्यर्थात् सुबन्ताद् बहुच् प्रत्यय: पूर्वं वा स्यात्। बहुगुड़ा द्राक्षा। गुड़कल्पा। "लघुर्बहुतृणं नर:।" तृणदेश्य:। सुप: किम्? तिङो मा भूत्।

## ६९। प्रकारवचने जातीयर्।

स्यात्। पटुप्रकार: पटुजातीय:। तज्जातीय:। तथाजातीय:। प्रकारमात्रे थालुक्त:। प्रकारवति तु जातीयरित्यनयोर्भेद:।

## ७०। प्रागिवात् क:।

इवे प्रतिकृताविव्यत: (५।३।९६) प्राक् कप्रत्ययो वाच्य:। तिङन्तादयं नेष्यते। अकजिष्यत एव।

## ७१। अव्ययसर्वनाम्नामकच् प्राक् टे:।

## ७२। कस्य च द:।

अव्ययसर्वनाम्नां टे: प्रागकज् वाच्य: प्रागिवार्थे। यथासम्भवमलोऽन्त्यस्येति (१।१।५२) अन्त्यककारस्य च दकार:। इह च सुबन्तस्य प्राक् टेरकजनोकारसकारभकारादाविति भाष्यम्। उच्चकै:। नीचकै:। धिक् धकित्। हिरुक् हिरकुत्। पृथकत्। सर्वके। विश्वके। त्वयका। मयका। त्वयकि। मयकि। अनोकारसकारभकारादावित्युक्तेरिह प्रातिपदिकस्य प्राक् टेरकच्। युवकयो:। आवकयो:। युष्मकासु। अस्मकासु। युष्मकाभिरस्मकाभिरिति। इह तिङश्चेति (५।३।५६) स्मर्यते। कुत्सितं जल्पति जल्पतकि। पचतकि। इह तु वचेर्लङि अवक्। अवकक्। अनेनेक्। अनेनकेक्। कस्य च द इतीह नास्ति। ककारस्यासिद्धत्वात्।

(क) तूष्णीम: काम:।

मकारो देशविध्यर्थ:। "तूष्णीकामासते विज्ञा:"।

(ख) शीले को मलोपश्च ।

तूष्णीं शीलस्तूष्णीकः । (37)

## ७३ । अज्ञाते ।

अज्ञातविशेषणात् काकचौ स्याताम् । न ज्ञायते कस्यायमश्वः किंस्वभावो वाऽश्वकः । नवकः । अज्ञात उच्चैरीदृशस्तादृशो वा उच्चकैः । अज्ञातासौ कस्य कीदृशी वाऽसकौ । "पिवति च पाति च याऽसकौ रहस्याम्" । एवं सर्वके । विश्वके । पचतकि । कस्य च द इति (५।३।७२) । पृथकत् ।

## ७४ । कुत्सिते ।

अत्रार्थे काकचौ स्याताम् । कुत्सितोऽश्वोऽश्वकः । उच्चकैः । सर्वके । पचतकि । हिरकुत् ।

## ७५ । संज्ञायां कन् ।

कुत्सितोपाधिके नाम्नि कन् स्यात् । शूद्रकः । धारकः । चूर्णकः । व्याधकः ।

## ७६ । अनुकम्पायाम् ।

अत्र काकचौ स्याताम् । पुत्रकः । दुर्बलकः । पातकि । स्वपितकि । पचतकि । यातकि ।

## ७७ । नीतौ च तद्युक्तात् । (38)

नीतिगतावनुकम्पायुक्तात् काकचौ स्याताम् । हन्त ते वस्त्रकम् । हन्त तेऽश्वकः ।

## ७८ । बह्वचो मनुष्यनाम्नष्ठज् वा ।

## ७९ । घनिलचौ च ।

## ८० । प्राचामुपादेरडजवुचौ च ।

अनुकम्पायां बह्वचो नृनाम्नष्ठज् वा स्यात् । अनुकम्पितो देवदत्तः देविकः

(37) तथाच भागवत्तौ श्लोकः—"कुर्वन्तोऽपि हि तूष्णीका राजन् गम्भीरचेतसः । लघवो घोषयन्त्येव न कुर्वन्ति च केचन ॥" इति सृष्टिधरधृतः ।

(38) सामदानादिरुपायो नीतिः । सामदानभेददण्डा इत्युपायचतुष्टय मित्यमरः ।

देवदत्तिकः। पचे कः। देवदत्तकः। घनिलचौ च। देवियः। देविलः। यज्ञिकः। उपादेस्तु नृनाम्नः प्राचामडज्वुचौ च। अनुकम्पित उपेन्द्रदत्तः। उपड़ः। उपकः। चकाराद् यथाप्राप्तञ्च। उपियः। उपिलः। उपिकः। उपेन्द्रदत्तकः। बह्वचः किम् ? दत्तकः। गुप्तकः।

## ८१। जातिनाम्नः कन्।

अनुकम्पायां कन् स्यात्। व्याघ्रकः। सिंहकः क्वचित्।

## ८२। अजिनान्तस्योत्तरपदलोपश्च।

अजिनान्तान् मनुष्यनाम्नोऽनुकम्पायां कन् स्यादुत्तरपदलोपश्च। व्याघ्राजिनो नामानुकम्पितः व्याघ्रकः। कृष्णकः।

## ८३। ठाजादावूर्द्ध्वं द्वितीयादचः।

लोपइत्येव। ठकारेऽजादौ च परे द्वितीयादच उपरिभागस्य लोपः स्यात्। ठग्रहणं ठावस्थायां लोप उगन्तात् कादेशार्थम् ( ७।३।५१ )। वायुदत्तकः। वायुकः। पिलकः। देविकः। देवियः। देविलः। इह देविकादीनां शब्दान्तराणामेव लोपद्वारेणान्वाख्यानम्। तत्र निदर्शनमेतद् द्वितीयादच इति। चतुर्थादपि भवति। बृहस्पतिदत्तकः। बृहस्पतिकः। अनजादौ च वा। देवदत्तको देवकः। पूर्वपदस्य च लोपः। दत्तकः। दत्तिकः। दत्तियः। अप्रत्ययेऽपि पूर्वोत्तरयोर्लोपो वाच्यः। देवदत्तो दत्तो देवो वेति। उवर्णान्तादिलचो लकारादेशश्च। वायुदत्तको वायुलः। भानुदत्तको भानुलः। तदुक्तम्—

चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥१॥ इति (५।३।८३, वा)।

सन्ध्यक्षरद्वितीयत्वे तदादे र्लोपवचनम्। उपेन्द्रदत्तकः। उपड़ः। उपकः। एकाच्पूर्वपदानामुत्तरपदलोपश्च। वागाशीर्वाचिकः। त्वगाशी त्वचिकः। द्वितीयादचः परलोपे हि यस्येति चेति (६।४।१४८) लोपस्य स्थानिवत्त्वाद् भत्वाभावेऽन्तर्वर्त्तिविभक्त्याश्रये पदत्वे च चोः कुः ( ८।२।३० ) स्यात्। षषष्ठाजादिलोपवचनम्। षषस्तु ठाजादि-(५।३।८३) सूत्रेण द्वितीयादच एव लोपवचनम्। ततः पदत्वे जश्त्वम्। षडङ्गुलिदत्तः षड्किः।

**८४ । शेवलसुपरिविशालवरुणार्य्यमादीनां तृतीयात् ।**

एषां तृतीयादच ऊर्द्ध्वस्य लोपः स्यात् । अनुकम्पितः शेवलदत्तः शेवलिलः शेवलियः शेवलिकः । शेवलेन्द्रदत्तः शेवलिलः शेवलियः शेवलिकः ।

**८५ । अल्पे ।**

अल्पार्थे काकचौ स्याताम् । अल्पं घृतं घृतकम् । उच्चकैः । विश्वकै । पचतकि ।

**८६ । ह्रस्वे ।**

अत्रार्थे काकचौ स्याताम् । ह्रस्वो दण्डो दण्डकः । स्तम्भकः ।

**८७ । संज्ञायां कन् ।**

ह्रस्वे नाम्नि कन् स्यात् । वेणुकः । वंशकः ।

**८८ । कुटीशमीशुण्डाभ्यो रः ।**

आभ्यो रः स्यात् । ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः करभस्य नाम । कुटी मृतशरीर मित्येके ।

**८९ । कुत्वा डुपच् ।**

ह्रस्वा कुतूः कुतुपः ।

**९० । कासूगोणीभ्यां ष्टरच् ।**

ह्रस्वा कासूः कासूतरी । गोणीतरी । षित्वान् ङीष् । कासूरस्त्रभेदः ।

**९१ । वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।**

एभ्योऽत्र ष्टरच् स्यात् । तनुर्वत्सो वत्सत्वेनासम्पूर्णो वत्सतरः । द्वितीयवयाः । उक्षतरः । तृतीयवयाः । "प्रतिक्षणं नोक्षतरः प्रतीच्छति ।" अश्वतरी खरजाता । ऋषभतरो मन्दः । इह शब्दप्रवृत्तिनिमित्तस्य तनुत्व मिष्टम् । यस्तु कृशत्वेन तनु स्ततो न प्रत्ययः । तदुक्तं भाष्ये वत्सादिभ्यः कार्श्ये प्रतिषेध इति ।

**९२ । किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ।**

गुणक्रियासंज्ञाभिर्द्वयोरेकस्य निर्धारणे किंयत्तद्भ्यो डतरच् स्यात् ।

कतरो भवतोः पटुः। यतरः पटु स्ततर आयातु। एवं कतरश्चेत्। कतरः कारक इति।

## ९३। वा बहूनां जातिपरिप्रश्ने डतमच्।

बहूनामेकस्य निर्धारणे किमादे र्डतमच् स्यात्। कतमो भवतां कठः। यतमः। ततमः। वावचनमकजर्थम्। यकः। सकः। महाविभाषया वाक्यञ्च। को भवतां कठः। जातिपरिप्रश्ने किम्? को भवतां देवदत्तः।

## ९४। एकाच्च प्राचाम्।

एकात् तौ स्याताम्। एकतरो भवतो यातु। एकतमो भवतां शृणोतु। प्राचां ग्रहणं पूजार्थम्। वृत्तेर्विकल्पस्य महाविभाषया सिद्धेः।

## ९५। अवक्षेपणे कन्।

अत्र कन् स्यात्। व्याकरणकेनायं गर्वितः। गर्वोऽल्पावच्छिप्यत इत्यागमः। प्रागिवीयाः पूर्णाः।

## ९६। इवे प्रतिकृतौ।

इवार्थः सादृश्यम्। तद्विशेषणं प्रतिकृतिः। प्रतिकृतिलक्षणे इवार्थे कन् स्यात्। अश्वप्रतिकृतिरश्वकः। गर्दभकः। प्रतिकृतौ किम्? गौरिव गवयः। इवार्थे विधिः प्राक् पूगाञ् ञ्यात् (५।३।११२)। प्रतिकृतौ विधिः प्राग् वस्ते ढञः (५।३।१०१)।

## ९७। संज्ञायाञ्च।

## ९८। लुम् मनुष्ये।

## ९९। जीविकार्थे चापण्ये।

इवार्थे नाम्नि कन् स्यात्। अश्वकः। मनुष्ये वाच्ये कनो लुप्। चञ्चेव नरः। चञ्चा वध्रिका। जीविकार्थे कनो लुप्। जीविकार्थं यामादित्यादि-प्रतिकृतिं गृहीत्वा भ्रमति स उच्यते आदित्यः। स्कन्दः। वासुदेवः। अपण्ये किम्? वासुदेवकान् विक्रीणीते।

१०० । देवपथादिभ्यश्च ।

कनो लुप् स्यात् । देवपथः । हंसपथः । काश्यपप्रतिकृतिः काश्यपः । आकृतिगणोऽयम् । उक्तः प्रत्ययः प्रतिकृतौ ।

१०१ । वस्तेर्ढञ् ।

इवार्थे वस्तेर्ढञ् स्यात् । वस्तिरिव वास्तेयः । वास्तेयी वियोगिनी ।

१०२ । शिलाया ढः ।

स्यात् । शिलेयं शिलेवास्याः शरीरम् । ढञपीत्येके । शैलेयं दधि ।

१०३ । शाखादिभ्यो यत् ।

शाखेव शाख्यः । मुख्यः । जघन्यः ।

१०४ । द्रव्यञ्च भव्ये ।

द्रुरिव सर्वाश्रयत्वाद् यति द्रव्यं निपात्यते भव्यञ्चेत् । "द्रव्यमेव खलु सर्ववल्लभम्" ।

१०५ । कुशाग्राच्छः ।

कुशाग्रमिव कुशाग्रीया बुद्धिः ।

१०६ । समासाच्च तद्विषयात् ।

इवार्थविषयात् समासादपरस्मिन्निवार्थे छः स्यात् । काकतालीयम् । अजाकृपाणीयम् । अत्र भाष्य—"द्वाविमाविवार्थौ । काकगमनमिव तालपतनमिव देवदत्तस्य दस्युसमागमः । काकतालम् । निपातनात् समासः । ततस्तालेन काकस्य वध इव देवदत्तस्य वधो दस्युभिः काकतालीयमिति ।"

१०७ । शर्करादिभ्योऽण् ।

शर्करेव शार्करम् । कापालम् ।

१०८ । अङ्गुल्यादिभ्य ठक् ।

अङ्गुलीवाङ्गुलिकः । भारुजिकः । भरुजो निःशाखवृक्षः ।

## १०९। एकशालाया ठजन्यतरस्याम्।

अस्माट्ठज् वा स्यात्। एकशालेव एकशालिकः। पक्षे कन् एकशालकः। ठगित्यन्ये। ऐकशालिकः।

## ११०। कर्कलोहितादीकक्।

कर्क इव कार्कीको गौः। लौहितीकः स्फाटिकः।

## १११। प्रत्नपूर्वविश्वेमात् थाल् छन्दसि।

छन्दः सूत्रम्। उक्ता इवार्थे प्रत्ययाः।

## ११२। पूगाञ्ञ्योऽग्रामणीपूर्वात्।

पूगः सङ्घविशेषः (39)। तद्वाचिभ्यः स्वार्थे ञ्यः स्यात्। लौहध्वज्यः। लौहध्वज्यौ। लोहध्वजाः। शैब्यः। शैब्यौ। शिबयः। अग्रामणीपूर्वात् किम्? स एषां ग्रामणीर्देवदत्तकाः।

## ११३। व्रातच्फञोरस्त्रियाम्।

व्रातवाचिनश्च्फञन्ताच्च स्वार्थे ञ्यः स्यात्। व्रैहिमत्यः। कौञ्जायन्यः। अस्त्रियां किम्? व्रीहिमती। कौञ्जायनी। जातेरिति (४।१।६३) ङीष्।

## ११४। आयुधजीविसंघाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात्।

वाहीकेष्वायुधजीविनां संघाञ् ञ्यट् स्यात्। कौण्डीवृस्यः। चौद्रक्यः। चौद्रकी स्त्री। वाहीकेषु किम्? शबरः। अब्राह्मणराजन्यात् किम्? गोपालवा ब्राह्मणाः। शालङ्कायना राजन्याः।

## ११५। वृकाट् टेण्यण्।

वृकात् तथैव टेण्यण् स्यात्। वार्केण्यः। वार्केणी।

---

(39) वृत्तिर्न नियता येषां जातिश्च स्यात् पृथक् पृथक्। अर्थकामप्रधानास्ते संघाः पूग इति स्मृताः॥

## ११६। दामन्यादित्रिगर्त्तषष्ठाच्छः।

एभ्यश्छः स्यात्। दामनीयः। औलपीयः। त्रिगर्त्तवर्गः (40) षष्ठो येषामायुधजीविनां ते तथा। तेभ्यः। कौण्डोपरथीयः।

## ११७। पर्श्वादियौधेयादिभ्यामणञौ।

पर्शूं प्रभृतेः शस्त्रजीविसंघादण् स्यात्। पार्शवः। आसुरः। यौधेयादेरञ्। यौधेयः। शौभ्रेयः। पर्शूरिति दीर्घान्तो वृत्रजित्यागमः।

## ११८। अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्।

आयुधजीविसंघादिति निवृत्तम्। अभिजिदादिभ्यो गोत्राणन्तेभ्यः स्वार्थे यञ् स्यात्। अभिजितोऽपत्यं पुमान् आभिजितः। ततो यञ्। आभिजित्यः। वैदभृत्यः। शालावत्यः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः। नेह। आभिजितः स्थालीपाकः।

## ११९। ञ्यादयस्तद्राजाः।

उक्ता ञ्यादयस्तद्राजा उच्यन्ते। ततो बहुषु लुक् (२।४।६२)। लोहध्वजाः। कौञ्जायनाः। क्षुद्रकाः। दामनयः। पर्शवः। आभिजिताः। वृकाः।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
पञ्चमाध्यायस्य तृतीयः पादः ॥५।३॥
समाप्तश्च विभक्तिपादः ॥

---

(40) त्रिगर्त्ताः षष्ठो येषां ते त्रिगर्त्तषष्ठा इत्युच्यन्ते। तेषु चेयं स्मृतिः।

आहुस्त्रिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकी।
क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकिः ॥ १ ॥ इति काशिकायाम्।

अथ

# भाषावृत्तिः ।

पञ्चमोऽध्यायः । चतुर्थः पादः ।

## १ । पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ।

पादशतशब्दान्तस्य संख्यादे वींप्साया द्योतको वुन् स्यादन्त्यलोपश्च । द्वौ द्वौ पादौ ददाति । तद्धितार्थे समासः (२।१।५१) । द्विपादिकां ददाति । द्विशतिकां ददाति । त्रिशतिकां दण्डितः । अन्यतोऽपीष्यते । द्विमोदकिकां ददाति ।

## २ । दण्डव्यवसर्गयोश्च ।

अनयोश्च तथा स्यात् । अवीप्सार्थमिदं वचनम् । द्वौ पादौ दण्डितो व्यवसृजति वा द्विपदिकां दण्डितो व्यवसृजति वा । त्रिशतिकां दण्डितो व्यवसृजति वा । व्यवसर्गो दानम् ।

## ३ । स्थूलादिभ्यः प्रकारवचने कन् ।

स्थूलादेः प्रकारोक्तौ कन् स्यात् । जातीयरो बाधा । स्थूलप्रकारः स्थूलकः । यवकः । अणुकः ।

(क) चञ्चद्बृहतोश्च । चञ्चत्प्रकार श्चञ्चता गत्वरेण सदृश श्चञ्चत्कः । बृहत्को मणिः ।

## ४ । अनत्यन्तगतौ क्तात् ।

अत्रार्थे क्तान्तात् कन् स्यात् । नात्यन्तं भिन्नं भिन्नकम् । छिन्नकम् ।

## ५ । न सामिवचने ।

अर्द्धवाचिन्युपपदे क्तान्तात् कन् न स्यात् । सामिकृतम् । सामिभुक्तम् । अर्द्धपीतम् । अर्द्धभुक्तम् । नेमकृतम् । खण्डकृतम् । नेमभिन्नम् । प्रति-

विधोऽयं स्वार्थिकस्य कनः । तस्य चास्तित्वे लिङ्गमिदमेव । तेन बहुतरक मित्यादि सिध्यतीति जयादित्यः ।

## ६ । बृहत्या आच्छादने ।

अस्मात् कन् स्यात् । बृहतिका वस्त्रम् ।

## ७ । अषड्क्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः ।

एभ्यः स्वार्थे खः स्यात् । नित्यश्चायम् । एवमन्येऽपि नित्या भाष्ये परिगणिताः । यदुक्तं नित्यप्रत्यया स्तमबादयः प्राक् कनः । ञ्यादयः प्राग्वुनः । आम्वादयः प्राङ् मयटः । बृहती । जात्यन्ताः । समासान्ताश्चेति । अषड्क्षीणं यद् द्वाभ्यां कृतम् । आशितङ्गवीनमरण्यं यत्राशिता गावः । निपातनान्मकारः । अलंकर्मीणः पाणिः । अलंपुरुषीणः । अलं पुरुषाय । तस्मै शक्त इत्यर्थः । अध्युत्तरपदात् । गुरुष्वधि गुर्वधीनः । देवाधीनः । राजाधीनः । इन मधिगतोऽधीन इत्यायत्तपर्य्यायोऽप्यस्ति । तस्यायं स्लोक-वार्त्तिके प्रयोगः । वाक्यं वक्त्र्यधीनं हीति । (१।१।५७, वा) । (41)

## ८ । विभाषाञ्चेरदिक्स्त्रियाम् ।

अञ्चत्यन्तात् खो वा स्यात् । प्राक् प्राचीनम् । तिर्य्यक् तिरश्चीनम् । प्रत्यक् प्रतीचीनम् । अदिक्स्त्रियां किम् ? प्राची दिक् । दिग्ग्रहणं किम् ? प्राचीना ब्राह्मणी ।

## ९ । जात्यन्ताच्छ बन्धुनि ।

बन्धुनि द्रव्ये जात्यन्ताच्छः स्यात् । ब्राह्मणजातीयः । तज्जातीयः । बन्धुनि किम् ? ब्राह्मणजातिरदुष्टा ।

## १० । स्थानान्ताद्विभाषा सस्थानेनेति चेत् ।

स्थानान्ताच्छो वा स्यात् सस्थानेनेति चेत् स्थानान्तस्यार्थो गम्यते । समानं स्थानमस्य सस्थान स्तुल्यः । पितृस्थानः पितृस्थानीयो वा । राजस्थानः राजस्थानीयो वा । तत्तुल्य इत्यर्थः ।

---

(41) भारवौ च—अधास्वधीनं किमु निःस्पृहाणा मिति । अधीनो निघ्न आयत्त इत्यमरश्च ।

## ११। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे।

किम एदन्तात् तिङोऽव्ययाच्च यो घसंज्ञक स्तदन्तादामुः स्यात्। किन्तराम्। किन्तमाम्। क्रियाया गुणस्य वा प्रकर्षे घः। पूर्व्वाह्लेतराम्। पूर्वाह्लेतमाम्। अत्राधारशक्तेः प्रकर्षः। यातितराम्। वक्तितराम्। पततितराम्। पततितमाम्। गच्छतितमाम्। प्रातस्तराम्। नतराम्। नितराम्। सुतराम्। उच्चैस्तराम्। द्रव्यप्रकर्षे निषेधः। उच्चैस्तरः कश्चित्।

## १२। अमु च च्छन्दसि।

छन्दः सूत्रमेकम्।

## १३। अनुगादिनष्ठक्।

अस्माद् ठक् स्यात्। अनुगाद्येवानुगादिकः।

## १४। णचः स्त्रियामञ्।

स्त्रियां स्वार्थे णजन्तादञ् स्यात्। व्याक्रोशी। व्यावहासी। व्यावलेखी।
(क) अग्नीध्रसाधारणाभ्यामञ् वक्तव्यः। विभाषा च ङीप्। आग्नीध्री आग्नीध्रा वा। साधारणी साधारणा वा भूमिः।

## १५। अणिनुणः।

इनुणन्तादण् स्यात्। सांकूटिनम्। सांराविणम्।

## १६। विसारिणो मत्स्ये।

विसारिणोऽण् स्यात्। वैसारिणो मत्स्यः। मत्स्यादन्यत्र विसारी।

## १७। संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्।

क्रियाणामावृत्तेर्गणिकायाः संख्यायाः कृत्वसुच् स्यात्। पञ्च वारान् पञ्चकृत्वो भुङ्क्ते। शतकृत्वः प्रोक्तवान् दिवसस्य। सहस्रकृत्वः।

## १८। द्वित्रिचतुर्भ्यः सुच्।

एभ्यस्तथैव सुच् स्यात्। द्विरधीते। त्रिः प्रदक्षिणीकृत्य। त्रिः प्रदक्षिणं कुरुते। चतुर्भुङ्क्ते।

## १९ । एकस्य सकृच्च ।

एकस्य सुच् स्यात् सकृच्चादेशः । संयोगान्तलोपः ( ८।२।२३ ) । सकृद् ददाति ।

## २० । विभाषा बहोर्धाऽविप्रकृष्टकाले ।

बहोः कृत्वसुज्विषये धा वा स्यात् । बहुधाह्नो भुङ्क्ते । पक्षे बहुकृत्वः । अविप्रकृष्टकाले किम् ? बहुकृत्वो मासस्य भुङ्क्ते ।

## २१ । तत्प्रकृतवचने मयट् ।

स चासौ प्रकृतश्चेति तत्प्रकृतः । तद्वचने मयट् स्यात् । अन्नं प्रकृतं प्रस्तुतमन्नमयमिह । घृतमयमिह । अपर आह । अन्नं प्रकृतमस्मिन्नन्नमयो यज्ञः । अपूपमयं पर्व ।

## २२ । समूहवच्च बहुषु ।

बहुषु प्रकृतेषूच्यमानेषु समूहवत् प्रत्ययाः स्युः । अपूपाः प्रकृता आपूपिकम् । इह च । आपूपिकं पर्व । चकारान्मयट् च । अपूपमयम् । अपूपमयी पात्री । वटकमयी । (42)

## २३ । अनन्तावसथेतिहभेषजाञ्ञ्यः ।

एभ्यः स्वार्थे ञ्यः स्यात् । आनन्त्यम् । आवसथ्यम् । ऐतिह्यम् । भैषज्यम् । महाविभाषेह सम्बध्यते । आमादयः प्राङ् मयट इति स्मृतिः ।

## २४ । देवतान्तात् तादर्थ्ये यत् ।

स्यात् । तस्मै इदम् तदर्थम् । तदर्थमेव तादर्थ्यम् । चातुर्वर्ण्यादिः । अग्निदेवत्यम् । पितृदेवत्यम् ।

## २५ । पादार्घाभ्यां च ।

आभ्यां तादर्थ्ये यत् स्यात् । पाद्यं जलम् । अर्घ्यं पुष्पम् ।

## २६ । अतिथेर्ञ्यः ।

अतिथ्यर्थमातिथ्यं नीवारादि ।

---

(42) वटक is roasted gram—छोलाभाजा or बुटभाजा इति भाषा ।

(क) नवसूरमर्तयविष्ठेभ्यः स्वार्थे यत्। नव्यम्। सूर्य्यः। मर्त्यः। यविष्ठ्यः। (43)

(ख) क्षेमाद् यः। क्षेम्यम्।

(ग) नवस्य नूआदेशस्त्नप्तनप्खाश्च प्रत्ययाः। नूत्नम्। नूतनम्। नवीनम्।

(घ) नश्च पुराणार्थात् प्रात्। प्रणम्। त्नवादयश्च। प्रत्नम्। प्रतनम्। प्रीणम्। (44)

(ङ) भागरूपनामभ्यो धेयः। एभ्यो धेयः स्यात्। रूपधेयम्। भागधेयम् (45)। नामधेयम्।

## २७। दैवात् तल्।

स्वार्थे स्यात्। देव एव देवता।

## २८। अवेः कः।

स्यात्। अविकः।

## २९। यावादिभ्यः कन्।

एभ्यः स्वार्थे कन् स्यात्। यावकः। मणिकः। नान्तरीयकः। श्रेयस्कः। कन्दुकः।

(1) पुत्रात् कृत्रिमे। पुत्रकः।

(2) स्नाताद् वेदसमाप्तौ। स्नातकः।

## ३०। लोहितान् मणौ।

मणावर्थे लोहितात् कन् स्यात्। लोहितको मणिः। "लोहितकनिर्मिता भुवः"। मणौ किम्? लोहितः पर्वतः। लोहिता गौः।

---

(43) This is a वार्त्तिक to 5. 4. 36. काशिकाकार gives it under 5. 4. 25.

(44) A वार्त्तिक to 5. 4. 30. काशिकाकार gives it in 5. 4. 25.

(45) भागधेयः करो बलिरिति दैवं दिष्टं भागधेयमिति च। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते क्वचिदिति।

३१ । वर्णे चानित्ये ।

अस्थिरे वर्णे लोहितात् कन् स्यात् । लोहितकः कोपेन । अनित्ये किम् ? लोहिता गौः ।

(क) लोहितात्लिङ्गबाधनं वेति वक्तव्यम् । लोहितिका लोहिनिका वा मदेन ।

३२ । रक्ते ।

लाक्षादिना रक्ते लोहितात् कन् स्यात् । लोहितकः कम्बलः ।

३३ । कालाच्च ।

अनित्ये वर्णे रक्ते च कालात् कन् स्यात् । कालकं मुखं वैलक्ष्येण । कालकः पटः ।

३४ । विनयादिभ्यष्ठक् ।

एभ्यष्ठक् स्यात् । विनयो वैनयिकः । समयः सामयिकः । उपचार औपचारिकः । अत्ययः आत्ययिकः । "अशिश्रियन् नात्ययिकं तमेत्य ।" अकस्मादिति दकारान्तः । आकस्मिकम् । मुक्ता मौक्तिकम् । एवं व्यवहारः । समूहः । विशेषः ।

(1) उपायाद् ह्रस्वश्च । "शिवमौपयिकं गरीयसाम्" ।

३५ । वाचो व्याहृतार्थायाम् ।

उक्तार्थाया वाचष्ठक् स्यात् । वाचिकं सन्देशवाक् ।

३६ । तद्युक्तात् कर्मणोऽण् ।

उक्तार्थवाग्युक्तात् कर्मणोऽण् स्यात् । सन्देशवाचा प्रतिपादितं कर्म कार्मणम् ।

३७ । ओषधेरजातौ ।

ओषधेरण् स्यात् । औषधं पिबति । अजातौ किम् ? "भवन्ति यत्रौषधयो रजन्याम्" । "ज्वलयतौषधिजेन कृशानुना ।"

३८ । प्रज्ञादिभ्यश्च ।

अण् स्यात् । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । वणिगेव वाणिजः । मरुदेव

मारुतः। चोर एव चौरः। चौरी स्त्री। रक्षो राक्षसः। देवता दैवतम्। मनः मानसम्। शत्रुः शात्रवः। पिशाचः पैशाचम्। वयो वायसः। बन्धु-र्बान्धवः। विकृतं वैकृतम्। द्विता द्वैतम्। प्रतिभा प्रातिभम्। चण्डाल-श्चाण्डालः। आकृतिगणोऽयम्।

३९। **मृदस्तिकन्।**

स्यात्। मृत्तिका। मृदेव।

४०। **सस्नौ प्रशंसायाम्।**

प्राशस्त्ये मृदः सस्नौ स्याताम्। रूपपो बाधा। मृत्सा मृत्स्ना।

४१। **बृहकजेरष्ठाभ्यां तिल्तातिलौ च च्छन्दसि।**

इदं छन्दः सूत्रम्।

४२। **बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्।**

बह्वल्पार्थाच्छस् वा स्यात्। बहूनि बहुभिर्बहुभ्यो वा ददाति बहुशः। भूरिशः। अल्पशो ददाति। स्तोकशः। माङ्गलिक्यां प्रहस्तावस्याभिधानम्। आद्यादौ मा भूदिति स्मृतिः। कारकात् किम्? बहूनां स्वामी। अन्यतर-स्यांग्रहणं स्पष्टार्थम्। महाविभाषया सिद्धेर्वृत्तिविकल्पस्य।

४३। **संख्यैकवचनाच्च वीप्सायाम्।**

आभ्यां वीप्सायां वा शस् स्यात्। संख्यायाः। द्वौ द्वौ ददाति द्विशः। पञ्चशो ददाति। एकार्थवचनात् परिमाणात्। पणं पणं ददाति पणशः। प्रस्थशः। पादशः। कारकादित्येव। द्वयो र्द्वयोः स्वामी। संख्यैकवचनात् किम्? घटं घटं ददाति। कुण्डं कुण्डं पिबति।

४४। **प्रतियोगे पञ्चम्यास्तसि।**

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी तदन्तात् तसि र्वा स्यात्। यो नारायणतः प्रति नारायणात् प्रति वा। वाणिज श्चौरतः प्रति चौरात् प्रति वा।

(क) आद्यादिभ्यश्च।

आद्या प्रथमा । तदादिविभक्त्यन्तेभ्यश्च यथादर्शनं तसिर्वा स्यात् । कर्मगुण इत्यर्थे कर्मगुणतः । एवं स्वरणात् स्वरणतः । आदौ आदितः । शरीरेण शरीरतः कृशः । पृष्ठतः । शब्दतः । "दुष्टः शब्दः स्वरतो वर्णतो वा" ।

## ४५ । अपादाने चाहीयरुहोः ।

अपादानवचनात् पञ्चम्यन्तात् तसि र्वा स्यात् । ग्रामत आयाति । चौरतो बिभेति । ओहाग्रुहोः प्रतिषेधः । स्वार्थाद्धीयते । पर्वतादवरोहति । हीय इति निर्देशाज्जिहाते र्न निषेधः । उदयाचलत उज्जिहीते । कथं मन्त्रतो हीन इति । तृतीयान्तात् तसिः । (46)

## ४६ । अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः ।

अतिग्रहेऽचलने क्षेपे च तृतीयान्तात् तसिर्वा स्यात् । वृत्तेनातिगृह्यते । वृत्ततोऽतिगृह्यते । चरित्रतो न चलति । व्यवहारतो निन्दितः । अकर्त्तरि किम् ? विप्रेण क्षिप्तम् ।

## ४७ । हीयमानपापयोगाच्च ।

हीयमानपापाभ्यां युक्तादकर्त्तरि तृतीयान्तात् तसि र्वा स्यात् । वृत्तेन हीयते वृत्ततो हीयते वा । व्यवहारतो हीयते । वृत्ततः पापः ।

## ४८ । षष्ठ्या व्याश्रये ।

षष्ठ्यन्ताद् विविधपक्षाश्रये तसिर्वा स्यात् । देवा अर्जुनतोऽभवन् । अर्जुनस्य पक्षे । आदित्याः कर्णतः । कर्णस्य पक्षे । व्याश्रये किम् ? वृक्षस्य शाखा ।

## ४९ । रोगाच्चापनयने ।

रोगात् षष्ठ्यन्तादपनयने तसि र्वा स्यात् । हिक्कातः कुरु चिकित्साम् । प्रवाहिकातः । अपनयने किम् ? हिक्कायाः प्रकोपः ।

## ५० । अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः ।

अभूततद्भावगतो सम्पद्यतेः कर्त्तरि च्विः स्यात् कृभ्वस्तियोगश्चेत् ।

---

(46) एवं मन्त्री हीनः स्वरतो वर्णतो वेति समाधेयम् ।

अशुक्लः शुक्लः सम्पद्यते। तं करोति शुक्लीकरोति। महाविभाषया शुक्लं करोति। शुक्लीभवति। शुक्लीस्यात्। मृदूस्यात्। पटूभवति।

५१। अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च।

एषां च्विः स्यादन्त्यलोपश्च। अरूकरोति। सुमनीकरोति। उच्चक्षू-स्यात् (47)। सुचेतीकृतः। "रहीभूतं दशाननम्।" "नीरजीकारित-क्ष्माम्।"

५२। विभाषा साति कार्त्स्न्ये।

च्विविषये कार्त्स्न्यगतौ साति र्वा स्यात्। काष्ठं भस्मसात् करोति भस्मीकरोति वा। "तस्मिन् कृशानुसाद् भूते"।

५३। अभिविधौ सम्पदा च।

अभिव्याप्तिगतौ च्व्यर्थे सातिर्वा स्यात् सम्पदा चानुप्रयोगः। उदकसात् सम्पद्यते लवणम्। उदकसाद् भवति। उदकीभवति वा।

५४। तदधीनवचने।

तदायत्तोक्तौ कृभ्वस्तिसम्पदां योगे सातिर्वा स्यात्। राजाधीनं करोति राजसात् करोति। स्त्रीसात् सम्पद्यते युवा।

५५। देये त्रा च।

दातव्येऽधीने त्रा स्यात् सातिश्च। देवत्रा करोति। देवसात् करोति। "विप्रसादकृत भूयसी र्भुवः। विप्रत्रा करोति। विप्रत्रा सम्पद्यते।

५६। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्।

एभ्यो द्वितीयार्थे सप्तम्यर्थे च कृञादिभिरन्यैश्च योगे त्रा स्यात्। साति-र्निवृत्तः। देवान् करोति देवत्रा करोति। देवत्रा गच्छति। देवे वसति देवत्रा वसति। बाहुल्याद् "बहुत्रा जीव बालक"। (48)

---

(47) "उच्चक्षूस्मि बुभुत्सु राक्षसकुलं तिष्ठन्ति किं मर्कटा इति केशवव्रताविति" ( सृष्टिधरधृतम् )। उच्चक्षसीति लटि प्रयोगः।

(48) बालकेत्यत्र वासवेति पाठान्तरम्।

## ५७ । अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच् ।

कृते द्विर्वचने द्व्यजवरार्द्धादव्यक्तशब्दानुकरणात् कृभ्वस्तियोगे डाच् स्यात् । पटपटाकरोति । दमदमास्यात् । द्व्यजित्यनेकाजुपलक्षणम् । खरटखरटा करोति । अनितौ किम् ? पटिति करोति ।

## ५८ । कृञो द्वितीयतृतीयशम्बवीजात् कृषौ ।

एभ्यः कृञो योगे कर्षणे डाच् स्यात् । द्वितीयं कर्षणं करोति द्वितीया करोति । तृतीयाकृतम् । शम्बाकृत्य वीजाकृतवान् । कृञो योगे विधिर्दैश-सूत्राम् ।

## ५९ । संख्यायाश्च गुणान्तायाः ।

कृषौ कृञो योगे गुणान्तसंख्याया डाच् स्यात् । त्रिगुणाकरोति क्षेत्रम् ।

## ६० । समयाच्च यापनायाम् ।

यापनागतौ समयाच्च डाच् स्यात् । समयाकरोति । कालं यापयतीत्यर्थः । कालक्षेपं करोतीत्यर्थः । "समयाकुरुत मा वाग्भिः" ।

## ६१ । सपत्त्रनिष्पत्त्रादतिव्यथने ।

आभ्यामतिपीड़ने डाच् स्यात् । सपत्त्राकरोति मृगं व्याधः । निष्पत्त्रा करोति । "धनुष्पाणेर्यातं दिवमपि सपत्त्राकृतमसुम्" ।

## ६२ । निष्कुलान्निष्कोषणे ।

अस्मादत्र डाच् स्यात् । निष्कुलाकुरुते दाड़िमम् ।

## ६३ । सुखप्रियादानुलोम्ये ।

आभ्यामानुकूल्ये डाच् स्यात् । सुखाकरोति । प्रियाकरोति । आनुकूल्यं करोतीत्यर्थः । "सीतामूचे सुखाभव" । "प्रियाकर्त्तुं प्रियंवदा" ।

## ६४ । दुःखात् प्रातिलोम्ये ।

डाच् स्यात् । दुःखाकरोति कुपुत्त्रः । "अदो दुःखाकरोति माम्" ।

## ६५ । शूलात् पाके ।

अस्मात् कृञो योगे डाच् स्यात् । शूलाकृतं मांसम् । शूलाकरोति मांसम् ।

## ६६ । सत्यादशपथे ।

सत्यात् डाच् स्यात् । सत्याकरोति भाण्डं वणिक् । मयैतद् गृहीतमिति सत्यङ्कारं ददाति । अशपथे किम् ? सत्यं करोति विप्रः । शपतीत्यर्थः ।

## ६७ । मद्रात् परिवापणे ।

मद्रान् माङ्गलिकमुण्डने डाच् स्यात् । मद्राकृतो बालः । मद्राकरोति बालम् ।

(क) भद्राच्चेति वक्तव्यम् । भद्राकरोति नापितः । महाविभाषा पूर्णा । कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः । क्तस्य मुजर्थाश्च । प्रसादिरव्ययम् ।

## ६८ । समासान्ताः ।

अतःपरं समासावयवः प्रत्ययो वाच्यः । अधिराजमुपराजम् । नाव्ययीभावादित्यम् (२।४।८३) । द्विधुरी त्रिधुरी । द्विगोरिति (४।१।२१) ङीप् । वाक्त्वचिनी । द्वन्द्वोपतापगर्ह्यादिनिः (५।२।१२८) । धुरोऽर्द्धमर्द्धधुरा । तत्पुरुषत्वात् परवल्लिङ्गता (२।४।२६) ।

## ६९ । न पूजनात् ।

पूजावचनात् परस्य समासान्तो न विधेयः । सुराजा । अतिराजा । सुगौः । अतिगौः । इह स्वतिग्रहणं कर्त्तव्यम् । अत्र मा भूत् परमगवः ।

(क) प्राग्बहुव्रीहिग्रहणञ्च । सुसक्थमतिसक्थः ।

## ७० । किमः क्षेपे ।

क्षेपे किमः परस्य समासान्तो न स्यात् । किंराजा यो न रक्षति । किंसखा । द्रोहाचरणात् । किंगौः । अदोहवाहात् । क्षेपे किम् ? कस्य राजा किंराजः । किंगवः ।

## ७१ । नञस्तत्पुरुषात् ।

अस्मात् समासान्तो न स्यात् । अराजा । असखा । अगौः । तत्पुरुषात् किम् ? अधुरं शकटम् ।

## ७२ । पथो विभाषा ।

अयं निषेधः पथो वा स्यात् । अपथम् । अपन्था वा ।

## ७३ । बहुव्रीहौ संख्येये डजबहुगणात् ।

संख्येये यो बहुव्रीहिस्ततो डच् स्यात् । उपदशाः । आसन्नविंशाः । द्वित्राः । पञ्चषाः । एकद्वाः । लक्षकोटाः । अबहुगणात् किम् ? उपबहवः । उपगणाः ।

(क) संख्यान्तस्य तत्पुरुषस्याव्ययादेः । डच् स्यात् । निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि । निश्चत्वारिंशानि वर्षाणि । निर्गतास्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खङ्गः । अव्ययादेः किम् ? गोत्रिंशत् । गोविंशतिः ।

## ७४ । ऋक्पूरब्धूःपथामानक्षे ।

समासमाते ऋगादेरकारः स्यात् । ऋचोऽर्द्धमर्द्धर्चः । अनृचो माणवकः । बह्वृचश्चरणविशेषः । पुर् । नान्दीपुरम् । लिङ्गस्य लोकाश्रयत्वान्नपुंसकता । द्विपुरी । त्रिपुरी । अप् । द्वीपम् । बह्वपानि तड़ागानि । कथं बह्वाम्प्र ? समासान्तविधेरनित्यत्वादित्याहुः । धुर् । राजधुरा । महाधुरः । पथिन् । राजपथः । महापथः । अनक्षे किम् ? अक्षधूः स्यन्दनानाम् । दृढ़धूरक्षः ।

## ७५ । अच प्रत्यन्ववपूर्वात् सामलोम्नः ।

प्रत्यनुपूर्वाभ्यां सामलोमभ्यामच् स्यात् । प्रतिसामम् । अनुसामम् । प्रतिलोमम् । अनुलोमम् । इह

कृष्णोदकपाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्य्याश्च नद्याश्च संख्याया उत्तरे यदि ॥१॥

इति जयादित्यः । कृष्णभूमम् । उदकभूमम् । पाण्डुभूमम् । पञ्चगोदावरम् । द्विनदम् । भूमेश्च संख्यायाः । दशभूमं सूत्रम् । द्विभूमः प्रासादः । अजिति योगविभागात् पद्मनाभः । ऊर्णनाभः । दीर्घरात्रम् । गणरात्रम् । वर्षारात्रमित्यादि ।

## ७६ । अक्ष्णोऽदर्शनात् ।

अदृश्यर्थादक्षिशब्दादच् स्यात् । पुष्कराक्षम् । गवाक्षम् । (49)

(49) In the printed काशिका too गवाक्षम् is given as neuter. But भट्टोजि has it as गवाक्षः and says पुंस्त्वं लोकात् । So also the poet—"विलोलदृष्टिभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा

**७७। अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः।**

पञ्चविंशतिरेतेऽच्प्रत्ययान्ता निपात्यन्ते। तत्राद्यास्त्रयो बहुव्रीहयः। तत एकादश द्वन्द्वाः। अहर्दिवमहन्यहनीत्यर्थः। साकल्येन रजः सरजसमभ्यवहरति। अव्ययीभावे साधु। बहुव्रीहौ सरजसं पद्ममित्यसाधु। ततस्तत्पुरुषद्वयम्। निश्चितं श्रेयो निःश्रेयसम्। पुरुषस्यायुः पुरुषायुषम्। ततो द्विगुद्वयम्। ततो द्वन्द्वः। ततः कर्मधारयत्रयम्। शुनः समीपे उपशुनम्। गोष्ठे श्वेव गोष्ठश्वः।

(क) चतुरस्त्र्युपाभ्यामुपसंख्यानम्। त्रिचतुराः। उपचतुराः।

**७८। ब्रह्महस्तिभ्यां वर्चसः।**

आभ्यां वर्चसोऽच् स्यात्। ब्रह्मवर्चसम्। हस्तिवर्चसम्। "हेतुस्त्वद्ब्रह्मवर्चसम्।"

(क) पल्यराजभ्याञ्च। पल्यवर्चसम्। राजवर्चसम्।

**७९। अवसमन्धेभ्यस्तमसः।**

एभ्यस्तमसोऽच् स्यात्। अवतमसम्। सन्तमसम्। अन्धतमसम्।

**८०। श्वसो वसीयःश्रेयसः।**

श्वःशब्दाद् वसीयःश्रेयोभ्यामच् स्यात्। श्वोवसीयसम्। श्वःश्रेयसं वो भूयात्।

**८१। अन्ववतप्ताद्रहसः।**

एभ्यो रहसोऽच् स्यात्। "अनुरहसमनायि नायकेन"। अवरहसम्। तप्तरहसम्।

---

श्वासन्।,' सृष्टिधर clears the point thus "गौर्जलं तस्याक्षीव गवाक्षं पद्मादि। क्लीबमिदम्। वातायने रूढस्तु पुंलिङ्गः"।

## ८२ । प्रतेरुरसः सप्तमीस्थात् ।

प्रतिपूर्वात् सप्तम्यर्थवृत्तेरुरसोऽच् स्यात् । उरसि वर्त्तताः प्रत्युरसं वर्त्तताः । "न्यपतन् प्रत्युरसं प्रियाः प्रियाणाम्" । विभक्त्यर्थेऽव्ययीभावः ।

## ८३ । अनुगवमायामे ।

इदमत्र निपात्यते । अनुगवं रथः । यस्य चायाम (२।१।१६) इति समासः ।

## ८४ । द्विस्तावा त्रिस्तावा वेदिः ।

द्विस्तावा त्रिस्तावा स्याद् वेदिश्चेत् । अन्यत्र द्विस्तावती त्रिस्तावती रज्जुः ।

## ८५ । उपसर्गादध्वनः ।

प्रादेरध्वनोऽच् स्यात् । प्रगतोऽध्वानं प्राध्वो रथः । निरध्वः ।

## ८६ । तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।

संख्याव्ययादेरङ्गुलिशब्दादच् स्यात् । द्वे अङ्गुली प्रमाणमस्येति तद्धितार्थे समासः (२।१।५१) । प्रमाणे लो द्विगोरिति (५।२।३७ वा) मात्रचो लुक् । द्व्यङ्गुलम् । त्र्यङ्गुलम् । अव्ययादेः । निर्गतमङ्गुलिभ्यो निरङ्गुलम् । अत्यङ्गुलम् । तत्पुरुषस्य किम् ? पञ्चाङ्गुलिर्हस्तः । तत्पुरुषे विधिरा द्वन्द्वात् (५।४।१०६) ।

## ८७ । अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।

संख्याव्ययाभ्यामहरादिभ्यश्च रात्रेरच् स्यात् । पञ्चानां रात्रीणां समाहारः पञ्चरात्रम् । त्रिरात्रम् । द्विरात्रम् । अतिक्रान्तो रात्रिमतिरात्रः । नीरात्रः । अहर्ग्रहणं द्वन्द्वार्थम् । अहोरात्रः । सर्वरात्रः । संख्यातरात्रः । "पुण्यरात्रः प्रियागमे" । एते कर्मधारयाः । एकदेशात्—पूर्वं रात्रेः पूर्वरात्रः । अपररात्रः । अर्द्धरात्रः ।

## ८८ । अह्नोऽह्न एतेभ्यः ।

एतेभ्य इति । संख्याव्ययाहरादिभ्यः । अहःशब्दस्याह्नादेशः स्यात्

समासान्ते परे। टचि—द्वयोरह्नोर्भवो द्व्यह्नः। त्र्यह्नः। कालाट्ठञो (४।३।११) द्विगोर्लुगनपत्ये (४।१।८८) इति लुक्। अत्यह्नः। निरह्नः। प्रादिसमासः। सर्वाह्णः। संख्याताह्नः। कर्मधारयौ। पूर्वाह्णः। अपराह्णः। पूर्वापरेति (२।२।१) समासः। सर्वत्र टच्।

८९। न संख्यादेः समाहारे।

संख्यादेरह्नः समाहृतावह्नादेशो न स्यात्। द्वे अहनी समाहृते द्व्यहः। त्र्यहः। सप्ताहः। दशाहः।

९०। उत्तमैकाभ्यां च।

आभ्यामह्नोऽह्नादेशो नास्ति। अहरादेरन्त्यमुत्तमं पुण्यशब्द इत्यर्थः। पुण्याहम्। एकाहः।

९१। राजाहःसखिभ्यष्टच्।

एभ्यस्तत्पुरुषे टच् स्यात्। महाराजः। देवराजः। द्व्यहः। उत्तमाहः। राजसखः। "भवन्ति गोमायुसखा न दन्तिनः।" लिङ्गविशिष्टाग्रहणान् महाराज्ञी।

९२। गोरतद्धितलुकि।

गोष्टच् स्यात्। पुङ्गवः। उत्तमगवः। पञ्चगवी (50)। स्त्रीगवी। राजगवी। पञ्चगवधनम्। दशगवधनम्। अतद्धितलुकि किम्? पञ्चगुः पटः। क्रीतार्थे (४।१।३७) ठक्रोऽध्यर्द्धेति (५।१।२८) लुक्।

९३। अग्राख्यायामुरसः।

श्रेष्ठाख्यायामुरसष्टच् स्यात्। हस्त्युरसम्। अश्वोरसम्। तत्प्रधानम्।

९४। अनोऽश्मायःसरसां जातिसंज्ञयोः।

एषां टच् स्यात्। जातौ—उपानसम्। अमृताश्मः। कालायसम्। मण्डूकसरसम्। संज्ञायाम्—महानसम्। पिण्डाश्मः। लोहितायसम्। कालसरसम्।

---

(50) भट्टोजिमते तु पञ्चगवम्। Vide our note on 2. 1. 23.

## ९५ । ग्रामकौटाभ्याञ्च तक्ष्णः ।

आभ्यां तक्ष्णष्टच् स्यात् । ग्रामतक्षः । कौटतक्षः ।

## ९६ । अतेः शुनः ।

टच् स्यात् । श्वानमतिक्रान्तोऽतिश्वः सेवकः । अतिश्वी मृगी ।

## ९७ । उपमानादप्राणिषु ।

उपमानाच्छुन ष्टच् स्यात् । फलकः श्वेव फलकश्वः । अप्राणिषु किम् ? वानरः श्वेव वानरश्वा । व्याघ्रादित्वात् (२।१।५६) समासः ।

## ९८ । उत्तरमृगपूर्वाच्च सक्थ्नः ।

एभ्यः सक्थ्न ष्टच् स्यात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । चकारादुपमानाच्च । फलकसक्थम् ।

## ९९ । नावो द्विगोः ।

नावन्ताद् द्विगो ष्टच् स्यात् । द्विनावम् । पञ्चनावम् । दशनावप्रियः । अतद्धितलुकीत्येव । क्रीतार्थे ठञो लुक् । पञ्चनौर्गजः ।

## १०० । अर्द्धाच्च ।

अर्द्धान्नावस्तत्पुरुषे टच् स्यात् । नावोऽर्द्धमर्द्धनावम् । अर्द्धनावीति तु न । लिङ्गस्य लोकाश्रयत्वात् परवल्लिङ्गताभावः ।

## १०१ । खार्य्याः प्राचाम् ।

द्विगोरित्येव । खार्य्याष्टच् स्यात् प्राचां मतेन । अर्द्धाच्च । द्विखारम् । अर्द्धखारम् । अन्येषां द्विखारि । अर्द्धखारी ।

## १०२ । द्वित्रिभ्यामञ्जलेः ।

आभ्यामञ्जलेष्टच् स्यात् । द्वयोरञ्जल्योः समाहारो द्व्यञ्जलम् । त्र्यञ्जलं वारि । द्विगोरित्येव । द्वयोरञ्जलिर्द्व्यञ्जलिः ।

## १०३ । अन्नसन्तान्नपुंसकाच्छन्दसि ।

छन्दः सूत्रम् ।

१०४ । ब्रह्मणो जानपदाख्यायाम् ।

जनपदे भवो जानपदः । तदेकदेशस्तन्नाम्नि । ब्रह्मणष्टच् स्यात् । सुराष्ट्रब्रह्मः । काशिब्रह्मः । अन्यत्र देवब्रह्मा नारदः ।

१०५ । कुमहद्भ्यामन्यतरस्याम् ।

आभ्यां ब्रह्मणष्टज् वा स्यात् । कुब्रह्मः कुब्रह्मा वा । "परिषद्दलान् महाब्रह्मैः" । उक्ताः समासान्तास्तत्पुरुषे ।

१०६ । द्वन्द्वाच्चुदषहान्तात् समाहारे ।

चवर्गदषहान्ताद् द्वन्द्वात् टच् स्यात् । वाक्त्वचम् । उपाध्याय-शब्दप्राच्छम् । श्रीस्रजम् । दान्तात्—सम्पद्विपदम् । षान्ताद्—वाक्त्विषम् । ग्रीष्मप्रावृषम् । हान्तात्—छत्रोपानहम् । पिकमधुलिहम् । समाहारे किम् ? प्रावृट्शरदौ । द्वन्द्वात् किम् ? पञ्चानां वाचां समाहारः पञ्चवाक् ।

१०७ । अव्ययीभावे शरत्प्रभृतिभ्यः ।

एभ्योऽच टच् स्यात् । उपशरदम् । "अथोपशरदेऽपश्यत्" । एवं दिश् विपाश् दिव् दृश् चतुर् ।

(1) जराया जरसञ्च । उपजरसम् ।

(क) प्रतिपरसमनुभ्योऽक्ष्णः । प्रत्यक्षम् । परोक्षमिति निपातनात् समासः । उक्षश्च । समक्षम् । अन्वक्षम् । अव्ययीभावे विधानमा बहुव्रीहेः ।

१०८ । अनश्च ।

१०९ । नपुंसकादन्यतरस्याम् ।

अन्नन्तात् टच् स्यात् । उपराजम् । प्रतिराजम् । उपदशम् । अध्यात्मम् । प्रत्यात्मम् । नपुंसकाद्वा । उपचर्ममुपचर्म वा । उपभस्ममुपभस्म वा । प्रत्यह्नः प्रत्यहं वा । यथार्थेऽव्ययीभावः ।

११० । नदीपौर्णमास्याग्रहायणीभ्यः ।

आभ्यष्टज् वा स्यात् । उपनदमुपनदि वा । उपपौर्णमासमुपपौर्णमासि वा । "उपपौर्णमासि समये शशिनं ददर्श ।" उपाग्रहायणमुपाग्रहायणि वा ।

### १११ । झयः ।

झयन्तात् टच् वा स्यात् । प्रतिसमिधम् प्रतिसमिद् वा । उपदृषदम् । उपदृषद् वा ।

### ११२ । गिरेश्च सेनकस्य ।

सेनकस्य मतेन गिरेष्टच् वा स्यात् । "अनुगिरस्तुभिर्वितायमानम्" । अनुगिरि वा । उपगिरम् । उपगिरि वा । उक्तोऽव्ययीभावे समासान्तः ।

### ११३ । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।

बहुव्रीहौ स्वाङ्गवाचिभ्यां सक्थ्यक्षिभ्यां षच् स्यात् । दीर्घसक्थः । षित्त्वान् ङीष् । दीर्घसक्थी । सहस्राक्षः । विशालाक्षः । आयताक्षी । स्वाङ्गात् किम् ? दीर्घसक्थि शकटम् । बहुव्रीहौ विधानमापादम् ।

### ११४ । अङ्गुलेर्दारुणि ।

अङ्गुलेः षच् स्याद् दार्वर्थे । द्व्यङ्गुलं दारु । पञ्चाङ्गुलम् । अङ्गुलि-तुल्यावयवयुक्तं धान्याद्युत्क्षेपणकाष्ठमिदमुच्यते ।

### ११५ । द्वित्रिभ्यां ष मूर्ध्नः ।

आभ्यां मूर्ध्नः षः स्यात् । द्विमूर्धः । त्रिमूर्धः । द्वित्रिभ्यां किम् ? "बहुमूर्ध्ना द्विमूर्धाश्च त्रिमूर्धाश्चाहता मृधे ।"

### ११६ । अप् पूरणीप्रमाण्योः ।

पूरणप्रत्ययान्तात् स्त्रीलिङ्गात् प्रमाणीशब्दाच्चाप् स्याद् बहुव्रीहौ । कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः । भार्य्याप्रमाणाः कुटुम्बिनः ।

(क) नेतुर्नक्षत्रपूर्वादुपसंख्यानम् । मृगो नेता यासां रात्रीणां ता मृगनेता रात्रयः । पुष्यनेताः ।

### ११७ । अन्तर्बहिर्भ्याञ्च लोम्नः ।

आभ्यां लोम्नोऽप् स्यात् । अन्तर्लोमः प्रावारः । बहिर्लोमः कम्बलः ।

### ११८ । अच् नासिकायाः संज्ञायां नसञ्चास्थूलात् ।

नासिकाया अच् स्यात् । नसञ्चादेशं कुर्य्यात् । द्रुणसः । गोनसः ।

अस्थूलात् किम् ? स्थूलनासिको वराहः। संज्ञायां किम् ? तुङ्गनासिकः।

(क) खरखुराभ्यां च नस् वक्तव्यः। खरणाः। खुरणाः। अच्प्रत्ययोऽपीष्यते। खरणसः। खुरणसः।

## ११९। उपसर्गाच्च।

प्रादेर्नासिकाया अच् स्यात्। नसादेशश्च। "उन्नसं दधती वक्त्रम्।" "विनसा हतबान्धवा।" अनुनासिकशब्दस्तु निपातनात्।

(क) वे ग्रो वक्तव्यः। विग्रः। एतत्तु नैगममिति स्मृतिः।

## १२०। सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः।

एतेऽष्टावजन्ता निपात्यन्ते। शोभनं प्रातरस्य सुप्रातः। शोभनं श्वोऽस्य सुश्वः। सुदिवः। "सुदिवेवारविन्दिनी।" शारेरिवास्य कुक्षिः शारिकुक्षः। चतस्रोऽश्रयोऽस्य चतुरश्रः। एण्या इव पादावस्यैणीपदः। अजपदः। प्रोष्ठपदः।

## १२१। नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्।

एभ्यो हलिसक्थिभ्यामज् वा स्यात्। अविद्यमानो हलिरस्य अहलः। अहलिर्वा। असक्थः। असक्थिर्वा। एवं सुहलः। सुहलिर्वा। दुर्हलः। दुर्हलिर्वा। सुसक्थः सुसक्थिर्वा।

## १२२। नित्यमसिच् प्रजामेधयोः।

नञादिभ्यः प्रजामेधयो रसिच् स्यात्। अप्रजाः। दुष्प्रजाः। सुप्रजाः। अमेधाः। दुर्मेधाः। सुमेधाः। "हन्त दुर्मेधसो हताः।" नित्यग्रहणादल्पमेधस इति जयादित्यः।

## १२३। बहुप्रजाश्छन्दसि।

छन्दः सूत्रम्।

## १२४। धर्मादनिच् केवलात्।

समासान्तो धर्मादनिच् स्यात्। प्रियधर्मा। कल्याणधर्मा। साक्षात्कृतो धर्मो यैस्ते साक्षात्कृतधर्माणो मुनय इति भाष्यप्रयोगः। केवलात् किम् ?

पदान्तरेण समस्ताद्धर्मान् मा भूत् । कुलस्य धर्मः कुलधर्मः । कृतः कुलधर्मोऽनेनेति कृतकुलधर्मः । दर्शितस्वधर्मः । यदातु त्रिपदो बहुव्रीहिः परमः स्वो धर्मोऽस्य तदा केवल एव धर्मशब्द इति परमस्वधर्मेत्येव भवति । यथातु जयादित्य स्तथा नैतत् ।

१२५ । जम्भा सुहरिततृणसोमेभ्यः ।

स्वादिभ्यो जम्भशब्दस्यानिजन्तो जम्भा स्यात् । सुजम्भा । हरितजम्भा । तृणजम्भा । सोमजम्भा । जम्भो भोजनम् । दन्तभेदश्च ।

१२६ । दक्षिणेर्मा लुब्धयोगे ।

लुब्धयोगश्चेदयमत्र निपात्यते । व्याधव्रणितदक्षिणाङ्गो दक्षिणेर्मा कुरङ्गः । लुब्धयोगे किम् ? दक्षिणेर्मम् ।

१२७ । इच् कर्मव्यतीहारे ।

कर्मव्यतीहारे बहुव्रीहाविच् स्यात् । दण्डादण्डि । केशाकेशि । बाहूबाहवि । नखानखि । मुसलामुसलि । "जल्पाजल्पि प्रवादिनाम् ।"

१२८ । द्विदण्ड्यादिभ्यश्च ।

प्रथमार्थे पञ्चमी । द्विदण्ड्यादय इजन्ता निपात्यन्ते । द्वौ दण्डावस्मिन् द्विदण्डि प्रहरणम् । द्विमुसलि । उभयाञ्जलि । उभयाहस्ति । 'प्रहस्तेनोभयाहस्ति निष्पिष्टरथसारथीन्" । एकपदि । उभयपदि । उभयादन्ति । गणपाठात् तत्पुरुषेऽपि । निकुच्यकर्णि धावति । प्रोह्यपादि । मयूरव्यंसकादिः ।

१२९ । प्रसंभ्यां जानुनोर्ज्ञुः ।

आभ्यां जानुनोर्ज्ञुरादेशः स्यात् । प्रज्ञुः । संज्ञुः ।

१३० । ऊर्द्ध्वाद् विभाषा ।

ऊर्द्ध्वाज् जानुनोर्ज्ञुर्वा स्यात् । ऊर्द्ध्वज्ञुः । ऊर्द्ध्वजानुर्वा ।

१३१ । ऊधसोऽनङ् ।

ऊधसन्तस्य बहुव्रीहेरनङादिश्यते । कुण्डोध्नी । घटोध्नी । स्त्रियामेवाभिधानान् महोधाः पर्जन्यः । "गवां गणाः प्रस्नुतपीवरोधसः" ।

१३२। धनुषश्च ।

अनङादिश्यते। शार्ङ्गधन्वा। गाण्डीवधन्वा। गृहीतधन्वा। धृतधनुषं पुष्पायुधमिति चिन्त्यम्। अथवा समासान्तविधिरनित्यः।

१३३। वा संज्ञायाम् ।

पुष्पधन्वा पुष्पधनुर्वा।

१३४। जायाया निङ् ।

जायान्तस्य निङादिश्यते। वलि यलोपः (६।१।६६)। युवतिर्जायास्य युवजानिः। प्रियजानिः। कमलाजानिः।

१३५। गन्धस्येदुत्पूतिसुसुरभिभ्यः।

उदादेर्गन्धस्येत् स्यात्। उद्गतो गन्धोऽस्योद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। समवेत एवाभिधानान्नेह। सुगन्ध आपणिकः।

१३६। अल्पाख्यायाम् ।

गन्धस्येत् स्यात्। अल्पः सूपोऽस्यां सूपगन्धिः स्थाली। दधिगन्धि भोजनम्। प्रेमगन्धि वचनम्।

१३७। उपमानाच्च ।

गन्धस्येत् स्यात्। पद्मस्येव गन्धोऽस्य पद्मगन्धिः। कुमुदगन्धिः।

१३८। पादस्य लोपोऽहस्त्यादिभ्यः।

उपमानात् पादस्य समासान्तो लोपः स्यात्। व्याघ्रपात्। सिंहपात्। अहस्त्यादिभ्यः किम्? हस्तिपादः। स्त्रीपादः। ग(क)ण्डोलपादः।

१३९। कुम्भपदीषु च ।

कुम्भपद्यादयः स्त्रियां कृतलोपा ङीबन्ता निपात्यन्ते। कुम्भपदी। शतपदी। एकोऽभिन्नः सर्वेषां पादोऽस्येति एकपदी मार्गः। गोधापदी। पादोऽन्यतरस्यामिति (४।१।८) ङीप्। पादः पत् (६।४।१३०)।

१४०। संख्यासुपूर्वस्य ।

एतत्पूर्वस्य पादस्य लोपः स्यात्। द्विपात्। "सुपाद् द्विरदनासोरुः"।

## १४१ । वयसि दन्तस्य दतृ ।

संख्यासुपूर्वस्य दन्तस्य दत्रादेशः स्यात् । द्विदन् वत्सः । षोड़शदन् वयःस्थः । षोड़न् गौः । सुदन् कुमारः । सुदती तरुणी । वयसि किम् ? द्विदन्तो गजः ।

## १४२ । छन्दसि च ।

छन्दः सूत्रम् ।

## १४३ । स्त्रियां संज्ञायाम् ।

स्त्रियां नाम्नि दन्तस्य दतृ स्यात् । सुदती । फालदती काचित् ।

## १४४ । विभाषा श्यावारोकाभ्याम् ।

आभ्यां दन्तस्य दतृ स्याद्वा । श्यावदन् । श्यावदन्तो वा । अरोकदन् । अरोकदन्तो वा । अरोकोऽदीप्तिः ।

## १४५ । अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।

एभ्यो दन्तस्य दतृ स्याद्वा । अग्रान्तात् कुन्दकुट्मलाग्रदन् कुन्दकुट्मलाग्रदन्तो वा । एवं शुद्धदन् । शुद्धदन्तो वा विप्रः । चकारादहिमूषिकगर्द्दभशिखरिभ्यश्चेति जयादित्यः । अहिदन्तः । अहिदन् वा । शिखरदती (51) ।

## १४६ । ककुदस्यावस्थायां लोपः ।

अवस्थायां ककुदस्यान्तस्य लोपः स्यात् । अजातककुद् वत्सः । स्थूलककुत् तरुणः । अवस्थायां किम् ? श्वेतककुदो वृषः ।

## १४७ । त्रिककुत् पर्वते ।

अयमत्र निपात्यते ।

## १४८ । उद्विभ्यां काकुदस्य ।

आभ्यां काकुदस्यान्त्यलोपः स्यात् । उद्गतं काकुदमस्य उत्काकुत् । विकाकुत् ।

---

(51) पक्वदाड़िमवीजाभं माणिक्यं शिखरं विदुरिति रत्नपारखप्रन्थः(?) । तन्वी श्यामा शिखरिदशना पक्वविम्बाधरोष्ठीत्यत्र तु शिखरिणः कोटिमन्त इति मल्लिनाथः ।

## १४९। पूर्णाद्विभाषा।

पूर्णात् काकुदस्यान्त्यलोपः स्याद् वा। पूर्णं काकुदमस्य पूर्णकाकुत्। पूर्णकाकुदो वा।

## १५०। सुहृद्दुर्हृदौ मित्रामित्रयोः।

अनयोरेतौ निपात्येते। सुहृन्मित्रम्। दुर्हृच्छत्रुः। मित्रामित्रयोः किम्? सुहृदयः साधुः। दुर्हृदयश्चौरः।

## १५१। उरःप्रभृतिभ्यः कप्।

उरःप्रभृत्यन्ताद् बहुव्रीहेः कप् स्यात्। व्यूढमुरो यस्य व्यूढोरस्कः। प्रियसर्पिष्कः। प्रिययशस्कः।

(1) अर्थान्नञः। अनर्थकः।

इह गणे लक्ष्मीरनड्वान् पयो नौः पुमानिति प्रथमैकवचनान्ताः पठ्यन्ते। तेन द्विवचनबहुवचनान्तात्शेषाद् विभाषेति (५।४।१५४) कप्। बहुलक्ष्मीर्बहुलक्ष्मीको वा। द्विपुमान् द्विपुंस्को वेति जयादित्यः। ग्रहणवता प्रातिपदिकेन तदन्तविधिनिषेधान्नेह। "प्लवङ्गनखकोटिभिः क्षतदृढोरसो राक्षसा" इति।

## १५२। इनः स्त्रियाम्।

इनन्तात् स्त्रियां कप् स्यात्। बहुदण्डिका शाला। बहुवाग्मिका सभा।

## १५३। नद्यृतश्च।

नद्यन्तादृदन्ताच्च कप् स्यात्। बहुस्त्रीको नृपः। बहुकुमारीको देशः। बहुधीबन्धूकः। बहुवीरबन्धूकः। बहुब्रह्मबन्धूकः। बहुदातृकः। बहुमातृकः। ऊन्नद्याः कबयं नेष्यते। स्त्रीति स्त्र्यधिकारविहितस्य ग्रहणात्। तेन शेषाद् विभाषेति कप् (५।४।१५४) बहुतन्त्री बहुतन्त्रीकः। सुवधूः सुवधूक इत्यादि।

## १५४। शेषाद्विभाषा।

यस्माद् बहुव्रीहेः समासान्तो न विहितस्ततः कप् वा स्यात्। बहुखट्वाकः। बहुखट्वकः। बहुखट्वो वा। बहुदण्डी राजा बहुदण्डिको वा। शेषात्

किम् ? प्रियपथः । प्रियधुरः । इकोऽनुत (४।१।६६) इति दीर्घविधानसामर्थ्याद् व्यवस्थितविभाषया वा न कप् । तेन नित्यम् ब्रह्मबन्धूः ।

## १५५ । न संज्ञायाम् ।

नाम्नि बहुव्रीहौ न कप् स्यात् । विश्वे देवा अस्य विश्वदेवः । विश्वयशाः कश्चित् ।

## १५६ । ईयसश्च ।

ईयसन्तान्नास्ति कप् । बहुश्रेयान् । शेषादिति (५।४।१५४) प्राप्ते । लिङ्गविशिष्ट । (प, ७२) ग्रहणात् । बहुश्रेयसी । बहुप्रेयसी । नद्यृतश्चेति । (५।४।१५३) प्राप्तः ।

## १५७ । वन्दिते भ्रातुः ।

स्तुत्यर्थाद् भ्रातु र्न कप् स्यात् । सुभ्राता लक्ष्मणः । प्रशस्तभ्राता । वन्दिते किम् ? चौरभ्रातृकः । पापभ्रातृकः ।

## १५८ । ऋतश्छन्दसि ।

छन्दः सूत्रम् ।

## १५९ । नाड़ीतन्त्र्योः स्वाङ्गे ।

नाड़ीतन्त्र्योर्न कप् । बहुनाड़िः कायः । बहुतन्त्री ग्रीवा । स्वाङ्गे किम् । बहुतन्त्रीका वीणा ।

## १६० । निष्प्रवाणिश्च ।

निपात्यते । निर्गता प्रवाणी यस्मात् स निष्प्रवाणि रपनीतशलाको नवकर्पटः । पूर्णः प्रत्ययाधिकारः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
पञ्चमाध्यायस्य चतुर्थः पादः ॥ ५।४ ॥
समाप्तः शतपादोऽध्यायश्च ।

अथ

# भाषावृत्तिः।

## षष्ठोऽध्यायः। प्रथमः पादः।

### १। एकाचो द्वे प्रथमस्य।

प्रथमस्यैकाचो द्वे भवत इत्यधिक्रियते प्राक् संप्रसारणात् (६।१।१३)। वक्ष्यति लिटि धातोरिति (६।१।८)। पपाच। जजागार।

### २। अजादेर्द्वितीयस्य।

अजादेर्धातोर्द्वितीयस्यैकाचो द्वे भवत इत्यधिक्रियते। वक्ष्यति सन्यङो रिति (६।१।९)। अटिटिषति। प्रतीषिषति।

### ३। न न्द्राः संयोगादयः।

अजादीनां धातूनां संयोगादिभूता नदरा न द्विरुच्यन्ते। उन्दिदिषति। अड्डिडिषति। अर्चिचिषति।

(क) वकारस्याप्ययं निषेधः। उब्जिजिषति।

(ख) यकारपरस्य रेफस्य न प्रतिषेधः। अरार्य्यते। अर्त्तर्यङि चेति (७।४।३०) गुणः।

(ग) ईर्ष्यतेस्तृतीयस्य। ईर्ष्यतेस्तृतीयस्य द्वे भवतः। तृतीयस्यैकाच इत्येके। ईर्षिषिषति।

(घ) व्यञ्जनस्येत्यपरे। ईर्ष्यिंयिषति। ईर्ष्यों यिः सन् वा द्विरिति चान्द्रं सूत्रम्।

(ङ) कण्ड्वादीनाञ्च। तृतीयस्यैकाचो द्वे भवतः। कण्डूयियिषति। असूयियिषति।

(च) वा नामधातूनाम्। तृतीयस्यैकाचो द्वे स्याताम्। अश्वीयियिषति। अशिश्वीयिषति वा।

(छ) यथेष्टमपरे नामधातूनाम्। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति वा। पुपुतित्रीयियिषतीत्यनार्षम्।

## ४। पूर्वोऽभ्यासः।

द्विरुक्तस्य पूर्वोऽभ्याससंज्ञः स्यात्। दित्सति। धित्सति। जीप्सति। ईर्त्सति। धिप्सति। धिप्सुः। अत्र लोपोऽभ्यासस्ये-(७।४।५८) त्यभ्यासकार्य्यम्।

## ५। उभे अभ्यस्तम्।

उभे द्विरुक्ते अभ्यस्तसंज्ञे स्याताम्। अदभ्यस्तात् (७।१।४)। ददति। बिभ्यति। नाभ्यस्ताच्छतु (७।१।७८) रिति नुम्निषेधः। ददत्। बिभ्यत्। उभे किम्? ईप्सति। ऐप्सन्।

## ६। जक्षित्यादयः षट्।

जक्षिर्धातुः। तदादयश्चान्ये षडभ्यस्तसंज्ञकाः स्युः। जक्षति। जाग्रति। दरिद्रति। चकासति। शासति। दीधीवेव्यौ छान्दसौ।

जक्षिजागृदरिद्राणां चकासेः शासोरेव च।
दीधीवेव्योश्च सप्तानां जक्षित्यादावुपग्रहः॥१॥

## ७। तुजादीनां दीर्घोऽभ्यासस्य।

छान्दसम्।

## ८। लिटि धातोरनभ्यासस्य।

लिटि परतो धातोरकृतद्विरुक्तेर्द्वे स्याताम्। पपाच। जजागार। इयेष। उवोष। प्रोर्णुनाव। इयाय। अनभ्यासस्येति किम्? पिपक्षतुः। पिपक्षुः।

## ९। सन्यङोः।

सन्नन्तस्य यङन्तस्य च धातोर्द्वे स्याताम्। पिपक्षति। यियक्षति। समीचिक्षिषति। इण् प्रतीषिषति। यङ्। पापच्यते। अटाट्यते।

## १०। श्लौ।

श्लौ द्वे स्याताम्। जुहोति। बिभेति। इयर्त्ति। ददाति।

## ११। चङि।

द्वे स्याताम्। अपीपचत्। अममालत्। पाचेश्चङि णिलोपः (६।४।५१)। उपधाङ्रस्वत्वम् (७।४।१)। द्विरुक्तिरिति क्रमः।

## १२। दाश्वान्साह्वान्मीढ्वांश्च।

छान्दसम्।

(क) कृञादीनां के द्वे। घञर्थे कः। चक्रम्। चिक्लिदम्।

(ख) वा चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य। एषां पचाद्यचि द्विरुक्तिर्वा स्यात्। वा अभ्यासस्याक्चागमः। तेन च हलादिशेषो (७।४।६०) बाध्यते। चराचरः। चलाचलः। पतापतः। वदावदः। पक्षे चरः। चलः। पतः। वदः। इत्येवार्थः।

(ग) हन्तेर्घत्वञ्च। हन्तेरचि द्वे स्यातां घनादेशोऽभ्यासस्याक्चागमः। घनाघनः। हन्तेत्यर्थः। उक्तं द्विर्वचनम्।

## १३। ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे।

पुत्रपत्योरुत्तरपदयोः ष्यङः संप्रसारणं स्यात्। कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। जातुकर्णीपतिः। ताम्रकर्णीपतिः। तत्पुरुषे किम्? कारीषगन्ध्यापति र्ग्रामः।

## १४। बन्धुनि बहुव्रीहौ।

बन्धावुत्तरपदे बहुव्रीहौ ष्यङः संप्रसारणं स्यात्। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः। बन्धुनीति क्लीबनिर्देशो रूपापेक्षः।

(क) मातच्मातृकमातृषु। ष्यङः संप्रसारणं विभाषा बहुव्रीहौ। कारीषगन्ध्यामातः कारीषगन्धीमातः वा। कालेन्यामातृकः कालेनीमातृकः वा। (1) वाराह्यामाता वाराहीमाता वा। वचनसामर्थ्यात्। मातुर्मातजादेशः। समासान्ताभावश्च।

---

(१) कलामाभिम ईश्वरः कलिगश्चन्द्रः। तत्रापत्य (७।१।९२) मित्यत इञ् (४।१।९५)। स्त्रियां ष्यङ् (४।१।७८)। कालिन्या।

## १५ । वचिस्वपियजादीनां किति ।

एषां किति संप्रसारणं स्यात् । वचे ब्रूञश्च । उक्तम् । उक्तवान् । उच्यते । असंयोगाल्लिट् कित् (१।२।५) । ऊचतुरूचुः । ऊचे । ञिस्वप् । सुप्यते । सुप्तम् । यजादयो नव ।

यजो वपो वहश्चैव वेञ्व्येञौ ह्वयतिस्तथा ।
वद्वसौ श्वयति श्चैव यजादयो नव स्मृताः ॥ १ ॥

इष्टम् । उप्तम् । ऊढम् । संवीतम् । निवृतम् । आहूतम् । उदितम् । उषितम् । उच्छूनम् । कथं सम्बदितम् ? वद स्थैर्ये ।

## १६ । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।

एषां ङिति किति च संप्रसारणं स्यात् । गृह्णाति । गृह्यते । जिनाति । जीयते । लिट्यन्यतरस्यामिति (२।४।४०) वेञो वयिः । ऊयतुः । ऊयुः । विध्यति । विद्धम् । वश उष्टः । उशन्ति । उशितवान् । उशितः । व्यच विचितम् । विचति । वृश्चति । वृक्णम् । पृच्छति । पृष्टम् । प्रश्नस्तु निपातनात् । भृज्जति । बरीभृज्यते । भृष्टम् ।

## १७ । लिट्यभ्यासस्योभयेषाम् ।

लिटि वच्यादीनां ग्रह्यादीनाञ्चाभ्यासस्य संप्रसारणं स्यात् । उवाच । उवचिथ । इयाज । इयजिथ । ग्रहिपृच्छतिभृज्जतीनामुरत्त्व-(७।४।६६) रपरत्व-(१।१।५१) हलादिशेषे (७।४।६०) न विशेषः । जग्राह । पप्रच्छ । बभ्रज्ज । जिज्यौ । जिज्यिथ । हलादिशेषादिद मिष्टम् । विव्याच । विव्याध ।

## १८ । स्वापेश्चङि ।

स्वापेश्चङि सम्प्रसारणं स्यात् । असूषुपत् । असूषुपताम् । असूषुपन् ।

## १९ । स्वपिस्यमिव्येञां यङि ।

एषां यङि संप्रसारणं स्यात् । सोषुप्यते । सेसिम्यते । व्येञः वेवीयते । यङि किम् ? स्वप्नक् ।

## २०। न वशः।

वशो यङि संप्रसारणं न स्यात्। वावश्यते।

## २१। चायःकी।

चायते र्यङि कीः स्यात्। चेकीयते। दीर्घग्रहणं यङ्लुगर्थम्। चेकीतः।

## २२। स्फायः स्फी निष्ठायाम्।

स्फायतेर्निष्ठायां स्फीः स्यात्। स्फीतः स्फीतवान्। निष्ठायां विधानं यावल्लिङ्यङोश्चेति (६।१।२९)। निष्ठायां किम्? स्फातिः।

## २३। स्त्यः प्रपूर्वस्य।

प्रपूर्वस्य स्त्यायतेः संप्रसारणं स्यात्। प्रस्तीतः प्रस्तीतवान्। प्रस्तीमः प्रस्तीमवान्। प्रपूर्वस्य किम्? संस्त्यानः। संस्त्यानवान्। पूर्वग्रहणं किम्। इहापि यथा स्यात्। प्रसंस्तीतः। प्रसंस्तीतवान्।

## २४। द्रवमूर्त्तिस्पर्शयोः श्यः।

अनयो रर्थयोः श्यैङः संप्रसारणं स्यात्। द्रवस्य मूर्त्तिः काठिन्यम्। शीनं घृतम्। शीना वसा। स्पर्शे। शीतं वर्त्तते। तद्योगाच्छीतो वायुः।

## २५। प्रतेश्च।

प्रतेः श्यैङस्तत् स्यात्। प्रतिशीनो विप्रः। प्रतिशीनवान्।

## २६। विभाषाऽभ्यवपूर्व्वस्य।

अभ्यवपूर्वस्य श्यैङस्तद्वा स्यात्। अभिशीनम्। अभिश्यानम्। अवशीनमवश्यानम्। अभ्यवपूर्वस्येति पूर्वग्रहणं किम्? अभिसंशीनम्। अभिसंश्यानम्।

## २७। शृतं पाके।

श्रातेः केवलस्य ण्यन्तस्य च पाके शृभावो निपात्यते। शृतं क्षीरम्। शृतं हविः। पक्वं पाचितं वा। क्षीरहविषोरेवाभिधानान्नेह। श्राणा श्रपिता यवागूः।

## २८। प्यायः पी।

प्यायतेर्निष्ठायां पीः स्यात्। पीनं मुखम्। पीनो बाहुः। सोपसर्गस्याभिधानान्नेह। प्रप्यानः।

(क) आङ्पूर्वस्यान्धूधसोः। आङि प्यायतेः पीः स्यात्। आपीनोऽन्धुः। आपीनमूधः। अन्धूधसोः किम्? "आप्यानस्कन्धकण्ठांशम्"। उक्तं निष्ठायाम्।

## २९। लिड् यङोश्च।

लिटि यङि च प्यायः पीः स्यात्। आपिप्ये। आपिप्याते। आपिप्यिरे। यङि। आपेपीयते।

## ३०। विभाषा श्वेः।

श्वयतेर्लिटि यङि च संप्रसारणं वा स्यात्। शुशाव शिश्वाय। शुशुवतुः। शिश्वियतुः। धातोरसम्प्रसारणे लिट्यभ्यासस्येत्यपि (६।१।१७) नेष्यते। यङि। शोशूयते। शेश्वीयते। शेश्वीयमानः।

## ३१। णौ च संश्चङोः।

संश्चङ्परे णौ श्वेः सम्प्रसारणं वा स्यात्। शुशावयिषति शिश्वाययिषति। चङि। अशूशवत्। अशिश्वयत्। इह कृते संप्रसारणे वृद्ध्यावादेशौ।

## ३२। ह्वः संप्रसारणम्।

ह्वयतेः संश्चङ्परे णौ नित्यं संप्रसारणं स्यात्। जुहावयिषति। अजूहवत्।

## ३३। अभ्यस्तस्य च।

अभ्यस्तनिमित्तस्य ह्वयतेः सम्प्रसारणं स्यात्। ततो द्विरुक्तिः। जुहाव। जोहूयते। जुहूषति। "समरायैव समाजुहूषमाणः।"

इह च्छन्दः सूत्रत्रयम्। (2)

---

(2) तत्र—(३४) बहुलं छन्दसि। ३५। चायः की। ३६। अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताःश्रितमाशीराशीर्त्ताः।

## ३७। न संप्रसारणे संप्रसारणम्।

संप्रसारणे परे पुनस्तन्नास्ति। विद्धम्। विचितम्। यूना यूने। समानाङ्गस्येति वक्तव्यम्। इह मा भूत्। उपेयुषेति। अत्र विभक्तौ वस्वन्तमङ्गम्। क्वसौ वसिति।

## ३८। लिटि वयो यः।

लिटि वयो यकारस्य संप्रसारणं नास्ति। ऊयतुः। ऊयुः।

## ३९। वश्चास्यान्यतरस्यां किति।

वयो यकारस्य लिटि किति वकारो वा स्यात्। ऊवतुः। ऊयतुः वा। ऊवुः। ऊयुः वा। "स्वमूयुर्वसुधामूवुः।" किति किम्? उवाय। उवयिथ।

## ४०। वेञः।

वेञो लिटि किति यजादित्वाद्‌किति च लिट्यभ्यासस्येति (६।१।१७) प्राप्तं संप्रसारणं नास्ति। ववौ। ववतुः। ववुः।

## ४१। ल्यपि च।

वेञो ल्यपि तन्नास्ति। प्रवाय। प्रतिवाय।

## ४२। ज्यश्च।

ज्यो ल्यपि तन्नास्ति। प्रज्याय।

## ४३। व्यश्च।

## ४४। विभाषा परेः।

व्येञो ल्यपि तन्नास्ति। प्रव्याय। परे र्वा। परिवीय। परिव्याय। उक्तं संप्रसारणम्।

## ४५। आदेच उपदेशेऽशिति।

एजन्तस्य धातोरुपदेशे आत्त्वं स्यात् अशिति न शिदादौ। (3) ग्लै ग्लानः। ग्लातुम्। सुग्लः। जग्ले। जग्लौ। ग्लाता। सुग्लानम्। मम्लौ मम्ले। सुम्लः। अशिति किम्? ग्लायति। धातोरित्येव। गोभ्याम्। उपदेशे किम्? चेता।

---

(3) एजन्तोपदेशस्य धातो राकारः स्यादिति क्वचित् पाठान्तरम्।

४६ । न व्यो लिटि ।

व्येञो लिट्यात्त्वं नास्ति । संविव्याय । संविव्ययिथ । परिविव्याय । किति तु संप्रसारणे परपूर्वाभ्यां नास्ति विशेषः । संविव्यतुः । संविव्युः ।

४७ । स्फुरतिस्फुलत्योर्घञि ।

घञन्तयोरेचः स्थाने आत्त्वं स्यात् । विस्फारः । विस्फालः । पक्षे षत्वम् (८।३।२७) । विष्फारः । विष्फालः ।

४८ । क्रीङ्जीनां णौ ।

एषां णौ पर एव आत्त्वं स्यात् । क्रापयति । अध्यापयति । अध्यापकः । जापयति । अर्त्तिह्रीत्यादिना (७।३।३७) पुक् ।

४९ । सिध्यतेरपारलौकिके ।

षिधु संराद्धावित्येतस्य णावेच आत्त्वं स्यात् । अर्थं साधयति । ग्रामं साधयति । अपारलौकिके किम् ? तपस्तापसं सेधयति । ज्ञानविशेषं लम्भयतीत्यर्थः । पारलौकिकग्रहणं ज्ञानविशेषोपलक्षणार्थमिति स्मृतिः ।

५० । मीनातिमिनोतिदीङां ल्यपि च ।

मीञ् डुमिञ् दीङां ल्यप्येजविषये च उपदेशे आत्त्वं स्यात् । प्रमाय । प्रमातव्यम् । निमाय । निमातव्यम् । उपदाय । उपदातव्यम् । घञि । उपदायो वर्त्तते । युचि । ईषदुपादानम् ।

५१ । विभाषा लीयतेः ।

लीनातिलीयत्योः परस्मैपदात्मनेपदिनोरयं यका निर्देशः सामान्यग्रहणार्थः । आत्त्वं वा स्यात् ल्यप्येज्विषये चानयोः । विलाय विलीय । विलातासि विलेतासि । विलातासे विलेतासे । व्यवस्थितविभाषया प्रलम्भनशालीनीकरणयोर्नित्यमात्त्वम् । शिशुमुल्लापयते । श्येनो वर्त्तिकामुल्लापयते ।

(क) मीमिलियां खलचोः प्रतिषेधः । ईषत्प्रलयः । विलयः । ईषन्निमयः । निमयः । निलयः ।

## ५२। खिदेश्छन्दसि।

छान्दसम्।

## ५३। अपगुरो णमुलि।

अस्य णमुलि परत एच आत्त्वं स्याद्वा। अस्यपगारं युद्ध्यन्ते। अस्यपगोरं वा। द्वितीयायाञ्चेति (३।४।५३) णमुल्। पल्लवगारं नृत्यन्ति पल्लवगोरं वा।

## ५४। चिस्फुरोर्णौ।

अनयोर्णिचि आत्त्वं स्याद्वा। चिञ आत्त्वपक्षे पुक्। चापयति। स्फारयति। पक्षे वृद्धिगुणौ। चाययति। स्फोरयति।

## ५५। प्रजने वीयतेः।

प्रजनार्थस्य वीधातोर्णिचि आत्त्वं स्याद्वा। पुरोवातो गाः प्रवापयति। पक्षे प्रवाययति। प्रथमगर्भं ग्राहयतीत्यर्थः। सूत्रे यका निर्देशोऽजेर्व्यीत्यस्यापि (२।४।५६) ग्रहणार्थं इत्याहुः।

## ५६। बिभेतेर्हेतुभये।

प्रयोजकाद् भये भियो णिचि आत्त्वं वा स्यात्। मुण्डो भापयते। मुण्डो भीषयते। हेतुभये किम्? अहिना भाययति। करणादत्र भयम्।

## ५७। नित्यं स्मयतेः।

स्मिङो णौ नित्यमात्त्वं स्यात्। जटिलो विस्मापयते। भीस्म्योर्हेतुभय इत्यात्मनेपदम् (१।३।६८)। हेतुभय इत्येव। करणाद् विस्मये मा भूत्। "रूपेण विस्माययति त्रिलोकीम्।" उक्तमात्त्वम्।

## ५८। सृजिदृशोर्झल्यमकिति।

सृजिदृशोर्झलादावकित्यमागमः स्यात्। गुणापवादः। स्रष्टा। द्रष्टा। अस्राक्षीत्। अद्राक्षीत्। अमि कृते वृद्धिः। अकिति किम्? सृष्टः। दृष्टः। दृष्टिः। सिसृक्षति। दिदृक्षते। झलि किम्? ससर्जिथ। ददर्शिथ।

## ५९। अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्।

अनुदात्तस्य ऋदुपधस्य धातो झलादावकित्यमागमः स्याद्वा। तर्प्ता त्रप्ता

तर्पिता वा । दर्प्ता द्रप्ता दर्पिता वा । अनुदात्तस्य किम् ? वृह उदात्तोपदेशः । वर्ढा । वर्ढुम् ।

## ६० । शीर्षंश्छन्दसि ।

## ६१ । ये च तद्धिते ।

यादौ तद्धितेऽर्थान्तरतस्याच् शिरसः स्थाने शीर्षन् स्यात् । शिरसि भवः शीर्षण्यः स्वरः ।

(क) वा केशेषु । शीर्षण्याः केशाः । शिरस्या वा ।

## ६२ । अचि शीर्षः ।

अजादौ तद्धिते शिरसः शीर्षः स्यात् । अन्निति (६।४।१४७) प्रकृतिभावो मा भूत् । हास्तिशीर्षिः पुत्रः । स्थौलशीर्षं वपुः । मृगशिरसा युक्ता मार्गशीर्षी तिथिः ।

## ६३ । पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।

पाददन्तनासिकामासहृदयनिशासृग्यूषदोर्यकृच्छकृदुदकासन (4) इत्येतेषां स्थाने यथासंख्यं पदादय आदेशाः स्युः । इह पद्दन्नोमासित्यत्र सूत्रे छन्दसीत्यनुवर्त्तत इत्यागमः । दृश्यन्ते च पाददन्ताद्यर्थे पद्दादिप्रयोगाः । पद्भ्यामुदर्त्तितस्य च । दतो धावति सुदती । हृदि विनिहितरूपः । (5) अप्रशस्तं निशि स्नानम् । पीते यूष्णि निरामयः । यद्दोष्णां भाति विंशतिरित्यादि । तदिमे ऽपशब्दा ऽत्येके । शब्दान्तराणीत्यन्ये । छन्दसीति नानुवर्त्तत इत्यपरे । छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्ते इति परे ।

(क) नस् नासिकाया यत् तसि क्षुद्रेष्ववर्णनगरयोः । एषु नासिकाया नस् स्यात् । नस्यम् । नस्या । नस्तः पतितः । नः क्षुद्रः । नेह । नासिक्यो वर्णः । नासिक्यं नगरम् ।

---

(4) इदं प्रामादिकमिति भट्टोजिः । आस्यशब्दस्यैवासन्नादेशः ।

(5) षड्धिकदशनाड़ीचक्रमध्ये स्थितात्मा हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः । अविचलितमनोभिः साधकैर्मृग्यमाणः स जयति परिणद्धः शक्तिभिः शक्तिनाथ इति मालतीमाधवपद्यम् ।

## ६४। धात्वादेः षः सः।

उपदेश इत्येव। धातोरादिषकारस्य दन्त्यः स्यात्। षह सहते। षिच सिञ्चति। आदेशप्रत्यययोरिति (८।३।५९) षत्वव्यवस्थार्थं षोपदेशा धातवः पठ्यन्ते। तदुक्तम् भाष्ये—"अजदन्त्यपराः षादयः षोपदेशाः स्मिङ्-स्विदिस्वदिस्वञ्जिस्वपयश्च। सृपिसृजिस्तृस्त्यासेकृस्ववर्जमिति।"

(क) सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः। षोडीयति। ष्ठीव्यति। ष्वष्कते।

## ६५। णो नः।

धात्वादिणकारस्य नः स्यात्। णत्वव्यवस्थार्थं णोपदेशा धातवः पठ्यन्ते। तदुक्तम् भाष्ये—"सर्वे णादयो णोपदेशा नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृ-नृवर्जमिति"। नयति। नमति। प्रणयति। प्रणमति। परिणयति। सुब्धातोरयं प्रतिषेधः। णकारीयति।

## ६६। लोपो व्योर्वलि।

वलि परे व्योर्लोपः स्यात्। तत्र वलोपश्छन्दस्येव सम्भवति। दिव् दिदिवान्। दिदिवांसौ। जीवेरदानुक्। जीरदानुः। व्रश्चव्रीहिव्रणादौ तु प्रतिषेधः। यलोपः। क्नूयी क्नूतः। क्नूतवान्। गोधेरः। पचेरन्। इहाप्यक्तलोपाद् वलि लोप इष्टः। कण्डूः। लोलूः। वलि किम्? भवेयुः।

## ६७। वेरपृक्तस्य।

अपृक्तसंज्ञकस्य वेर्लोपः स्यात्। क्विन्। घृतस्पृक्। क्विप्। ग्रामणीः। ण्विः। पादभाक्। अपृक्तस्य किम्? जागृविः।

## ६८। हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्।

एभ्यः सुतिप्सिपामपृक्तस्य हलो लोपः स्यात्। हलन्तात् सुलोपः। राजा। तक्षा। ङ्याबन्ताभ्यां दीर्घाभ्याम्। कुमारी। बहुश्रेयसी नृपः। खट्वा। दीर्घाभ्यां किम्? निष्कौशाम्बिः। अतिखट्वः। हल्ङ्याब्भ्यः किम्? ग्रामणीः। तिप्सिपो हलन्तादेव लोपसम्भवः। भृञो जागर्तेश्च लङि तिपि अबिभर्भवान्। अजागर्भवान्। "अपरस्तत्र परः पुमानजागः।"

अभिनस्त्वम् । अच्छिनस्त्वम् । अपृक्तस्य किम् ? जागर्त्ति । हलिति किम् ? बिभेद ।

## ६९ । एङ्ह्रस्वात् सम्बुद्धेः ।

एङो ह्रस्वाच्च सम्बुद्धे र्हलो लोपः स्यात् । हे अग्ने । हे वायो । हे पटो । ह्रस्वात् । हे नाथ । हे वृच्च । हे नदि । हे वधु । हे वनेत्यत्रामि पूर्वत्वे (६।१।१०७) कृते मकारमात्रस्य लोपः ।

## ७० । शेश्छन्दसि बहुलम् ।

छान्दसम् ।

## ७१ । ह्रस्वस्य पिति कृति तुक् ।

ह्रस्वान्तस्य धातोः पिति कृति तुगागमः स्यात् । अग्निचित् । प्रकृत्य । सङ्गत्य । ह्रस्वस्य किम् ? ग्रामणीः । आहूय । नेह । ग्रामणि कुलम् । ह्रस्वस्य बहिरङ्गस्यासिद्धेः । पिति किम् ? चितम् । स्तुतम् । कृति किम् ? पटुतरः ।

## ७२ । संहितायाम् ।

अनुदात्तं पदमित्यतः (६।१।१५७) प्रागयमधिकारः ।

## ७३ । छे च ।

छे परे ह्रस्वस्य तुगागमः स्यात् । इच्छति । गच्छति । चिच्छेद । चिच्छिदतुः । दधिच्छत्रम् । संहितायामित्येव । दधि छत्रम् ।

"संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया" ॥ १ ॥ (6) इति स्मृतिः ।

## ७४ । आङ्माङोश्च ।

आङ्माङोश्च च्छे परे तुक् स्यात् । पदान्ताद्वेत्यस्य (६।१।७६) बाधा । आच्छादयति । मा च्छेत्सीत् ।

(6) नित्या समासे वाक्ये तु सा विवक्षामपेक्षत इत्येके ।

७५। दीर्घात्।

दीर्घाच्छे तुक् स्यात्। म्रीच्छति। म्लेच्छति। छो चाच्छायते। कुप चोच्छुप्यते।

७६। पदान्ताद्वा।

पदान्ताद् दीर्घाच्छे तुक् स्याद्वा। नदीच्छाया नदीछाया। वधूच्छाया वधूछाया। उक्तस्तुक्सन्धिः।

७७। इको यणचि।

इकः स्थानेऽचि परे यण् स्यात्। दध्यत्र। मध्वत्र। कर्त्रत्र। संहितायामित्येव। दधि अत्र। मधु अत्र। कर्तृ अत्र।

(क) इकां यण्भिर्व्यवधानं व्याड़िगालवयोरिति वक्तव्यम्। (7) दधियत्र। भूवादयः। अचीति वर्त्तते यावत् संप्रसारणाच्चेति (६।१।१०८)।

(7) This is given as a वार्त्तिक by पुरुषोत्तम। But it does not occur in the वार्त्तिकपाठ by कात्यायन। Corresponding to this, there is a वार्त्तिक in अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (6. 4. 77) viz :—इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम् and the भाष्यकार illustrates it thus :—तन्वं पुषेम तनुवं पुषेम। विष्वं पश्य विषुवं पश्य। स्वर्गं लोकं सुवर्गं लोकम्। त्र्यम्बकं यजामहे त्रियम्बकं यजामहे। So, as it is distinctly Scriptural (Vedic), it does not support such usage as त्रियम्बकं संयमिनं ददर्श। Nor is यणा व्यवधानं व्याड़िगालवयोः (or as it is given by पुरुषोत्तम इकां यण्भिर्व्यवधानं व्याड़िगालवयोः) of sufficient authority. The injunctions of the Grammarians such as गालव, चाक्रवर्मण &c, who had flourished before पाणिनि, are to be considered now as repealed. Wherever the sage had found them worth retention, he had preserved them e.g. अङ् गार्ग्यगालवयोः (7. 3. 99), वा सुप्यापिशलेः (6. 1. 92), इ३, चाक्रवर्मणस्य (6. 1. 130), &c. Their other Rules are to be rejected. This is asserted and maintained by almost all the Brahminical Grammarians of the पाणिनि school such as भर्तृहरि, कैयट, हरदत्त, माधव, भट्टोजि, नागेश and others. Says कैयट in 5.2.21—"नियतकालाश्च स्मृतयो व्यवस्थाहेतव इति सुनित्रयमतेनाद्यत्वे साध्वसाधुप्रविभागः।" माधव (ie. सायणाचार्य) in his धातुवृत्ति asserts.

सूत्रवार्त्तिकभाष्येषु नायं पक्षः समर्थितः।
विरुद्धश्चेति तैरेवं न वयं बहु मन्महे॥ १॥

### ७८ । एचोऽयवायावः ।

एदोदैदौत्स्थानेऽचि परे अय् अव् आय् आव् इत्येते स्युः । चयनम् । लवनम् । चायकः । लावकः । कायति । गविल्याह । अस्मायाचष्टे । असावत्र ।

### ७९ । वान्तो यि प्रत्यये ।

एचो यादौ प्रत्यये वान्त आदेशः स्यात् । गव्यम् । शङ्कव्यम् । नाव्यम् । गामिच्छति गव्यति । वान्तः किम् ? यान्तो मा भूत् । रायमिच्छति रैयति । प्रत्यये किम् ? गोयानम् । गव्यूतिशब्दस्तु क्रोशयोजनवदव्युत्पन्न एव ।

### ८० । धातोस्तन्निमित्तस्यैव ।

यादौ प्रत्यये तद्धेतोरेव धात्वेचो वान्त आदेशः स्यात् । लव्यम् । पव्यम् । अवश्यलाव्यम् । तन्निमित्तस्य किम् ? लौयमानिः पुत्रः ।

---

भट्टोजि in his शब्दकौस्तुभ on 1. 1. 27 clears the point further "यत्तु कश्चिदाह चान्द्रवर्मण-व्याकरणे द्वयशब्दस्यापि सर्वनामताभ्युपगमात् तद्रीत्यायं प्रयोग इति ( व्यथा द्वयेषामपि मेदिनीभृतामिति माघे ) तदपि न । मुनित्रयमतेनेदानीं साध्वसाधुप्रविभागः । तस्यैवेदानीन्तनशिष्टै र्वेदाङ्गतया परिगृहीतत्वात् । दृश्यन्ते हि नियतकालाः स्मृतयो यथा कलौ पाराशरी स्मृतिः ।"—Again in his प्रौढ़मनोरमा on यङ लुक्—"यत्तु प्राचोक्तं धातुग्रहणेन यङ् लुकि वेति केचिदिति नैतत् त्रिमुनिमतमित्युपेक्षितम् । अर्वाचीन-मतानामेषैव गतिः । किं बहुना ? काशकृत्स्नादिमतानामेव मुनित्रयविरोधे उदासीनग्रहणमेव । एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम् । मुनित्रयमध्येऽपि यथोत्तरं प्रामाण्यमाश्रित्य भाष्यानुरोधेनैव व्यवस्थेति भर्तृहरि-कैयटहरदत्तादिसकलसम्मतम् । अतोऽर्वाचीनं यत्किञ्चिद्वचनं पुरस्कृत्य मनो न खेदनीयम् ।' The reason for such attempts to justify a word, so rigidly in accordance with *Panini's* Grammar, is that the words which cannot be defended by the tripartite Grammar of पाणिनि, कात्यायन and पतञ्जलि are incorrect and impure Sanskrit. As for the आर्ष applications, the sages were pious and independent. Their asceticism and transcendantal power kept them free from pollution for using such अपशब्द। भट्टोजि remarks—"असाधव एवैते ( आर्षप्रयोगाः ) । त्रिशङ्क्वाद्ययाज्ययाजनादिवत् तपोमाहात्म्यशालिनां मुनीनामसाधुप्रयोगोऽपि नातीव बाधते । अस्मदादीन् प्रति तु स्मृतिपुराणाद्यध्ययनविधिबलादेव तदन्तर्गत-स्तत्पाठो न बाधकः । तथाच स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येवेति नदीसंज्ञासूत्रे (१।४।३) भाष्यकैयटयोरपि स्थितमिदम् ।"—शब्दकौस्तुभ (1. 4. 8). As for the reading त्रियम्बकं संयमिनं ददर्श in the कुमारसम्भव, the ancient Bengal MSS. had it thus :—

स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।
आसीनमासन्नशरीरपात स्त्र्यम्बकं संयमिनं ददर्श ॥ १ ॥

८१। क्षय्यजय्यौ शक्यार्थे।

एतौ शक्यार्थे निपात्येते। क्षेतुं शक्यः क्षय्यः। जेतुं शक्यो जय्यः। शक्यादन्यत्र क्षेयः। जेयः।

८२। क्रय्यस्तदर्थे।

विक्रयार्थं प्रसारिते द्रव्ये क्रय्यो निपात्यते। क्रेयमन्यत्र।

८३। भय्यप्रवय्ये च च्छन्दसि।

छान्दसम्।

८४। एकः पूर्वपरयोः।

पूर्वपरयो रेकादेशो वाच्यः। अधिकारोऽयम्। प्राक् ख्यत्यात् परस्येति (६।१।११२)। वक्ष्यत्याद् गुणः (६।१।८७)। द्वयोरेकादेशो भवति। खट्वेन्द्रः।

८५। अन्तादिवच्च।

स एकादेशः पूर्वं प्रत्यन्तवत् परं प्रत्यादिवच्च विज्ञेयः। धीबन्धूः। धीबन्धूभ्याम्। पूर्वान्तवत्त्वे स्वादयः। वृक्षौ पटौ। परादिवत्त्वे सुबिति पदत्वम् (१।१।१४)। वर्णाश्रये नान्तादिवत्। खट्वाभिः। ऐस् न भवति।

८६। षत्वतुकोरसिद्धः।

षत्वे तुकि च कर्त्तव्ये स एकादेशोऽसिद्धः स्यात्। कोऽसिचत्। योऽसिचत्। कोऽस्य। योऽस्य। एङः पदान्तदतीत्यस्यासिद्धत्वाद् (६।१।१०९) इण इति (८।३।५७) षत्वं न भवति। अधीत्य। प्रेत्य। ह्रस्वस्य तुग् भवति (६।१।७१)।

(क) सम्प्रसारणङीट्सु प्रतिषेधो वक्तव्यः। षत्वं तुग्विकल्पश्च यथा स्यात्। शकं ह्वयति। शकहूषु। क्विपि संप्रसारणम्। वृक्षेच्छत्रम्। वृक्षेछत्रम्। इट्। अपचे च्छत्रम्। अपचे छत्रम्।

८७। आद् गुणः।

अवर्णान्तादचि द्वयोरेकादेशो गुणः स्यात्। तवेदम्। धनेन्द्रः। धनेशः। खट्वेयम्। खट्वेन्द्रः। खट्वेशः। खातोदकम्। गङ्गोदकम्। तवर्षिः। तवर्श्यः। खट्वर्श्यः। महर्षिः। तवल्कारः। खट्वल्कारः।

## ८८ । वृद्धिरेचि ।

अवर्णान्तादेचि परे वृद्धिः स्यात् । तवैड़का । खट्वैड़का । तवैतिकायनः । गङ्गौघः । ममौपगवः ।

## ८९ । एत्येधत्यूठ्सु ।

अवर्णान्तादेत्येधत्योरेचि ऊठि च परे वृद्धिः स्यात् । उपैति । उपैषि । प्रैति । प्रैधते । परैधति । धौतम् । धौतवान् । प्रष्ठौहः । एचीत्येव । उपेतः । उपेथः । अवेहि । अपेहि ।

(क) प्रादूढोढ्येषैष्येषु । प्रशब्दादूढादौ वृद्धिः स्यात् । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । इषे घञ्ण्यतौ ।

(ख) स्वादीरेरिणोः । वृद्धिः स्यात् । स्वैरम् । स्वैरी । स्वैरिणी बन्धकी ।

(ग) ऋते च तृतीयासमासे । वृद्धिःस्यात् । सुखार्त्तः । दुःखार्त्तः । क्षुधार्त्तः । कामार्त्तः ।

(घ) प्रवत्सरकम्बलवसनदशार्णानामृणे । वृद्धिः स्यात् । प्रार्णम् । वत्सरार्णम् । कम्बलार्णम् । वसनार्णम् । दशार्णम् । ऋणार्णम् । अक्षौहिणी-शब्दस्तु परिमाणविशेषस्य संज्ञा । अक्षादूहिन्यामिति व्युत्पत्तिमात्रम् । नान्वयः ।

## ९० । आटश्च ।

अचीत्येव । आटोऽचि वृद्धिः स्यात् । ऐक्षत । ऐक्षिष्ट । औक्षीत् । प्रौर्णावीत् । प्रार्ध्नोत् ।

## ९१ । उपसर्गादृति धातौ ।

अवर्णान्तात् प्रादेर् ऋकारादौ धातौ वृद्धिः स्यात् । प्रार्च्छति । उपार्च्छति । आर्त्तः ।

## ९२ । वा सुप्यापिशलेः ।

उपसर्गादृति सुब्धातौ वृद्धिर्वा स्यात् । उपार्षभीयति । उपर्षभीयति । ऋकारऌकारयोः सावर्ण्यात् । उपाल्कारीयति । उपल्कारीयति । आपिशलि-ग्रहणं पूजार्थम् ।

## ९३ । औतोऽम्शसोः ।

ओत आकारः स्यादमि शसि च परे । गां पश्य । गाः पश्य । द्यां पश्य । द्याःपश्य । सुपीत्येव । अचिनवम् । अकरवम् । ओतः किम् ? ग्लावम् ।

## ९४ । एङि पररूपम् ।

अवर्णान्तादुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात् । प्रेजते । उपोषति । प्रेलयति । प्रोखयति । केचिद्वा सुप्यापिशलेः ( ६।१।९२) रित्यनुवर्त्तयन्ति सुब्धातोर्विकल्पार्थम् । उपेडकीयति । उपैडकीयति ।

(क) शकन्ध्वादिषु पररूपं वक्तव्यम् । शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः केशेषु । सीमान्तोऽन्यः । गन्धर्वः । (8) अर्द्धशनम् । समशनम् । हलीषा । लाङ्गलीषा । मनसो लोपश्च । मनीषा । केनोभ्यते कुम्भः । शुद्धोदनः ।

(ख) ओत्वोष्ठयोः समासे वा । स्थूलोतुः स्थूलौतुः । बिम्बोष्ठी । बिम्बौष्ठी । समासे किम् ? पश्यौष्ठम् ।

(ग) एवे चानियोगे । इहएव इहेव । अद्येव । नियोगे तु । इहैव भव मा गाः । "अद्येव नाधिशयितो रुधिरार्द्रशय्याम् ।"

## ९५ । ओमाङोश्च ।

अवर्णान्तादोम्याङि च परे पररूपमेकादेशः स्यात् । का ओमिति कोमिति । सोमित्यवोचत् । आ ऊढा ओढा । अद्योढा । कदोढा । आ इहि एहि । उपेहि । (9) अवेहि । वृद्धिरेचीत्यस्यापवादः ( ६।१।८८ ) । आ ऋच्छते अर्च्छते । उपर्च्छते । इह तु सवर्णदीर्घं ( ६।१।१०१ ) बाधते ।

## ९६ । उस्यपदान्तात् ।

अपदान्तादवर्णादुसि परे पूर्वपरयोः पररूपमेकादेशः स्यात् । आद्गुणापवादः ( ६।१।८७ ) । भिन्द्या उस् भिन्द्युः । छिन्द्युः । अदुः । अधुः । अपदान्तात् किम् ? का उस्रा कोस्रा । कोषिता ।

---

(8) गन्धमर्दतीति । अशनस्यार्द्धमर्द्धशनम् । "अट्टहासमशिवं शिवदूती चकार हे"ति देवीमाहात्म्ये । असीः कतन्त इति सीवः ।

(9) तामुपैहि महाराज शरणं परमेश्वरीमिति त्वार्षः प्रयोगः ।

(क) उस्रोमाङ्क्वाटः प्रतिषेध इति भाष्यम् । उस्रामैच्छत् । औस्रीयत् । ओमि औङ्कारीयत् । आङि । औढ़ीयत् ।

## ९७ । अतो गुणे ।

अपदान्तादतो गुणे पररूपं स्यात् । पचन्ति । पचे । यजे । अतःकिम् । यान्ति । यातः पश्य । गुणे किम् ? अपचे । अपदान्तादित्येव । दण्डाग्रम् ।

## ९८ । अव्यक्तानुकरणस्यात इतौ ।

अस्फुटानुकरणस्याच्छब्दस्येतिशब्दे परे पररूपं स्यात् । पटदिति पटिति । दमदिति दमिति । (10) अव्यक्तानुकरणस्य किम् ? जगदिति । अतः किम् ? मरुदिति । इतौ किम् ? पटदत्र । अदिति नास्ति । अनभिधानात् । कथं घटदिति गम्भीरे रम्बुदैर्नदितमिति ? दान्तमनुकरणम् ।

## ९९ । नाम्रेड़ितस्यान्त्यस्य तु वा ।

पूर्वो विधिराम्रेड़ितस्य न स्यात् । आम्रेड़ितस्य अव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूपं न स्यात् । अन्त्यस्य तु तकारस्य वा । पटत्पटदिति करोति पटत्पटेति करोति वा । नित्यवीप्सयो (८।१।४) रिति द्विरुक्तिः ।

## १०० । नित्यमाम्रेड़िते डाचि ।

अव्यक्तस्य अच्छब्दस्यान्त्यस्य डाजन्ते आम्रेड़िते परे नित्यं पररूपं स्यात् । पटपटाकरोति । पटपटाकृत्य । दमदमाकृत्य । डाचि बहुलमिति (८।१।१२, वा) द्विरुक्तिः । ततष्टिलोपः ।

## १०१ । अकः सवर्णे दीर्घः ।

सवर्णेऽचि अको दीर्घः स्यात् पूर्वपरयोः । दण्डाग्रम् । शैलाग्रम् । वनाग्रम् । तवास्यम् । लताग्रम् । योषास्यम् । महीन्द्रः । नदीहते । मधूष्णम् । मधूपमम् । वधूढ़ा । होतृश्यः । सवर्णे किम् ? दध्यत्र । अचीत्येव । कुमारी शेते ।

(क) ऋति ॠ र्वा । ऋकारे सवर्णे परे ॠरित्ययं द्विमात्रो रेफभागद्वययुक्त आदेशो वा स्यात् । पितृऋणम् पितॄणम् । पक्षे एकरेफ एव दीर्घः । पितृणम् ।

---

(10) तड़िति तिलतुल्यां यान्यगेन्द्रा युगान्त इति सूर्य्यशतके ।

(ख) ऌति ऌवा । ऌकारे सवर्णे द्विलकारभागयुक्तो ॡकारो वा स्यात् । होतॢकारः होतॢकारः। पक्षे ऌतो दीर्घस्याभावादृकारऌकारयोः सावर्ण्यादिकरेफ एव दीर्घ ॠकारः। होतॄकारः ।

## १०२ । प्रथमयोः पूर्वसवर्णः ।

प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घः स्यात्। वृक्षाः। वृक्षान्। अग्नी। वायू। अग्नीन्। वायून्। बुद्धीः। अचीत्येव। वृक्षः। अकइत्येव। नावौ।

## १०३ । तस्माच्छसो नः पुंसि ।

अनन्तरदीर्घाच्छसोऽवयवस्य नः स्यात्। वृक्षान्। वटान्। माणवकान्। पर्वतान्। प्लक्षान्। अग्नीन्। गिरीन्। पटून्। पितॄन्। नॄन्। कर्तॄन्। तस्मात् किम् ? गाः पश्य। पुंसि किम् ? चञ्चाः। वध्रिकाः पश्य। बुद्धीः। धेनूः। मातॄः।

## १०४ । नादिचि ।

अवर्णान्तादिजाद्योः प्रथमयोः पूर्वसवर्णदीर्घो न कर्त्तव्यः। वृक्षौ। खट्वे। कुण्डे। आदिति किम् ? अग्नी। इचि किम् ? वृक्षाः।

## १०५ । दीर्घाज्जसि च ।

दीर्घादिचि जसि च पूर्वसवर्णदीर्घो न स्यात्। नद्यौ। धीबन्ध्वौ। जसि। नद्यः। धीबन्ध्वः। खट्वा स्तिष्ठन्तीत्यकः सवर्णे दीर्घः (६।१।१०१)।

## १०६ । वा छन्दसि ।

छान्दसम्।

## १०७ । अमि पूर्वः ।

अकोऽमि परे पूर्वरूपमेकादेशः स्यात्। वृक्षम्। खट्वाम्। अग्निम्। नदीम्। वायुम्। वधूम् पश्य।

## १०८ । सम्प्रसारणाच्च ।

सम्प्रसारणादचि परे द्वयोः पूर्वरूप मेकादेशः स्यात्। इष्टम्। उप्तम्।

ऊढ़म् । आहृतम् । गृहीतम् । कथं शकन्ध्वर्थम् । जातौ पदार्थे कृतक-त्वात् कार्य्यस्य ।

१०९ । एङः पदान्तादति ।

एङोऽति परे पूर्वरूपमेकादेशः स्यात् । अग्नेऽत्र । पटोऽत्र । वायोऽत्र । पदान्तात् किम् ? नयनम् । लवनम् । अति किम् ? पटविह । तपरः किम् ? वायवायाहि ।

११० । ङसिङसोश्च ।

एङो ङसिङसोरति परे पूर्वरूप मेकादेशः स्यात् । गिरेरागतम् । गिरेः स्वम् । गुरोरागतम् । गुरोः स्वम् ।

१११ । ऋत उत् ।

ऋकारान्तान् ङसिङसोरति परे पूर्वपरयोरेकादेश उत्वं स्यात् । होतुरागच्छति । पितुराज्ञा । उक्त एकादेशः ।

११२ । ख्यत्यात् परस्य ।

खितिशब्दौ ह्रस्वौ खीतीशब्दौ दीर्घौ वा कृतयणादेशौ ख्यत्यौ । ताभ्यां परस्य ङसिङसोरत उत्वं स्यात् । सख्युरायाति । सख्युःस्वम् । पत्युरागतम् । पत्युःस्वम् । क्यजन्तात् सखीयतेः क्विप् प्रत्ययः सखीः । सख्युः । पतीः पत्युः । कथं लून्युः पून्युः क्षाम्युः ? नत्वमत्वे पूर्वत्रासिद्धम् ( ८।२।१ ) ।

११३ । अतो रोरप्लुतादप्लुते ।

अतीत्येव । अतः परस्य रो रेफस्याति परे उकारः स्यात् । वृक्षोऽत्र । नभोऽत्र । आश्रयाद्रोरसिद्धत्वं नास्ति । अतः किम् ? अग्निरत्र । तपरः किम् ? वृक्षा अत्र । रोः किम् ? स्वरत्र । प्रातरत्र । अतीत्येव । वृक्षइह । पुनस्तपरः किम् । वृक्ष आश्रितः ।

११४ । हशि च ।

हशि परे अत उत्तरस्य रो रेफस्योत्वं स्यात् । विप्रो हसति । विप्रो याति । देवो वर्षति ।

## ११५। प्रकृत्यान्तःपादमव्यपरे।

प्रकृत्येत्यधिकारोऽयम्। शेषञ्छान्दसः। इह च्छन्दःषट्सूत्री। (11)

## १२२। सर्वत्र विभाषा गोः।

सर्वत्रेति च्छन्दोऽधिकारनिवृत्त्यर्थम्। मण्डूकप्लुत्या एङोऽतीति वर्त्तते। अति परे गोरेङ् प्रकृत्या स्याद्वा। गो अग्रम्। गोऽग्रम्। गवाग्रं वा। गो अग्रम्। गोऽग्रम्। गवाग्रं वा।

## १२३। अवङ् स्फोटायनस्य।

अतीति निवृत्तम्। अचीति वर्त्तते। गोरचि परे अवङ् वा स्यात्। गवाजिनम्। गवोष्ट्रम्। पक्षे गो अजिनम्। गोऽजिनम्। गवुष्ट्रम्। ग उष्ट्रम् (12)। व्यवस्थितविभाषया नित्यं गवाक्षः। विभाषानुवृत्तौ स्फोटायन-ग्रहणं पूजार्थम्।

## १२४। इन्द्रे च नित्यम्।

गोरिन्द्रे नित्यमवङ् स्यात्। गवेन्द्रः।

## १२५। प्लुतप्रगृह्या अचि।

प्लुत इति स्वरभागः। प्रगृह्यसंज्ञका अचि नित्यं प्रकृत्या स्युः। अग्नी अत्र। वायू इमौ। पचेते इमौ। अत्र नित्यानुवृत्तिः किम्? इकोऽसवर्णे ह्रस्वो मा भूत् (६।१।१२७)।

## १२६। आङोऽनुनासिकश्छन्दसि।

छान्दसम्।

## १२७। इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च।

पदान्तादित्येव। पदान्तस्येकोऽसवर्णेऽचि प्रकृतिभावो ह्रस्वश्च शाकल्यस्य

---

(11) ११६। अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च। ११७। यजुष्युरः। ११८। आपोजुषाणो-वृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे। ११९। अङ्ग इत्यादौ च। १२०। अनुदात्ते च कुधपरे। १२१। अवपथासि च।

(12) अत्र गकारात् परस्य पदान्तवकारस्य लोपः शाकल्यस्येति (८।३।१९) वैकल्पिको लोपः।

सम्मतः (13) । दधि अत्र । कुमारि अपि । नदि आयाति । वधु ऋतुः । पदान्तानुवृत्तिः किम् ? कुमार्य्यौ कुमार्य्यः ।

(क) सिन्नित्यसमासयोः शाकलप्रतिषेधः । ऋत्वियः । छन्दसि घस् (५।१।१०६) । नित्यसमासे । व्याकरणम् । कुमार्य्यर्थम् । (14)

१२८ । ऋत्यकः ।

ऋति परेऽकः शाकल्यस्य मतेन (15) प्रकृत्या स्युः । ह्रस्वश्च । स्थूल ऋश्यः । हिम ऋतावपि ता भूशस्विदः । उच्चारितरुचिरऋचाञ्चाननाना-ञ्चतुर्णाम् । खट्व ऋश्यः । होत ऋश्यः । अकः किम् ? वृक्षे ऋश्यः वृक्षयृश्यः । उक्तः प्रकृतिभावः ।

१२९ । अप्लुतवदुपस्थिते ।

१३० । ई३ चाक्रवर्म्मणस्य ।

सूत्रद्वय ञ्छान्दसम् ।

१३१ । दिव उत् ।

पदान्तग्रहणमनुवर्त्तते । दिवः पदान्तस्योत् स्यात् । विमलद्यु दिनम् । व्यपदेशिवद्भावात् पदान्तत्वे द्युकामः । द्युमनाः । द्युभ्याम् । द्युभिः । निरनुबन्धकस्य ग्रहणान्नेह । अक्षद्यूभ्याम् । अक्षद्यूभिः । पदान्तस्य किम् ? दिवौ दिवः ।

१३२ । एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।

एतत्तदोर्हलि सुलोपः स्यात् । एष दाता । स भोक्ता । अकोः किम् ?

---

(13) शाकल्यग्रहणादयं प्रकृतिभावो वैकल्पिक एव । अतः पक्षे संहितायां दध्यत्र । कुमार्य्यपि । नद्यायाति । वध्वृतुः ।

(14) वार्त्तिककारः केवलं नित्यसमास एव शाकलप्रतिषेधं कृतवान् । भाष्यकारस्तु समासमात्रे । तथाह्यत्र भाष्यम्—"नित्यग्रहणेन नार्थः । सितसमासयोः शाकलं न भवतीत्येव । इदमपि सिद्धं भवति । वाप्यामश्वो वाप्यश्वः । नद्यामाति नद्यातिॅ"रिति । तेनात्र समासे संहिताया अभावश्रुतसंस्कृतिरेव । यथोत्तरं मुनीनां प्रामाण्यात् ।

(15) अयं प्रकृतिभावः समासेऽपि स्यात् । यथा हिमऋतौ । उच्चारितरुचिरऋचाम् । वैकल्पिकश्च । अतः पक्षे स्थूलर्श्यः । हिमर्त्तौ । उच्चारितरुचिरर्चाम् । खट्वर्श्यः । होतृर्श्यः होतर्श्यो वा ।

एषको दाता। सको भोक्ता। अनञ्समासे किम्? अनेषो ददाति। "प्रतीयते संप्रति सोऽप्यसः परैः"। हलि किम्? एषोऽत्र। इहच्छन्दः-सूत्रद्वयम्।

१३३। स्यश्छन्दसि बहुलम्।

१३४। सोऽचि लोपे चेत् पादपूरणम्।

अत्र ऋक्पादपूरणं श्लोकपादपूरणञ्च गृह्यते। तेन

सैष दाशरथी रामः सैष राजा युधिष्ठिरः।
सैष कर्णो महात्यागी सैष भीमो महाबलः॥१॥

इति भाषायामपि स इत्यस्याचि सुलोप इत्येके।

१३५। सुट् कात् पूर्वः।

१३६। अड्भ्यासव्यवायेऽपि।

एतद्द्वयमधिक्रियते। टकारः सद्दसुट्सुस्वञ्जामिति (८।३।७०) विशेषणार्थः।

१३७। सम्पर्य्युपेभ्यः करोतौ भूषणे।

एभ्यो भूषणार्थे करोतौ कात् पूर्वः सुट् स्यात्। संस्करोति। परिष्कारः। उपस्क्रियते। उपस्कारः। उपस्कर्त्तव्यः। अड्भ्यासव्यवायेऽपि। समस्कार्षीत्। सञ्चस्कार। भूषणे किम्? उपकरोति। यत्त्विदमनित्याः सर्वे संस्काराः सर्वं संस्कृतमनित्यमिति कार्य्यपर्य्यायः संस्कृतशब्दः सोऽव्युत्पन्न एव।

१३८। समवाये च।

अत्र तेभ्यः क्ति सुट् स्यात्। संस्कृतम्। परिष्कृतम्। उपस्कृतम्। समवेतमित्यर्थः।

१३९। उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु।

उपात् करोतावेषु सुट् स्यात्। प्रतियत्ने। एधो दकस्योपस्कुरुते। विकृतमेव वैकृतम्। उपस्कृतं भुङ्क्ते। गम्यमानार्थस्य वाक्यस्योपा-

दानं वाक्याध्याहारः । "उपस्कृतं जल्पति नित्य मेषः कथन्नु भो निश्चिनुमः पदार्थम्" ।

## १४० । किरतौ लवने ।

उपात् किरतौ कात् पूर्वः सुट् स्यात् । उपस्कीर्य्य लुनन्ति । लवने किम् ? उपकिरति पुष्पम् ।

## १४१ । हिंसायां प्रतेश्च ।

प्रत्युपाभ्यां किरतौ हिंसायां सुट् स्यात् । प्रतिस्कीर्णः । उपस्कीर्णो विप्रः । "उरोविदारं प्रतिचस्करे नखैः" । उपस्कीर्णो दस्युः । हिंसापूर्वकं विक्षिप्त इत्यर्थः ।

## १४२ । अपाच्चतुष्पाच्छकुनिष्वालेखने ।

किरतौ अपाच्चतुष्पाच्छकुनिषु यदालेखनं तत्र सुट् स्यात् । हर्षजीविका-कुलायकरणेष्वभिधानम् । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी । अन्यत्रापकिरति श्वा ओदन-पिण्डमाश्रितः ।

## १४३ । कुस्तुम्बुरूणि जातिः ।

ससुट्कमिदं निपात्यते जातिश्चेत् । बहुवचनमतन्त्रम् । कुस्तुम्बुरु-र्धन्याकम् । कुस्तुम्बुरूणि तत्फलानि ।

## १४४ । अपरस्पराः क्रियासातत्ये ।

अपरस्परा इति क्रियासातत्ये ससुट्कं निपात्यते । अपरस्पराः सार्था गच्छन्ति । अविच्छेदेन यान्तीत्यर्थः । सातत्ये किम् ? अपरपरा यान्ति । इह सातत्यशब्दप्रसङ्गादागतभाष्यवाक्यार्थं गृहीत्वा कस्यचिच्छ्लोकः ।

> लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि ।
>
> समो वा हिततयो र्मांसस्य पचि युड्घञोः ॥१॥ इति ।

अवश्यलाव्यम् । अवश्यस्तुत्यम् । संहितायामित्येव । अवश्यं वक्तव्य मिति भाष्ये व्यवस्थितम् । तुमुनः समश्च काममनसोरन्त्यं लुम्पेत् । भोक्तु-कामः । भोक्तुमनाः । सम्यक् कामोऽस्य सकामः । समनाः । वा हित-

ततयोश्च। सम इत्येव। सहितम्। संहितम्। सततम्। सन्ततम्। "सततं निशामयन्त उत्सुकाः" व्यवस्थितविभाषया नित्यं सातत्यमिति स्मृतिरस्ति। मांसस्य पचि युड्घञोरिति। अन्त्यलोपो वा। मांस्पचनम्। मांसपचनम्। मांस्पाकः (16)। मांसपाकः। सूत्रार्थे केचिदनुस्वारस्य च लोप मिच्छन्ति। मास्पचनम्। मास्पाक इति। तत् तु तन्त्रभाष्यवाक्यस्याभावात् सन्दिग्धमिति भागवृत्तिः।

## १४५। गोष्पदं सेवितासेवितप्रमाणेषु।

सुट्षत्वाभ्यामिदं निपात्यते। गोभिः सेवितो गोष्पदो देशः। अविद्यमानसेवितान्यगोष्पदान्यरण्यानि। प्रमाणे गोष्पदं क्षेत्रम्। गोष्पदपूरं वृष्टो देवः।

## १४६। आस्पदं प्रतिष्ठायाम्।

सुटि निपात्यते। को नामास्पदं त्याजितः? प्रतिष्ठामित्यर्थः। अन्यत्रापदम्।

## १४७। आश्चर्य्यमनित्ये।

अनित्यमागन्तुक मद्भुतम्। तत्राश्चर्य्यं स्यात्। आश्चर्य्यमबन्धन मन्तरीक्षान्न पतति नक्षत्रचक्रम्। अद्भुते किम्। आचर्य्यं कर्म शोभनम्।

## १४८। वर्चस्केऽवस्करः।

कुत्सितं वर्चो वर्चस्कम्। तत्रावस्करः स्यात्। अवकरोऽन्यत्र।

## १४९। अपस्करो रथाङ्गम्।

अयमत्र निपात्यते।

## १५०। विष्किरः शकुनि र्विकिरो वा।

वा सुटि विष्किरो विकिरश्च स्याच् शकुनिश्चेत्।

---

(16) मांस्पचनं मांस्पाक इत्यत्रावस्थयादित्वेन (१।४।२०) भत्वात् संयोगान्तलोपो (८।२।२३) न। मांस्पचन्या उखाया इति भाष्यकारप्रयोगप्रामाण्यात्।

## १५१। ऋक्षाच्चन्द्रोत्तरपदे मन्त्रे।

छन्दःसूत्रमिकम्।

## १५२। प्रतिष्कशश्च कशेः।

कशेः सौत्रात् पचाद्यचि सुटि षत्वं निपात्यते। प्रतिष्कशः पुरोयायी। कशेः किम्? कशां प्रतिगतः प्रतिकशोऽश्वः।

## १५३। प्रस्कण्वहरिश्चन्द्रावृषी।

इमौ निपात्येते ऋषी चेत्।

## १५४। मस्करमस्करिणौ वेणुपरिव्राजकयोः।

मस्करो वेणुः स्यात्। मा कुरुत कर्माणि शान्तिर्वः श्रेयसीति माकरणशीलो मस्करी परिव्राजकः। अन्यत्र मकरो ग्राहः। मकरी समुद्रः।

## १५५। कास्तीराजस्तुन्दे नगरे।

इमे निपात्येते। कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्।

## १५६। कारस्करो वृक्षः।

कारकरोऽन्यत्र।

## १५७। पारस्करप्रभृतीनि च संज्ञायाम्।

अमूनि नाम्नि यथापाठं साधूनि स्युः। पारस्करो देशः। रथस्पा नदी। किष्किन्धः पर्वतः। किष्कुः। वनस्पतिः। "परःशताद्या स्ते येषां पराः संख्याःशतादिकात्।"

(क) तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च। तस्करश्चौरः। बृहस्पति र्देवता।

(ख) प्रायस्य चित्तिचित्तयोः। प्रायश्चित्तिः। प्रायश्चित्तम्। आकृतिगणोऽयम्। पूर्वे योगा अस्यैव प्रपञ्चाः। उक्तः सुट्। इदानीं स्वरसूत्राणि

यावदलुगुत्तर पद इति (६।३।१) । भाषायां तु स्वरलक्षणं न निबध्यते । स्वरस्य लोकाप्रचारदर्शनादित्युक्तम् । (17)

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ षष्ठाध्यायस्य प्रथमः पादः ॥६।१॥

समाप्तश्चैकाच्पादः ॥

---

(17) The aphorisms omitted here in the text are given below to have the सूत्रपाठ complete.

१५८। अनुदात्तं पदमेकवर्जम्। १५९। कर्षात्वतो घञोऽन्त उदात्तः। १६०। उञ्छादीनाञ्च।
१६१। अनुदात्तस्य च यत्रोदात्तलोपः। १६२। धातोः। १६३। चितः। १६४। तद्धितस्य।
१६५। कितः। १६६। तिसृभ्यो जसः। १६७। चतुरः शसि।
१६८। सावेकाचस्तृतीयादि विंभक्तिः। १६९। अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे।
१७०। अञ्चेश्छन्दस्यसर्वनामस्थानम्। १७१। ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः।
१७२। अष्टनो दीर्घात्। १७३। शतुरनुमो नद्यजादी।
१७४। उदात्तयणो हल्पूर्वात्। १७५। नोङ्धात्वोः। १७६। ह्रस्वनुड्भ्यां मतुप्।
१७७। नामन्यतरस्याम्। १७८। ङ्याश्छन्दसि बहुलम्। १७९। षट्त्रिचतुर्भ्यो हलादिः।
१८०। झल्युपोत्तमम्। १८१। विभाषा भाषायाम्। १८२। न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः।
१८३। दिवो झल्। १८४। नृ चान्यतरस्याम्। १८५। तित् स्वरितम्।
१८६। तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुक मनुदात्तमह्न्विङोः।
१८७। आदिः सिचोऽन्यतरस्याम्। १८८। स्वपादिर्हिंसामच्यनिटि। १८९। अभ्यस्तानामादिः।
१९०। अनुदात्ते च। १९१। सर्वस्य सुपि। १९२। भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति।
१९३। लिति। १९४। आदिर्णमुल्यन्यतरस्याम्। १९५। अचः कर्तृयकि।
१९६। थलि च सेटीड्न्तो वा। १९७। ञ्नित्यादि र्नित्यम्।
१९८। आमन्त्रितस्य च। १९९। पथिमथोः सर्वनामस्थाने। २००। अन्तश्च तवै युगपत्।
२०१। क्षयो निवासे। २०२। जयः करणम्। २०३। वृषादीनाञ्च।
२०४। संज्ञायामुपमानम्। २०५। निष्ठा च द्व्यजनात्। २०६। शुष्कधृष्टौ।
२०७। आशितः कर्ता। २०८। रिक्ते विभाषा। २०९। जुष्टार्पिते च च्छन्दसि।
२१०। नित्यं मन्त्रे। २११। युष्मदस्मदोर्ङसि। २१२। ङयि च। २१३। यतो नावः।
२१४। ईड्वन्दवृशंसदुहां ण्यतः। २१५। विभाषा वेण्विन्धानयोः। २१६। त्यागरागहासकुहश्वठक्रथानाम्।
२१७। उपोत्तमं रिति। २१८। चङ्यन्यतरस्याम्। २१९। मतोः पूर्वमात् संज्ञायां स्त्रियाम्।
२२०। अन्तोऽवत्याः। २२१। ईवत्याः। २२२। चौ। २२३। समासस्य। इति।

अथ

# भाषावृत्तिः ।

## षष्ठोऽध्यायः । तृतीयः पादः ।

### १ । अलुगुत्तरपदे । (18)

उत्तरपदेऽलुग् वाच्यः । अधिकारोऽयमा पादपरिसमाप्तेः ।

---

(18) Though the द्वितीयपाद of the षष्ठाध्याय is totally omitted by the author, the Section is here transcribed for reference to any of its *Sutras*, if required.

## षष्ठोऽध्यायः । द्वितीयः पादः ।

१ । बहुव्रीहौ प्रकृत्या पूर्वपदम् । २ । तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ।

३ । वर्णो वर्णेष्वनेते । ४ । गाधलवणयोः प्रमाणे । ५ । दायाद्यं दायादे । ६ । प्रतिबन्धि चिरकृच्छ्रयोः ।

७ । पदेऽपदेशे । ८ । निवाते वातत्राणे । ९ । शारदेऽनार्त्तवे । १० । अध्वर्य्युकषाययो र्जातौ ।

११ । सदृशप्रतिरूपयोः सादृश्ये । १२ । द्विगौ प्रमाणे । १३ । गन्तव्यपण्यं वाणिजे ।

१४ । मात्रोपज्ञोपक्रमच्छाये नपुंसके । १५ । सुखप्रिययो र्हिते । १६ । प्रीतौ च । १७ स्वं स्वामिनि ।

१८ । पत्यावैश्वर्य्ये । १९ । न भूवाक्चिद्दिधिषु । २० । वा भुवनम् ।

२१ । आशङ्काबाधनेदीयःसु सम्भावने । २२ । पूर्वे भूतपूर्वे ।

२३ । सविधसनीडसमर्य्यादसवेशसदेशेषु सामीप्ये । २४ । विस्पष्टादीनि गुणवचनेषु ।

२५ । अज्यावमकन्पापवत्सु भावे कर्मधारये । २६ । कुमारश्च । २७ । आदिः प्रत्येनसि ।

२८ । पूगेष्वन्यतरस्याम् । २९ । इगन्तकालकपालभगालशरावेषु द्विगौ । ३० । बह्वन्यतरस्याम् ।

३१ । दिष्टिवितस्त्योश्च । ३२ । सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ।

३३ । परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु । ३४ । राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ।

३५ । संख्या । ३६ । आचार्य्योपसर्जनश्चान्तेवासी । ३७ । कार्त्तकौजपादयश्च ।

३८ । महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु । ३९ । क्षुल्लकश्च वैश्वदेवे ।

४० । उष्ट्रः सादिवाम्योः । ४१ । गौः सादसादिसारथिषु ।

४२ । कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवड़वा तैतिलकद्रूः पण्यकम्बलो दासीभाराणाञ्च ।

४३ । चतुर्थी तदर्थे । ४४ । अर्थे । ४५ । क्ते च । ४६ । कर्मधारयेऽनिष्ठा ४७ । अहीने द्वितीया ।

४८ । तृतीया कर्मणि । ४९ । गतिरनन्तरः । ५० । तादौ च निति कृत्यतौ

## २। पञ्चम्याः स्तोकादिभ्यः।

स्तोकान्तिकदूरार्थकृच्छ्रेभ्यो ङसेरलुक् स्यात्। स्तोकान्मुक्तः। उत्तर-

५१। तवै चान्तश्च युगपत्। ५२। अनिगन्तोऽञ्चतौ वप्रत्यये। ५३। न्यधी च। ५४। ईषदन्यतरस्याम्।

५५। हिरण्यपरिमाणं धने। ५६। प्रथमोऽचिरोपसम्पत्तौ। ५७। कतरकतमौ कर्मधारये।

५८। आर्य्यौ ब्राह्मणकुमारयोः। ५९। राजा च। ६०। षष्ठी प्रत्येनसि। ६१। क्ते नित्यार्थे।

६२। ग्रामः शिल्पिनि। ६३। राजा च प्रशंसायाम्। ६४। आदिरुदात्तः।

६५। सप्तमीहारिणौ धर्म्येऽहरणे। ६६। युक्ते च। ६७। विभाषाऽध्यक्षे। ६८। पापञ्च शिल्पिनि।

६९। गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे। ७०। अङ्गानि मैरेये। ७१। भक्ताख्यास्तदर्थेषु।

७२। गोबिडालसिंहसैन्धवेषूपमाने। ७३। अके जीविकार्थे। ७४। प्राचां क्रीड़ायाम्।

७५। अणि नियुक्ते। ७६। शिल्पिनि चाकृञः। ७७। संज्ञायाञ्च। ७८। गोतन्तियवं पाले।

७९। णिनि। ८०। उपमानं शब्दार्थप्रकृतावेव। ८१। युक्तारोह्यादयश्च।

८२। दीर्घकाशतुषभ्राष्ट्रवटं जे। ८३। अन्त्यात् पूर्वं बह्वचः। ८४। ग्रामे ऽनिवसन्तः।

८५। घोषादिषु च। ८६। छात्र्यादयः शालायाम्। ८७। प्रस्थेऽवृद्धमकर्क्यादीनाम्।

८८। मालादीनाञ्च। ८९। अमहन्नवं नगरेऽनुदीचाम्। ९०। अर्मे चावर्णं द्व्यच्त्र्यच्।

९१। न भूताधिकसञ्जीवमद्राश्मकज्जलम्। ९२। अन्तः। ९३। सर्वं गुणकार्त्स्न्ये।

Here there is a वार्त्तिक viz :—(क) गुणात् तरेण समास स्वरलोपश्च Which the author had left out without explanation and illustration. As the entire section deals with accents ( स्वर ), he had fully omitted this पाद। शरणदेव too, like पुरुषोत्तम, omits this पाद in his दुर्घटवृत्ति for the same reason. अत्रेदं वार्त्तिकस्योदाहरणम्। अर्थस्तु सुबोध एव। सर्वेषां श्वेततरः सर्वश्वेतः। एवं सर्वमहान्। सर्वेषां शुक्लतरा सर्वशुक्ला। मानसे रमतां नित्यं सर्वशुक्ला सरस्वतीति दण्डी। सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना। स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मनेति कालिदासः। सर्वेषामुन्नततरेण सर्वोन्नतेन। सर्वेषा मतिरिक्ततरः सर्वातिरिक्तः। सः सारो यस्य तेन।

९४। संज्ञायां गिरिनिकाययोः। ९५। कुमार्य्यां वयसि। ९६। उदके ऽकेवले।

९७। द्विगौ क्रतौ। ९८। सभायां नपुंसके। ९९। पुरे प्राचाम्। १००। अरिष्टगौड़पूर्वे च।

१०१। न हास्तिनफलकमार्देयाः। १०२। कुसूलकूपकुम्भशालं बिले।

१०३। दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु। १०४। आचार्य्योपसर्जनश्चान्तेवासिनि।

१०५। उत्तरपदवृद्धौ सर्वञ्च। १०६। बहुव्रीहौ विश्वं संज्ञायाम्। १०७। उदराश्वेषुषु।

१०८। क्षेपे। १०९। नदी बन्धुनि। ११०। निष्ठोपसर्गपूर्वमन्यतरस्याम्। १११। उत्तरपदादिः।

११२। कर्णो वर्णलक्षणात्। ११३। संज्ञौपम्ययोश्च। ११४। कण्ठपृष्ठग्रीवाजङ्घञ्च।

११५। शृङ्गमवस्थायाञ्च। ११६। नञोऽजरमरमित्रमृताः। ११७। सौमनसी अलमोषसी।

११८। क्रत्वादयश्च। ११९। आद्युदात्तं द्व्यच्छन्दसि। १२०। वीरवीर्य्यौ च।

१२१। कूलतीरतूलमूलशालाक्षसममव्ययीभावे। १२२। कंसमन्थशूर्पपाय्यकाण्डं द्विगौ।

पद इत्येव। निष्क्रान्तः स्तोकात् निःस्तोकः। कथं ब्राह्मणाच्छंसी ऋत्विगिति? उपसंख्यानात्।

---

१२३। तत्पुरुषे शालायां नपुंसके। १२४। कन्या च। १२५। आदिश्चिहणादीनाम्।
१२६। चेलखेटकटुककाण्डं गर्हायाम्। १२७। चीरमुपमानम्। १२८। पललसूपशाकं मिश्रे।
१२९। कूलसूदस्थलकर्षाः संज्ञायाम्। १३०। अकर्मधारये राज्यम्। १३१। वर्ग्यादयश्च।
१३२। पुत्रः पुम्भ्यः। १३३। नाचार्य्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः। १३४। चूर्णादीन्यप्राणिषष्ठ्याः।
१३५। षट् च काण्डादीनि। १३६। कुण्डं वनम्। १३७। प्रकृत्या भगालम्।
१३८। शितेर्नित्याबह्वज् बहुव्रीहावभसत्। १३९। गतिकारकोपपदात् कृत्।
१४०। उभे वनस्पत्यादिषु युगपत्। १४१। देवताद्वन्द्वे च।
१४२। नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु। १४३। अन्तः। १४४। थाथघञ्क्ताजबित्रकाणाम्।
१४५। सूपमानात् क्तः। १४६। संज्ञायामनाचितादीनाम्। १४७। प्रवृद्धादीनाञ्च।
१४८। कारकाद्दत्तश्रुतयोरेवाशिषि। १४९। इत्थम्भूतेन कृतमिति च। १५०। अनो भावकर्मवचनः।
१५१। मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः। १५२। सप्तम्याः पुण्यम्।
१५३। ऊनार्थकलहं तृतीयायाः। १५४। मिश्रं चानुपसर्गमसन्धौ।
१५५। नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः। १५६। ययतोश्चातदर्थे। १५७। अच्कावशक्तौ।
१५८। आक्रोशे च। १५९। संज्ञायाम्। १६०। कृत्योकेष्णुच्चार्वादयश्च।
१६१। विभाषा तृन्नन्नतीक्ष्णशुचिषु। १६२। बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने।
१६३। संख्यायाः स्तनः। १६४। विभाषा छन्दसि। १६५। संज्ञायां मित्राजिनयोः।
१६६। व्यवायिनोऽन्तरम्। १६७। मुखं स्वाङ्गम्।
१६८। नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः। १६९। निष्ठोपमानादन्यतरस्याम्।
१७०। जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः। १७१। वा जाते।
१७२। नञ्सुभ्याम्। १७३। कपि पूर्वम्। १७४। ह्रस्वान्तेऽन्त्यात् पूर्वम्। १७५। बहोर्नञ्वदुत्तरपदभूम्नि।
१७६। न गुणादयोऽवयवाः। १७७। उपसर्गात् स्वाङ्गं ध्रुवमपर्शु। १७८। वनं समासे।
१७९। अन्तः। १८०। अन्तश्च। १८१। न निविभ्याम्। १८२। परेरभितोभावि मण्डलम्।
१८३। प्रादस्वाङ्गं संज्ञायाम्। १८४। निरुदकादीनि च। १८५। अभेर्मुखम्। १८६। अपाच्च।
१८७। स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च। १८८। अधेरुपरिस्थम्।
१८९। अनोरप्रधानकनीयसी। १९०। पुरुषश्चान्वादिष्टः। १९१। अतेरकृत् पदे।
१९२। नेरनिधाने। १९३। प्रतेरंश्वादयस्तत्पुरुषे। १९४। उपाद्द्व्यजजिनमगौरादयः।
१९५। सोरवक्षेपणे। १९६। विभाषोत्पुच्छे। १९७। द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ।
१९८। सक्थं चाक्रान्तात्। १९९। परादिश्छन्दसि बहुलम्।

इति षष्ठाध्यायस्य द्वितीयः पादः॥ ६।२॥ समाप्तश्च बहुव्रीहिपादः।

### ३। ओजःसहोऽम्भस्तमसस्तृतीयायाः।

एभ्य स्तृतीयाया अलुक् स्यात्। ओजसाभूतः। तस्यापत्यमौजसाभूतिः। ओजसाकृतम्। सहसाकृतम्। अम्भसाव्याप्तम्। तमसावृतम्। उत्तरपदेऽलुग्विधानात् पूर्वपदभूतं यत्र तमस्तत्रालुक्। नतु यत्र तमोऽन्तं पूर्वपदम्। तेन "सततनैशतमोवृतमन्यत" इति (19)

(क) अञ्जसउपसंख्यानम्। अलुक् स्यात्। अञ्जसाकृतम्।

(ख) पुंसानुजो जनुषान्ध इति। उपसंख्यानात्। जनुर्जन्म।

इह तमःशब्दं तप इति केचिदूचिरे। तथाच व्योषः—"तमोजसानिर्जितदेवराजं दृष्ट्वा रथस्थं तपसाप्तसिद्धि"मिति (20) "तपःकृशाःशान्तुग्रदकुम्भहस्ता" इति तु भट्टिः।

### ४। मनसः संज्ञायाम्।

नाम्नि मनसस्तृतीयाया अलुक् स्यात्। मनसागुप्ता काचित्। मनसादेवी।

### ५। आज्ञायिनि च।

अत्रोत्तरपदे मनसस्तस्या अलुक् स्यात्। मनसाज्ञायिनो योगिनः।

### ६। आत्मनश्च पूरणे।

आत्मनस्तस्या अलुक् स्यात् पूरणप्रत्ययान्ते परे। आत्मनापञ्चमः। आत्मनाषष्ठः। आत्मचतुर्थस्तु बहुव्रीहिः।

### ७। वैयाकरणाख्यायां चतुर्थ्याः।

### ८। परस्य च।

आत्मनः परस्य च चतुर्थ्या अलुक् स्याद् वैयाकरणी संज्ञा चेत्। आत्मनेभाषः। आत्मनेपदम्। परस्मैभाषः। परस्मैपदम्।

---

(19) कथं वञ्चयिष्यसि कुतस्तमोवृत इति रघुकाव्ये ? वृतमिति भावे क्तः। ततस्तमसो वृतमिति षष्ठीसमासेऽर्श आदित्वादच्।

(20) क्वचित्तु कृत्स्नः एव श्लोकः पठ्यते।

"तमोजसानिर्जितदेवराजं दृष्ट्वा रथस्थं तपसाप्तसिद्धिम्।
जग्राह राजा सहसात्तकोपश्चापानि चारूणि सशायकानि" ॥१॥ इति।

(It is given fully in the Ms. No IV.) "नन्वत्र समासोऽननुगमः। न। अलुगधिकारादि"ति गोपीनाथः।

## ९ । हलदन्तात् सप्तम्याः संज्ञायाम् ।

हलन्तादन्ताच्च सप्तम्या अलुक् स्यात् । त्वचिसारः । युधिष्ठिरः । वनेकिंशुकाः ।

(क) अपो योनियन्मतिषु । अप्सुयोनिरग्निः । दिगादित्वाद् यत् । अप्सव्यः । अप्सुमतिः । संज्ञाया (२।१।४४) मिति समासः ।

(ख) हृद्द्युभ्यां ङेरलुग्वक्तव्यः । हृदिस्पृक् । दिविषदो देवाः । कथं दिवि कामोऽस्येति द्युकामः ? भाविबहुलवचनात् । (६।३।१४) (21)

## १० । कारनाम्नि च प्राचां हलादौ ।

कारः पारिभाषिको नियमः । तन्नाम्नि प्राचां हलादौ परे सप्तम्या अलुक् स्यात् । हलेद्विपदिका । कूपेशाणः । हलदन्तादित्येव । नद्यां दोहनी नदीदोहनी । नियमः किम् ? अविकटे उरणः अविकटोरणः ।

## ११ । मध्याद् गुरौ ।

गुरौ परे मध्यात् सप्तम्या अलुक् स्यात् । मध्येगुरुः ।

(क) अन्ताच्च । अन्तेगुरुः ।

## १२ । अमूर्धमस्तकात् स्वाङ्गादकामे ।

स्वाङ्गात् सप्तम्या अलुक् स्यात् । कण्ठेकालः । उरसिलोमा । उदरेमणिः । "मनुष्यकारोरसिवाणमाशु" । अमूर्धमस्तकात् किम् ? मूर्धशिखः । मस्तकशिखः । अकामे किम् ? मुखकामः । स्वाङ्गादिति किम् ? अक्ष-शौण्डः । हलदन्तादित्येव । अङ्गुलित्राणः ।

## १३ । बन्धे च विभाषा ।

बन्धे परे सप्तम्या अलुक् स्याद्वा । हस्तेबन्धो हस्तबन्धो वा । चक्रेबन्धश्चक्र-बन्धो वा । हलदन्तादित्येव । गुप्तिबन्धः ।

---

(21) एवञ्च द्युषदां सुनीतमिति भट्टिः । मनःसु येन द्युषदां न्यधीयतेति माघश्च ।

## १४। तत्पुरुषे कृति बहुलम्।

तत्पुरुषे कृदन्त उत्तरपदे परे बहुलं सप्तम्या अलुक् स्यात्। वनेचरः। स्तम्बेरमः। पङ्केरुहः। हृदिस्थः। न च भवति। कायस्थः। कुरुस्थः। कुरुचरः। क्वचिद्वा। सरोजं सरसिजम्।

## १५। प्रावृट्शरत्कालदिवां जे।

एषां जे सप्तम्या अलुक् स्यात्। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। एषां किम्? ग्रीष्मजः।

## १६। विभाषा वर्षक्षरशरवरात्।

एभ्यो जे परे सप्तम्या अलुग्वा स्यात्। वर्षेजः। वर्षजः। क्षरेजः। क्षरजः। शरेजः। शरजः। वरेजः। वरजः।

## १७। घकालतनेषु कालनाम्नः।

घादिषु कालनाम्नः सप्तम्या अलुग्वा स्यात्। पूर्वाह्णेतराम्। पूर्वाह्णतरे गायति। पूर्वाह्णेकालतमम्। पूर्वाह्णकालतमम्। पूर्वाह्णेतने पूर्वाह्णतने गायति। हलदन्तादित्येव। रात्रितरायां जागर्त्ति।

## १८। शयवासवासिष्वकालात्।

शयादिष्वकालवाचिनः सप्तम्या अलुक् स्याद्वा। खेशयः खशयो वा। "रक्षन् वनेवासकृताद् भयात् तान्"। वनवासः। ग्रामेवासी ग्रामवासी वा। अकालात् किम्? पूर्वाह्णशयः। हलदन्तादित्येव। भूमिशयः।

## १९। नेन्सिद्धबध्नातिषु च।

इन्नन्तसिद्धबध्नातिषु च सप्तम्या अलुग् नास्ति। स्थण्डिलशायी। साङ्काश्यसिद्धः। चक्रबन्धः। कथं चक्रेबन्धः? घञन्ते विभाषोक्ता।

## २०। स्थे च भाषायाम्।

स्थे परे सप्तम्या अलुग् नास्ति। समस्थः। कूटस्थः। कायस्थः। उदरस्थः। कथं हृदिस्थः। बाहुल्यात्। भाषाग्रहणमेकहृत्तावुपयुक्तम्।

## २१ । षष्ठ्या आक्रोशे ।

आक्रोशगतौ षष्ठ्या अलुक् स्यात् । चौरस्यकुलम् । मातुःसुतः । वृषल्याःपतिः । आक्रोशे किम् ? ब्राह्मणकुलम् ।

(क) वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु । षष्ठ्या अलुक् स्यात् । कीयं वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ।

(ख) आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च । षष्ठ्या अलुक् स्यात् । नड़ादिभ्यः फक् ( ४।१।९८ ) । आमुष्यायणः । मनोज्ञादित्वाद् वुञ् (५।१।१३३) । आमुष्यपुत्रिका । आमुष्यकुलिका ।

(ग) देवानां प्रिये । षष्ठ्या अलुक् स्यात् । देवानाम्प्रियः ।

(घ) शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम् । षष्ठ्या अलुक् स्यात् । शुनःशेपो नाम मुनिः । शुनःपुच्छः । शुनोलाङ्गूलः ।

(ङ) दिवोदासश्छान्दसः ।

## २२ । पुत्रेऽन्यतरस्याम् ।

आक्रोशगतौ पुत्रे षष्ठ्या अलुक् स्याद्वा । दास्याःपुत्रो दासीपुत्रो वा ।

## २३ । ऋतो विद्यायोनिसम्बन्धेभ्यः ।

ऋदन्ताद् विद्यायोनिसम्बन्धवाचिनोऽलुक् स्यात् षष्ठ्याः । पितुःपुत्रः । होतुरन्तेवासी । विद्यायोनिसम्बन्धोभयपदेष्वभिधानान्नेह । पितृधनम् ।

## २४ । विभाषा स्वसृपत्योः ।

ऋदन्तादनयोः षष्ठ्या अलुक् स्याद्वा । मातुःष्वसा मातृष्वसा वा । पितुःष्वसा पितृष्वसा वा । दुहितुःपतिः । दुहितृपतिर्वा । उक्तोऽलुक् । उत्तरपदाधिकारः प्रागङ्गात् (६।४।१) ।

## २५ । आनङ् ऋतो द्वन्द्वे ।

विद्यायोनिसम्बन्धानामृतां द्वन्द्वे आनङ् स्यात् । नकारो रपरत्व-(१।१।५१) निषेधार्थः । होतापोतारौ । मातापितरौ । ऋतां द्वन्द्वे किम् ? पितृपितामहौ । कथं पितापुत्रौ मातापुत्रौ । पुत्र इत्यनुवृत्तेः (६।३।२२) ।

## २६ । देवताद्वन्द्वे च ।

अत्र पूर्वपदस्यानङ् स्यात् । इन्द्राबृहस्पती । सूर्याचन्द्रमसौ । पुनर्द्वन्द्वग्रहणाल् लोके वेदे सहचरितयोरेवाभिधानम् । नेह । शिववैश्रवणौ । कथं "रविचन्द्रावपि नोपलक्षितौ" इति ? तर्हि चिन्त्यम् ।

(क) वायोरुभयत्र प्रतिषेधः । वाय्वग्नी । अग्निवायू ।

## २७ । ईदग्नेः सोमवरुणयोः ।

सोमे वरुणे चाग्नेरीत् स्यात् । अग्नीषोमौ । अग्नीवरुणौ । इदागमेनापि सवर्णदीर्घत्वे सिद्ध ईद्वचनमन्यत्र भावार्थमाहुः । तेन कुशस्य लवस्य कुशीलवाविति वाल्मीकिप्रयोगः ।

## २८ । इद् वृद्धौ ।

वृद्धिमत्युत्तरपदेऽग्नेरित् स्यात् । आग्निवारुणम् । आग्निमारुतं कर्म । देवताद्वन्द्वे चेत्युभयपदवृद्धिः (७।३।२१) ।

(क) न विष्णौ । अत्राग्नेरित्वं नास्ति । आग्नावैष्णवम् ।

## २९ । दिवो द्यावा ।

देवताद्वन्द्वे दिवो द्यावा स्यात् । द्यावाभूमी । द्यावाधरण्यौ ।

## ३० । दिवसश्च पृथिव्याम् ।

पृथिव्यां दिवो दिवसादेशः स्याद् द्यावा च । अकारोच्चारणं पदान्ते रुत्वाद्यभावार्थम् । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

## ३१ । उषासोषसः ।

उषःशब्दस्योषासादेशः स्याद् देवताद्वन्द्वे । उषासासूर्य्यम् । उषासानक्तम् ।

## ३२ । मातरपितरावुदीचाम् ।

अन्येषां मातापितरौ । अदन्तत्वान्निपातनस्य मातरपितराभ्यामित्येके । मातरपितृभ्यामित्यन्ये ।

## ३३ । पितरामातरा च च्छन्दसि ।

छान्दसम् ।

## ३४ । स्त्रियाः पुंवद् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।

अनूङः स्त्रीलिङ्गस्य पुंवद् रूपं स्यात् । पट्वीभार्य्यास्य पटुभार्य्यः । शोभनभार्य्यः । दीर्घजङ्घः । दीर्घजङ्घभार्य्यः । भाषितपुंस्कात् किम् ? खट्वाभार्य्यः । अनूङः किम् ? धीबन्धूभार्य्यः । समानाधिकरणे किम् ? कल्याण्या माता कल्याणीमाता । षष्ठीसमासः । स्त्रियामिति किम् ? कल्याणीप्रधाना इमे । अपूरणीति किम् ? कल्याणीपञ्चमा रात्रयः । इह चाप्पूरणीप्रमाण्यो-(५।४।११६) रिति समासान्तविधौ प्रधानपूरणीग्रहणात् पूरण्यर्थादन्यस्मिन् समासार्थे न भवति कल्याणपञ्चमीकः पक्ष इति । अप्रियादिषु किम् ? कल्याणीप्रियः । कल्याणीकान्तः । प्रिया । भक्ति । कान्ता । सुभगा । दुर्भगा । दुहिता । चपला । कथं दृढ़भक्तिः ? दृढं भक्तिरस्येति पूर्वपदस्याऽस्त्रीत्वविवक्षितत्वात् । श्लिष्टप्रियो विमुक्तकान्त इत्यादयस्तु चिन्त्याः ।

## ३५ । तसिलादिष्वाकृत्वसुचः ।

तसिलादौ स्त्रियाः पुंवत् स्यात् । तत्र परिगणनम् । त्रल्तसौ । तरप्-तमपौ । चरड्जातीयरौ । कल्पब्देश्यदेशीयरः । रूपप्पाशपौ । थमुथालौ । दार्हिलौ । तिल्थ्यनाविति । तस्यां तत्र । तस्याः ततः (22) । रम्यतरा । रम्यतमा । पटुतरा । पटुतमा । पटुचरी । पटुजातीया । मृदुजातीया । ह्रस्वकल्पा । पटुकल्पा । मृदुकल्पा । पटुदेश्या । पटुदेशीया । पटुरूपा । ह्रस्वरूपा । ह्रस्वपाशा । कया प्रकृत्या कथम् । तया प्रकृत्या तथा । तस्यां वेलायां तदा । तर्हि । तिल् छान्दसः । अजथ्या ।

(क) शसि बह्वल्पार्थस्य । पुंवत् स्यात् । बह्वीभ्यो देहि बहुशः । अल्पशः ।

(ख) त्वतलोर्गुणवचनस्य (23) । पुंवत् स्यात् । पटुत्वम् । पटुता ।

---

(22) तत्र तत इति तूदाहरणदिङ्मात्रम् । सर्वनाम्नो वृत्तिमात्रे पुंस्त्वात् । बहुत्र बहुतः बहुधेत्युदाहरणम् ।

(23) संज्ञा-जाति-कृदन्त-तद्धितान्त-समस्त-सर्वनाम-संख्याशब्दस्तु न गुणवचनः ।

मृदुता। गुणवचनस्य किम्? दण्डिनीत्वम्। कठीत्वम्। कथं व्यभिचारित्वं युक्तीनामिति? सामान्योपक्रमेण (24)। तन्वीत्वमिति तु चिन्त्यम्।

(ग) भस्याढे तद्धिते। भसंज्ञकस्य तद्धिते पुंवत् स्यात्। हस्तिनीनां समूहो हास्तिकम्। अढे किम्? श्यैनेयः। रौहिणेयः।

(घ) ठक्छसोश्च। अनयोः परतः स्त्रियाः पुंवत् स्यात्। भवत्याश्छात्रा भावत्काः। भवदीयाः।

(ङ) सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्य इति तु दिङ्नामान्यन्तराल इत्यत्र ( २।२।२६ ) भाष्यम्। सर्वासां धनं सर्वधनम्। अन्यस्यास्तनयोऽन्य-तनयः। "न मानिनी संसहतेऽन्यसङ्गमम्।" तस्या मुखं तन्मुखम्। भवतीप्रसादादिति तु चिन्त्यम्। (25)

## ३६। क्यङ्मानिनोश्च।

क्यङि मानिनि च स्त्रियाः पुंवत् स्यात्। एनी एतायते। दर्शनीयां मन्यते दर्शनीयमानी भार्य्यायाः।

## ३७। न कोपधायाः।

कोपधायाः स्त्रियाः पुंवन्न स्यात्। मद्रिकाभार्य्यः। पाचिकाभार्य्यः। दाक्षिकाशक्तिः। पाचिकाकल्पा। पाचिकायते। पाचिकामानिनी।

(क) कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यम्। इह मा भूत्। एक-भार्य्यः। पाकभार्य्यः। पाककल्पा।

---

(24) सामान्ये नपुंसकमित्यनेनेत्यर्थः। इदन्तु काशिकाकैयटाद्युक्तं वार्त्तिकम्। वार्त्तिकपाठे तु नास्ति। "एकैकवर्णवर्त्तित्वाद्वाच" इति हि संहितासूत्रे (१।४।१०९) भाष्यकारप्रयोगः। तत्प्रामाण्यादस्य साधुत्वमुन्नेयम्।

(25) धर्म्याणि देवि सकलानि सदैव कर्माण्यात्यादृतः प्रतिदिनं सुकृती करोति।
स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥१॥ इति देवीमाहात्म्ये।
आर्षोऽयं प्रयोगः। केचित्तु हे भवति ततः प्रसादादनुग्रहात् तवेति शेष इत्यन्वयं कुर्वन्तो भवतीति सम्बोधने ह्रस्वान्तं पठन्ति। एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरय इति वेणीसंहारप्रयोगस्तु प्रामादिक एवेत्याहुः।

## ३८ । संज्ञापूरण्योश्च ।

अनयोः स्त्रियाः पुंवन्न स्यात् । दत्ताभार्य्यः । "मन्दोदरीभार्य्यमतोऽत्र रेजे ।" दत्तामानिनी । पञ्चमीभार्य्यः । द्वितीयाकल्पा । पञ्चमीकल्पा ।

## ३९ । वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ।

वृद्धिहेतोस्तद्धितान्तायाः स्त्रियाः पुंवन्न स्यात् । औपगवीभार्य्यः । माथुरीभार्य्यः । माथुरीमानिनी । माथुरीकल्पा । वृद्धिहेतोः किम् ? मध्यमभार्य्यः । अरक्ते किम् ? काषायबृहतिकः । हारिद्रपताकः । अविकारे किम् ? लौहेषी रथः ।

## ४० । स्वाङ्गाच्चेतोऽमानिनि ।

स्वाङ्गात् परो य ईकारस्तदन्तस्य स्त्रियाः पुंवन्न स्यात् । दीर्घकेशीभार्य्यः । सुमुखीभार्य्यः । सुमुखीकल्पा । अमानिनि किम् ? सुकेशमानिनी । (26)

## ४१ । जातेश्च ।

जातेः स्त्रियाः पुंवन्न स्यात् । कुम्भकारीभार्य्यः । कठीकल्पा । कठीपाशा । बह्वृचीयते । औपसंख्यानिकस्य नेष्यते । हास्तिकम् । अमानिनीत्येव । कठमानिनी ।

## ४२ । पुंवत् कर्मधारयजातीयदेशीयेषु ।

कर्मधारयादौ भाषितपुंस्कादनूङः स्त्रियाः पुंवत् स्यात् । न प्रतिषेधः । महापञ्चमी । पुण्यषष्ठी । महाषष्ठी । प्रियदुहिता । मृगचपला । पाचकवृन्दारिका । कारकवृन्दारिका । काकवन्ध्या । कारकजातीया । कारकदेशीया । एवं दत्तवृन्दारिका । पञ्चमवृन्दारिका । माथुरवृन्दारिका । माथुरजातीया । माथुरदेशीया । सुकेशवृन्दारिका । कठदेशीया । स्त्रियामित्येव । कठीप्रकाण्डम् । मानिनीजनः ।

(क) कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः । कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । मृग्याः क्षीरं मृगक्षीरम् । काक्याः शावः काकशावः ।

---

(26) अत्र स्वाङ्गाच्चेत इत्येव सूत्रम् । अमानिनीति वक्तव्यमिति तस्मिन् वार्त्तिकमित्याहुः ।

(ख) पुंवद्भावाद् ध्रस्वत्वं खिद्घादिषु विप्रतिषेधेन। कालिम्मन्या। हरिणिम्मन्या। पट्वितरा। मृद्वितमा। उक्तः पुंवद्भावः।

## ४३। घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः।

घादिषु परतोऽनेकाचो ङ्यन्तस्य ह्रस्वः स्यात्। ब्राह्मणितरा। सुन्दरितमा। गौरिरूपा। भुजङ्गिकल्पा। वृषलिचेली। पट्विब्रुवा। तरुणिगोत्रा। कुमारिमता। गौरिहता। उक्तपुंस्कादित्येव। बदरीतरा। ब्रूञः पचाद्यचि ब्रुवः। चेलड्ब्रुवगोत्रशब्दाः कुत्सनार्थाः।

## ४४। नद्याः शेषस्यान्यतरस्याम्।

घादिषु शेषनद्या ह्रस्वो वा स्यात्। कः शेषः ? अङी नदी ङीरेकाच्। धीबन्धुतरा धीबन्धूतरा वा। स्त्रीतरा स्त्रितरा वा।

(क) कृन्नद्याः प्रतिषेधः। लक्ष्मीतरा। तन्त्रीतरा।

## ४५। उगितश्च।

उगितो नद्या घादिषु ह्रस्वो वा स्यात्। श्रेयसीतरा श्रेयसितरा वा। विदुषीतमा विदुषितमा वा। "शक्तिं दधानं महतीतमां तम्।" पुंवद्भावोऽप्यत्रेष्टः। श्रेयस्तरा। विद्वत्तमा। (27)

## ४६। आन्महतः समानाधिकरणजातीययोः।

तुल्याधिकरणे जातीये च परतो महत: स्यादात्। महापञ्चमी। महाषष्ठी। महाराजः। महाभुजः। महाजातीयः।

(क) घासकरविशिष्टेषु पुंवच्च। महत्या घासः महाघासः। महत्याः करो महाकरः। महाविशिष्टः।

(ख) अष्टनः कपाले हविषि। अष्टाकपालं हविः।

(ग) गवि च युक्ते। अष्टागवं शकटम्। युक्ते किम् ? अष्टगवं विप्रस्य।

---

(27) अत्र भट्टोजिः—"बह्व्यादिषु विदुषीतरेत्युदाहृतम्। तन्निर्मूलम्" इति। दीर्घान्तङीबविशिष्टानां रूपाणां भाष्ये ऽसमर्थनात्।

## ४७ । द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ।

द्वि अष्टनित्येतयोः संख्यायामात्त्वं स्यात् । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश अष्टाविंशतिः । अष्टात्रिंशत् । संख्यायामिति किम् । द्वैमातुरः । प्राक्शतादित्यभिधानान्नेह । द्विशतम् । अष्टसहस्रम् । अबहुव्रीह्यशीत्योः किम् ? द्विदशाः । द्वित्राः । द्व्यशीतिः ।

## ४८ । त्रेस्त्रयः ।

त्रेस्त्रयसादेशः स्यात् । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । संख्यायामित्येव । त्रैमातुरः । अबहुव्रीह्यशीत्योरित्येव । त्रिचतुराः । त्र्यशीतिः । प्राक्शतादित्येव । त्रिशतम् । त्रिसहस्रम् ।

## ४९ । विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ।

द्व्यष्टंस्त्रिशब्दानां यदुक्तं तच्चत्वारिंशदादौ वा स्यात् । एवं यावद् नवतिः । द्वाचत्वारिंशत् द्विचत्वारिंशद्वा । अष्टाचत्वारिंशत् । अष्टचत्वारिंशद्वा । त्रयश्चत्वारिंशत् त्रिचत्वारिंशद्वा। (28) द्वानवतिः । द्विनवतिर्वा । अष्टानवतिः । अष्टनवति र्वा । त्रयोनवतिः । त्रिनवतिर्वा । कथमेकादश ? कुसीददशैकादशादिति (४।४।३२) निपातनात् ।

## ५० । हृदयस्य हृल्लेखयदण्लासेषु ।

लेखादौ परे हृदयस्य हृत्स्यात् । हृल्लेखः क्षयव्याधिः । हृदयं लिखतीति कर्मण्यण् (३।२।१) । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः ।

## ५१ । वा शोकष्यञ्रोगेषु ।

एषु हृदयस्य हृद्वा स्यात् । हृच्छोकः । हृदयशोको वा । सौहार्द्यं सौहृदय्यं वा । सौहृद्यमिति केचित् । हृद्रोगः । हृदयरोगो वा ।

## ५२ । पादस्य पदाज्यातिगोपहतेषु ।

आज्यादिषु पादस्य पदः स्यात् । पदाजिः । पदातिः । पदगः । "पदगैर्बहुभिः स्तुतम् ।" पदोपहतः ।

---

(28) एवं पञ्चाशत्षष्टिसप्ततिशब्देष्वपि।

## ५३। पद्यत्यतदर्थे।

पादस्य यति हलन्तः पत् स्यात्। पादौ विध्यन्ति पद्याः कण्टकाः। अतदर्थे किम्? पाद्यं जलम्।

(क) इकि चरतौ। पादेन चरति पदिकः। पर्पादित्वात् ष्ठन्।

## ५४। हिमकाषिहतिषु च।

एषु पादस्य पत् स्यात्। पद्धिमम्। मानुषो नाम पत्काषी। पद्धतिः। चकारात् "पद्गा भरद्वाजमुनिं सशिष्यम्।"

## ५५। ऋचः शे।

शे ऋचः पादस्य पत् स्यात्। पच्छो गायत्रीं शंसन्ति। वीप्सायां शस्। ऋचः किम्? पादशः कार्षापणं ददाति।

## ५६। वा घोषमिश्रशब्देषु।

एषु पादस्य पद्वा स्यात्। पद्घोषः पादघोषो वा। पन्मिश्रः पादमिश्रो वा। पच्छब्दः पादशब्दो वा।

(क) निष्के च। पन्निष्कः पादनिष्को वा।

## ५७। उदकस्योदः संज्ञायाम्।

नाम्नि उदकस्योदः स्यात्। उदमेघो नाम।

(क) उत्तरपदस्य च। लोहितोदो नाम। क्षीरोदः। लवणोदः।

## ५८। पेषंवासवाहनधिषु च।

एषूदकस्योदः स्यात्। उदपेषं शुण्ठीं पिनष्टि। "सहस्यरात्रीरुदवासतत्परा।" उदवाहनः। उदधिः।

## ५९। एकहलादौ पूरयितव्येऽन्यतरस्याम्।

असंयुक्तहलादावुत्तरपदे उदकस्योदो वा स्यात्। उदकुम्भ उदककुम्भो वा। उदपात्रम्। उदकपात्रं वा। एकहलादौ किम्? उदकस्थानम्। पूरयितव्ये किम्? उदकगिरिः।

## ६० । मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ।

एषूदकस्योदो वा स्यात् । उदमन्थः । उदौदनः । उदसक्तुः । "हिमलव-सदृशश्रमोदबिन्दून् ।" "भिन्दानो हृदयमसाहि नोदवज्रः ।" भार-हार-गाहाः कर्मण्यणन्ता घञन्ताश्च गृह्यन्ते । उदभारः । उदभारी स्त्री । उद-हारी स्त्री । उदवीवधः । "रामाणामनवरतोदगाहभाजाम् ।" पक्षे उदक-मन्थादयः । उक्तउदादेशः ।

## ६१ । इको ह्रस्वोऽङ्यो गालवस्य ।

इगन्तानां ह्रस्वो वा स्यात् । ग्रामणिपुत्रः । ग्रामणीपुत्रो वा । जम्बुलता जम्बूलता वा । धीबन्धुसुतः धीबन्धूसुतो वा । अङ्यः किम् ? गार्गीपुत्रः । व्यवस्थितविभाषया नेह । कारीषगन्धीपुत्रः ।

(क) इयङुवङ्भाविनामव्ययानाञ्च प्रतिषेधो वक्तव्यः । श्रीकुलम् । भ्रूकुलम् । शुक्लीभूतम् ।

(ख) भ्रूकुंसादीनामिष्यते । भ्रूकुंसः । भ्रुकुंसो वा । भ्रूकुटिः । भ्रुकुटि र्वा ।

(ग) अकारो वेत्येके । भ्रकुंसः । भ्रकुटिः ।

इह त्वलाबुककर्कन्धुदृम्फुफलमिति सर्वान्ते लोकस्योत्तरपदव्यवहारात् दृम्फ्वा एव ह्रस्वः प्राप्नोति । न पूर्वयोः । तत्र समासान्तरमास्थेयम् । अलाबूश्च कर्कन्धूश्च ते । अलाबुकर्कन्ध्वौ । ते च दृम्फूश्च ते ऽलाबुकर्कन्धुदृम्फ्वः । राज-दन्तादिः । तासां फलं तथेति ।

## ६२ । एक तद्धिते च ।

एकशब्दस्य ( 29 ) तद्धिते ह्रस्वः स्यात् । एकस्या आगतमेकरूप्यम् । एकमयम् । एकत्वम् । एकता । उत्तरपदे च । एकस्याः क्षीरमेकक्षीरम् ।

## ६३ । ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ।

ङ्यावन्तस्य ह्रस्वः स्यान्नाम्नि । रेवतिपुत्रः । रोहिणिपुत्रः । कस्य-चिन्नाम । शिलवहम् । शिलप्रस्थं नाम नगरम् । बाहुल्यान् नान्दीघोषः । असंज्ञायाञ्च । कलत्रः । मन्दुरजः । सुसूक्ष्मजटकेशो व्रती ।

---

(29) स्त्रियामित्यनुवर्त्तते । तेन एकाशब्दस्येति फलितम् ।

## ६४। त्वे च।

त्वे चेति च्छन्दसि।

## ६५। इष्टकेषीकामालानां चिततूलभारिषु।

इष्टकादेश्चितादौ ह्रस्वः स्यात्। इष्टकचितम्। इषीकतूलम्। मालभारिणी। तदन्तग्रहणञ्च। पक्वेष्टकचितम्। नवहाटकेष्टकचितम्। मुञ्जेषीकतूलम्। उत्पलमालभारिणी कन्या।

## ६६। ख्रित्यनव्ययस्य।

अनव्ययस्य खिदन्ते परे ह्रस्वः स्यात्। कालिमिजयः। कालिम्मन्या। अनव्ययस्य किम्? "दिवामन्या रात्रिः कथमपि न पद्मैर्विकसितम्"। उक्तो ह्रस्वः।

## ६७। अरुर्द्विषदजन्तस्य मुम्।

एषां खिति मुम् स्यात्। अरुन्तुदः। द्विषन्तपः। द्विषमिजयः। (30) अजन्तानाम्। पण्डितम्मन्यः। सुभगम्मन्या। हरिम्मन्यः। महिम्मन्या। कालिम्मन्या। विधुम्मन्यः। वधुम्मन्या। सुभ्रुम्मन्या। नलोपे राजम्मन्यः। सुराजम्भवम्। गुणिम्मन्यः। एषां किम्? विद्वन्मन्यः। श्रीमन्मन्यः।

## ६८। इच एकाचोऽम्प्रत्ययवच्च।

इजन्तस्य खिति एकाचोऽम् स्यात्। स चाम्प्रत्ययवत्। द्वितीयैकवचनवदित्यर्थः। स्त्रियम्मन्यः। स्त्रीम्मन्यः। भ्रुवम्मन्यः। नरम्मन्यः। गाम्मन्यः। नावम्मन्यः।

## ६९। वाचंयमपुरन्दरौ च।

इमौ निपात्येते।

---

(30) द्विषमिजय इत्यत्र मुमि द्विषम्त् एजय इति स्थिते संयोगान्तस्य लोप (८।२।२३) इति तकारलोपः।

## ७० । कारे सत्यागदस्य ।

अनयोः कारे मुम् स्यात् । सत्यङ्कारः । अगदङ्कारो वैद्यः ।

(क) अस्तोश्च । अस्तुङ्कारः ।

(ख) धेनोर्भव्यायाम् । धेनुम्भव्या गौः ।

(ग) लोकस्य पृणे । लोकम्पृणश्चन्द्रमाः ।

(घ) भ्राष्ट्राग्न्योरिन्धे । भ्राष्ट्रमिन्धः । अग्निमिन्धः ।

(ङ) उष्ट्रभद्रयोः करणे । उष्ट्रंकरणम् । भद्रंकरणम् । एवं तिमिङ्गिल-दीपङ्करसर्वन्ददादयोऽपि मुमिति योगविभागादूह्याः संज्ञाप्रकाराः ।

(च) सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड् वा । एभ्यो दुहितृशब्दस्य पुत्रड् वा स्यात् । सूतपुत्री सूतदुहिता वा । उग्रपुत्री । उग्रदुहिता वा । अन्यत्रापि दृश्यते । शैलपुत्री । "अभिवीक्ष्य विदर्भराजपुत्रीकुचकश्मीरज-चिह्नमच्युतोर" इति माघः । केचिच्छार्ङ्गरवादिषु पुत्रशब्दं पठन्तीति वामनवृत्तिः । तेनेदं सिध्यति कृष्णदासस्य पुत्रीं तुभ्यमहं सम्प्रदद इति ।

## ७१ । श्येनतिलस्य पाते ञे ।

अनयोर्ञान्ते पाते परे मुम् स्यात् । श्यैनम्पाता मृगया । तैलम्पाता क्रिया ।

## ७२ । रात्रेः कृति विभाषा ।

रात्रेः कृदन्ते परे मुम् स्याद्वा । रात्रिचरो रात्रिञ्चरो वा । रात्र्यटो रात्रिमटो वा । खिति तु पूर्वेण नित्यमिष्यते । रात्रिम्मन्यमहः । उक्तो मुम् ।

## ७३ । नलोपो नञः ।

उत्तरपदे परे नञो नलोपः स्यात् । अभिक्षुः । अब्राह्मणः । अविघ्नः । अशोच्यः । कथं नैककीर्त्तिः । नैकयशा इति ? (31) समासे सर्वान्तमुत्तर-पदम् । तच्चेह नास्ति ।

---

(31) एवञ्च "आददे नातिशीतोष्णो नभस्वानिव दक्षिणः" इत्यादि । मतान्तरे तु नञर्थस्य नशब्दस्य सुप्सुपेति समासः । तेनाप्युक्तं खगः स नैकधेत्यादि समाहितम् ।

(क) अवक्षेपे तिङ्युपसंख्यानम्। अपचसि। अकरोषि त्वं जाल्म। "ह्रासकरमघटते नितराम्"।

७४। तस्मान्नुडचि।

लुप्तनकारान्नञोऽचि नुडागमः स्यात्। अनश्वः। अनुष्ट्रः। अनूरुः।

७५। नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या।

एष्वेकादशसु नञ् प्रकृत्या स्यात्। न भ्राजते नभ्राट्। न पाति नपात्। अचन्तः। न वेत्ति नवेदाः। असुवन्तः। नासत्याः साधवः। नमुच्यादयः संज्ञाशब्दा यथाकथञ्चिद्व्युत्पाद्याः।

७६। एकादिश्चैकस्य चादुक्।

एकादिर्नञ् प्रकृत्या स्यादेकस्य चादुगागमः। एकेन न विंशति एकान्नविंशतिः। एकान्नशतम्। ऊनार्थे चात्र नञ्।

७७। नगोऽप्राणिष्वन्यतरस्याम्।

नगो नञ् प्रकृत्या वा स्यात्। "शैलवृक्षौ नगावगौ"। अप्राणिषु किम्? अगो वृषलः शीतेन।

७८। सहस्य सः संज्ञायाम्।

सहस्य नाम्नि सः स्यात्। साश्वत्थम्। नाम्नि किम्? सहयुध्वा।

७९। ग्रन्थान्ताधिके च।

ग्रन्थान्ते ऽधिके च सहस्य सः स्यात्। सकलं ज्योतिषमधीते। कलान्तमित्यर्थः। समुहूर्त्तमधीते। ससंग्रहं व्याकरणमधीते। अन्तवचनेऽव्ययीभावः। अधिके। सद्रोणा खारी। द्रोणाधिकेत्यर्थः।

८०। द्वितीये चानुपाख्ये।

उपाख्यायत इत्युपाख्यः प्रत्यक्षः। ततोऽन्योऽनुपाख्यः। अनुमेयो द्वितीयः सम्बन्धी। तद्वाचिन्युपपदे सहस्य सः स्यात्। साग्निः कपोतः। सपिशाचिका वात्या। गृहे कपोतपतनात् तस्य द्वितीयो भाव्यग्निरनुमीयते।

८१ । अव्ययीभावे चाकाले ।

अत्र सहस्य सः स्यात् । सचक्रं निधेहि । सधुरं व्रज । अकाले किम् ? सहापराह्णम् ।

८२ । वोपसर्ज्जनस्य ।

सर्वोपसर्जनस्य समासस्योत्तरपदे सहस्य सो वा स्यात् । सपुत्रः सहपुत्रो वा । सपरिवारः सहपरिवारो वा ।

८३ । प्रकृत्याशिष्यगोवत्सहलेषु ।

आशिषि सह प्रकृत्या स्यात् । स्वस्ति ते सहपुत्राय । सहबन्धवे । अगोवत्सहलेषु किम् ? सगवे । सवत्साय । सहलाय । पक्षे सहगवे । सहवत्साय । सहहलाय ।

८४ । समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ।

छान्दसम् ।

८५ । ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ।

एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सनाम्नी कन्या । सरूपः । सवयाः । सवचनः । सबन्धुः । इह समानस्येति योगविभागः । तेन सपक्षसधर्मसजातीयाः सिध्यन्तीति वामनवृत्तिः । अनार्षोऽयं योगविभागः । तथाह्यव्ययानामनेकार्थत्वात् सदृशार्थस्य सहशब्दस्यैते प्रयोगाः । कथं नाम समानपक्ष इत्यादयोऽपि भवन्तीति भागवृत्तिः (32) । चान्द्रास्तु नामादिषु सभावं विकल्पेन ब्रुवन्ति ।

८६ । चरणे ब्रह्मचारिणि ।

आचारगतो ब्रह्मचारिणि परे समासस्य सः स्यात् । सब्रह्मचारी ।

---

(32) तथाहि—उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मेति भवभूतिप्रयोगः ।

८७। तीर्थे ये।

८८। विभाषोदरे।

यदन्ते तीर्थे समानस्य सः स्यात्। सतीर्थ्याश्चैकगुरवः। उदरे वा। समानोदर्य्यः सोदर्य्यो वा।

८९। दृग्दृशवतुषु।

एषु समानस्य सःस्यात्। सदृक्। सदृशः। सदृक्षस्तुच्छान्दसः। वतुग्रहण-मुत्तरार्थम्। उक्तः सभावः।

९०। इदम् किमोरीश्की।

इदम ईश् किमः कीः स्यात् तेषु परतः। ईदृक्। ईदृशः। इयान्। इयती। कीदृक्। कीदृशः। कियान्। कियती।

९१। आ सर्वनाम्नः।

तेषु सर्वनाम्न आकारः स्यात्। तादृक्। तादृशः। तावान्। एतावान्। एतादृशः। एतादृक्। यावान्। यादृक्। यादृशः। अन्यादृक्। अन्यादृशः। युष्मादृक्। युष्मादृशः। भवादृक्। भवादृशः। अमूदृक्। अमूदृशः। अस्मादृक्। अस्मादृशः।

९२। विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये।

विष्वग्देवयोः सर्वनाम्नश्च टेःस्थाने ऽद्रिः स्यादञ्चतौ वप्रत्यये। विष्वगञ्चति विष्वद्र्यङ्। (33) विष्वद्र्यञ्चौ। देवद्र्यङ्। यद्र्यङ। तद्र्यङ्। कद्र्यङ्। कद्रीची। वप्रत्यये किम्। विष्वगञ्चनम्।

९३। समःसमि।

समोऽञ्चतौ समिरादिश्यते। सम्यङ्। सम्यञ्चौ। समीची।

९४। तिरसस्तिर्य्यलोपे।

तिरस स्तिरिरादिश्यते तस्मिन्नलोपे। तिर्य्यङ्। अलोपे किम्? लोपे मा भूत्। तिरश्चःपश्य। "लज्जा तिरश्चां यदि चेतसि स्यात्।"

---

(33) विश्वमञ्चतीति वाक्ये तु विश्वाङ्। विश्वाची। विश्वाक्। सवर्णदीर्घत्वं दुर्वारम्।

## ९५ । सहस्य सध्रिः ।

तस्मिन् सहस्य सध्रिः स्यात् । "सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत्" । सध्र्यञ्चौ । "सध्रीचा वलयितपद्मनालसूत्रः ।" सध्रीची ।

## ९६ । सध मादस्थयोश्छन्दसि ।

छान्दसम् ।

## ९७ । द्व्यन्तरुपसर्गेभ्योऽप ईत् ।

एभ्यः परस्याप आदेरीत् स्यात् । द्वीपम् । अन्तरीपम् । प्रादेरनवर्णान्ताद-भिधानम् । समीपम् । नीपम् । नेह । प्रापम् । परापम् ।

## ९८ । ऊदनोर्देशे ।

अनोः परस्याप ऊत् स्यात् । अनूपो देशः । अन्वीपमन्यत्र ।

## ९९ । अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थि-तोत्सुकोतिकारकरागच्छेषु ।

अषष्ठ्यतृतीयास्थस्य अन्यस्य दुगागमः स्यादाशीरित्यादौ परे । अन्या आशीरन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अषष्ठ्यतृतीयास्थस्य किम् ? अन्यस्याशीरन्याशीः । अन्येनास्थितोऽन्यास्थितः । इहाविशेषेण दुक् कारकच्छयो-रिति भाष्यम् । अन्येनान्यस्य वा कारकः अन्यत्कारकः । अन्यस्मिन् भवम् । अन्यस्येदं वा अन्यदीयम् । गहादित्वाच्छः शैषिकः ।

## १०० । अर्थे विभाषा ।

अर्थे परेऽन्यस्य दुग्वा स्यात् । अन्यदर्थः । अन्यार्थो वा ।

## १०१ । कोः कत् तत्पुरुषेऽचि ।

तत्पुरुषेऽचि कोः स्थाने कत् स्यात् । कदन्नम् । कदिन्धनम् । कदुष्णम् । अचि किम् ? कुब्राह्मणः ।

(क) त्रावुपसंख्यानम् । कुत्सितास्त्रयः कत्त्रयः ।

"कृतशस्त्रो न यो जिष्णुर्यश्चाढ्यो यज्ञनिस्पृहः।
कामी यश्च जरन्नेति क्षत्रवंशेषु कत्त्रयः" ॥ १ ॥

## १०२। रथवदयोश्च।

अनयोः कोः कत् स्यात्। कद्रथः। कद्वदः।

## १०३। तृणे च जातौ।

अत्र कोः कत् स्यात्। कत्तृणम्। जातौ किम्? कुतृणानि।

## १०४। का पथ्यक्षयोः।

अनयोः कोः स्थाने काः स्यात्। कापथः। काक्षम्। "काक्षेणानादरेक्षितः।"

## १०५। ईषदर्थे।

अत्र कोः काः स्यात्। कामधुरम्। कातन्त्रम्। काम्लम्।

"देवाकानिनिकावादे वाहिकास्वस्वकाहि वा।
काकारेभभरेकाकानिस्वभव्यव्यभस्वनि" ॥ १ ॥

## १०६। विभाषा पुरुषे।

पुरुषे कोः का वा स्यात्। कापुरुषः कुपुरुषो वा।

## १०७। कवञ्चोष्णे।

उष्णे परे कोः काः कवं च वा स्यात्। कोष्णं कवोष्णं कदुष्णं वा।

## १०८। पथि च च्छन्दसि।

कान्दसम्।

## १०९। पृषोदरादीनि यथोपदिष्टम्।

पृषोदरप्रकाराणि साधूनि स्युः शिष्टैर्यथाप्रयुक्तानि। शिष्टलक्षणं तु भाष्यादवधार्य्यम्। (34) पृषदुदरमस्य पृषोदरः। वारिवाहको बलाहकः। भुवन्तः सीदन्त्यस्यां बृसी। मह्यां रौति मयूरः। पूर्य्यन्ते गलन्ति च पुद्गला

(34) अस्यैव हि सूत्रस्य भाष्ये शिष्टलक्षणमुक्तम्।

देहाः । तथ्यस्य भावस्तथता । रतिस्तननं रत्नम् । वाहितं पापमनेन ब्राह्मणः । जितमेनोऽनेन जिनः । यशः कौति यक्षः । कौ जीर्य्यति कुञ्जरः । हिनस्तीति सिंहः । अङ्गन्त्यस्मिन्नङ्गनम् । शवानां शयनं श्मशानम् । ऊर्द्ध्वं मुखमस्य उदूखलम् । पिशिताशः पिशाचः । एवं षोड़न् षोड़शः षोढ़ा षड्धा चेत्यादि ।

"वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्" ॥ १ ॥

## ११० । संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ।

संख्यादेः परस्याह्नस्याहन् वा ङौ स्यात् । द्व्यह्ने द्व्यहनि द्व्यह्नि वा । त्र्यह्ने त्र्यहनि त्र्यह्नि वा । व्यह्ने व्यहनि व्यह्नि वा । सायाह्नि सायाह्ने सायाहनि वा । ङौ किम् ? द्वयोरह्नोर्भवो द्व्यह्नः । तद्धितार्थे समासः (२।१।५१) । विगत-मह्नो व्यह्नः । प्रादिसमासः। अह्नः सर्वैक टच् । अह्नः सायः सायाह्नः । एकदेशिसमासः ।

## १११ । ढ्रलोपे पूर्वस्य दीर्घोऽणः ।

ढरयोर्लोपे पूर्वस्याणो दीर्घः स्यात् । लीढम् । गूढ़म् । नीरक्तम् । इन्दूराजते । पुनारमते । पुनारक्तम् । पुनारोढुम् । धातूरजः । पूर्वग्रहण-मनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । इह ढ्लोप-(८।३।१३) सहचरितस्य रोरि-(८।३।१४) लोपस्य ग्रहणादनीयरो रलोपे न दीर्घः । दर्शनीयः पटः । दीर्घाधिकारो यावत् क्रमश्च (६।४।१८) क्षीति ।

## ११२ । सहिवहोरोदवर्णस्य ।

सहिवहोरवर्णस्यौत्स्याड्ढलोपे । सोढ़ा । सोढुम् । सोढ़व्यम् । वोढ़ा । वोढुम् । वोढ़व्यम् । वर्णग्रहणं क्तातायामपि वृद्धौ यथा स्यात् । वहेर्लुङि तसि उदवोढ़ाम् । अवर्णस्य किम् ? ऊढ़ः । ऊढ़वान् ।

## ११३ । साढ्यै साढ्वासाढ़ेति निगमे ।

## ११४ । संहितायाम् ।

छान्दसमेतद्द्वयम् । संहिताधिकारस्य च्छन्दस्येव प्रयोजनम् ।

## ११५। कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्र-स्रुवस्वस्तिकस्य।

कर्णे परे लक्षणवाचिनो दीर्घः स्यात्। दात्राकर्णः। स्थूणाकर्णः। अविष्टादीनां किम्? विष्टकर्णः। अष्टकर्णः। स्वस्तिककर्णः।

## ११६। नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ।

एषु क्विबन्तेषु परतो दीर्घः स्यात्। उपानत्। नीवृत्। प्रावृट्। मृगावित्। मर्मावित्। नीरुक्। सहे श्छन्दसि णिवः (३।२।६४)। तुराषाट्। तनि परीतत्। क्वौ किम्? परिणहनम्। गतिकारकपूर्वस्याभिधानान्नेह। तिग्मरुचः। पटुरुचः।(35)

## ११७। वनगिर्य्योः संज्ञायां कोटरकिंशुलकादीनाम्।

कोटरादेर्वने किंशुलकादेर्गिरौ दीर्घः स्यात्। कोटरावणम्। मिश्रकावणम्। किंशुलकागिरिः।

## ११८। वले।

वले परे दीर्घः स्यात्। दन्तावलो हस्ती। कृषीवलः। अण इत्येव। भ्रातृवलः। संज्ञायामित्येव। पुत्रवलः।

## ११९। मतौ बह्वचोऽनजिरादीनाम्।

बह्वचां मतुपि दीर्घः स्यात्। वीरणावती। मशकावती। नद्यां मतुप् (४।२।८५)। बह्वचः किम्? व्रीहिमती। अनजिरादेः किम्? अजिरवती। मलयवती। संज्ञायामित्येव। वलयवती।

## १२०। शरादीनाञ्च।

मतुपि दीर्घः स्यात्। शरावती। अहिवती। पद्मावती। नद्यां मतुप् (४।२।८५)। संज्ञायामित्येव। शरवती भूमिः। अहिमती।

---

(35) वक्षःस्थलव्यापिरुचं दधान इति रघुकाव्ये।

## १२१ । इको वहेऽपीलोः ।

इगन्तस्य वहे दीर्घः स्यात् । ऋषीवहम् । कपीवहम् । अपीलोः किम् । पीलुवहम् ।

## १२२ । उपसर्गस्य घञ्यमनुष्ये बहुलम् ।

प्रादेर्घञि दीर्घः स्यात् । वीमार्गः । अपामार्गः । बाहुल्यान्न च भवति । विहारः । निहारः । सादकारयोः कृत्रिमे । प्राकारः । प्रासादः । अन्यत्र प्रसादः । प्रकारः । वेशादिषु वा । प्रतिवेशः प्रतीवेशो वा । प्रतिकारः प्रतीकारो वा । क्वचिन्नैव । प्रसारः । प्रहारः । प्रवेशः । प्रसेवः । अमनुष्ये किम् ? निषादश्चण्डालः ।

## १२३ । इकः काशे ।

प्रादेरिगन्तस्य काशे दीर्घः स्यात् । प्रतीकाशः । "आसक्तो भव नीकाशैः ।" अनूकाशः । इकः किम् ? प्रकाशः ।

## १२४ । दस्ति ।

दः स्थाने यस्तकारस्तस्मिन्नुपसर्गस्य दीर्घः स्यात् । परीत्तम् । नीत्तम् । वीत्तम् । अभीत्तम् । सूत्तम् । इकः किम् ? प्रत्तम् ।

## १२५ । अष्टनः संज्ञायाम् ।

अष्टनो नाम्नि दीर्घः स्यात् । अष्टावक्रो मुनिः । अष्टापदं सुवर्णम् । संज्ञायां किम् ? "अष्टभार्य्योऽसि पुण्यकृत् ।"

## १२६ । छन्दसि च ।

छान्दसम् ।

## १२७ । चितेः कपि ।

दीर्घः स्यात् । एकचितीकः । द्विचितीकः ।

## १२८ । विश्वस्य वसुराटोः ।

अनयोर्दीर्घः स्यात् । विश्वावसुः । विश्वाराट् । राडिति निर्देशाद् विश्वराजौ ।

## १२९ । नरे संज्ञायाम् ।

विश्वस्य दीर्घः स्यात् । विश्वानरो नाम मुनिः ।

## १३० । मित्रे चर्षौ ।

मित्रे विश्वस्य दीर्घः स्यादृषिश्चेत् । विश्वामित्रः । इह मन्त्रे षट् सूत्राणि । (36)

## १३७ । अन्येषामपि दृश्यते ।

दीर्घ इत्येव । दण्डादण्डि । बाहूबाहवि । यष्टीयष्टि । शुनः संज्ञायाम् । शुनो दंष्ट्रा श्वादंष्ट्रा । ततोऽण् । शौवादंष्ट्रः । इञ् । शौवादंष्ट्रिः । श्वाकर्णः । (37) पूर्वामुखः । उत्तरामुखः । दक्षिणामुखः । दृशिग्रहणादिह पूरुषो नारक इत्यादावप्ययं दीर्घ इति वामनवृत्तिः । अनेनोत्तरपदविधानादप्राप्तिरिति पूरुषादयो दीर्घोपदेशा एव संज्ञाशब्दा इति भागवृत्तिः ।

## १३८ । चौ ।

अञ्चतौ लुप्ताकारनकारे दीर्घः स्यात् । दधीचः पश्य । दधीचा । सध्रीचा । सध्रीचः । सध्रीची । मधूचा । मधूचः । विष्वद्रीचः । "विष्वद्रीचीर्विक्षिपन् सैन्यवीचीः ।" "सध्रीचा वलयितपद्मनालसूत्रः ।"

## १३९ । संप्रसारणस्य ।

संप्रसारणान्तस्योत्तरपदे दीर्घः स्यात् । कारीषगन्धीपुत्रः । कौमुदगन्धीपुत्रः । कारीषगन्धीपतिः । कौमुदगन्धीपतिः । पूर्ण उत्तरपदाधिकारः ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

षष्ठाध्यायस्य तृतीयः पादः ॥६।३॥

समाप्तश्चालुक्पादः ॥

---

(36) १३१ । मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ । १३२ । ओषधेश्च विभक्तावप्रथमायाम् । १३३ । ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् । १३४ । इकः सुञि । १३५ । द्व्यचोऽतस्तिङः । १३६ । निपातस्य च ।

(37) शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः । अभियुक्तोक्तिरियम् । श्वादन्तः । श्वावराहम् । श्वापुच्छम् । श्वापदः ।

अथ

# भाषावृत्तिः ।

## षष्ठोऽध्यायः । चतुर्थः पादः ।

### १ । अङ्गस्य ।

अधिकारोऽयम् । अङ्गस्य कार्य्यं वक्तव्यम् पञ्चपाद्याम् । (38)

### २ । हलः ।

संप्रसारणान्तस्याङ्गस्य हलः परस्य दीर्घः स्यात् । संवीतम् । आहूतम् । अङ्गस्य किम् ? निरुतम् । कथं तृतीयेति ? निपातनात् ।

### ३ । नामि ।

नामि परेऽङ्गस्य दीर्घः स्यात् । अग्नीनाम् । वायूनाम् । मातॄणाम् । भ्रातॄणाम् ।

### ४ । न तिसृचतसृ ।

अनयोर्दीर्घो न स्यात् । तिसृणाम् । चतसृणाम् ।

### ५ । छन्दस्युभयथा ।

छान्दसम् ।

### ६ । नृ च ।

नृ चेति नामि दीर्घविकल्पः । भाषायामपीत्येके । नृणाम् । नॄणां वा । (39)

---

(38) षष्ठाध्यायस्य चतुर्थः पादः सप्तमाध्यायस्य चत्वारः पादाश्चेति पञ्चपादी । तत्र ।

(39) अतएव चिन्ताजर्ज्जरचेतसां वत नृणां का नाम शान्तिः कथेति भर्तृहरिशतके । नृणामेको गम्य स्त्वमसि पयसामर्णव इवेति महिम्नःस्तवे । दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने इति कुमारे च ।

७। नोपधायाः।

नान्तस्योपधाया नामि दीर्घः स्यात्। पञ्चानाम्। सप्तानाम्। दशानाम्। नामीत्येव। वर्मणाम्। चर्मणाम्।

८। सर्वनामस्थाने चासम्बुद्धौ।

शिः सुट् सर्वनामस्थानम्। तत्र परे नोपधाया दीर्घः स्यात्। राजा। राजानौ। राजानः। सीमा। सीमानौ। सीमानः। सामानि सन्ति पश्य वा। कुण्डानि। असम्बुद्धौ किम्? हे तक्षन्।

९। वा षपूर्वस्य निगमे।

छन्दःसूत्रमेकम्।

१०। सान्तमहतः संयोगस्य।

सान्तसंयोगस्य महतश्च नोपधायाः पूर्ववद्दीर्घः स्यात्। श्रेयान्। विद्वान्। श्रेयांसि। पयांसि। सर्पींषि। महान्। महान्ति। असम्बुद्धा-वित्येव। हे श्रेयन्।

११। अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्।

अप्शब्दस्य तृन्तृजन्तानाञ्च स्वस्राद्यष्टकस्य चोपधायाः सर्वनामस्थाने दीर्घः स्यात्। आपः सन्ति। समासेऽपोऽनङ्गत्वान्न दीर्घः। "बह्वपानि तड़ागानि सारसाः समुपासते।" समासान्तविधेरनित्यत्वाद् बह्वाम्पीत्यपीति केचित्। तृन्। कर्त्तारः कटान्। तृच्। श्रोतारः शास्त्राणाम्। स्वसारौ। स्वसारः। एवं यावत् प्रशास्तारौ प्रशास्तारः। (40) असम्बुद्धावित्येव। हे कर्त्तः। हे स्वसः। हे नप्तः।

१२। इन्हन्पूषार्य्यम्णां शौ।

एषामुपधायाः शावेव दीर्घः स्यात्। नान्यत्र। बहुदण्डीनि। बहुवाग्-ग्मीनि। सुवृत्रहाणि। सुपूषाणि। बह्वर्य्यमाणि। शौ किम्? वृत्रहणौ।

---

(40) समर्थसूत्रे (२।१।१) उद्गातार इति भाष्यकारप्रयोगादुद्गातृशब्दस्यापि दीर्घः। उद्गातारौ। उद्गातारः।

दण्डिनौ। भ्रूणहनौ। पूषणौ। अर्य्यमणौ। "प्रोषितार्य्यमणं मेरोरन्धकारस्तटीमिव"। "तस्मिन् वृत्रहणि स्थितम्।" वृत्रहायत इति नायमुपधाया दीर्घः।

## १३। सौ च।

तेषां सौ दीर्घः स्यात्। दण्डी। वृत्रहा। पूषा। अर्य्यमा। असम्बुद्धावित्येव। हे अर्य्यमन्। हे पूषन्।

## १४। अत्वसन्तस्य चाधातोः।

अत्वन्तस्यासन्तस्य चोपधाया दीर्घः स्यात् सौ। अतु। भवान्। कृतवान्। गोमान्। अस्। सुयशाः। चन्द्रमाः। सुमेधाः। अधातोः किम्? पिण्डं ग्रसते पिण्डग्रः। असम्बुद्धावित्येव। हे गोमन्। हे चन्द्रमः।

## १५। अनुनासिकस्य क्विझलोः क्ङिति।

अनुनासिकान्तस्य क्वौ झलादौ च क्ङित्युपधाया दीर्घः स्यात्। क्वौ। प्रतान्। प्रतानौ। प्रतान्भ्याम्। प्रदान्। प्रशान्। झलि। शान्तः। शान्तवान्। शान्त्वा। शान्तिः। यङ्लुकि शंशान्तः। क्ङिति किम्? गन्ता। यन्ता।

## १६। अजझनगमां सनि।

अजन्तानां हनो गमश्च झलि सनि दीर्घः स्यात्। चिचीषति। चिकीर्षति। जिहीर्षति। जिघांसति। अधिजिगांसते शास्त्रम्। गमेरिङादेशस्य ग्रहणान्नेह। सञ्जिगंसते वत्सो मात्रा।

## १७। तनोतेर्विभाषा।

सनि तनोतेर्वा दीर्घः स्यात्। तितांसति तितंसति वा। झलीत्येव। तितनिषति।

## १८। क्रमश्च क्त्वि।

क्रमः क्त्वि वा दीर्घः स्यात्। क्रन्त्वा क्रान्त्वा वा। झलीत्येव। क्रमित्वा। उक्तो दीर्घः।

## १९ । च्छ्वोः शूडनुनासिके च ।

सतुक्कस्य च्छस्य शो वस्य च ऊट् स्यादनुनासिके क्वौ झलि क्ङिति । विश्नः । प्रश्नः । पृष्टः । पृष्ट्वा । शब्दप्राट् । शब्दप्राशौ । इह क्ङितीति नानुवर्त्तते । क्विझलाद्यनुवृत्तिरपि वकारार्था । न च्छकारार्थेत्येके । तन्मतेन व्रश्चादिसूत्रेणैव ( ८।२।३७) झलि पदान्ते च च्छस्य षः । पृष्टः । पृष्ट्वा । शब्दप्राट् । शब्दप्राड्भ्याम् । अजादौ तु शब्दप्राच्छाविति । वस्योट् । सिवेरौणादिको नः । स्योनः । अक्षद्यूः । हिरण्यष्ठ्यूः । वस्त्रस्यूः । रत्नस्यूः । द्यूतम् । द्यूत्वा । ये तु क्ङितीति नानुवर्त्तयन्ति तेषां धावुदिवो र्यङ्लुकि पित्यक्ङित्यपि झलि वस्योट् । दाधौति । देद्योति । अन्येषां वलि लोपे (६।१।६६) दाधाति । देदेतीति ।

## २० । ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।

एषां वस्योपधायाश्चोट् स्यात् क्वौ झलि क्ङिति । जूः । जूरौ । जूर्णः । जूर्त्तिः । तूः । तूरौ । तूर्णः । तूर्त्तिः । स्रूः । स्रुवौ । स्रूतः । स्रूतिः । ऊः । ऊवौ । ऊतिः । मूः । मुवौ । मूतिः ।

## २१ । राल्लोपः ।

रेफाच्छ्वयोर्लोपः स्यात् क्वौ झलि क्ङिति । मुर्छा । मूः । मुरौ । मूर्त्तिः । उर्वी । ऊः । ऊर्त्तिः । तुर्वी । तूः । तुरौ । तुरः । तूर्त्तिः ।

## २२ । असिद्धवदत्रा भात् ।

आ भात् कार्य्याणि परस्परमसिद्धानि बोद्धव्यानि । एधि । शाधि । झलन्ताद्धिः । जहि । हिलोपो न भवति । अत्रेति किम् ? व्याश्रये (41) मा भूत् । प्रणमय्य गतः । णौ क्त्वो ल्यप्ययादेशेनासिद्धः । आ भात् किम् ? अभाजि रागः ।

(क) वुग्युटावुवङ्यणोः सिद्धौ वाच्यौ । बभूव । उपदिदीये ।

## २३ । श्नान्नलोपः ।

श्नमः परस्य नकारस्य लोपः स्यात् । अनक्ति । भनक्ति । हिनस्ति ।

---

(41) व्याश्रये भिन्नाश्रय इत्यर्थः ।

## २४ । अनिदितां हल उपधायाः क्ङिति ।

क्ङिति हलन्तानामुपधाया नकारस्य लोपः स्यात् । स्रस्तम् । सनीस्रस्यते । अनिदितां किम् ? वदि । वन्द्यते । हलः किम् ? नीयते । उपधायाः किम् ? नह्यते । क्ङिति किम् ? स्रंसिता ।

(क) लङ्गिकम्प्योरुपतापशरीरविकारयोः । विलगितः । विकपितः ।

## २५ । दंशसञ्जस्वञ्जां शपि ।

एषां शपि नलोपः स्यात् । दशति । प्रसजति । परिष्वजते ।

## २६ । रञ्जेश्च ।

शपि नलोपः स्यात् । रजति । रजन्ति ।

(क) रञ्जेर्णौ मृगरमणे । रजयति मृगान् । रजिता मृगाः । (42) मृगरमणे किम् ? रञ्जयति वस्त्रम् । घिनुणि तु त्यजरार्जेति ( ३।२।१४२ ) निपातनान्नलोपः । रागी । इह तु रजको रजनं रजतं रज इत्यौणादिकानां कित्त्वोपगमादनिदितामित्येव (६।४।२४) नलोपः ।

## २७ । घञि च भावकरणयोः ।

अनयोर्घञि रञ्जेर्नलोपः स्यात् । रागो वर्त्तते । रागः कुङ्कुमः । अनयोः किम् ? रङ्गः ।

## २८ । स्यदो जवे ।

वेगे स्यदः स्यात् । स्यन्दोऽन्यत्र ।

## २९ । अवोदैधौद्मप्रश्रथहिमश्रथाः ।

ओद्म मनिन्नन्तम् । अन्ये घञन्ता निपात्यन्ते । उन्दी अवोदः किञ्चिदार्द्रः । इन्धी एधः काष्ठम् । उन्दे र्मनिन् । ओद्म क्लिन्नम् । "प्रश्रथवद् भ्रमन्तमाजा"विति व्योषः । हिमं श्रथाति मुञ्चति हिमश्रथश्चन्द्रः । "निराकृतहिमश्रथा" इति लुट्सर्गे भट्टिप्रयोगः ।

---

(42) कलतया वचसः परिवादिनीस्वरजिता रजिता वशमाययुरिति माघः ।

## ३०। नाञ्चेः पूजायाम्।

पूजार्थस्याञ्चतेर्नलोपो न स्यात्। अञ्चिता गुरवः। अञ्चति। पूजाया-मिति किम्? उदक्तमुदकं कूपात्।

## ३१। क्त्वि स्कन्दिस्यन्दोः।

अनयोः क्त्वि॰नलोपो न स्यात्। स्कन्त्वा। स्यन्त्वा। प्रस्कद्य। प्रस्यद्य।

## ३२। जान्तनशां विभाषा।

जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि। रङ्क्त्वा रक्त्वा वा। भङ्क्त्वा भक्त्वा वा। नंष्ट्वा नष्ट्वा वा। (43)

## ३३। भञ्जेश्च चिणि।

चिणि भञ्जेर्नलोपो वा स्यात्। अभाजि अभञ्जि वा।

## ३४। शास इदङ्हलोः।

शासेरुपधाया इत् स्यादङि हलादौ क्ङिति। अन्वशिषत्। शिष्टः। शिष्टवान्। शिष्यः। वयं शिष्मः। अङ्हलोः किम्? "अनुशासतमित्यना-कुलम्।" आङ्शासेर्नेष्यते। आशास्ते। कथं क्विपि आशीः? शियाशीः-प्रैषेष्विति (८।२।१०४) निपातनात्।

## ३५। शा हौ।

शासस्थाने हौ परे शाः स्यात्। "शाधि नः करवाम किम्।"

## ३६। हन्तेर्जः।

हौ हन्तेर्जः स्यात्। जहि शत्रून्। (44)

---

(43) रधादित्वान्नशो वेट्त्वम्। तेन क्त्वाप्रत्यये नशित्वेति च रूपम्।

(44) अत्र सृष्टिधरः—"हन्तेः श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। जंघहि शत्रून्। अत्राभ्यासा-च्चेति (७।३।५५) कुत्वमपि नास्ति। तत्रापि हन्तेरिति श्तिपः सत्त्वात्॥" इति। न्यासकारस्तु "यद्यपि हो हन्ते (७।३।५४) रित्यतो हन्तेरित्यनुवर्त्त्य विहितं तथापि यङ्लुकि कुत्वं भवत्येवे"त्याह। जङ्घहि। श्तिप्शपा निर्देशस्तु नित्यः। गुणो यङ्लुकोरिति (७।४।८२) सामान्यापेक्षज्ञापकादिति भाव इति च भट्टोजिः। आत्रेयमते तु मानुनासिकलोपः। जङ्गहि।

**३७ । अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।**

झलि एषां क्ङित्यनुनासिको लुप्यते । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । किति । यतम् । यत्वा । यतिः । ङिति हतः । हथः । वनतेः क्तिन् वतिः । तनोत्यादेर्गणात् । सन्ततिः । ततम् । तत्वा । क्षणु । क्षतम् । क्षत्वा । क्षतिः । ङिति अतत । अतथाः । झलि किम् ? गम्यते । रम्यते । रमित्वा । क्ङिति किम् ? गन्ता ।

**३८ । वा ल्यपि ।**

तेषामनुनासिकलोपो ल्यपि वा स्यात् । "उद्यत्य खड्गमर्जुनः ।" उद्यम्य वा । आगम्य । आगत्य वा । विरम्य विरत्य वा । व्यवस्थितविभाषया नकारस्य लोपो नित्य एव । आहत्य । अवमत्य । प्रतत्य । कथं "चतुर्दिगीशानवमन्य मानिनी"ति ? तर्हि मन स्तम्भ इत्यस्य चौरादिकस्यानित्यण्यन्तत्वेऽस्तु ।

**३९ । न क्तिचि दीर्घश्च ।**

क्तिचि तेषां लोपोऽनुनासिकस्य क्विझलोरिति ( ६।४।१५ ) दीर्घश्च न स्यात् । यन्ति । रन्तिः । तन्तिः । अनुदात्तोपदेश इत्येव । कान्तिः । शान्तिः ।

**४० । गमः क्वौ ।**

क्वौ गमोऽनुनासिकलोपः स्यात् । अङ्गगत् । कलिङ्गगत् ।

(क) यमादीनामिति वक्तव्यम् । संयत् । आनत् । परीतत् । सुवत् ।

(ख) ऊङ् च गमादीनाम् । अग्रेगूः ।

**४१ । विड्वनोरनुनासिकस्यात् ।**

अनुनासिकस्यादिति द्वयमधिक्रियते । विड्वनौ छान्दसौ । अवावा । अवावरी (45) ।

---

(45) अवावरीति न्यासकारादिमतेन । मतान्तरे तु वनो र च इति वार्त्तिकादत्र न ङीब्रेफौ । अवावा ब्राह्मणी । चौरीत्यर्थः । ओणृ अपनयन इत्यस्माद् वनिप् ।

## ४२ । जनसनखनां सञ्झलोः ।

एषामाकारः स्याज् झलादौ सनि क्ङिति च । सिषासति । सातः । तनादिभ्यस्तथासोः सिज्लुकि । असात । असाथाः । खातम् । जातम् । जातिः । झलीत्येव । जिजनिषति । चिखनिषति । सिसनिषति ।

## ४३ । ये विभाषा ।

यादौ क्ङिति तेषामाद्वा स्यात् । जायते जन्यते वा । जाजायते जञ्जन्यते वा । सायते सन्यते वा । सायात् सन्याद्वा । खायते खन्यते वा । चाखायते चङ्खन्यते वा ।

## ४४ । तनोतेर्यकि ।

तनोतेर्यक्याद्वा स्यात् । तायते तन्यते वा । यकि किम् ? तन्तन्यते ।

## ४५ । सनः क्तिचि लोपश्चास्यान्यतरस्याम् ।

सनोतेः क्तिचि लोपः स्याद्वा । आत्वं वा । सतिः सातिः सन्तिः वा ।

## ४६ । आर्धधातुके ।

अधिकारोऽयं यावत्न ल्यपीति (६।४।६९) ।

## ४७ । भ्रस्जो रोपधयो रमन्यतरस्याम् ।

भ्रस्जो रेफोपधयोर्निवर्त्तको रमागमो वा स्यादार्धधातुके । भ्रष्टा भर्ष्टा वा । भ्रज्जनं भर्ज्जनं वा । कथं भृष्टम् ? संप्रसारणस्य बलीयस्त्वात् ।

## ४८ । अतो लोपः ।

आर्धधातुके ह्रस्वाकारस्य लोपः स्यात् । चिकीर्षिता । धिनुतः । कृणुतः ।

(क) वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन । चिकीर्षकः । जिह्रीर्ष्यते । आर्धधातुक इत्येव । वृक्षत्वम् । वृक्षवान् ।

## ४९ । यस्य हलः ।

हलः परस्य यकारस्य लोपः स्यात् । बेभिदिता । चेच्छिदिता । यस्येति संघातग्रहणान्नेह । ईर्ष्यिता । हलः किम् ? लोलूयिता ।

## ५०। क्यस्य विभाषा।

हलः परस्य क्यस्य वा लोपः स्यात्। समिधिता समिध्यिता वा। समिधितुं समिध्यितुं वा। नमसितुं नमस्यितुं वा। नमसिता नमस्यिता वा।

## ५१। णेरनिटि।

अनिड्यार्धधातुके णेर्लोपः स्यात्। पाक्तिः। याष्टिः।

(क) इयङ्यण्गुणवृद्धिदीर्घेभ्योऽपि णिलोपः पूर्वविप्रतिषेधेन। अततक्षत्। आटिटत्। कारणा। कारकः। कारणम्। कार्य्यते। अनिटि किम्? कारयितव्यम्। इह गणयते र्यति गणेयम्। चिन्तयते रङि चिन्तियेति णिलोपोऽयं नास्ति। व्यवस्थितविभाषानुवर्त्तनादित्युक्तम्।

## ५२। निष्ठायां सेटि।

सेटि निष्ठायां णिलोपः स्यात्। कारितम्। गणितम्। लक्षितम्। सेटीति किम्? संज्ञपितः पशुः।

## ५३। जनिता मन्त्रे।

## ५४। शमिता यज्ञे।

सूत्रद्वयं मन्त्रे।

## ५५। अयामान्ताल्वाय्येत्न्विष्णुषु।

आमादिषु णेरयादेशः स्यात्। आम्। कामयामास। कारयामास। अन्तः। गण्डयन्तः। आलुः। स्पृहयालुः। आय्यः। स्पृहयाय्यः। इत्नुः। स्तनयित्नुः। इष्णुच्। पारयिष्णुश्छान्दसः।

## ५६। ल्यपि लघुपूर्वात्।

लघुपूर्वाल् ल्यपि णेरयादेशः स्यात्। प्रणमय्य गतः। प्रवेभिदय्य गतः। परिगणय्य। लघुपूर्वात् किम्? प्रबोध्य। प्रयाप्य। प्रवाच्य।

## ५७। विभाषाऽपः।

आप्नोते र्णेर्ल्यपि परस्यायादेशः स्याद्वा। प्राप्य प्रापय्य वा।

५८। युष्लुवोर्दीर्घश्छन्दसि।

छन्दःसूत्रमेकम्।

५९। क्षियः।

क्षियो ल्यपि दीर्घः स्यात्। प्रक्षीय।

६०। निष्ठायामण्यदर्थे।

निष्ठायां क्षियो दीर्घः स्यात् कर्त्तरि। उपक्षीणः। अधिकरणे। इदमेषां क्षीणम्। ण्यदर्थौ भावकर्मणी। तत्र निषेधः। क्षितमस्य जातम्। भावे क्तः।

६१। वाऽऽक्रोशदैन्ययोः।

आक्रोशे दैन्ये च वाच्येऽनन्तरो विधिर्वा स्यात्। क्षीणायुः क्षितायु र्वा। दैन्ये। क्षीणो वराकः क्षितो वा। क्षीणकः क्षितको वा।

६२। स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च।

भावे कर्मणि च ये स्यादयस्तेष्वजन्तानां हनग्रहदृशाञ्च चिण्वत् कार्य्यं वा स्यात्। इट् च स्यादीनाम् भवति। भावे। शयिष्यते शायिष्यते वा। कर्मणि। दास्यते दायिष्यते वा गौः। सिचि। अदिषाताम्। अदायिषातां वा। सीयुट्। दासीष्ट दायिसीष्ट वा। तासि। दाता दायिता वा। धाता धायिता वा। एवं हन्तेः। हनिष्यते घानिष्यते वा। वधिषीष्ट घानिषीष्ट वा। ग्रहेः। ग्रहीष्यते ग्राहिष्यते वा। ग्रहीषीष्ट ग्राहिषीष्ट वा। दृशेः। द्रक्ष्यते दर्शिष्यते वा। दृक्षीष्ट दर्शिषीष्ट वा। द्रष्टा दर्शिता वा। इहाङ्गप्रकरणे चिण्वद्-भावेनाङ्गमेव कार्य्यमतिदिश्यते। तेन हनिष्यते घानिष्यते वा। अध्येष्यते अध्यायिष्यते वा। एष्यते आयिष्यते वा। हनिणिङां प्रकरणान्तरविहिता वध-गागङादेशा न भवन्ति।

६३। दीङो युड़चि क्ङिति।

अजादौ क्ङिति दीङो युड़ागमः स्यात्। उपदिदीये। उपदिदीयिरे। क्ङिति किम्? उपदानम्।

## ६४ । आतो लोप इटि च ।

इट्यजादौ क्ङिति चातो लोपः स्यात् । पपिथ । तस्थिथ । पपतुः । पपुः । गोदः । सर्वंदः । गोघ्नः । सर्वंज्ञः ।

## ६५ । ईद् यति ।

आकारान्तानामीत् स्याद् यति । देयम् । धेयम् । गेयम् । ग्लेयम् । दीर्घोच्चारणमुत्तरार्थम् ।

## ६६ । घुमास्थागापाजहातिसां हलि ।

हलादौ क्ङित्येषामीत् स्यात् । घु । दीयते । धीयते । देदीयते । मीयते । मेमीयते । गीयते । स्थीयते । अध्यगीष्ट । पीयते जलम् । हीयते । अध्यवसीयते । पाते रोहाङस्य न भवति । पायते राज्ञा लोकः । उद्धायते सूर्य्येण प्रातः । कथं स्थः क चेति ( ३।२।७७ ) क्विपि ग्रंस्थाः ? क्वावीत्त्व-प्रतिषेध इति भाष्यम् । (46)

## ६७ । एर्लिङि ।

तेषां लिङि स्यादेत् । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । सोमं पेयात् । हेयात् । अध्यवसेयात् । क्ङितीत्येव । दासीष्ट ।

## ६८ । वान्यस्य संयोगादेः ।

तिष्ठतेरन्यस्य संयोगादेर्लिङि वा स्यादेत् । ग्लेयात् । ग्लायाद्वा । ध्येयात् । ध्यायाद्वा । अङ्क्स्येत्येव । निर्यायात् । संयोगादेः किम् ? पायाद्वः पुरुषोत्तमः ।

## ६९ । न ल्यपि ।

ल्यपि घुमादीनामीत्त्वं न स्यात् । प्रदाय । विधाय । प्रस्थाय । प्रमाय । अनुमाय । उद्गाय । प्रहाय । विहाय । प्रपाय । अवसाय । उपमाय । कथमापीय प्रातरेवेति ? पीङ् पाने । तेनोद्गीय खलेनेति तु चिन्त्यम् । (47)

---

(46) एवञ्च "वासवदत्तायां क्षणइव यशोदानन्दकर इति दानं दा इति श्लेषसङ्गति"रिति सृष्टिधरः ।

(47) अत्र "चिन्ता च मयते ( ६।४।७० ) रिदन्यतरस्यामित्यतोऽन्यतरस्यांग्रहणस्य सिंहावलोकन-न्यायादनुवृत्तेः" इति दुर्घटवृत्तौ शरणदेवस्य समाधानम् । एवञ्च सिंहावलोकनेन किं किं न कर्त्तुं शक्येत ?

७०। मयतेरिदन्यतरस्याम्।

मेङो ल्यपि वा स्यादित्। अपमित्य अपमाय वा। उक्तमार्धधातुके।

७१। लुङ्लङ्लृङ्क्ष्वडुदात्तः।

एष्वङ्गस्याडागमः स्यात्। अकार्षीत्। अकरोत्। अकरिष्यत्। अगमिष्यत्। अपचत्।

७२। आडजादीनाम्।

तेष्वजादीनामाट् स्यात्। ऐच्छिष्ट। ऐच्छत। ऐच्छिष्यत।

७३। छन्दस्यपि दृश्यते।

छन्दः सूत्रमेकम्।

७४। न माङ्योगे।

माङ्योगेऽडाटौ न स्याताम्। मा भवान् कार्षीत्। मास्म करोत्। मा भवानीच्छिष्ट। कथं मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समा इति। अडिता माशब्देनेति केचित्। तन्न। माङि लुङिति (३।३।१७५) काल-सामान्ये लुङनुपपत्तेः। तस्माच्चिन्त्यमेतत् (48)।

७५। बहुलञ्छन्दस्यमाङ्योगेऽपि।

७६। इरयो रे।

छन्दःसूत्रद्वयम्।

७७। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ।

अजादावेषामिकारोकारयोरियङुवङौ स्याताम्। श्नुः। शक्नुवन्ति। धातोः। चिच्छियतुश्चिच्छियुः। श्रियः। नियः। लुवः। पुवः। भुवः। अन्वभुवः। भ्रुवौ। भ्रुवः। अचि किम्? शक्नुयात्। राध्नुयात्।

(क) इयङुवङ्भ्यां गुणवृद्धी विप्रतिषेधेन। चयनम्। चायकः। लवनम्। लावकः।

---

(48) आर्षोऽयं प्रयोगः। "न ह्यात्मनुवर्तन्ते स्वतन्त्रा ऋषयः किल।" इति।

७८ । अभ्यासस्यासवर्णे ।

अभ्यासस्य य्वो इसवर्णेऽचि तौ स्याताम् । इयाय । इयर्त्ति । इयेष । उवोष । असवर्णे किम् ? ऊषुः ।

७९ । स्त्रियाः ।

स्त्रीशब्दस्याचि स्यादियङ् । स्त्रियौ । स्त्रियः । स्त्रीणामित्यत्र परत्वान्नुट् ।

८० । वाऽम्शसोः ।

स्त्रिया अमि शसि चेयङ् वा स्यात् । स्त्रियं पश्य । स्त्रीम् पश्य । स्त्रियः पश्य । स्त्रीः पश्य ।

८१ । इणो यण् ।

इणोऽचि यण् स्यात् । यन्ति । यन्तु । ईयुः । इयङादेशापवादोऽयं योगः । अयं यण् मध्येऽपवादत्वाद् गुणवृद्धिभ्यां परत्वाद् बाध्यते । अयनम् । आयकः । इयाय ।

८२ । एरनेकाचोऽसंयोगपूर्वस्य ।

इकारान्तस्यानेकाचोऽङ्गस्याचि यण् स्यात् । निन्यतुर्निन्युः । निन्यिरे । उन्न्यौ । प्रण्यौ । सेनान्यौ । सेनान्यः । ग्रामण्यौ । क्विबन्तस्य गतिकारकपूर्वस्यैवेष्यते । ततो नेह । परमनियौ । परमनियः । गतिसाहचर्य्यात् कारकपूर्वस्यापि नित्यसमासेऽभ्युपगमान्नेह । अवणेऽधीर्यस्य तेन अवणधिया । (49) असंयोगपूर्वस्य किम् ? चिच्चियतुः । चिच्चियुः । यवक्रियौ । कथमुन्नयौ ? धातोरित्येव । तेन धात्ववयवसंयोगस्तत्राज्यः ।

८३ । ओः सुपि ।

उवर्णान्तस्याजादौ सुपि यण् स्यात् । धर्मस्वौ । धर्मस्वः । खलप्वौ । खलप्वः । "अङ्गदस्वं पुनर्हन्तुम् ।" सुपि किम् ? लुलुवतुः । लुलुवुः ।

---

(49) भट्टोजि in his शब्दकौस्तुभ in 1.4.3, refers to पुरुषोत्तम on this point :—"गतिकारकपूर्वस्येष्यत इत्यत्र हि गतिसाहचर्य्यात् कारकपूर्वस्यापि नित्यसमासस्य ग्रहणं गतिसमासस्य प्रतिपदोक्त एव गृह्यते । तेन दुर्भियः निर्भयौ इत्येकभियैत्यादावनित्यसमासत्वान्न यण्विति पुरुषोत्तमप्रभृतयः ।" (P, 508)

अनेकाजित्येव । लुवौ । लुवः । असंयोगपूर्वस्येत्येव । कटप्रुवौ । कटप्रुवः । गतिकारकपूर्वस्येत्येव । परमलुवौ । परमलुवः । परमस्लुवौ ।

८४ । वर्षाभ्वश्च ।

वर्षाभ्वोऽचि सुपि यण् स्यात् । वर्षाभ्वम् । वर्षाभ्वः । चकारात् दृन्भ्वौ । पुनर्भ्वौ । कारभ्वौ ।

८५ । न भूसुधियोः ।

अनयोर्यण् नास्ति । प्रतिभुवौ । सुधियौ ।

८६ । छन्दस्युभयथा ।

छन्दःसूत्रमेकम् ।

८७ । हुश्नुवोः सार्वधातुके ।

अनयोरजादौ यण् स्यात् । जुह्वति । श्नुः । चिन्वन्ति । सार्वधातुके किम् ? जुहुवुः । असंयोगपूर्वस्यैव । प्राप्नुवन्ति । हुश्नुवोः किम् ? योयुवति । रोरुवति ।

८८ । भुवो वुग् लुङ्लिटोः ।

लुङ्लिटोरचि भुवो वुक् स्यात् । बभूव । बभूवे । अभूवन् । अभूवम् । व्यतिबभूवे । अनुबभूवे ।

८९ । ऊदुपधाया गोहः ।

गोह उपधाया ऊत् स्यात् । निगूहयति । निगूहकः । गोहः किम् ? निजुगुहुः । अचीत्येव । निगोढुम् । विगोढुम् ।

९० । दोषो णौ ।

दुषेर्णावुपधाया ऊत् स्यात् । दूषयति । दूषकः । दूषणम् ।

९१ । वा चित्तविरागे ।

अत्र पूर्वो विधिर्वा स्यात् । चित्तं दूषयति दोषयति वा ।

६२ । मितां ह्रस्वः ।

णौ मित्संज्ञकानामुपधाया ह्रस्वः स्यात् । घटयति । व्यथयति । गमयति । जनयति । वेत्येव । सा च व्यवस्थितविभाषा । तेन संक्रामयतीत्यादि सिद्धमित्येके । (50)

६३ । चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।

चिणि णमुलि च परे णौ मितामुपधाया दीर्घो वा स्यात् । अशामि । अशमि वा । शामं शामम् । शमं शमं वा । हेड़ृ वेष्टने । मित् । अहिड़ि । अहीड़ि वा ।

६४ । खचि ह्रस्वः ।

खचि णावुपधाया ह्रस्वः स्यात् । द्विषन्तपः । परन्तपः । पुरन्दरः ।

६५ । ह्लादो निष्ठायाम् ।

अस्योपधाया ह्रस्वः स्यात् । प्रह्लन्नः । प्रह्लन्नवान् । निष्ठायां किम् ? प्रह्लादयति । क्तिन्यपि । प्रह्लत्तिः ।

६६ । छादेर्घेऽद्व्युपसर्गस्य ।

घे परतश्छादेरुपधाया ह्रस्वः स्यात् । उरश्छदः । प्रच्छदः । वचनसामर्थ्यादत्र णिलोपदर्शनं बाध्यते । अद्व्युपसर्गस्य किम् ? समुपच्छादः । द्विग्रहणमनेकोपलक्षणार्थम् । समुपातिच्छादः ।

६७ । इस्मन्त्रन्क्विषु च ।

एषु च्छादे र्ह्रस्वः स्यात् । इस् । छदिः । मन् छद्म । त्रन् । छत्त्रम् । क्विप् । परिच्छत् ।

६८ । गमहनजनखनघसां लोपः क्ङित्यनङि ।

एषां क्ङित्युपधाया लोपः स्यात् । जग्मुः । सञ्जग्माते । घ्नन्ति । घ्नन् । जघ्नुः । जज्ञिरे । उच्चख्नुः । "जक्षुर्बिसम्" । "क्षुद्रान्न जक्षुर्हरिणान् मृगेन्द्राः" । अनङि किम् ? अगमत् । अघसत् । अचीत्येव । गम्यते । हन्यते ।

(50) मतान्तरे तु नेदम् । तथाच "प्रियसुहृदि विभीषणे श्रियं संक्रमय्य वैरिणः" इति रघौ ।

९९। तनिपत्योश्छन्दसि।

१००। घसिभसोर्हलि च।

छन्दःसूत्रद्वयम्।

१०१। हुझल्भ्यो हेर्धिः।

जुहोते र्झलन्ताच्च हेर्धिः स्यात्। जुहुधि। "पूर्वमङ्ग जुहुधि त्वमेव वा"। भिन्धि। छिन्धि। हुझल्भ्योः किम्? लुनीहि। पुनीहि। भिन्ताच्चमिति परत्वात् तातङ्। कथं रुदिहि? निर्दिश्यमानस्यैवादेशा भवन्तीति वचनात्? इह लिटा व्यवधानात्। कथन्तर्हि भिन्धकि? परत्वादग्रे धिभावः। ततोऽकच्।

१०२। श्रुशृणुपॄकृवृभ्यश्छन्दसि।

१०३। अङितश्च।

छन्दःसूत्रद्वयम्।

१०४। चिणो लुक्।

क्ङितीत्येव। चिणः परस्य क्ङितोलुक् स्यात्। अलावि। "अहारि सीता दशकन्धरेण"। क्ङितः किम्? अकारितराम्।

१०५। अतो हेः।

अदन्तात् परस्य हेर्लुक् स्यात्। पच। पठ। भव। अतः किम्? प्राप्नुहि। तपरः किम्? याहि।

१०६। उतश्च प्रत्ययादसंयोगपूर्वात्।

उत्प्रत्ययाद्धे र्लुक् स्यात्। चिनु। तनु। कुरु। प्रत्ययात् किम्? युहि। रुहि। असंयोगपूर्व्वात् किम्? शक्नुहि। प्राप्नुहि। अर्णुहि। घर्णुहि।

१०७। लोपश्चास्यान्यतरस्यां म्वोः।

अस्येत्युप्रत्ययस्य म्वोः परयो र्वा लोपः स्यात्। चिन्वः। चिनुवो वा। चिन्मः। चिनुमो वा। लुकि लोपग्रहणमन्त्यलोपार्थम्। असंयोगपूर्वस्येत्येव। शक्नुवः।

## १०८ । नित्यं करोतेः ।

कृञ उप्रत्ययस्य नित्यं लोपः स्यात् म्वोः । कुर्वः । कुर्वहे । कुर्मः । कुर्महे ।

## १०९ । ये च ।

ये परे कृञ उप्रत्ययो लुप्यते । कुर्यात् । कुर्यातां ।

## ११० । अत उत् सार्वधातुके ।

उप्रत्ययान्तस्य करोतेरत उत् स्यात् । कुरुतः । कुर्वन्ति । कुरु । कुर्वन् । कुर्वाणः । क्ङितीत्येव । करोति ।

## १११ । श्नसोरल्लोपः ।

श्नसोरल्लोपः स्यात् सार्वधातुके क्ङिति । भिन्तः । भिन्दन्ति । भिन्द्यात् । भिन्द्युः । छिन्दन्ति । अस । स्तः । सन्ति । स्यात् । एधि । कथमस्यति ? अस्तेरिह ग्रहणात् । निरनुबन्धकत्वात् । श्नसोरिति पररूपत्वं सौत्रत्वात् ।

## ११२ । श्नाभ्यस्तयोरातः ।

श्ना इत्यस्याभ्यस्तानाञ्चातो लोपः स्यात् सार्वधातुके क्ङिति । लुनन्ति । लुनते । लुनन् । पुनते । ददति । ददत् ।

## ११३ । ई हल्यघोः ।

श्नाभ्यस्तयोरातः ईः स्याद् हलादौ क्ङिति सार्वधातुके । लुनीते । मिमीते । जिहीते । अघोः किम् ? दत्ते । धत्ते ।

## ११४ । इद् दरिद्रस्य ।

दरिद्रातेरित् स्यात् तस्मिन् परतः । दरिद्रितः । दरिद्रिथः । हलीत्येव । दरिद्रति ।

(क) दरिद्रातेरार्धधातुके लोपः । सिद्धश्च प्रत्ययविधौ । दरिद्रः । पचाद्यच् । श्याद्व्धेति (३।१।१४१) णो न भवति ।

(ख) अद्यतन्यां (51) वा। अदरिद्रीत्। अदरिद्रासीत्। अदरिद्रि। अदरिद्रायि।

(ग) न दरिद्रायके लोपो दरिद्राणे च नेष्यते।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥१॥

## ११५। भियोऽन्यतरस्याम्।

हलि क्ङिति सार्वधातुके भिय इद्वा स्यात्। विभितः। विभीतो वा। "न तदा विभिमः स्वयम्"। विभीमो वा। "अन्योन्यतः पथि वताविभिताविभोष्टी"।

## ११६। जहातेश्च।

जहातेरिद्वा स्यात् पूर्ववत्। जहितः। जहीतो वा।

## ११७। आ च हौ।

हौ जहातेरा च इच्च वा स्यात्। जहाहि जहिहि जहीहि वा।

## ११८। लोपो यि।

यादौ क्ङिति जहातेर्लोपः स्यात्। जह्यात्। जह्युः। उक्तं सार्वधातुके।

## ११९। घ्वसोरेद्धावभ्यासलोपश्च।

हौ परतो घ्वसोरेत् स्यादभ्यासलोपश्च। घु। देहि। धेहि। अस। एधि।

## १२०। अत एकहल्मध्येऽनादेशादेर् लिटि।

लिटि एकैक-(52) हल्मध्यगतस्यात एत्वं स्यादभ्यासलोपश्च। रेणतुः। रेणुः। रेमे। पेचे। अनादेशादेरङ्गस्य किम्? बभणतुः। बभणुः। कथं नेमतुः। नेमुः। सेहे? लिट्यादेशादिं वर्जयेत्। एकहल्मध्ये किम्? ततक्षतुः। ततक्षुः। ततसरतुः। ततसरुः। क्ङितीत्येव। अहम्पपच। अतः किम्? रराधे।

---

(51) अद्यतनीति लुङः पूर्वाचार्याणां संज्ञा।

(52) एकश्च एकश्च एकौ असहायौ हलौ। तयोर्मध्यगतस्येति सृष्टिधरव्याख्या।

(क) नशिमन्योरलिट्येत्वं क्वापि । अनेशम् । लुङि पुषाद्यङ् । मेनका । आशिषि वुन् (३।१।१५०) । क्षिपकादिः । स चाकृतिगणः । तेन नेत्वम् ।

## १२१ । थलि च सेटि ।

पूर्ववदत्र एत्वाभ्यासलोपौ स्याताम् । पेचिथ । शेकिथ । सेटि किम् ? पपक्थ । अतःपरं क्ङिति लिट्यभ्यासलोपश्थलि च सेटीत्यनुवर्त्तते ।

## १२२ । तॄफलभजत्रपश्च ।

एषामतएत्वं स्यात् तस्मिन् । अभ्यासलोपश्च । तेरतुः । तेरुः । तेरिथ । फेलतुः । फेलुः । फेलिथ । भेजतुः । भेजुः । भेजिथ । त्रेपे । त्रेपिरे । तरतेर्गुणार्थं वचनम् । फलिभज्योरादेशार्थम् । त्रपेरनेकहल्मध्यार्थम् । चकाराच् श्रेथतुः । श्रेथुः । देभतुः । देभुः । दम्भेरपि पूर्वेणाप्राप्तिर्नलोपस्यासिद्धत्वात् ।

## १२३ । राधो हिंसायाम् ।

राधेः स्यादेत्वमेकहल्मध्यस्य । अपरेधतुः । अपरेधुः । अपरेधिथ । हिंसायां किम् ? आरराधुर्देवताम् ।

## १२४ । वा जॄभ्रमुत्रसाम् ।

एषां लिटेत्वं स्याद्वा । जेरुः । जजरुः वा । जेरिथ जजरिथ वा । एवं भ्रेमुः । बभ्रमुर्वा । त्रेसतुः । तत्रसतुर्वा ।

## १२५ । फणाञ्च सप्तानाम् ।

फणराजृभ्राजृभ्राशृभ्लाशृस्यमुस्वनामेत्वं स्याद्वा । फेणुः पफणुर्वा । फेणिथ पफणिथ वा । रेजे रराजे वा । भ्रेजे बभ्राजे वा । भ्रेजिरे बभ्राजिरे वा । भ्लेशे बभ्लाशे वा । भ्लेशिरे बभ्लाशिरे वा । स्येमतुः सस्यमतुर्वा । स्येमुः सस्यमुः वा । स्वेनतुः सस्वनतुर्वा । स्वेनुः सस्वनुः वा । क्ङितीत्येव । रराज । सप्तानां किम् ? दध्वनतुः दध्वनुः ।

## १२६ । न शसदददवादिगुणानाम् ।

शसिदद्योर्दन्त्यौष्ठ्यवकारादीनां गुण इत्यभिनिर्वृत्तस्य च लिटेत्वं न स्यात् । विशशसतुः । विशशसुः । विशशसिथ । दददे । दददाते । "ववमुः शोणितं

दैत्याः।" ((53 ववमिथ। गुणस्य। विशश्रतुः। विशश्रुः। विशश्रिथ। लुलविथ। रूपाभेदादादेशादित्वं न गृह्यत इति ज्ञापनार्थं शसिददिग्रहणम्। तेन पेचतुस्रेलुरित्यादावप्येत्त्वं सिध्यति। उक्तमित्त्वम्।

१२७। अर्वणस्त्रसावनञः।

१२८। मघवा बहुलम्।

इहच्छन्दःसूत्रद्वयम्। यदुक्तं भाष्ये-"अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्।" इति। कथं "अथीकृतप्रग्रहमर्वतां व्रज"मिति माघः। "मघवद्वज्रलज्जानिदान" मिति श्रीहर्षः? छान्दसानपि संज्ञाशब्दत्वात् कवयो भाषायां प्रयुञ्जते। यथा परिपन्थी। अध्वर्युः। दीधितिः। तुराषाट्। पृतनाषाड़ित्यादि।

१२९। भस्य।

अधिकारोऽयमा पादपरिसमाप्तेः।

१३०। पादः पत्।

पादन्तस्य पत् स्यात्। द्विपदः। द्विपदा। द्विपदे। द्विपदिका। वैयाघ्रपद्यः। भस्य किम्? द्विपादं पश्य।

१३१। वसोः संप्रसारणम्।

स्यात्। क्वसुः। "उपेयुषामपि दिवम्"। ऊषुषाम्। वसुः। विदुषा। विदुषी स्त्री।

१३२। वाह ऊट्। (54)

छान्दसोऽयम्। वहेश्छन्दसि ण्विविधानात् (३।२।६४)।

१३३। श्वयुवमघोनामतद्धिते। (55)

एषां संप्रसारणं स्यात्। शुना शुने। यूना यूने। मघोना मघोने।

---

(53) कथं तर्हि "वैसुय केचिद्बुधिरे" मिति? आर्षोऽयं प्रयोगः।

(54) ठकारान्तोऽयमादेशः। वाऽवसाने इति (८।४।५६) चर्त्वम्।

(55) काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नाति बाला किमु तत्र चित्रम्। अशेषवित् पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाहेति कस्यचिच् श्लोकः।

कथं युवतीः पश्येति ? लिङ्गविशिष्टग्रहणं नेष्यते । अतद्धित इति किम् ? विकारेऽञ् । शौवं मांसम् ।

१३४ । अल्लोपोऽनः ।

भस्य अनन्तस्याल्लोपः स्यात् । राज्ञा । राज्ञे । राज्ञी । तक्ष्णः । तक्ष्णा । अह्ना निर्हृत्समाह्निकम् । इत्वाङ्गाधिकारोपगमाद् वृषण्वो वृषण्वसुरित्यत्र सत्यपि भत्वेऽङ्गत्वाभावादल्लोपो नास्ति ।

१३५ । षपूर्वहन्धृतराज्ञामणि ।

एषामल्लोपः स्यादणि । औक्ष्णः । ताक्ष्णः । भ्रौणघ्नः । वार्तघ्नः । धार्तराज्ञः । एभ्योऽन्यत्र सामनः । अणि किम् ? ताक्षण्यः ।

१३६ । विभाषा ङिश्योः ।

अनोऽकारलोपो ङिश्योर्वा स्यात् । राज्ञि राजनि वा । दध्नि दधनि वा । श्याम् । साम्नी सामनी वा । दाम्नी दामनी वा ।

१३७ । न संयोगाद् वमन्तात् ।

वमन्तात् संयोगात् परस्यानोऽल्लोपो न स्यात् । पर्वणा । पर्वणे । चर्मणि । वर्मणि । शर्मणा । शर्मणि । वर्मणा । कर्मणा । कर्मणि । सुपर्वणः । अथर्वणा । अथर्वणः ।

१३८ । अचः ।

लुप्तनकारस्याच्यतेर्भस्याल्लोपः स्यात् । दधीचा । दधीचः । मधूचे । मधूचः । प्रतीची । प्रतीच्यम् । समीची । समीचीनम् ।

१३९ । उद ईत् ।

उदः परस्याच ईत् स्यात् । । उदीचः पश्य । उदीचा । उदीचाम् । उदीची । उदीच्यम् ।

१४० । आतो धातोः ।

भस्यातो धातोर्लोपः स्यात् । शंस्थः पश्य । शंस्था कृतम् । शंस्थ इदं शांस्थम् । सोमपा । सोमपे । धातोः किम् ? खट्वाः पश्य । कथं क्त्वो ल्यप्

(७।१।३७) । क्रमस्य क्त्वीति (६।४।१८) ? निपातनात् । एकदेशानुकरणं वा यथा प्राग्दीव्यतोऽण् (४।१।८३) । आत इति योगविभागादित्येके । अथवा आतोऽनाप इति वक्तव्यमस्ति ।

## १४१ । मन्त्रेष्वाङ्यादेरात्मनः ।

छान्दसम् ।

## १४२ । ति विंशतेर्डिति ।

विंशतेः डिति तिशब्दो लुप्यते । डुन् । विंशकोऽश्वः । द्वाविंशकः । डः । विंशं शतम् । डिति किम् ? विंशतिकोऽश्वः ।

## १४३ । टेः ।

डिति भस्य टेर्लोपः स्यात् । त्रिंशकः । एकादशः सर्गः । कथं कुमुद्वानिति ? डित्वभस्याप्यनुबन्धकरणसामर्थ्याट्टिलोपः ।

## १४४ । नस्तद्धिते ।

भस्य नान्तस्य तद्धिते टिलोपः स्यात् । आग्निशर्मिः । औडुलोमिः । बाह्वादित्वादिञ् ।

(क) सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिशूकरसद्मसुपर्वणाम् । एषां प्रकृतिभावापवादष्टिलोपः स्यात् । सब्रह्मचारिण इमे साब्रह्मचाराः । पैठसर्पाः । कलापिना प्रोक्तमधीयते कालापाः । कौथुमाः । तैतिलाः । जाजलाः । लाङ्गलाः । शैलालाः । शैखण्डाः । शौकरसद्माः । सौपर्वाः ।

(ख) चर्मणः कोशे । चार्मः कोशः । चार्मणोऽन्यत्र ।

(ग) अश्मनो विकारे । आश्मः प्रासादः । आश्मनः । तस्येदमित्यण् (४।३।१२०) ।

(घ) शुनः सङ्कोचे । शौवः सङ्कोचः ।

(ङ) अव्ययानाञ्च भमात्रे टिलोपः सायंप्रातिकाद्यर्थः । सायंप्रातिकः । पौनःपुनिकः । कालाट् ठञ् (४।२।११४) । सायंप्रातिकाद्यर्थ इति किम् ?

आरातीयः । वृद्धाच्छः (४।२।११४) । सन्धिवेलाद्यण् (४।३।१६) । शाश्वतः । शाश्वतिकस्तु निपातनात् ।

१४५ । अह्नष्टखोरेव ।

टखोरेवाह्नष्टिलोपः स्यात् । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः । द्वे अहनी भृतो भूतो भावी वा द्व्यह्नीनः । टखोः किम् ? अह्ना निर्वृत्तमाह्निकम् ।

१४६ । ओर्गुणः ।

उवर्णान्तस्य भस्य तद्धिते गुणः स्यात् । औपगवः । बाभ्रव्यः । संज्ञापूर्वकस्यानित्यत्वाद् "धाम स्वायम्भुवं ययुः ।"

१४७ । ढे लोपोऽकद्र्वाः ।

उवर्णान्तस्य ढे लोपः स्यात् । कामण्डलेयः । जाम्बेयः । अकद्र्वाः किम् ? काद्रवेयः ।

१४८ । यस्येति च ।

इ अ यः । तदन्तस्य भस्य लोपः स्यादीति तद्धिते च परतः । सखी । गार्गी । दाक्षी । कुमारी । तद्धिते । बलिः । बालेया स्तण्डुलाः । दाक्षिः । चौडिः ।

(क) भ्यां प्रतिषेधः । काण्डे । कुण्डे ।

(ख) इयङुवङ्भ्यां लोपो विप्रतिषेधेन । वत्सप्रीर् गीः (56) । तस्यापत्यं वात्सप्रेयः । चतुष्पाद्भ्यो ढञ् (४।१।१३५) । लैखाभ्रेयः (57) । शुभ्रादिभ्यो ढक् (४।१।१२३) ।

१४९ । सूर्य्यतिष्यागस्त्यमत्स्यानां य उपधायाः ।

एषामुपधायकारो लुप्यते ।

(क) सूर्य्यस्य ङ्यां छे च । सौरी बलाका । सौरीया स्तण्डुलाः ।

(ख) तिष्यपुष्ययोर्नक्षत्राणि । तैषः । पौषः ।

(ग) आगस्त्यस्य ङ्याञ्च च्छे च । आगस्ती । ऋष्यणि (४।१।११४) ङीप् । आगस्तीयाः ।

---

(56) वत्सान् प्रीणातीति । क्विप् ।

(57) लेखे रेखे इव भ्रुवौ यस्याः सा लेखाभ्रूः तस्यापत्यमित्यर्थः ।

(घ) मत्स्यस्य ङ्यामेव। मत्सी। ङ्यां किम्? मात्स्यो न्यायः प्रवर्त्तते। उपधायाः किम्? मत्स्यचरी।

(ङ) इष्ठान्तिकस्य तसि कादिलोपो बहुलम्। अन्तिकतः। अन्तितः।

(च) तमे तादेश्च। अन्तमः। अन्तिकतम इति भाषायामपीच्छन्ति। कादिलोपे अन्तितमः।

## १५०। हलस्तद्धितस्य।

हलः परस्य तद्धितयकारस्य लोपः स्यादीति परतः। सौमी इष्टिः। आनुपूर्वी। वैदग्धी। औचिती। वार्केणी। गार्गी। वात्सी। हलः किम्? कारिकेयी। तद्धितस्य किम्? वैद्यी वैद्यस्य भार्या।

## १५१। आपत्यस्य च तद्धितेऽनाति।

आपत्ययकारस्य तद्धिते ऽनाकारादौ लोपः स्यात्। गार्गीयः। वात्सीयः। समूहे गोत्राद् वुञ्। गार्गकम्। आपत्यस्य किम्? साङ्काश्यकः। अनाति किम्? गार्ग्यायणः। यञिञोश्चेति (४।१।१०१) फक्। हल इत्येव। कारिकेयिः।

## १५२। क्यच्व्योश्च।

क्यच्व्योश्चापत्ययकारस्य लोपः स्यात्। वात्सीयति। वात्सायते। गार्गीभूतः। वात्सीभूतः। हल इत्येव। आत्रेयीयति। आपत्यस्य किम्? साङ्काश्यीयति।

## १५३। विल्वकादिभ्यश्छस्य लुक्।

एभ्यो नड़ादीनां कुक् चेति (४।२।९१) च्छप्रत्ययान्तेभ्यस्तद्धिते च्छमात्रस्य लुक् स्यात्। विल्वा यस्यां सन्ति विल्वकीया। विल्वकीयायां भूमौ भवा वैल्वकाः। वैणुकाः।

## १५४। तुरिष्ठेमेयःसु।

इष्ठेमेयःस्वित्यधिक्रियते। तुरिति च्छन्दोभागः।

## १५५। टेः।

भस्य टेरिष्ठन्नादिषु लोपः स्यात्। पटुः पटिष्ठः पटिमा पटीयान्।

(क) णाविष्ठवत्कार्य्यं प्रातिपदिकस्य। पुंवद्भावरभावटिलोपयणादिपर-

लोपाद्यर्थं वचनम् । एनीमाचष्टे एतयति । प्रथयति । दृषद् दृषयति । दूर दवयति । प्रादयोऽपीष्टाः । प्रियं स्थिरमाचष्टे प्रापयति स्थापयति ।

**१५६ । स्थूलदूरयुवक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।**

तेषु स्थूलादिशब्दानां परो यणादिभागो लुप्यते पूर्वस्य च गुणः । स्थविष्ठः स्थवीयान् । दविष्ठो दवीयान् । यविष्ठो यवीयान् । क्षिप्रौ पृथ्वादी । क्षेपिष्ठो क्षेपिमा क्षेपीयान् । क्षेपिष्ठः क्षेपिमा क्षेपीयान् । क्षोदिष्ठः क्षोदीयान् । पूर्वग्रहणं विस्पष्टार्थम् ।

**१५७ । प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः ।**

तेषु प्रियादिदशकस्य प्रादयो दशैव स्युः । प्रियोरुलघुगुरुबहुलदीर्घाः पृथ्वादयः । तेषामिवेमनिजुदाहार्य्यः । प्रेमा प्रेष्ठः प्रेयान् । एवं स्थेष्ठः । स्फेष्ठः । (58) वरिष्ठः । गरिष्ठः । त्रपिष्ठः । द्राघीयान् द्राघिमा द्राघिष्ठः । वृन्दिष्ठः । वृन्दीयान् । बंहिवर्षीकार उच्चारणार्थः । बंहिष्ठः । वर्षिष्ठः ।

**१५८ । बहोर्लोपो भू च बहोः ।**

**१५९ । इष्ठस्य यिट् च ।**

बहोरिष्ठादीनामादिलोपः स्याद् बहोश्च भूरादेशः । भूयान् । भूमा । "भूम्नां रसानां गहनाः प्रयोगाः ।" इष्ठस्य यिडागमश्च । भूयिष्ठः ।

**१६० । ज्यादादीयसः ।**

ज्यात्परस्येयस आत् स्यात् । ज्यायान् । ज्यायांसौ । आद्वचनं वैचित्र्यार्थम् । आदिलोपे कृते ह्यकृद्यकारे दीर्घोऽस्त्येव ।

**१६१ । र ऋतो हलादेर्लघोः ।**

हलादेर्लघ्नस्य लघुर्य ऋकारस्तस्य रेफः स्यात् । प्रथिष्ठः प्रथिमा प्रथी-

---

(58) स्फिरं भूयस भूरि चैत्यमरः ।

यान् । पृथुमृदुभृशकृशदृढपरिवृढानामेवाभिधानान्नेह । कृतमाचष्टे कृतयति । कृतिष्ठ: । कृतिमा । मातयति । पितयति । भ्रातयति ।°

"पृथुं मृदुं भृशञ्चैव कृशञ्च दृढमेव च ।
परिपूर्वं वृढञ्चैव षडेतान् रविधौ स्मरेत्" ॥ १ ॥

## १६२ । विभाषर्जोश्छन्दसि ।

छान्दसम् ।

## १६३ । प्रकृत्यैकाच् ।

तेषु भसंज्ञकैकाजङ्गं प्रकृत्या स्यात् । स्रजिष्ठ: स्रजीयान् । त्वचिष्ठ: । त्वचीयान् । इष्ठेयसोर्विन्मतोर्लुक् (५।३।६५) । प्रेष्ठ: प्रेमा । एकाजिति किम् ? पटिष्ठ: । इष्ठादिभ्योऽन्यत्र । अस्यापत्यमिः । स्वा देवतास्य स्व: ।

(क) अके राजन्यमनुष्ययुवान: प्रकृत्या । राजन्यकम् । मानुष्यकम् । आपत्ययलोपो मा भूत् । यौवनिका । वुञ् मनोज्ञादित्वात् । न स्वङ्गित (६।४।१४४) इति टिलोपो मा भूत् ।

## १६४ । इनण्यनपत्ये ।

अनपत्ये इन्नन्तमणि प्रकृत्या स्यात् । सांराविणम् । सांकूटिनम् । सांमार्जिनम् । स्रग्विण इदं स्राग्विणम् । अनपत्ये किम् ? मेधाविनोऽपत्यं मैधाव: पुत्र: ।

## १६५ । गाथिविदथिकेशिगणिपणिनश्च ।

अपत्यार्थोऽयमारम्भ: । इमेऽपत्येऽप्यणि प्रकृत्या: स्यु: । गाथिन: । वैदथिन: । कैशिन: । गाणिन: । पाणिन: ।

## १६६ । संयोगादिश्च ।

अपत्येऽणि संयोगादिरिन् प्रकृत्या स्यात् । शाङ्खिन: । वाज्रिण: । वाग्ग्मिन: । नान्दिन: ।

## १६७ । अन् ।

अन्नन्तमण्मात्रे प्रकृत्या स्यात् । सामन: । सौत्वन: ।

१६८ । ये चाभावकर्म्मणोः ।

यादौ तद्धितेऽन् प्रकृत्या स्यात् । सामन्यः । अध्वन्यः । शीर्षण्यः । ब्रह्मण्यः । अभावकर्म्मणोः किम् ? राज्ञो भावः कर्म्म वा राज्यम् । पुरोहितादिः (५।१।१२८) ।

१६९ । आत्माध्वानौ खे ।

एतौ खे प्रकृत्या स्याताम् । आत्मनीनम् । अध्वनीनम् । खे किम् ? अध्यात्मम् । प्रत्यात्मम् । प्राध्वम् ।

१७० । न मपूर्व्वोऽपत्येऽवर्म्मणः ।

अनीति वर्त्तते । अन्नित्येव । मकारपूर्व्वोऽन् न प्रकृत्या स्यात् । भाद्रसामः । सौषामः पुत्रः । अपत्ये किम् ? चार्म्मणो रथः । तेन परिवृतः (४।२।१०) । अवर्म्मणः किम् ? चान्द्रवर्म्मणः । चाक्रवर्म्मणः पुत्रः ।

(क) वा हितनाम्नः । हैतनामः पुत्रः । हैतनामनो वा । उक्तः प्रकृतिभावः ।

१७१ । ब्राह्मोऽजातौ ।

अणि निपात्यते । ब्राह्मो दण्डः । ब्राह्मी ओषधिः । जातावपत्ये निषेध इत्यागमः । ब्रह्मणोऽपत्यं जातिर्ब्राह्मणः । अपत्यमात्रे तु ब्राह्मो नारद इत्याहुः ।

१७२ । कार्म्मस्ताच्छील्ये ।

कर्म्मशीलः कार्म्मश्छत्रादिः । कार्म्मणमन्यत् ।

१७३ । औक्षमनपत्ये ।

इदमत्र निपात्यते । औक्षं पदम् । अनपत्ये किम् ? औक्ष्णो वत्सः ।

१७४ । दाण्डिनायनहास्तिनायनाथर्व्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ।

पञ्चानां प्रकृतिभावो द्वयोस्तत्वं लोपश्चतुर्णां निपात्यते । दण्डिन्हस्तिनौ नड़ादौ । अथर्व्वन्नुक्थादिः । जिह्माशिन् शुभ्रादिः । वाशिन् । वृद्धादिति

(४।१।१५७) फिञ्। भ्रूणहन् धीवन्। भावे ष्यञ्। धैवत्यञ्छान्दसमित्येके। नैत्यन्ये। सरय्वा अण् यलोपश्च सारवः (59)। इक्ष्वाकोरपत्यमुलोपः। ऐक्ष्वाकः। ऐक्ष्वाकौ। जनपदशब्दात्क्षत्रियादञ् (४।१।१६८)। बहुत्वे लुक्। इक्ष्वाकवः। तेषामयमैक्ष्वाको वंशः। मित्रयो र्ढक्छ्यादिढञ् (४।१।१४६)। यादिलोपः (७।३।२)। मैत्रेयः। हिरण्यस्य मयटि यलोपः। हिरण्मयः।

## १७५। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि।

छान्दसम्।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

षष्ठाध्यायस्य चतुर्थः पादः ॥६।४॥

समाप्तश्चाङ्गपादः ॥

---

(59) अपां विहारे तव हारविभ्रमं करोतु गौरे पृषदुत्करस्सरन्। कठोरपीनोच्चकुचद्वयीतटत्रुटत्तरः सारवसारवोर्मिजः॥ इति नैषधीये। दैविकायां सरय्वाञ्च भवे दाविकसारवावित्यमरः।

अथ

# भाषावृत्तिः ।

---

## सप्तमोऽध्यायः । प्रथमः पादः ।

### १ । युवोरनाकौ ।

युव्वोरनाकावादिश्येते । यु । नन्दनः । सायन्तनः । चिरन्तनः । वु । कारकः । हारकः । गार्गकम् । युव्वोरिहानुनासिकयणोः प्रत्यययोश्च ग्रहणान्नेह । ऊर्णायुः । कंयुः । शंयुः । युध्यते । वुस्यति । (1) युवोरिति सौत्रत्वाद् वलोपः ।

### २ । आयन्नेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ।

फढखच्छघामायन्नादयः स्युः । फादिष्वकार उच्चारणार्थः । हलन्तानामेव हलन्तादेशाः । फक् नाडायनः । ढः । वैनतेयः । खः । कुलीनः । छः । गार्गीयः । घः । क्षत्रियः । कियान् । इयान् । प्रत्ययः किम् ? फक्कति । ढौकते । आदिः किम् ? जानुदघ्नः । शेफशङ्खषण्ढपुच्छादय स्त्वौणादिकाः । खश्घञादेरुच्चारणानन्तरमेवेत्संज्ञायां लोपादादेशाभावः ।

### ३ । झो ऽन्तः ।

प्रत्ययझकारस्यान्तादेशः स्यात् । भवन्ति । कुर्वन्ति । झच् । जरन्तः । वेशन्तः ।

### ४ । अदभ्यस्तात् ।

अङ्गाद् अभ्यस्तात् परस्य झस्यात् स्यात् । ददति । दधति । जाग्रति । चकासति । शासति । बिभ्यति ।

---

(1) वुस उत्सर्गे इति दिवादिः परस्मैपदी ।

## ५ । आत्मनेपदेष्वनतः ।

अनकारात् तङि झस्यात् स्यात् । आसते । चिन्वते । भुञ्जते । लुनते । पुनते । व्यतिवाते । अनकारान्तात् किम् ? च्यवन्ते । प्लवन्ते ।

## ६ । शीङो रुट् ।

शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । अशेरत ।

## ७ । वेत्तेर्विभाषा ।

वेत्ते र्झादेशस्यातो रुड् वा स्यात् । संविद्रते संविदते वा ।

## ८ । बहुलञ्छन्दसि ।

छान्दसम् ।

## ९ । अतो भिस ऐस् ।

अदन्ताद् भिस ऐस् स्यात् । वृक्षैः । वनैः । धनैः । दारैः । विप्रैः । तपरः किम् ? खट्वाभिः । मालाभिः ।

## १० । बहुलञ्छन्दसि ।

छान्दसम् ।

## ११ । नेदमदसोरकोः ।

इदमदसो भिस ऐस् नास्ति । एभिः । अमीभिः । अकः किम् ? इमकैः । अमुकैः ।

## १२ । टाङसिङसामिनात्स्याः ।

अदन्तादङ्गात् टादीनामिनादयः स्युः । वृक्षेण । वृक्षात् । वृक्षस्य ।

## १३ । ङेर्य्यः ।

अदन्तात् ङे र्यः स्यात् । वृक्षाय । कलत्राय । विप्राय । वनाय । धनाय ।

## १४ । सर्वनाम्नः स्मै ।

अदन्तात् सर्वनाम्नो ङेः स्मै स्यात् । सर्वस्मै । अस्मै । यस्मै । तस्मै । कस्मै । अत इत्येव । भवते ।

### १५ । ङसिङ्योः स्मात्स्मिनौ ।

अदन्तात् सर्व्वनाम्नो ङसेः स्मात् ङेः स्मिन् स्यात् । सर्व्वस्मात् सर्व्वस्मिन् । यस्मात् यस्मिन् । तस्मात् तस्मिन् । कस्मात् कस्मिन् ।

### १६ । पूर्व्वादिभ्यो नवभ्यो वा ।

पूर्व्वपरावरदक्षिणोत्तराधरापरस्वान्तरेभ्यस्तयोः स्मात्स्मिनौ वा स्याताम् । पूर्व्वात् पूर्व्वस्मात् । पूर्व्वे पूर्व्वस्मिन् ।

### १७ । जशः शी ।

अदन्तात् सर्व्वनाम्नो जशः शीः स्यात् । सर्व्वे । विश्वे । ये । ते । के ।

### १८ । औङ आपः ।

अङ्गाद् आबन्तादौङः शीः स्यात् । खट्वे तिष्ठतः । खट्वे पश्य । ते द्वे पश्य । औङिति ओऔटोःसंज्ञा ।

### १९ । नपुंसकाच्च ।

अङ्गात् नपुंसकादौङः शीः स्यात् । कुण्डे स्तः पश्य वा । शुचिनी । दधिनी । पटुनी । मधुनी । पयसी ।

### २० । जश्शसोः शिः । (2)

नपुंसकाज् जश्शसोः शिः स्यात् । कुण्डानि पयांसि तिष्ठन्ति पश्य वा । यशांसि ।

### २१ । अष्टाभ्य औश् ।

कृताात्त्वस्याष्टनो जश्शसोरौश् स्यात् । अष्टौ सन्ति पश्य वा । इह्वाङ्गाधिकारे तस्य तदुत्तरपदस्येति वचनात् परमाष्टौ । उत्तमाष्टौ । कृतात्त्वस्य किम् ? अष्ट सन्ति पश्य वा ।

---

(2) न्यासादौ क्वचिज् जसिश्शसोः शिरिति पाठः । अत्रापि स एव केषुचित् पुस्तकेषु दृश्यते । कैयटादौ तु जस्शसोः शिरित्येव पाठः । मुद्रितकाशिकायामप्येवम् । ननु जसिश्शसोरिति । जसिरिति पूर्व्वाचार्य्याणां जसः संज्ञा ।

## २२। षड्भ्यो लुक्।

षट्संज्ञकाज् जश्शसो लुक् स्यात्। पञ्च। षट्। सप्त। नव। दश। एकादश। कति सन्ति पश्य वा।

## २३। स्वमोर्नपुंसकात्।

क्लीवात् स्वमो लुक् स्यात्। दधि। मधु। कर्तृ। कर्म तिष्ठति पश्य वा। इह तत्कुलमिति त्यदाद्य-(७।२।१०२) त्वाल्लुगयं पूर्वविप्रतिषेधेन। नित्यत्वाद्वा।

## २४। अतोऽम्।

अदन्तात् क्लीवात् स्वमोरम् स्यात्। वनमस्ति पश्य वा। धनमस्ति पश्य वा।

## २५। अद्ड् डतरादिभ्यः पञ्चभ्यः। (3)

क्लीवाड् डतरादिपञ्चकात् स्वमोरद्डादिश्यते। कतरत्। कतमत्। अन्यत्। अन्यतरत्। इतरत् तिष्ठति पश्य वा।

(क) एकतरान्नेष्यते। एकतरमस्ति वा।

## २६। नेतराच्छन्दसि।

छान्दसम्।

## २७। युष्मदस्मद्भ्यां ङसोऽश्।

आभ्यां परस्य ङसोऽशादिश्यते। तव। मम। इह श्रुतेनाङ्गविशेषणात् तदन्तत्वेऽपि निर्दिश्यमानस्यादेशा भवन्तीति वचनात् अतितव। अतिमम। तथाऽतियुष्माकम्। अत्यस्माकम्। सुसक्थ्ना विप्रेण। प्रियानड्वानित्यादि। इहतु बहुवना गिरयः सुवनौ शैलौ बहुत्रपुग्रामः सुत्रपो विप्रस्येति अङ्गेनैव नपुंसकविशेषणाच्छिमोलुड्नुम्विधयो न भवन्ति।

## २८। ङेप्रथमयोरम्।

आभ्यां परस्य ङेः प्रथमद्वितीययोश्चाम् स्यात्। ङे। तुभ्यम्। मह्यं

---

(3) सर्वादिगणे डतरडतमौ प्रत्ययौ। अन्य अन्यतर इतर इति शब्दत्रय इति पञ्च।

दीयते । प्रथमयोः । त्वम् । अहम् । युवाम् । आवाम् । यूयं वयम् । त्वां माम् । युवाम् आवाम् ।

### २९ । शसो न ।

आभ्यां परस्य शसो नः स्यात् । आदेः परस्य (१।१।५४) । संयोगान्तलोपः (८।२।२३) । युष्मान् नदीः पश्यामि । अस्मान् कुलानि पश्य ।

### ३० । भ्यसो भ्यम् ।

आभ्यां भ्यसो भ्यमादिश्यते । युष्मभ्यमस्मभ्यं देहि ।

### ३१ । पञ्चम्या अत् ।

आभ्यां पञ्चमीभ्यसो ऽत् स्यात् । युष्मद् भीतः । अस्मत् पतितः ।

### ३२ । एकवचनस्य च ।

पञ्चम्येकवचनस्यात् स्यात् । त्वद् गच्छति । मद् बिभेति ।

### ३३ । साम आकम् ।

युष्मदस्मद्भ्यां ससुट्कस्यामो निवर्त्तक आकम् स्यात् । युष्माकम् । अस्माकम् । प्रिययुष्माकम् । अत्यस्माकम् । प्रियास्माकम् ।

### ३४ । आत औ णलः ।

आदन्तात् परस्य णल औरादिश्यते । ददौ । जग्लौ । मम्लौ । तस्थौ । पपौ । औत्वमेकादेशो द्विरुक्तिरिति क्रमः ।

### ३५ । तुह्योस्तातङ् ङाशिष्यन्यतरस्याम् ।

तुहिशब्दयोराशिषि तातङ् वा स्यात् । जीवतु जीवताद्वा भवान् । जीव जीवताद्वा त्वम् । ङित्त्वाद् गुणवृद्ध्योरभावः । ब्रूतात् । मृष्टात् । अल्लोपः (६।४।१११) । भिन्तात् । स्तात् । हृत्त्वम् (६।४।३४) शिष्टात् । ईत्वम् । लुनीतात् (६।४।११३) । उत्वम् (६।४।११०) । कुरुतात् ।

### ३६ । विदेःशतुर्वसुः ।

विदेःशतुर्वसुरादिश्यते वा । विद्वान् । विद्वांसौ । विद्वांसः । विदुषी स्त्री । पक्षे विदन् । विदन्तौ । विदन्तः । विदती स्त्री ।

## ३७। समासेऽनञ्पूर्वे क्त्वो ल्यप्।

अनञ्पूर्वे समासे क्त्वो ल्यप् स्यात्। प्रकृत्य। प्रस्थाय। विजित्य। प्रणीय। प्रदाय। उरीकृत्य। नानाकृत्य। पार्श्वतःकृत्य। अनञ्पूर्वे किम्? अकृत्वा। नञ्पर्युदासादनव्ययसमासेऽपि न भवति परमकृत्वा। उत्तमकृत्वा। अप्रकृत्येति पदसंस्कारपक्षे पश्चान्नञ्समासः। इह छन्दःसूत्राणि त्रयोदश। (4)

## ५०। आज्जसेरसुक्।

आदसुगिति द्वयमधिक्रियते। शेषश्छान्दसः।

## ५१। अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि।

अश्वादेरसुगागमः स्यात् क्यच्प्रीतिश्चेत्। स चाश्ववृषयोर्मैथुनेच्छा चेत्। क्षीरलवणयोर्लालसा चेत्। अश्वस्यति वड़वा। "लक्ष्मणं सा वृषस्यन्ती।" क्षीरस्यति बटुः। लवणस्यत्युष्ट्रः।

(क) सर्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्यः। दध्यस्यति। मध्वस्यति।

(ख) सुगित्यपरे। दधिस्यति। मधुस्यति। "पतिस्यन्ती वराङ्गना।" लालसायां किम्? दधीयती।

## ५२। आमि सर्वनाम्नः सुट्।

अवर्णान्तात् सर्वनाम्नः परस्यामः सुट् स्यात्। सर्वेषाम्। विश्वेषाम्। येषाम्। तेषाम्। केषाम्। सर्वासाम्। यासाम्। तासाम्। कासाम्। आदित्येव। भवताम्। उभयीनाम्।

## ५३। त्रेस्त्रयः।

त्रेरामि त्रयः स्यात्। त्रयाणाम् (5)।

---

(4) तानि च यथा।

३८। क्त्वापि च्छन्दसि। ३९। सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः। ४०। अमो मश्। ४१। लोपस्त आत्मनेपदेषु। ४२। ध्वमो ध्वात्। ४३। यजध्वैनमिति च। ४४। तस्य तात्। ४५। तप्तनप्तनथनाश्च। ४६। इदन्तो मसि। ४७। क्त्वो यक्। ४८। इष्ट्वीनमिति च। ४९। स्नात्व्यादयश्च। ५०।

(5) दुर्घटवृत्तिकार cites here "छन्दसि त्रीणामित्येवं भवतीति भाषावृत्तिः"। But in none

५४। ह्रस्वनद्यापो नुट्।

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चामो नुट् स्यात्। वृक्षाणाम्। विप्राणाम्। मालानाम्। खट्वानाम्। बहुराजानाम्। अग्नीनाम्। नदीनाम्। लक्ष्मीणाम्। वायूनाम्। वस्तूनाम्। वधूनाम्। कर्तॄणाम्। एभ्योऽन्यत्र ग्रामण्याम्। (6)

५५। षट्चतुर्भ्यश्च।

षट्संज्ञकेभ्यश्चतुरश्चामो नुट् स्यात्। षण्णाम्। सप्तानाम्। दशानाम्। चतुर्णाम्। इह।

५६। श्रीग्रामण्योश्छन्दसि।

५७। गोः पादान्ते।

छन्दःसूत्रद्वयम्।

५८। इदितो नुम् धातोः।

इदितो धातोर्नुम् आगमः स्यात्। नन्दति। वन्दते। कुण्डा। हुण्डा।

५९। शे मुचादीनाम्।

शे परतो मुचादीनां नुमागमः स्यात्। मुञ्चति। सिञ्चति। लिम्पति। लुम्पति। निकृन्तति। विन्दति।

(क) तृम्फादीनाञ्च तृम्फति। गुम्फति। नुमोऽत्र विधानसामर्थ्यान्न लोपः।

६०। मस्जिनशोर्झलि।

मस्जेर्नशेश्च झलि नुमागमः स्यात्। मङ्क्त्वा। नंष्ट्वा। झलि किम्? मज्जनम्। नशनम्।

६१। रधिजभोरचि।

अनयोरचि नुमागमः स्यात्। रन्धनम्। रन्धकः। रन्धयति। जम्भनम्।

---

of our MSS, it is to be found. For such passages as त्रीणामपि समुद्राणां प्रलयेऽप्यविलोप्तिः" he quotes the above and then says "छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति भाष्यम्।"

(6) कथं "सेनानीनामहं स्कन्द" इति? आर्षोऽयं प्रयोगः।

जम्भयति । जम्भकः । नित्यो नुम् वृद्धिं बाधते । अचि किम् ? रद्धा । जभ्यम् ।

## ६२ । नेट्यलिटि रधेः ।

रधेरिटि नुम् नास्ति । रधिता । रधितुम् । अलिटि किम् ? ररन्धिव । ररन्धिम ।

## ६३ । रभेरशब्लिटोः ।

## ६४ । लभेश्च ।

रभेर्लभेश्चाजादौ नुम् स्यात् । आरम्भयति । आरम्भकः । आरम्भणम् । आरम्भी । लम्भयति । लम्भनम् । लम्भकः । अशब्लिटोः किम् ? आरभते । आरेभे । लभते । लेभे ।

## ६५ । आङो यि ।

आङ्पूर्वस्य लभेर्यकारादौ नुम् स्यात् । आलम्भ्यः पशुः । आलभ्यत इत्यनिदितामिति (६।४।२४) नलोपः ।

## ६६ । उपात् प्रशंसायाम् ।

उपलभेर्यकारादौ नुम् स्यात् । उपलम्भ्या विद्या । प्रशंसायां किम् ? उपलभ्यं किञ्चिद् वृषलात् ।

## ६७ । उपसर्गात् खल्घञोः ।

उपसृष्टस्यैव लभेः खलि घञि च नुम् स्यात् । खल् । सुप्रलम्भः । घञ् । विप्रलम्भः । उपसृष्टस्यैव किम् ? ईषल्लभः । लाभो वर्त्तते । कथं राष्ट्रलम्भः ? (7) तर्हि चिन्त्यम् । उपसृष्टस्यैवेति नियमात् खल्घञोरन्यत्रापि स्यात् । प्रलम्भनम् ।

## ६८ । न सुदुर्भ्यां केवलाभ्याम् ।

आभ्यां लभेः खलि घञि च नुम् नास्ति । सुलभः । दुर्लभः । सुलाभः । दुर्लाभः । केवलाभ्यां किम् ? अतिसुलम्भः । यदा सुः (१।४।९४) पूजाया-

---

(7) कात्यायनीं तुष्टुवुरिष्टलम्भादिति देवीमाहात्म्ये प्रयोगस्त्वार्षः ।

मतिरतिक्रमणे चेति ( १।४।९५ ) कर्मप्रवचनीयोऽतिर्नोपसर्गस्तदातिसुलभ-मित्यपि भवति ।

## ६९ । विभाषा चिण्णमुलोः ।

चिणि णमुलि च परे लभे र्वा नुम् स्यात् । अलाभि अलम्भि वा । लम्भं लम्भम् । लाभं लाभं वा । अनुपसर्गाद्विकल्पोऽयम् । उपसर्गे तु नित्यम् । प्रालम्भि । प्रलम्भम् ।

## ७० । उगिदचां सर्वनामस्थानेऽधातोः ।

उगितामञ्चतेश्च सर्वनामस्थाने नुम् स्यात् । भवान् भवन्तौ भवन्तः । श्रेयान् । विद्वान् । उपेयिवान् । पचन् । पठन् । अञ्चेः । प्राङ् प्राञ्चौ प्राञ्चः । सर्वनामस्थाने किम् ? भवतः पश्य । भवता कृतम् । अधातोः किम् ? उखास्रत् । पर्णध्वत् ।

## ७१ । युजेरसमासे ।

युजिः सर्वनामस्थाने नुम् स्यात् । युङ् । युञ्जौ । युञ्जः । असमासे किम् ? अश्वयुक् । अश्वयुजौ । अश्वयुजः ।

## ७२ । नपुंसकस्य झलचः ।

झलन्तस्याजन्तस्य च क्लीबस्य सर्वनामस्थाने नुम् स्यात् । उदश्विन्ति । पयांसि । कुण्डानि । वारीणि । मधूनि । झलचः किम् ? विमलदिवि । चत्वारि । अहानि । उगितोऽपि झलन्तस्य परत्वादयं नुम् । श्रेयांसि । कुर्वन्ति ।

(क) बहूर्जि प्रतिषेधः ।

(ख) अन्त्यात् पूर्वं नुममेके । रेफात् परो नुमित्येके । बहूर्न्जि विप्र-कुलानि बहूर्जि वा । बहोरन्यत्र अत्यूर्न्जि । सूर्न्जि । (४)

---

(४) अत्यूर्न्जि सूर्न्जि इत्यत्र नकाररेफजकाराणां संयोगान्न नकारस्य णत्वम् ।

## ७३ । इकोऽचि विभक्तौ ।

अङ्गस्य इगन्तस्य क्लीवस्याजादौ विभक्तौ नुम् स्यात् । दधिनी । मधुनी । त्रपुणी । त्रपुणि । त्रपुणः । इकः किम् ? कुण्डे हे ।

## ७४ । तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ।

उक्तपुंस्कं क्लीवमिगन्तं टादावचि गालवस्य मतेन पुंवत् स्यात् । ग्रामण्ये कुलाय । ग्रामण्यां कुले । अन्येषां न । ग्रामणिने । ग्रामणिनि । एवं शुचये शुचिने वा । पटवे पटुने वा ।

## ७५ । अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।

अस्थ्यादीनामनङादिश्यते टादावचि । अस्थ्ना । दध्ना । सक्थ्ना । अक्ष्णा । गुणानामपीष्यते । सुसक्थ्ना विप्रेण । अचि किम् ? अक्षिभ्याम् । अस्थिभ्याम् ।

## ७६ । छन्दस्यपि दृश्यते ।

## ७७ । ई च द्विवचने ।

छन्दःसूत्रद्वयम् ।

## ७८ । नाभ्यस्ताच्छतुः ।

अभ्यस्तात् परस्य शतुरुगिदचामिति नुम् नास्ति । ददत् । ददतौ । शासत् । चकासत् । जाग्रत् ।

## ७९ । वा नपुंसकस्य ।

उक्तो निषेधः क्लीवस्य वा स्यात् । ददति ददन्ति वा कुलानि । जाग्रति जाग्रन्ति वा ।

## ८० । आच्छीनद्योर्नुम् ।

अवर्णान्तात् परस्य शतुर्नुम् वा स्याच्छीनद्योः परतः । तुदन्ती तुदती वा । करिष्यती करिष्यन्ती वा । याती यान्ती वा विप्रकुले । नद्याम् । तुदती तुदन्ती वा । भाती भान्ती वा ब्राह्मणी । आदिति किम् ? अदती । घ्नती । बिभ्रती । चिन्वती । रुन्धती । लुनती ।

## ८१ । श्यप्श्यनोर्नित्यम् ।

शपश्यनोरवर्णान्तात् परस्य शतुर्नित्यं नुम् स्यात् । पचन्ती । चोरयन्ती । दीव्यन्ती कुले स्त्री वा ।

## ८२ । सावनडुहः ।

नुम् स्यात् । अनड्वान् । हे अनड्वन् । सौ किम् ? अनड्वाहौ ।

## ८३ । दृक्स्ववस्स्वतवसाञ्छन्दसि ।

छान्दसम् ।

## ८४ । दिव औत् ।

सौ दिव औत् स्यात् । द्यौः । हे द्यौः । सौ किम् ? दिवं पश्य ।

## ८५ । पथिमथ्यृभुक्षामात् ।

एषामात्त्वं स्यात् सौ । पन्थाः । मन्थाः । ऋभुक्षाः । हे पन्थाः ।

## ८६ । इतोऽत् सर्वनामस्थाने ।

पथ्यादीनामितो ऽत् स्यात् सर्वनामस्थाने । पन्थाः । पन्थानौ । पन्थानः । मन्थाः । मन्थानौ । मन्थानः । ऋभुक्षाः । ऋभुक्षाणौ । ऋभुक्षाणः । ऋभुक्षाणम् । ऋभुक्षाणौ ।

## ८७ । थो न्थः ।

तेषां थो न्थः स्यात् सर्वनामस्थाने । तथैवोदाहृतम् ।

## ८८ । भस्य टेर्लोपः ।

तेषां भसंज्ञकानां टिलोपः स्यात् । पथः पश्य । पथा । पथि । मथः । मथा । ऋभुक्षः । ऋभुक्षा । ऋभुक्षि ।

## ८९ । पुंसोऽसुङ् ।

अस्यासुङ् स्यात् । पुमान् । पुंमांसौ । पुमांसः । हे पुमन् । सर्वनामस्थान इत्येव । पुंसः । पुंसा । पुंसाम् ।

## ६०। गोतो णित्।

गोसम्बन्धि सर्वनामस्थानं णित् स्यात्। गौः। गावौ। गावः। हे गौः। द्योश्च। द्यौः। द्यावौ। द्यावः। हे द्यौः।

## ६१। णलुत्तमो वा।

उत्तमो णल् णिद्वा स्यात्। अहं किल चकर (9) चकार वा। चुकुटाहं चुकोट वा। अहं विविच विव्याच वा।

## ६२। सख्युरसम्बुद्धौ।

सख्युः सर्वनामस्थानं णित् स्यात्। सखायौ सखायः। असम्बुद्धौ किम्? हे सखे।

## ६३। अनङ् सौ।

सख्युरनङ् स्यात् सौ। सखा। असम्बुद्धावित्येव। हे सखे।

## ६४। ऋदुशनस्पुरोदंशोऽनेहसाञ्च।

ऋदन्तानामुशनसादेश्च सावनङ् स्यात्। कर्त्ता। हर्त्ता। भर्त्ता। माता। पिता। उशना। पुरोदंशा। अनेहा। सौ किम्? कर्त्तारौ। अनेहसौ। असम्बुद्धावित्येव। हे कर्त्तः। हे अनेहः। सम्बोधने उशनस स्त्रैरूप्यमिच्छन्ति सान्तं नान्तमदन्तञ्चेति। हे उशनः। हे उशनन्। हे उशन। (10)

---

(9) "बङ्ग जगद पुरस्तात् तस्य मत्ता किलाहं चकर च किल चाटु प्रौढ़योषिद्वदस्य। विदितमिति सखिभ्यो रात्रिवृत्तं विचिन्त्य व्यपगतमदया हि व्रीड़ितं मुग्धवध्वा॥ १॥" इति माघे।

(10) तथाच श्लोकवार्त्तिकम्—

"सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥" १॥ इति।

## ९५ । तृज्वत् क्रोष्टुः ।

क्रोष्टुशब्दस्य तृजन्तवत् स्यात् । क्रोष्टृशब्दवदित्यर्थः । क्रोष्टा क्रोष्टारौ क्रोष्टारः ? सर्वनामस्थान इत्येव क्रोष्टून् । असम्बुद्धावित्येव । हे क्रोष्टो ।

## ९६ । स्त्रियाञ्च ।

स्त्रियां क्रोष्टुशब्दः तृज्वत् क्रोष्टृवत् स्यात् । (11) क्रोष्ट्री । क्रोष्ट्रीभिः ।

## ९७ । विभाषा तृतीयादिष्वचि ।

टादावचि क्रोष्टुस्तृज्वद्वा स्यात् । क्रोष्ट्रा क्रोष्टुना वा । क्रोष्टरि क्रोष्टौ वा । अचि किम् ? क्रोष्टुभ्याम् । क्रोष्टुभिः ।

(क) नुमचिरतृज्वद्भावेभ्यो नुम्नुटौ पूर्वप्रतिषेधेन । त्रपूणाम् । तिसृणाम् । क्रोष्टूनाम् ।

## ९८ । चतुरनडुहोरामुदात्तः ।

अनयोराम् स्यात् । चत्वारः । चत्वारि । अनड्वान् । अनड्वाहौ । अनड्वाहम् । तदन्तात्च । सुचत्वारः । सुचत्वाः । सुचत्वारौ । प्रियानड्वान् । प्रियानड्वाहौ । सर्वनामस्थान इत्येव । चतुरः पश्य ।

(क) अनडुहः स्त्रियां वेति वक्तव्यम् । अनडुही अनड्वाही । गौरादिः ।

## ९९ । अम् सम्बुद्धौ ।

सम्बुद्धौ तयोरम् स्यात् । हे प्रियचत्वः । हे अनड्वन् । हे प्रियानड्वन् ।

## १०० । ॠत इद्धातोः ।

ॠदन्तस्य धातोॠ॑तः स्यादित् । किरति । गिरति । विस्तीर्णम् । चिकीर्षति । धातोः किम् ? मातॄणाम् ।

## १०१ । उपधायाश्च ।

धातोरुपधाया ॠत इत् स्यात् । कीर्त्तयति । कीर्त्तनम् ।

---

(11) तत ऋन्नेभ्यो ङीबिति (४।१।५) ङीपि क्रोष्ट्री ।

## १०२। उदोष्ठ्यपूर्वस्य।

ओष्ठ्यवर्णपूर्वस्य ॠत उत् स्यात्। पॄ पूर्त्तम्। पुपूर्षति। सुस्मूर्षते। प्रावुवूर्षति। मुमूर्षते। "वुवूर्षति समाहूत आज्ञां विवरिषुः प्रभोः।"

(क) इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन। आस्तरणम्। आस्तारकः। निपरणम्। निपारकः। कथम् उद्गिरणमिति? निपातनात् साधु।

## १०३। बहुलञ्छन्दसि।

छान्दसम्।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

सप्तमाध्यायस्य प्रथमः पादः ॥७।१॥

समाप्तश्च युपादः ॥

अथ

# भाषावृत्तिः ।

सप्तमोऽध्यायः । द्वितीयः पादः ।

## १ । सिचि वृद्धिः परस्मैपदेषु ।

इगन्तस्याङ्गस्य सिचि परे वृद्धिः स्यात् परस्मैपदेषु । अचैषीत् । अनैषीत् । अस्तावीत् । अलावीत् । अपावीत् । अकार्षीत् । अहार्षीत् । परस्मैपदेषु । किम् ? अच्योष्ट । अप्लोष्ट । परस्मैपदेषु विधिरितः सप्तसूत्र्याम् ।

## २ । अतो ल्रान्तस्य ।

परस्मैपदे सिचि परतो ल्रान्तस्याङ्गस्यातो वृद्धिः स्यात् । अचालीत् । अज्वालीत् । अक्षारीत् । अक्षारिषुश्चन्द्रकान्ता मणयः । अचारीत् । कथमवभ्रीत् । अतोऽनेकवर्णव्यवधानात् ।

## ३ । वदव्रजहलन्तस्याचः ।

एषामचो वृद्धिः स्यात् तस्मिन् । अवादीत् । अव्राजीत् । हलन्तानाम् । अपाक्षीत् । अभैत्सीत् । अरैत्सीत् । अताप्सीत् । अनेकवर्णव्यवधानेऽपीष्टम् । अराङ्क्षीत् । अभाङ्क्षीत् ।

## ४ । नेटि ।

इडादौ सिचि हलन्तानां वृद्धिर्नास्ति । अदेवीत् । असेवीत् । व्यथीत् । अमोषीत् ।

## ५ । ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।

हमयान्तानां क्षणादेश्च सेटि सिचि वृद्धिर्नास्ति । अग्रहीत् । अवमीद्रत्नम् । अव्ययीत् । अक्षणीत् । अश्वसीत् । अजागरीत् । ख्यन्तोदाहरणं छन्दसि ।

अश्वयीत्। एदिताम्। अरगीत्। अलगीत्। इटीत्येवावत् (१।२।११)। अधाक्षीत्।

६। ऊर्णोतेर्विभाषा।

इयं वृद्धिरूर्णो र्वा स्यात् तस्मिन्। प्रौर्णावीत्। प्रौर्णवीद्वा। ङित्त्वपक्षे उवङ्। प्रौर्णुवीत्।

७। अतो हलादेर्लघोः।

हलादेरङ्गस्य लघोरतो वृद्धिर्वा स्यात् सेटि सिचि। अराणीत् अरणीद्वा। अवासीत्। अवसीद्वा। अतानीत्। अतनीद्वा। कथमवादीत्। अज्वालीत्। अग्रहीत्? वदव्रजेत्यादिविधि-(७।२।३) निषेध-(७।२।५) वचनात्। कथमचकासीत्। अतोऽनेकवर्णव्यवधानात्। उक्ता वृद्धिः।

८। नेड् वशि कृति।

वशादौ कृतीडागमो नास्ति। वरमनादौ प्रयोजनम्। ईश्वरः। दीप्रः। भस्म। याच्ञा। कृति किम्? रुरुदिव। रुरुदिम।

९। तितुत्रतथसिसुसरकसेषु च।

एष्विण् नास्ति। क्तिन् दीप्तिः। क्तिच् तन्तिः। तुन् सक्तुः। ष्ट्रन् पत्रम्। तन् हस्तः। गर्त्तः। थन् कुष्ठः। काष्ठम्। कुषेः क्सिः कुक्षिः। इषेः सुक् इक्षुः। अशेः क्सरन् अक्षरम्। शलेः कन्। शल्कः। वदेः सः वत्सः।

(क) अग्रहादीनामिति वक्तव्यम्। निगृहीतिः। निपठितिः। भणितिः।

१०। एकाच उपदेशेऽनुदात्तात्।

उपदेशे यो धातुरेकाजनुदात्तश्च तस्मादिण् नास्ति। तत्र सर्वेऽजन्ता अनिटः। दाता। दातुम्। दातव्यम्। नेता। चेता। स्तोता। कर्त्ता। हर्त्ता। अकार्षीत्। चिचीषति। निनीषति। सेटस्तु लिख्यन्ते।

ऊदन्तमृदन्तमदन्तमप्यथो क्ष्णुस्नुक्ष्णु युवूर्णुरुवश्च वृङ्वृञौ।
श्रीङं श्रियच्चैव तथा च डीङ्श्रियावित्येव सेटः प्रवदन्त्यजन्ततः॥१॥

ऊदन्तः। भविता। लविता। ॠदन्तः। तरिता। निगरिता। आस्तरिता। अदन्तस्तु हनो वध। आवधिषीष्ट। आवधिष्ट। अवधीत्। नविता। प्रस्नविता। क्ष्णविता। यविता। रुविता। प्रोर्णविता। रविता। निवरिता। प्रावरिता। शयिता। श्रयिता। उड्डयिता। आश्वयिता। हलन्तास्तु सर्व एव सेटः। शङ्किता। कुण्डिता। अनिटोऽपि लिख्यन्ते। शकिरेकः कान्तः। शक्ता। एवं पचिवचिविचिरिचिसिचिमुचयः षट् चान्ताः। प्रच्छिरेकश्छान्तः।

"रञ्जिर्भञ्जिस्त्यजियजिभजयः सञ्जस्वञ्जी सृजियुजिरुजयः।
मस्जभ्रस्जी भुजिनिजिविजयो जान्तेष्वेते खलु परमनिटः" ॥२॥

"अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् सदिं शदिं खिद्यतिपद्यती खिदिम्।
तुदिं नुदिं विद्यतिविन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः" ॥३॥

"रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः।" (12) सिध्यतिश्च धान्ताः। हनिमन्यती द्वौ नान्तौ।

"तपिं तिपिञ्चापि मथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम्।
स्वरेण नीचेन शपिच्छुपिक्षिपीन् प्रतीहि पान्तान् पठितांस्त्रयोदश" ॥४॥

रभलभयभास्त्रयो भान्ताः। यमिरमिनमिगमयश्चत्वारो मान्ताः।

"दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम्।
लिशिं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान्" ॥५॥

"शिषिः पिषिः शुष्यतिपुष्यती त्विषिर्विषिः श्लिषिस्तुष्यतिदुष्यती द्विषिः"। (13) कृषिकर्षती द्वादश षान्ताः। घसिर्वसिर् निवासे चेति द्वौ सान्तौ।

"दिहिं दुहिं मेहतिरोहती वहिं नहिस्तु षष्ठो दहतिस्तथा लिहि" (14) रिति हान्ता अष्टौ।

---

(12) श्लोकांशोऽयं व्याघ्रभूतिकारिकात उद्धृतः। अपरांशश्चायम्—
"इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे॥"

(13) "इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा॥"
इति श्लोकस्य शेषांशः।

(14) "इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्त्तिताः॥" इति शेषांशः। व्याघ्रभूतिविरचिता अनिट्कारिका एकादश। तासामत्र काश्चित् पूर्णाः काश्चिदंशतश्चोद्धृताः। ऊदन्तमॄदन्तमिति श्लोकस्तु न व्याघ्रभूतेः।

## ११। श्र्युकः किति।

श्रिञ उगन्तानाञ्च कितीण् नास्ति। श्रितम्। श्रित्वा। युतं युत्वा। प्रस्नुतः। प्रभूतः। लूनः। लूनवान्। लूत्वा। तीर्णम्। "तीर्त्वा स्फुरन्-मकरदारुणमम्बुराशिम्"। पूर्त्तम्। पूर्त्त्वा। किति किम्? श्रयिता। लविता। एकाच इत्येव। जागरितः।

(क) वाच्य ऊर्णोर्नुवद्भावः। ऊर्णुत्वा। (15)

## १२। सनि ग्रहगुहोश्च।

ग्रहगुहोरुगन्तानाञ्च सनीण् नास्ति। जिघृक्षति। जुघुक्षति। रुरूषति। लुलूषति। पूञ् पुपूषति।

## १३। कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि।

कादीनामेव लिटीण् नास्ति। नान्येषाम्। चकृव। चकृम। चकृषे। चकृढ्वे। ससृव। ससृम। बभृव। बभृम। ववृव। ववृम। ववृवहे। ववृमहे। तुष्टुव। तुष्टुम। दुद्रुव। दुद्रुम। सुस्रुव। सुस्रुम। शुश्रुव। शुश्रुम। नियमः किम्? बिभिदिव। बिभिदिम। लुलुविव। लुलुविम। भेदिवान्। ऊषिवान्। थल्यप्ययं निषेधः। चकर्थ। तुष्टोथ। दुद्रोथ। कथं ववरिथ? वभूथाततन्थजगृभ्मववर्थेति (७।२।६४) निगमे निपातनात्।

(क) क्रञोऽसुट्कस्येति वक्तव्यम्। सञ्चस्करिथ। सञ्चस्करिव। सञ्चस्करिम।

## १४। श्वीदितो निष्ठायाम्।

श्वेरीदिताञ्च निष्ठायामिण् नास्ति। शूनः। शूनवान्। उद्विग्नः। उद्विग्नवान्। नग्नः। दीप्तः। डीङोऽपीडभावं व्याचक्षते। उड्डीनः। उड्डीनवान्। निष्ठानुवृत्तिः प्राग् इड्विधेः (७।२।३५)।

---

(15) "वाच्य ऊर्णोर्नुवद्भावो यङ् प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्" ॥ १ ॥
इति वार्त्तिकम् ( ३।१।२२, वा )। प्रोर्णोनूयते। प्रोर्णुनाव। प्रोर्णुनुवे। प्रोर्णुतः। प्रोर्णुतवान्। प्रोर्णुत्य इति।

## १५ । यस्य विभाषा ।

यस्य धातो र्विभाषेट् क्वचिदुक्तस्तस्य निष्ठायामिण् नास्ति । धूञूदितो वा (७।२।४४) । धूतम् । गूढ़म् । उदितो वा (७।२।५६) । वृत्तम् । वृत्तवान् । वृत्तः । कृती वृतीनृतीनामीदित्त्वं यस्य विभाषेति प्रतिषेधस्यानित्यता ज्ञापनार्थम् । तेन धावुधातोर्गताविट् । धावितो धावितवान् । (16) पतेश्च । पतितः । पतितवान् । इह विभाषा गमहनविदविशामित्यत्र (७।२।६८) विशिना तौदादिकेन साहचर्याच् शविकरणस्य विदेर्ग्रहणाल्लुग्विकरणस्य विदेर्विदितो विदितवान् । (17) एकाच इत्येव । कंज्ञपितः । दरिद्रितः ।

## १६ । आदितश्च ।

## १७ । विभाषा भावादिकर्मणोः ।

आदितो धातोर्निष्ठायामिण् नास्ति । मिन्नः । क्ष्विण्णः । चकारादाश्वस्तः । वान्तः । (18) भावारम्भयोस्तु वा । मिन्नं मेदितं वानेन । प्रमिन्नः प्रमेदितो वायम् ।

(क) निष्ठायां कर्मणि शकेरिड् वेति सौनागाः । शक्तः शक्तितो वा घटः कर्तुम् ।

## १८ । क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढ़ानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ।

क्षुब्धादीनि मन्थादौ निपात्यन्ते । क्षुब्धो मन्थः विलोड़नद्रव्यं इत्यर्थः । स्वान्तं मनः । ध्वान्तं तमः । लग्नं सक्तम् । म्लिष्टमविस्पष्टम् । विरिब्ध

---

(16) अन्यत्र धौतम् । पदं तुषारस्रुतिधौतरक्तमिति कुमारकाव्ये ।

(17) "वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः" ॥ १ ॥ इति ।

(18) तस्यास्तितैर्नगजमदैर्वासितं वान्तवृष्टिरिति मेघदूते । सुष्टं प्रतिग्राह्वयता स्वमर्थमिति शाकुन्तले । (अपिच सैन्यरेणुमुषितार्कदीधितिरिति रघुकाव्ये) । न विश्वसेदविश्वस्त इति नीतौ । पुष्पेषुणा भुवमभूमिषुवर्षजन्म-हुङ्कारमन्त्रबलभस्मितशान्तिशक्तीम् । शृङ्गारसर्गरसिकद्रागकोदरि त्वं दीपाधिपान् नयनयोर्नय गोचरत्वम् ॥ १ ॥ इति नैषधे ।

उदासादिस्वरः। फाण्टः अनायासः पुरुषोऽन्यो वा। "फाण्टाश्विनाश्लपाणयः"। बाढ़ बाढ़ं भृशम्। अन्यत्र क्षुभितं (19) स्वनितं ध्वनितं लगितं म्लेच्छितं विरिब्धितं फणितं बाहितम्।

१९। धृषिशसी वैयात्ये।

आभ्यां प्रागल्भ्ये निष्ठायामिण् नास्ति। धृष्टः। विशस्तः। वैयात्ये किम्? धर्षितः। विशसितः।

२०। दृढः स्थूलबलयोः।

स्थूले बलवति च दृंहेर्दृढो निपात्यते।

२१। प्रभौ परिवृढः।

अत्रायं निपात्यते।

२२। कृच्छ्रगहनयोः कषः।

दुःखे गहने च कषेरिण् नास्ति। कष्टोऽग्निः। कष्टं वनम्।

२३। घुषिरविशब्दने।

घुषेर्निष्ठायामिण् नास्ति। घुष्टा रज्जुः। "प्रस्नघुष्टकरान् कपीन्।" उद्घुष्टोऽयमर्थः। "उद्घुष्टं परपुष्टया"। अविशब्दने किम्? अवघुषितं वाक्यमाह। अशास्त्रीयमित्यर्थः।

२४। अर्द्देः सन्निविभ्यः।

एभ्योऽर्द्देर्निष्ठायामिण् नास्ति। समर्णः। न्यर्णः। व्यर्णः पीड़ित इत्यर्थः।

२५। अभेश्चाविदूर्य्ये।

नैकट्ये अभिपूर्वादर्द्देर्निष्ठायामिण् नास्ति। अभ्यर्णा सेना।

२६। णेरध्ययने वृत्तम्।

ण्यन्तात्वृतेरध्ययने वृत्तं स्यात्। वृत्तं पारायणं तेन। वर्त्तितमन्यत्र।

---

(19) मिथ्यापवादक्षुभितेन भर्त्तेति कालिदासः।

## २७ । वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।

ण्यन्तात् दमादेरमी सप्त वा निपात्यन्ते । पक्षे दमितः । शमितः । पूरितः । दासितः । स्पाशितः । छादितः । ज्ञपितः ।

## २८ । रुष्यमत्वरसंघुषास्वनाम् ।

एषामिड् वा स्यात् । रुष्टो रुषितो वा । अभ्यान्तोऽभ्यमितो वा । तूर्णः त्वरितो वा । संघुष्टं संघुषितं वा वाक्यम् । आस्वान्तो मृदङ्गः । आस्वनितो वा ।

## २९ । हृषेर्लोमसु ।

हृष तुष्टावित्यतो लोमकर्तृकादिड् वा स्यात् । हृष्टं हृषितं वा केशैः । हृष्टं हृषितं वा लोमभिः । "भयसंहृष्टलोमानः" । लोमसु किम् ? हृषितो विप्रः ।

(क) विस्मितप्रतिघातयोश्च । इड् वा स्यात् । हृष्टो हृषितो वा । विस्मितः प्रतिहतो वेत्यर्थः ।

## ३० । अपचितश्च ।

अपचायतेर्वा चिभावो निपात्यते । अपचितः । अपचायितो वा ।

(क) क्तिनि नित्यं चिभावो वक्तव्यः । "विहितापचितिर्महीभुजा ।" इह च्छन्दःसूत्राणि चत्वारि । (20)

## ३५ । आर्द्धधातुकस्येड् वलादेः ।

वलादेरार्धधातुकस्येड़ागमः स्यात् । भविता । लविता । लवितुम् । लविष्यति । अलविष्यत् । लुलविथ । लविषीष्ट । वलादेः किम् ? लव्यम् । लवनीयम् । आर्धधातुकस्य विधिरा रुदादेः ( ७।२।७६ ) । वलादेर्विधान मा सलोपात् (७।२।७९) ।

लिटस्थवमसेध्वानां स्यसीयुट्तास्सिचां सनः ।
क्तक्तवतुंस्त्वातव्यनिष्ठानां वलादेरिड् विधीयते ॥ १ ॥

---

(20) ३१ । ध्रु ह्वरेश्छन्दसि । ३२ । अपरिह्वृताश्च । ३३ । सोमे ह्वरितः । ३४ । ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ।

## ३६ । स्नुक्रमोरनात्मनेपदनिमित्ते ।

स्नुक्रमिभ्यामिट् स्यात् । स्नविता । क्रमिता । स्नवितुम् । क्रमितुम् । यत्रात्मनेपदनिमित्ते स्नुक्रमी तत्रायं निषेधः । यथा भावे प्रस्नोषीष्ट । प्रक्रंसीष्ट ।

(क) क्रमेः कर्त्तर्य्यात्मनेपदविषयात् क्रति प्रतिषेधः । प्रोपाभ्यां समर्थाभ्याम् (१।३।४२) । प्रक्रान्ता । उपक्रान्ता । तद्विषयात् किम् ? निष्क्रमिता । क्रमेः किम् ? व्यतिप्रस्नविता । प्रस्नविनी गौः स्वयमेव ।

## ३७ । ग्रहोऽलिटि दीर्घः ।

ग्रहेरिटो दीर्घः स्यात् । ग्रहीता । ग्रहीतुम् । ग्रहीतव्यम् । अलिटि किम् ? जगृहिव । जगृहिम । चिण्वदिटोऽपि दीर्घो न भवति । अप्रकृतत्वात् । ग्राहिष्यते । यङ्लुगन्ताच्च न भवति । ग्रहेर्विहितस्येटो विज्ञानात् । जरीगृहिता ।

## ३८ । वृतो वा ।

अस्मादिटो वा दीर्घः स्यात् । वृङ्वृञौ । वरितुम् । वरीतुं वा । वरिता वरीता वा । आस्तरितुम् । आस्तरीतुं वा । जरित्वा जरीत्वा वा । अलिटीत्येव । तेरिथ । आतस्तरिथ । वृत इति किम् ? करिष्यति ।

## ३९ । न लिङि ।

वृतो लिङि दीर्घो न स्यात् । प्रावरिषीष्ट । तरिषीष्ट ।

## ४० । सिचि च परस्मैपदेषु ।

वृतः सिचि दीर्घो नास्ति । प्रावारिष्टाम् । आस्तारिष्टाम् । परस्मैपदेषु किम् ? आवरीष्ट । आवरिष्ट वा । अतरीष्ट । अतरिष्ट वा ।

## ४१ । इट् सनि वा ।

वृतः सनीड् वा स्यात् । "प्रावुवूर्षुः समाहूत आज्ञां विवरिषोः प्रभोः" । प्राविवरीषुर्वा । ऋतः । "तितीर्षुं दुस्तरं मोहादुडुपेनास्मि सागरम्" । तितरिषुः । तितरीषुर्वा । लाक्षणिकत्वान्नेह । चिकीर्षति ।

## ४२ । लिङ्सिचोरात्मनेपदेषु ।

वृतो लिङ्सिचो रिङ् वा स्यात् । वृषीष्ट वरिषीष्ट वरीषीष्ट वा । आस्तीर्षीष्ट आस्तरिषीष्ट आस्तरीषीष्ट वा । सिचि । अवृत अवरिष्ट अवरीष्ट वा । आस्तीर्ष्ट आस्तरिष्ट आस्तरीष्ट वा । आत्मनेपदेषु किम् ? आस्तारिष्टाम् । आस्तारिषुः । प्रावारिष्टाम् । नित्यमिट् ।

## ४३ । ऋतश्च संयोगादेः ।

ऋदन्तात् संयोगादे लिङ्सिचोरिड् वा स्यादात्मनेपदेषु । ध्वृषीष्ट ध्वरिषीष्ट वा । स्तृषीष्ट स्तरिषीष्ट वा । स्मृषीष्ट स्मरीषीष्ट वा । सिचि । अस्मृषाताम् । अस्मरिषातां वा । अध्वृषाताम् । अध्वरिषातां वा । लाक्षणिकत्वान्नेह । संस्कृषीष्ट । समस्कृत ।

## ४४ । स्वरतिसूतिसूयतिधूञूदितो वा ।

एभ्य इड् वा स्यात् । स्वर्तुम् । स्वरितुं वा । सूतिसूयत्योः । सोतुम् । सवितुं वा । धोतुम् । धवितुं वा । ऊदितः । गाढुम् । गाहितुं वा । गोप्तुम् । गोपितुं वा । मार्ष्टुम् । मार्जितुं वा । पुरस्तात् प्रतिषेधकाण्डस्य सर्वापवादत्वात् । सूत्वा । धूत्वा । स्वृत्वा ।

## ४५ । रधादिभ्यश्च ।

रधादिभ्योऽष्टभ्य (21) इड् वा स्यात् । रधितुम् । रद्धुं वा । नशितुम । नंष्टुं वा । तर्पितुम् । तर्प्तुं वा । क्रादिनियमान्नित्यम् (७।२।१३) । ररन्धिव । ररन्धिम ।

## ४६ । निरः कुषः ।

निष्कुष इड् वा स्यात् । निष्कोषितुम् । निष्कोष्टुं वा ।

## ४७ । इण् निष्ठायाम् ।

निरःकुषेर्निष्ठाया मिट् स्यात् । निष्कुषितः । निष्कुषितवान् । (22)

---

(21) रधिर्नशिस्तृपिदृपौ द्रुहिर्मुहिः ष्णुहिः ष्णिहिः ।
ऋहिधेति भवन्त्येते दैवादिका रधादयः ॥ १ ॥

(22) चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुरिति भट्टिः ।

४८ । **तीषसहलुभरुषरिषः ।**

तकारादावेभ्य इड् वा स्यात् । एष्टा । एषिता वा । सोढ़ा सहिता वा । लोब्धा लोभिता वा । रोष्टा रोषिता वा । रेष्टा रेषिता वा । तीति किम् ? एषिष्यति । इष गतावित्यस्य नेष्यते । प्रेषिता । प्रेषितुम् । नित्यमिट् ।

४९ । **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।**

एषां सनीड् वा स्यात् । इवन्तस्य । दुद्यूषुः । दिदेविषुर्वा । ऋधु । कीर्त्ति-मीत्सुः । अर्दिधिषुर्वा । भ्रस्ज । बिभ्रक्षति बिभ्रज्जिषति बिभर्क्षति वा । दम्भु धीप्सति धिप्सति दिदम्भिषति वा । धिप्सुः । धीप्सुः । दिदम्भिषुर्वा । उच्छिश्रीषति । उच्छिश्रियिषति वा । सुस्वूर्षति सिस्वरिषति वा । युयूषति यियविषति वा । प्रोर्णुनूषति प्रोर्णुनविषति वा । भर भौवादिकः । बुभूर्षति बिभरिषति वा । ज्ञीप्सति जिज्ञपयिषति वा । सिषासति सिसनिषति वा ।

(वा) तनिपतिदरिद्राणाञ्च । तितांसति तितंसति तितनिषति वा । पित्सति पिपतिषति वा । दिदरिद्रासति दिदरिद्रिषति वा ।

५० । **क्लिशः क्त्वानिष्ठयोः ।**

५१ । **पूङश्च ।**

क्लिशिपूङोः क्त्वानिष्ठयोरिड् वा स्यात् । क्लिष्ट्वा क्लिशित्वा वा । क्लिष्टः क्लिशितो वा । पूत्वा पवित्वा वा । पूतः पवितो वा ।

५२ । **वसतिक्षुधोरिट् ।**

वसेः क्षुधेश्च क्त्वानिष्ठयोरिट् स्यात् । उषित्वा । उषितः । उषितवान् । क्षुधित्वा । क्षुधितः । क्षुधितवान् ।

५३ । **अञ्चेः पूजायाम् ।**

अञ्चेस्तयोरिट् स्यात् । अञ्चित्वा । अञ्चितः । पूजायां किम् ? उदक्त-मुदकं कूपात् ।

५४ । **लुभो विमोहने ।**

व्याकुलीकरणे लुभस्तयोरिट् स्यात् । लोभित्वा । लुभितः । विमोहने किम् ? लुब्धो वृषलः ।

## ५५ । जॄव्रश्च्योः क्त्वि ।

आभ्यामिट् स्यात् । जरित्वा जरीत्वा वा । व्रश्चित्वा । सानुबन्धकस्य तु जृषे जीर्त्वा ।

## ५६ । उदितो वा ।

उदितः क्त्वीड् वा स्यात् । दान्त्वा दमित्वा वा । शान्त्वा शमित्वा वा । वृत्त्वा वर्त्तित्वा वा । स्यूत्वा सेवित्वा वा । रत्वा रमित्वा वा । स्रस्त्वा स्रंसित्वा । वा । उबुन्दिर् बुन्त्वा बुन्दित्वा वा । शिष्ट्वा शासित्वा वा ।

## ५७ । सेऽसिचि कृतचृतच्छृदतृदनृतः ।

सकारादौ कृतिचृतिच्छृदितृदिनृतीनामिड् वा स्यात् । कर्त्स्यति कर्त्तिष्यति वा । चर्त्स्यति चर्त्तिष्यति वा । एवं यावत् नर्त्स्यति नर्त्तिष्यति वा । असिचि किम् ? अकर्त्तीत् । अनर्त्तीत् ।

## ५८ । गमेरिट् परस्मैपदेषु ।

सकारादौ गमेरिट् स्यात् । गमिष्यति । जिगमिषति । आदेशोऽपि गमिष्यति । अधिजिगमिषिता व्याकरणस्य । परस्मैपदग्रहणमात्मनेपद-निषेधार्थम् । सञ्जिगंसते । अधिजिगांसते शास्त्रम् ।

## ५९ । न वृद्भ्यश्चतुर्भ्यः ।

वृतुवृधुशृधुस्यन्दूभ्यः सकारादाविण् नास्ति । वर्त्स्यति । वर्त्स्यन् । विवृत्सति । विवृत्सितुम् । परस्मैपदेष्वित्येव । वर्त्तिष्यते । वर्त्तिषीष्ट ।

## ६० । तासि च कॢपः ।

तासि सादौ च कॢपेरिण् नास्ति । कल्प्तासि । कल्प्स्यति । चिक्लृप्सति । पूर्ववत् तङि । कल्पितासे कल्प्तासे वा । कल्प्स्यते कल्पिष्यते वा ।

## ६१ । अचस्तास्वत् थल्यनिटो नित्यम् ।

तासौ नित्यानिटामजन्तानां धातूनां तासाविव थलीण् नास्ति । क्रादि-नियमात् ( ७।२।१३ ) प्राप्तिः । पाता पपाथ । याता ययाथ । नेता निनेथ ।

जेता जिगेथ। होता जुहोथ। अजन्तानां किम्? भेत्ता बिभेदिथ। नित्यानिटः किम्? धूञ् धोता धविता। दुधविथ। तासौ किम्? लूत्वा। लुलविथ। क्रिति तु नित्यानिड़यम्।

## ६२। उपदेशेऽत्वतः।

पाठे अकारवतो धातोरिण् नास्ति पूर्ववत्। शशक्थ। पपक्थ। इयष्ठ। तपरः किम्? रराधिथ। उपदेशे किम्? चकर्षिथ। ननु कथं पपिथ ययिथ शेकिथ पेचिथ? आह।

## ६३। ऋतो भारद्वाजस्य।

भारद्वाजस्य मतेन ऋदन्तादेवायं प्रतिषेधः। सस्मर्थ। दध्वर्थ। अन्येभ्यस्तु स्यादेव। पपिथ। ययिथ। निनयिथ। शेकिथ। कथं तुष्टोथ दुद्रोथ? पुरस्तान्निषेधकाण्डस्य प्रणयनात् प्रतिषेधस्य बलीयस्त्वात् क्रादि-(७।२।१३) नियमात्।

## ६४। बभूथाततन्थजगृभ्मववर्थेति निगमे।

छान्दसम्।

## ६५। विभाषा सृजिदृशोः।

अनयोस्थलीड् वा स्यात्। सस्रष्ठ ससर्जिथ वा। दद्रष्ठ ददर्शिथ वा।

## ६६। इड्त्त्यर्त्तिव्ययतीनाम्।

एषां थलीट् स्यात्। आदिथ। आरिथ। संविव्ययिथ।

## ६७। वस्वेकाजाद्घसाम्।

## ६८। विभाषा गमहनविदविशाम्।

## ६९। सनिंससनिवांसम्।

इह वस्वेकाजाद्घसामित्यादिसूत्रत्रयं छान्दसमाहुः। क्वसोश्छान्दसत्वात्। दृश्यन्ते च शिष्टप्रयोगाः। पपिवान्। तस्थिवान्। "गवि तस्थिवांसम्"। "पदमातस्थुषा त्वया।" जक्षिवान्। जघ्निवान्। पेचिवान्। ददृशिवानित्यादि।

चन्द्रगोमी च भाषासूत्रकारः क्वसोरिड़ागमार्थं सूत्रितवान्। वस्वेकाजाद्-घसाम्। वा गमहनविदविशाम्। दृशेश्च। एषामिति किम्? बभूवान्। गमादेर्वा। जग्मिवान्। जगन्वानिति।

७०। ऋद्धनोः स्ये।

ऋदन्तानां हन्तेश्च स्ये परे स्यादिट्। करिष्यति। अकरिष्यत्। हनिष्यति अहनिष्यत्।

७१। अञ्जेः सिचि।

इट् स्यात्। आञ्जीत्। आञ्जिष्टाम्। सिचि किम्। अङ्क्ता। अञ्जिता।

७२। स्तुसुधूञ्भ्यः परस्मैपदेषु।

एभ्यः सिचीट् स्यात्। अस्तावीत्। असावीत्। अधावीत्। तङि तु। अस्तोष्ट। असोष्ट। अधोष्ट अधविष्ट वा।

७३। यमरमनमातां सक् च।

एषां सिचीट् स्यात् सक् चागमः। अयंसीत्। व्यरंसीत्। अनंसीत्। आदन्तानाम्। अगासीत्। अयासीत्। अपासीत्। अम्लासीत्। अया-सिष्टाम्। अम्लासिष्टाम्। इहादरिद्रासीदित्येके। एकाच इत्यधिकाराद-दरिद्रीदित्यपरे। परस्मैपदेष्वित्येव। अरंस्त। आयंस्त।

७४। स्मिपूङ्रञ्ज्वशां सनि।

स्मिङ् पूङ् ऋ अञ्जूशां सनीट् स्यात्। सिस्मयिषते सिस्मयिषमाणः। पिपविषते पिपविषमाणः। अरिरिषति। अञ्जिजिषति। अशिशिषते।

७५। किरश्च पञ्चभ्यः।

कॄगॄदृङ्धृङ्प्रच्छां सनीट् स्यात्। चिकरिषति। जिगरिषति। दिदरिषते। दिधरिषते। पिपृच्छिषति। पिपृच्छिषुः। वृतो (७।२।३८) वेत्यस्येटो दीर्घो नेहास्तीति वामनवृत्तिः। अस्तीति भागवृत्तिः। उक्त-मार्धधातुके।

## ७६ । रुदादिभ्यः सार्वधातुके ।

रुदादिपञ्चकात् सार्वधातुके इट् स्यात् । रोदिति । स्वपिति । "श्वसिति जनकपुत्री" । प्राणिति । जक्षिति । वलादेरित्येव । रुदन्ति ।

## ७७ । ईशः से ।

ईशेर्धातोः से इत्यस्य इट् स्यात् । ईशिषे । ईशिष्व ।

## ७८ । ईड़जनो र्ध्वे च ।

आभ्यां सेध्वयोरिट् स्यात् । ईड़िषे ईड़िध्वे । ईड़िष्व । ईड़िध्वम् । जने-र्च्छन्दसि श्लनि लोपे जनिषे । जनिध्वे । ईश इत्येव । ईशिध्वे । ईशिध्वम् । उक्त इट् ।

## ७९ । लिङः सलोपोऽनन्त्यस्य ।

लिङोऽनन्त्यस्य सस्य लोपः स्यात् । कुर्य्यात् । कुर्य्याताम् । कुर्य्युः । कुर्वीत । कुर्वीयाताम् । कुर्वीरन् । अनन्त्यस्य किम् ? कुर्य्याः । सार्वधातुक इत्येव । क्रियास्ताम् । कृषीष्ट । क्रियासुः ।

## ८० । अतो येयः ।

अदन्तादङ्गात् परस्य याशब्दस्य इयादेशः स्यात् । अकार उच्चारणार्थः । भवेत् । पचेत् । पठेयुः । अतः किम् ? चिनुयात् । भिन्द्यात् । तपरः किम् ? यायात् । पायात् ।

## ८१ । आतो ङितः ।

अदन्तादङ्गात् परस्य ङितामाकारस्येयादेशः स्यात् । पचेते । पचेथे । अपचेताम् । अचीकरेताम् । ङितः किम् ? पचावहै । पचामहै । अत इत्येव । भिन्दाते । मिमाते । व्यतिवाते । ब्रुवाते ।

## ८२ । आने मुक् ।

आने परे मुक् स्यात् । पचमानः । यजमानः । करिष्यमाणः । अत इत्येव । कुर्वाणः ।

## ८३ । ईदासः ।

आसः परस्यानस्य ईत् स्यात् । आसीनः । उदासीनः ।

## ८४ । अष्टन आ विभक्तौ ।

अष्टन आत्वं स्यात् । अष्टौ । अष्टाभ्यः । अष्टाभिः । अष्टासु । तदन्त-विधिरत्रेष्यते । परमाष्टौ उत्तमाष्टौ । पक्षे नेष्यते । अष्टनो दीर्घादिति । (६।१।१७२) ज्ञापकात् । अष्ट । अष्टभिः । अष्टसु । अप्राधान्ये नेष्यते । प्रियाष्टा । प्रियाष्टानौ । प्रियाष्टानः । विभक्तौ विधानमा हृङेः (७।२।११४) । अष्टन इति सौत्रत्वादन्लोपाभावः ।

## ८५ । रायो हलि ।

रैशब्दस्य हलादावात्त्वं स्यात् । राः । सुराः । राभ्याम् । राभिः । रासु । हलि किम् ? रायौ । रायः । विभक्तावित्येव । रैत्वम् । रैना ।

## ८६ । युष्मदस्मदोरनादेशे ।

विभक्तौ अनयोरात्वं स्यात् । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु । अनादेशे किम् ? युष्मद् गच्छति । अस्मद् बिभेति ।

## ८७ । द्वितीयायाञ्च ।

अत्र तयोरात्वं स्यात् । त्वाम् । माम् । युवाम् । आवाम् । युष्मान् । अस्मान् ।

## ८८ । प्रथमायाश्च द्विवचने भाषायाम् ।

अत्र च तयोरात्वं स्यात् । युवाम् । आवाम् ।

## ८९ । योऽचि ।

तयोरजादौ विभक्तौ यः स्यात् । त्वया । मया । त्वयि । मयि । युवयोः । आवयोः । अनादेश इत्येव । त्वद् गच्छति । मद् बिभेति ।

## ९० । शेषे लोपः ।

शेषे विभक्तौ तयोरन्त्यलोपः स्यात् । टिलोप इत्येके । त्वम् । अहम् ।

यूयम् । वयम् । तुभ्यम् । मह्यम् । युष्मभ्यम् । अस्मभ्यं देहि । त्वत् । मत् । युष्माकम् । अस्माकम् । युष्मत् । अस्मत् । तव । मम ।

"पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र शेषे लोपो विधीयते ॥१॥"

## ९१ । मपर्य्यन्तस्य ।

अधिकारोऽयम् ।

## ९२ । युवावौ द्विवचने ।

द्व्यर्थयोर्युष्मदस्मदोर्युवावौ स्याताम् । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । मपर्य्यन्तस्येत्येव । युवकाभ्याम् । आवकाभ्याम् । युवकाम् । आवकाम् ।

## ९३ । यूयवयौ जसि ।

स्याताम् । यूयम् । वयम् ।

## ९४ । त्वाहौ सौ ।

स्याताम् । त्वम् । अहम् ।

## ९५ । तुभ्यमह्यौ ङयि ।

स्याताम् । तुभ्यम् । मह्यं दीयते ।

## ९६ । तवममौ ङसि ।

स्याताम् । तव । मम धनम् ।

## ९७ । त्वमावेकवचने ।

एकार्थस्य वचने वाचके ये युष्मदस्मदी तयोस्त्वमौ स्याताम् । त्वाम् । माम् । त्वया । मया । त्वयि । मयि । इहातिक्रान्तप्रयोगा ग्रन्थविस्तरभयादुपेक्षिताः (23) ।

---

(23) त्वामतिक्रान्तः अतित्वम् । युवामतिक्रान्तः अति युवाम् । युष्मानतिक्रान्तः अतियुष्माम् । एवमत्यहम् । अत्यावाम् । अत्यस्माम् इत्यादिप्रयोगा अतिक्रान्तप्रयोगाः ।

## ९८ । प्रत्ययोत्तरपदयोश्च ।

प्रत्यये उत्तरपदे चैकार्थयोर्युष्मदस्मदो त्वमौ स्याताम् । त्वदीयः । मदीयः । त्वत्तरः । मत्तरः । क्यचि । त्वद्यति । मद्यति । क्यङ् । त्वद्यते । मद्यते । उत्तरपदे । त्वद्गनम् । मद्गनम् । त्वत्पुत्रः । मत्पुत्रः । एकवचने इत्येव । युष्माकमिदं युष्मदीयम् । युवयोः पुत्रः युष्मत्पुत्रः । आवयोः पुत्रः अस्मत्पुत्रः ।

## ९९ । त्रिचतुरोः स्त्रियां तिसृचतसृ ।

विभक्तौ स्त्रीलिङ्गयोरनयोस्तिसृचतसृ इत्येतौ स्याताम् । तिस्रः स्त्रियः । चतस्रस्ताः । स्त्रीलिङ्गयोः किम् ? त्रयः । त्रीणि । चत्वारः । चत्वारि । प्रियास्त्रय स्त्रीणि वा यस्याः सा प्रियत्रिः । प्रियत्री । प्रियत्रयः । प्रियचत्वाः । प्रियचत्वारौ ब्राह्मणौ ।

## १०० । अचि र ऋतः ।

अजादौ विभक्तौ तिसृचतस्रो रेफः स्यात् । तिस्रः । चतस्रः । अचि किम् ? तिसृभिः । चतसृभिः । तिसृषु । चतसृषु ।

## १०१ । जराया जरसन्यतरस्याम् ।

अजादौ विभक्तौ परतो जराया जरस् वा स्यात् । जरया जरसा वा । जरायै जरसे वा । अचि किम ? जराभिः ।

## १०२ । त्यदादीनामः ।

द्विपर्यन्तास्त्यदादयः । तेषामकारः स्याद् विभक्तौ । त्यच्छब्दग्रहणान्दसः । सः । परमसः । असौ । तौ । ते । इमौ । इमे । अप्राधान्ये नेष्यते । अतितदौ अतितदः ।

## १०३ । किमः कः ।

किमः साकच्कस्यापि कः स्यात् । कः । कौ । के ।

१०४। कु तिहोः।

तकारहकारादौ विभक्तौ किमः कुः स्यात्। कुतः। कुत्र। कुह-श्छान्दसः। (24)

१०५। क्वाति।

अति विभक्तौ किमः क्वः स्यात्। क्व तिष्ठति।

१०६। तदोः सः सावनन्त्ययोः।

त्यदादीनां तदोः स्थाने सः स्यात् सौ परे। सः। एषः। असौ। अनन्त्ययोः किम्? अन्त्यस्य मा भूत्। हे स। सा। सम्बुद्धिलोपटापौ न स्याताम्।

१०७। अदस औ सुलोपश्च।

अदसः सावौकारः स्यात् सोश्च लोपः। असौ पुमान्। असौ स्त्री च। हे असौ।

(क) औत्वप्रतिषेधः साकच्काद्वा सकारात् परस्योत्वञ्च। असुकः। असकौ वा। अदस औनङिति सूत्रं न कृतम्। सम्बुद्धौ नकारश्रुतिभयात्।

१०८। इदमो मः।

इदमः सौ मकारः स्यात्। अत्वापवादः। अयम्। इयम्।

१०९। दश्च।

विभक्तौ इदमो दस्य मः स्यात्। इमौ। इमे। इमम्। इमाम्। इमान्। इमाः।

११०। यः सौ।

इदमो दस्य यः स्यात् सौ। इयं स्त्री।

१११। इदोऽय् पुंसि।

सौ पुंसि इदम इद्रूपस्यायादेशः स्यात्। अयं पुमान्।

---

(24) कुवेत्यपि छान्दसमित्येके।

## ११२ । अन्नाप्यकः ।

अककारस्य इदम इद्रूपस्यानादेशः स्यादापि प्रत्याहारे परे । अनेन । अनयोः । अकः किम् ? इमकेन । इमकयोः ।

## ११३ । हलि लोपः ।

हलि विभक्तौ प्रकृतस्यानोऽन्त्यलोपः स्यात् । इद्रूपस्य लोप इत्येके । आभ्याम् । एभिः । एभ्यः । एषु । उक्तं विभक्तौ ।

## ११४ । मृजेर्वृद्धिः ।

मृजेरङ्गस्येको वृद्धिः स्यात् । मार्ष्टा । मार्ष्टुम् । मार्ष्टि । परिमार्ष्टि ।

## ११५ । अचो ञ्णिति ।

अचोऽङ्गस्य ञ्णिति वृद्धिः स्यात् । कारः । उपकारः । कारयति । नरमाचष्टे नारयति । गौः । सखायौ ।

## ११६ । अत उपधायाः ।

उपधाया अतो ञ्णिति वृद्धिः स्यात् । पाकः । पाचयति । अतः किम् ? भेदयति । उपधायाः किम् ? चकासयति ।

## ११७ । तद्धितेष्वचामादेः ।

## ११८ । किति च ।

तद्धिते ञ्णिति किति चाङ्गस्याचामादेरचो वृद्धिः स्यात् । गार्ग्यः । औपगवः । किति । नाड़ायनः । इह त्वाष्ट्रः पारिषद इत्यन्तोपधावृद्धिभ्यामादिवृद्धिरिष्यते ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

सप्तमाध्यायस्य द्वितीयः पादः ॥७।२॥

समाप्तश्च सिचिपादः ॥

---

अथ

# भाषावृत्तिः।



## सप्तमोऽध्यायः। तृतीयः पादः।

### १। देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्।

तद्धिते ञ्णिति किति चाङ्गस्य देविकादीनामादेरचो वृद्धिप्रसङ्गे आत् स्यात्। देविकायां भवं दाविकमुदकम्। दाविकाकूलाः शालयः। शिंशपाया विकारः शांशपो दण्डः। दित्यवाट् छान्दसः। दीर्घसत्रे भवं दार्घसत्रम्। श्रेयसि भवं श्रायसम्। "स श्रायसेन प्रमदेन युक्तः।"

### २। केकयमित्रयुप्रलयानां यादेरियः।

तस्मिन् एषां यादिभागस्य वृद्धिसहचरित इयादेशः स्यात्। केकयस्यापत्यं कैकेयः। क्षत्रियादञ्(४।१।१६८)। कैकेयी (25)। मित्रयोर्भावः। गोत्रचरणाद्वुञ् (४।३।१२६)। मैत्रेयिका। प्रलयादागतं प्रालेयं (26) हिमम्।

### ३। न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्।

पदान्ताभ्यां यकारवकाराभ्यां परा वृद्धिर्न भवति। पूर्वौ तु ताभ्यामैच्। व्याकरणमधीते वेत्ति वा वैयाकरणः। स्वश्वापत्यं सौवश्वः।

### ४। द्वारादीनाञ्च।

एषां य्वाभ्यां परा वृद्धिर्नास्ति। पूर्वौ तु ताभ्यामैच्। द्वारे नियुक्तो दौवारिकः। शुन इदं शौवनम्। श्वो भविता शौवस्तिकः। स्वरमधिकृत्य कृतो ग्रन्थः सौवरः। अपदान्तार्थोऽयमारम्भः।

### ५। न्यग्रोधस्य च केवलस्य।

अस्य च तथा स्यात्। नैयग्रोधश्चमसः। केवलस्य किम्? न्यग्रोधमूले भवा न्याग्रोधमूलाः शालयः।

---

(25) कैकेयि कामाः फलितास्तवेति रघुकाव्ये।

(26) प्रालेयाद्रेरुपतटमतिक्रम्येति प्रालेयास्रं कमलवदनादिति च मेघदूते।

## ६ । न कर्मव्यतीहारे ।

कर्मव्यतीहारे यदुक्तं तन्नास्ति । व्याक्रोशी । व्यावहासी ।

## ७ । स्वागतादीनाञ्च ।

एषां यदुक्तं तन्नास्ति । स्वागतमाह स्वागतिकः । व्यवहारेण चरति व्यावहारिकः । व्यड़स्यापत्यं व्याड़िः । एवं स्वार्थिकः । स्वाभाविकः । स्वातन्त्र्यम् । स्वास्थ्यम् (27) । स्वाजन्यम् । स्वापतेयम् । द्वारादौ स्वशब्दपाठात् तदादिविज्ञानाच्चेह प्राप्तिः ।

## ८ । श्वादेरिञि ।

यत् श्वादेरङ्गस्य द्वारादित्वात् प्राप्तमिञि तन्नास्ति । श्वादंष्ट्रिः । इञीतीकाद्युपलक्षणम् । श्वगणेन चरति श्वागणिकः ।

## ९ । पदान्तस्यान्यतरस्याम् ।

पदशब्दान्तस्य द्वारादिकार्य्यं वा स्यात् । श्वापदम् । शौवापदं वा ।

## १० । उत्तरपदस्य च ।

अधिकारोऽयम् । उत्तरपदवृद्धिर्वाच्या हनस्तात् (७।३।३२) प्राक् । लक्षणमप्येतत् । गुरुलाघवम् (28) । पितृपैतामहम् ।

## ११ । अवयवादृतोः ।

तस्मिन् अवयवात् परस्य ऋतुवाचिनो वृद्धिः स्यात् । पूर्वं वर्षाणां पूर्ववर्षाः । तत्र भवः पूर्ववार्षिकः । अपरहैमनः । अवयवात् किम् ? पूर्वासु वर्षासु भवः पौर्ववर्षिकः ।

---

(27) जगत् स्वास्थ्यमतीवाप निर्मलश्चाभवन्नभ इति । य इत्थमस्वास्थ्यमहर्दिवं दिव इति च ।

(28) वस्तुतस्तु गुरुलाघवमित्यत्र परिमाणान्तस्यासंज्ञाशाणयो(७।३।१७)रित्यनेनैवोत्तरपदवृद्धिः । लघुशब्दस्य परिमाणवाचित्वात् । नचात्र सर्वथा संख्याया इत्यस्यानुवृत्तिर्मन्तव्या । काशिकादावुत्तमनैष्किकः परमनैष्किक इत्यादिषूत्तरपदवृद्धेरनेनैववृ समर्थनात् । भट्टोजिग्रन्थेऽप्येवम् । पितृपैतामहादयस्तु षष्ठीसमासादिभिः सिद्धा इत्येके ।

## १२ । सुसर्वार्द्धाज्जनपदस्य ।

एभ्यो जनपदस्य वृद्धिः स्यात् तस्मिन् । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । अवृद्धादपीति (४।२।१२५) वुञ् ।

## १३ । दिशोऽमद्राणाम् ।

दिशःपरस्य जनपदस्य वृद्धिः स्यात् । पूर्वपाञ्चालकः अपरपाञ्चालकः । अमद्राणां किम् ? पौवमद्रः । मद्रेभ्योऽञ् (४।२।१०८) ।

## १४ । प्राचां ग्रामनगराणाम् ।

दिशः परेषां प्राग्देशे ग्रामनगराणामुत्तरपदवृद्धिःस्यात् । पूर्वैषुकामशमा गजाः । नगरे पूर्वकान्यकुब्जकोऽश्वः ।

## १५ । संख्यायाः संवत्सरसंख्यस्य च ।

संख्यायाः परस्य संवत्सरस्य संख्यायाश्च वृद्धिः स्यात् । द्विसांवत्सरिकः । त्रिसांवत्सरिकः । द्विषाष्टिकः । द्विसाप्ततिकः । त्रिसाप्ततिकः । अधीष्ट-भृतादौ (५।१।८०) तद्धितः ।

## १६ । वर्षस्याभविष्यति ।

संख्यायाः परस्य वर्षस्याभाविनि तद्धिते वृद्धिः स्यात् । द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः । षड्वार्षिकः । अभविष्यति किम् ? द्वे वर्षे भावि द्वैवर्षिकं भक्तम् । त्रैवर्षिकं धान्यम् ।

## १७ । परिमाणान्तस्यासंज्ञाशाणयोः ।

संख्यायाः परस्य परिमाणान्तस्याङ्गस्य वृद्धिःस्यात् तस्मिन् । क्रीतार्थे ठञ् । द्विनैष्किकम् । असंज्ञाशाणयोः किम् ? पञ्च लोहिन्यः परिमाणमस्येति ठकि भस्याढे तद्धिते पुंवत् । पाञ्चलोहितिकम् । क्रीतार्थे शाणादेति (५।१।३५) द्वित्रिपूर्वादण् च (५।१।३६) । द्वैशाणम् ।

## १८ । जे प्रोष्ठपदानाम् ।

जे जातार्थे तद्धिते प्रोष्ठपदानामुत्तरपदवृद्धिः स्यात् तस्मिन् । सन्धिवेलेत्यण् (४।३।१६) । प्रोष्ठपादो बालकः । अर्थग्रहणाद् भद्रपादः । जे किम् ? भवार्थे मा भूत् । प्रौष्ठपदो मेघः ।

## १९ । हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ।

हृदाद्यन्तेऽङ्गे उभयपदवृद्धिः स्यात् तस्मिन् । सौहार्दम् । ब्राह्मणादित्वात् ष्यञ् । सौहार्द्यम् । सौभाग्यम् । सौभागिनेयः । दौर्भागिणेयः । सौर-सैन्धवं पयः । हृदिति प्रतिपदोक्तस्य ग्रहणान्नेह हृदयादेशस्येति सौहृद-मित्येके । (29)

## २० । अनुशतिकादीनाञ्च ।

एषाञ्चोभयपदवृद्धिः स्यात् । तस्येद (४।३।१२०) मित्यण् । आनुशाति-कम् । तत्र च दीयते (५।१।९६) । आनुसांवत्सरिकम् । तस्यापत्यम् (४।१।९२) । पारस्त्रैणेयः । एवमिहलोकपरलोकसर्वलोकसर्वभूम्यनुहोड़पुष्करसदधिदेवाधि-भूतचतुर्वेदाभिगमप्रयोगाः ।

## २१ । देवताद्वन्द्वे च ।

अत्र चोभयपदवृद्धिः स्यात् । सौर्याचान्द्रमसम् । आग्निमारुतम् । सूक्त-हविषोरेवाभिधानान्नेह । ब्राह्मविशाखम् ।

## २२ । नेन्द्रस्य परस्य ।

देवताद्वन्द्वे परस्येन्द्रस्य वृद्धिर्नास्ति । सौमेन्द्रश्चरुः ।

## २३ । दीर्घाच्च वरुणस्य ।

दीर्घात् परस्य वरुणस्य वृद्धिर्नास्ति । ऐन्द्रावरुणं कर्म । दीर्घात् किम् ? आग्निवारुणम् ।

## २४ । प्राचां नगरान्ते ।

प्राग्देशे नगरान्तेऽङ्गे उभयपदवृद्धिः स्यात् । पौण्ड्रनागरः । सौह्मनागरः ।

---

(29) विनिकीर्य्य चणभिन्नसौहृदमिति कुमारकाव्ये । भावस्थिराणि जननान्तरसौहृदानीति शाकुन्तले । अत्र स्वान्तं हृन्मानसं मन इति न हृच्छब्दस्य ग्रहणम् । नापि हृदयादेशस्य । तर्हि सुहृद्दुर्हृदौ मित्रामित्रयो-रित्यतः (५।४।१५०) सुहृच्छब्दादपि अर्थवद्ग्रहणे नानर्थकस्येति निरर्थकस्य हृच्छब्दस्यग्रहणान्न तस्य वृद्धिरिति रक्षितसिद्धान्तः । तथाचास्य सूत्रस्य व्याख्यायां तन्त्रप्रदीपे—"केचिदर्थवद्ग्रहणपरिभाषया निपातित-सुहृच्छब्दस्य योऽवयवो हृच्छब्दस्तदन्तस्योत्तरपदवृद्धिर्न भवतीति व्याचक्षते । समुदायो हि तत्र मित्रवचनः । अवयवस्तु निरर्थक एव ।" इति । एवञ्च काव्यालङ्कारसूत्रवृत्तौ वामनसूत्रमपि हृद्भावादिकं निष्प्रयोजनम् ।

## २५। जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्।

जङ्गलाद्यन्तस्योत्तरपदवृद्धिर्वा स्यात्। कौरुजाङ्गलः कौरुजङ्गलो वा। वैश्वधैनवो वैश्वधेनवो वा। सौवर्णवालजः सौवर्णवलजो वा।

## २६। अर्द्धात् परिमाणस्य पूर्वस्य तु वा।

अर्द्धात् परस्य परिमाणस्य वृद्धिः स्यात्। पूर्वस्य तु वा। अर्द्धद्रौणिकमार्द्धद्रौणिकं वा। क्रीतार्थे ठञ्।

## २७। नातः परस्य।

अर्द्धात् परस्य परिमाणस्यातो वृद्धिर्नास्ति पूर्वस्य तु वा। अर्द्धप्रस्थिकम्। आर्धप्रस्थिकं वा।

## २८। प्रवाहणस्य ढे।

उत्तरपदस्य अस्य शुभ्रादिढकि वृद्धिः स्यात् पूर्वस्य तु वा। प्रावाहणेयः। प्रवाहणेयो वा। प्रवाहणेयीभार्य्य इति वृद्धिनिमित्तत्वात् पुंवद्भावनिषेधः।

## २९। तत्प्रत्ययस्य च।

ढप्रत्ययान्तस्य प्रवाहणस्य तथा स्यात्। प्रावाहणेयिः पुत्रः। प्रवाहणेयिर्वा।

## ३०। नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्।

नञः परेषामेषामुत्तरपदवृद्धिः स्यात् पूर्वस्य तु वा। अशौचमाशौचं वा। अनैश्वर्य्यमानैश्वर्य्यं वा। अक्षैत्रज्ञमाक्षैत्रज्ञं वा। अकौशलमाकौशलं वा। अनैपुणमानैपुणं वा। अक्षेत्रज्ञानीश्वरौ तत्पुरुषाविव ब्राह्मणादौ।

## ३१। यथातथयथापुरयोः पर्य्यायेण।

नञः परयोरनयोः पर्य्यायेण वृद्धिः स्यात्। आयथातथ्यम्। अयाथातथ्यं वा। आयथापुर्य्यं। अयाथापुर्य्यं वा। ब्राह्मणादित्वात् ष्यञ्। क्विति तद्धिते वृद्धिरचामादे(७।२।११७)रिति नित्यम्। ञिति चतुःसूत्रीमाह। उक्त उत्तरपदाधिकारः।

## ३२ । हनस्तोऽचिण्णलोः ।

हनस्तकारादेशः स्यात् ञ्णिति । घातः घातयति घातकः । अचिण्णलोः किम् ? अघानि । जघान । कथं वार्त्रघ्नः ? धातोः कार्य्यमुच्यमानं धातोः प्रत्यय एव स्यात् ।

## ३३ । आतो युक् चिण्कृतोः ।

आदन्तस्य धातोर्युक् स्यात् चिणि कृति ञ्णिति च । अदायि । दायः । दायकः । कृति किम् ? ददौ ।

## ३४ । नोदात्तोपदेशस्य मान्तस्यानाचमेः ।

मान्तस्य चिणि कृति ञ्णिति वृद्धिर्न स्यात् । अशमि । शमः । शमकः । अदमि । दमः । दमकः । अक्षमि । क्षमः । क्षमकः । बहुक्षमः । अतमि । तमः । तमकः । अश्रमि । श्रमः (30) । श्रमकः । क्रमः । (31) उदात्तोपदेशस्य किम् ? अयामि । यामः । यामकः । एवं रमिगमिनमयः । अनाचमेरित्यानाचमिकमिवमीनामिति बोद्धव्यम् । आचामि । आचामः । आचामकः । अकामि । कामः । वामः । कथमुद्यमोपरमौ ? गणे निपातनात् । (32)

## ३५ । जनिवध्योश्च ।

अनयोश्चिणि कृति ञ्णिति च वृद्धिर्नास्ति । अजनि । जनः । जनकः । अवधि । वधः । वधकः । उक्तं ञ्णिति ।

---

(30) वच्यस्यध्वश्रमविनयने तस्य शृङ्गे निषस्र इति मेघदूते । विश्रमार्थमुपगूढ मजस्रमिति माघः । व्यतरन्नरुणाय विश्रममिति नैषधे । अविश्रमं यावदिदं शरीरमिति । विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुरित्यादौ तु विश्रान्तिशब्दस्यैव पाठेन समाधानम् ।

(31) कथं "हरे यँदक्रामि पदैककेन खं पदैश्चतुर्भिः क्रमणेऽपि तस्य नः । त्रपा हरीणामिति नम्रिताननैर्न्यवर्त्ति तैरर्द्धनभःकृतक्रमै"रिति नैषधीये ? चिन्त्यमिति नारायणः । व्यवस्थितविभाषाश्रयणाद्द धुर्य्यान विश्रामयेतिवत् समाधेयमिति केचित् ।

(32) यङ उद्यमे यम उपरम इति धातुपाठे । धात्वर्थनिर्द्देशस्तु तत्र भीमसेनादिकृतः । गत्वार्थः । अत उद्यमोपरमयोः साधुत्वमनुसन्धेयम् ।

## ३६ । अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ ।

अर्त्यादेरादन्तानाञ्च णौ पुगागमः स्यात्। अर्पयति। ह्रेपयति। व्लेपयति। रेपयति। क्नोपयति। क्ष्मापयति। आताम्। दापयति। धापयति। ज्ञापयति। अदीदपत्। लाक्षणिकस्यापि ग्रहणात्। अध्यापयति। अध्यापकः।

## ३७। शाच्छासाह्वाव्यावेपां युक्।

एषां णौ युक् स्यात्। निशाययति। अविच्छाययति। अवसाययति। ह्वाययति। संविव्याययति। वेञ् वाययति। पा पाने पै ओवै शोषणे। पाययति।

(क) पातेर्लुग् वक्तव्यः। पालयति।

(ख) धूञ्प्रीञोर्नुग् वक्तव्यः। धूनयति। प्रीणयति। कथं धावयति प्राययतीति ? धात्वन्तरयोः।

## ३८। वो विधूनने जुक्।

वाधातोर्णौ जुक् स्यात्। पक्षौ वाजयति। विधूनने किम् ? आवापयति केशान्। पै ओवै शोषणे।

## ३९। लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने।

लीति लीलीङोर्लेति कृतात्त्वस्य लियो लातेश्च ग्रहणम्। आभ्यां णौ नुग्लुकौ वा स्यातां द्रवीकरणे। ली। घृतं विलीनयति विलाययति वा। ला। घृतं विलालयति विलापयति वा। स्नेहविपातने किम् ? तक्रं विलापयति। जटाभिरालापयते।

## ४०। भियो हेतुभये षुक्।

भियो णौ षुग् वा स्यात्। मुण्डो भीषयते। आत्वे कृते लुक्षुकौ नेष्टौ। घृतं विलापयति। मुण्डो भापयते। हेतुभये किम् ? अहिना भाययति। "शरैर्भीरुमभाययत्।" षुगात्मनेपदं षत्वञ्च न भवति।

## ४१। स्फायो वः।

णौ वः स्यात्। स्फावयति।

४२ । शदेरगतौ तः ।

णौ तः स्यात् । फलानि शातयति । अगतौ किम् ? तुरगाञ् शादयति । गाः शादयति ।

४३ । रुहः पोऽन्यतरस्याम् ।

णौ रुहः पो वा स्यात् । रोपयति रोहयति वा ।

४४ । प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ।

प्रत्ययस्थककारात् पूर्वस्यात इकारादेशः स्यादापि परे । ण्वुल् । कारिका । पाचिका । प्रागिवात् कः (५।३।७०) । मुण्डिका । जटिलिका । असुपः किम् ? प्रत्ययलक्षणेन सुबन्तात् परो य आप् तस्मिन् परे मा भूत् । बहु-परिव्राजका पुरी । अतः किम् ? गोका । नौका । तपरः किम् ? राका । धाका । आपि किम् ? कारकः । पाचकः । प्रत्ययस्थात् किम् ? शका ।

(क) ममकनरकयोरुपसंख्यानं कर्त्तव्यम् । ममेयं मामिका । नरान् कायतीति नरिका ।

(ख) त्यक्त्यपोश्च । दाक्षिणात्यिका । अमात्यिका ।

४५ । न यासयोः ।

यत्तदोरित्त्वमिदं नास्ति । अकच् । यका । सका । यकाम् । "तकां देवपुरीमदीव्यीत् ।" यकाभ्याम् । तकाभ्याम् ।

(क) आशिषि चोपसंख्यानम् । वुन् । नन्दका । जीवका ।

(ख) उत्तरपदलोपे च । देवका देवदत्तिका ।

(ग) क्षिपकादीनाञ्च । क्षिपका । ध्रुवका । उपत्यका । अधित्यका ।

(घ) तारका ज्योतिषि । अन्यत्र तारिका स्त्री ।

(ङ) वर्णका तान्तवे । अन्यत्र वर्णिका ।

(च) वर्त्तका शकुनौ प्राचाम् । अन्यत्र वर्त्तिका स्त्री ।

(छ) अष्टका पितृदेवत्ये कालविशेषे च । क्षिपकादिराकृतिगणोऽयम् ।

(ज) सूतकापुत्रकावृन्दारकाणां वा । सूतका सूतिका वा । पुत्रका पुत्रिका वा । वृन्दारका वृन्दारिका वा ।

## ४६ । उदीचामातः स्थाने यकपूर्वायाः ।

यकारककारपूर्वस्यातः स्थाने योऽकारस्तस्योदीचां मतेनेत्त्वं न स्यात् । इभ्यका । इभ्यिका वा । क्षत्रियका क्षत्रियिका वा । ककारपूर्वस्य । चटकका चटकिका वा । यकपूर्वायाः किम् ? अश्विका । आत इति स्त्रीविषयस्य ग्रहणान्नेह । शकशकायतेः क्विप् । शकशकाः । ततः कः । शकशकिका । शुभंयिका ।

(क) यकपूर्वत्वे धात्वन्तयकारककारयोः प्रतिषेधः । सुनयिका । अशोकिका । सुशयिका । सुपाकिका ।

## ४७ । भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ।

भस्त्रादीनां शब्दानां नञ्पूर्वाणामन्यपूर्वाणामप्युदीचामित्त्वं नास्ति । भस्त्रका भस्त्रिका वा । अभस्त्रका अभस्त्रिका वा । बहुभस्त्रका बहुभस्त्रिका वा । एषका एषिका वा । द्वका द्विका वा । ज्ञका ज्ञिका वा । अज्ञका अज्ञिका वा । अजका अजिका वा । स्वका स्विका वा । बहुस्वका बहुस्विका वा । एषाद्वे नञ्पूर्वे न प्रयुज्येते ।

## ४८ । अभाषितपुंस्काच्च ।

अभाषितपुंस्कादातः स्थाने योऽकारस्तस्योदीचामित्त्वं नास्ति । खट्वका खट्विका वा । मालका मालिका वा ।

## ४९ । आदाचार्य्याणाम् ।

आकारःस्यादाचार्य्याणां मतेन । खट्वाका । मालाका ।

## ५० । ठस्येकः ।

अङ्गस्य ठस्य इकः स्यात् । ठक् । आक्षिकः । ठञ् । लावणिकः ।

## ५१ । इसुसुक्तान्तात् कः ।

एभ्यष्ठस्य कः स्यात् । इकापवादः । सार्पिष्कः । धानुष्कः । उगन्तात् । ओर्देशे ठञ् (४।२।११९) । नैषादकर्षुकः । औदश्वित्कः । पैतृकः ।

(क) दोष उपसंख्यानम् । दोर्भ्यां तरतीति दौष्कः ।

## ५२ । चजोः कु घिण्ण्यतोः ।

घिति ण्यति चजोः कवर्गः स्यात् । पाकः । भोगः । पाक्यम् । भोग्यम् ।

## ५३ । न्यङ्क्वादीनाञ्च ।

एषां कुत्वं स्यात् । न्यङ्कुः । मद्गुः । भृगुः । तक्रम् । वक्रम् । पचाद्यचि व्यतिषङ्गः । निदाघः । मेघः । कर्म्मण्यण् (३।२।१) । श्वपाकः । मांसपाकः ।

## ५४ । हो हन्ते ञ्णिन्नेषु ।

ञ्णिति नकारे च हन्ते र्हकारस्य कुत्वं स्यात् । घातः । घातयति । घातकः । नकारे । घ्नन्ति । वृत्रघ्ना । वृत्रघ्नोऽपत्यं वार्त्रघ्नः ।

## ५५ । अभ्यासाच्च ।

हन्तेः कुत्वं स्यात् । जिघांसुः । जङ्घन्यते । अहं जघन ।

## ५६ । हेरचङि ।

हिनोतेस्तथा स्यात् । प्रजिघाय । प्रजिघीषति । प्रजेघीयते । अचङि किम् ? प्राजीहयत् ।

## ५७ । सन्लिँटोर् जेः ।

## ५८ । विभाषा चेः ।

सनि लिटि च जेः कुत्वं स्यात् । जिगीषति । जिगाय । चिनोतेर्वा । चिचीषति चिकीषति वा । निश्चिकाय निश्चिचाय वा ।

## ५९ । न क्वादेः ।

उक्तं कुत्वं कवर्गादेर्नास्ति (33) । कूजः । कूज्यम् । संकोचः । खर्जः । गर्जः । नेति योगविभागान्नेह । रोमाञ्चः । शोच्यम् । (34)

---

(33) अत्र क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनादिति वार्त्तिकम् । अतो निष्ठायामनिट्त्वेन कुजः कूज्यमित्यादौ न कुत्वम् । शुचुग्लुचुप्रभृतीनां तु वार्त्तिककारमते कुत्वमेव । तेषां निष्ठायामनिट्त्वात् । सूत्रकारमते तु न क्वादेरित्यनेनात्र न कुत्वम् । एवञ्च मतद्वैधे यथोत्तरं मुनीनां प्रामाण्यमित्याहुः ।

(34) अशोच्यानन्वशोच स्त्वं प्रज्ञावादांश्च भाषस इति गीतायाम् । अशोच्यमश्वं यदि मन्यते भवानिति रघुवंशे । अत एव आवश्यक (७।३।६५) इत्यावश्यकेऽर्थ कुत्वाभाव इत्येके ।

६०। अजिव्रज्योश्च।

अनयोः कुत्वं न स्यात्। समाजः। परिव्राज्यम्। चकाराद् वाजः पद्यः।

६१। भुजन्युब्जौ पाण्युपतापयोः।

एतावनयोर्निपात्यते। भुज्यतेऽनेनेति भुजः पाणिः। न्युब्जतेऽनेनेति न्युब्जो रोगः। अन्यत्र भोगः। समुद्गः।

६२। प्रयाजानुयाजौ यज्ञाङ्गे।

इमौ यज्ञाङ्गे निपात्येते। अन्यत्र प्रयागः। अनुयागः।

६३। वञ्चेर्गतौ।

कुत्वं नास्ति। वञ्चं वञ्चन्ति। गन्तव्यं यान्तीत्यर्थः। गतौ किम्? वङ्कं काष्ठम्।

६४। ओक उचः के।

उचेर्घञि ओकि सिद्धे कप्रत्यये निपातनमिदं स्वरार्थम्।

६५। ण्य आवश्यके।

ण्ये कुत्वं नास्ति। अवश्यपाच्यम्। आवश्यके किम्? पाक्यम्।

६६। यजयाचरुचप्रवचर्चश्च।

एषाञ्च ण्ये कुत्वं नास्ति। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यो नाम ग्रन्थः। अर्च्यम्। ण्यत्। ऋचेरस्मादेव वचनान्न क्यप्।

(क) त्यजेरुपसंख्यानम्। त्याज्यम्।

६७। वचोऽशब्दसंज्ञायाम्।

वचेर् ण्यति कुत्वं नास्ति। वाच्यम्। अशब्दसंज्ञायां किम्? वाक्यम्।

६८। प्रयोज्यनियोज्यौ शक्यार्थे।

एतौ शक्यार्थे निपात्येते। प्रयोक्तुं शक्यः प्रयोज्यः। नियोक्तुं शक्यो नियोज्यः। अन्यत्र प्रयोग्यः। नियोग्यः।

## ६९ । भोज्यं भक्ष्ये ।

निपात्यते । भोज्य ओदनः । भक्ष्ये किम् ? भोग्या स्त्री ।

## ७० । घोर्लोपो लेटि वा ।

छान्दसम् ।

## ७१ । ओतः श्यनि ।

ओदन्तस्य श्यनि लोपः स्यात् । दो द्यति । षो स्यति । अवस्यति ।

## ७२ । क्सस्याचि ।

क्सस्याजादावन्त्यलोपः स्यात् । अधुक्षाताम् । अधुक्षि ।

## ७३ । लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।

एषां क्सस्य सर्वस्यैव लुग् वा स्याद् दन्त्यवर्णादौ तङि । अदुग्ध । अधुक्षत । अदुग्धाः अधुक्षथाः । अधुग्ध्वम् अधुक्षध्वम् । दन्त्योष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते । वहेरझलादित्वाद् दादेर्घत्वं नास्ति । अदुह्वहि अधुक्षावहि ।

## ७४ । शमामष्टानां दीर्घः श्यनि ।

शमादीनामष्टानां श्यनि दीर्घः स्यात् । शाम्यति । ताम्यति । दाम्यति । श्राम्यति । भ्राम्यति । चाम्यति । क्लाम्यति । माद्यति । श्यनि किम् ? भ्रमति । वा भ्राशेति (३।१।७०) श्यन् वा ।

## ७५ । ष्ठिवुक्लम्याचमां शिति ।

शिति एषां दीर्घः स्यात् । निष्ठीवति । आचामति । क्लामति ।

## ७६ । क्रमः परस्मैपदेषु ।

शिति दीर्घः स्यात् । क्रामति । उत्क्रामन् । नेह । क्रमते बुद्धिः ।

## ७७ । इषुगमियमां छः ।

एषां शिति छः स्यात् । इच्छति । गच्छति । यच्छति । प्रायच्छत् । उकारनिर्देशान्नेह । इष्यति । इष्णाति ।

७८। पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः।

पाघ्रादीनामेकादशानां शिति पिबादयः स्युः। पिबति। पिबेत्। जिघ्रति। धमति। तिष्ठति। मनति। यच्छति। पश्यति। ऋच्छति। सर्त्तेर्वेगितायां गतौ धौ। धावति। अन्यत्र। अभिसरति। शीयते। सीदति। अर्त्तिसर्त्तीति सौत्रत्वाद् विकरणाभावः।

७९। ज्ञाजनो र्जा।

शिति ज्ञाजनोर्जाः स्यात्। जानाति। जायते।

८०। प्वादीनां ह्रस्वः।

एषां शिति ह्रस्वः स्यात्। पुनाति। लुनाति। स्तृणाति।

८१। मीनातेर्निगमे।

छान्दसम्।

८२। मिदेर्गुणः।

शिति मिदेरङ्गस्येको गुणः स्यात्। मेद्यति। मेद्यतः। मेद्यन्ति। शितीत्येव। मिद्यते।

८३। जुसि च।

अङ्गस्येको जुसि गुणः स्यात्। अबिभयुः। अजागरुः। ऐयरुः। जुसाश्रये ङित्त्वापवादोऽयं गुणो यासुटो ङित्त्वेन बाध्यते। चिनुयुः। ब्रूयुः। सुनुयुः।

८४। सार्वधातुकार्द्धधातुकयोः।

अनयोरिगन्तस्याङ्गस्य गुणः स्यात्। जयति। नयति। चिनोति। भवति। करोति। करवाव। करवाम। विधुरिवाचरति विधवति। क्विप्। सवितरति। रात्रयति। आर्धधातुके। जेतुम्। नेतुम्। भवितुम्। कर्त्तुम्। तरितुम्। विधवितुम्। सवितरितुम्। अनयोः किम्? अग्निकास्यति। भूकास्यति। (35)

---

(35) चयिता तर्द्दविटपाश्रिता लतेति कुमारकाव्यप्रयोगे तु चयशब्दात् तत् करोतीति णिचि चययतेः तृः।

## ८५ । जाग्रोऽविचिण्णल्ङित्सु ।

वृद्धेर्गुणप्रतिषेधस्य च विषये जागर्तेर्गुणः स्यात् । जागरयति । जागरकः । जागरितः । जागरितवान् । विङोऽपि पूर्वविप्रतिषेधाद् गुण इत्यागमः । जागर्य्यते त्वया । अविचिण्णल्ङित्सु किम् ? विन् । जागृविः । चिण् । अजागारि । णल् । जजागार । ङित् । जागृतः । जागृथः । कथमजागरुः । अहं जजागर ? जाग्र इति सूत्रप्राप्तिर्निषिध्यते । इह तु पूर्वसूत्राभ्यां गुणः ।

## ८६ । पुगन्तलघूपधस्य च ।

पुगन्तानां लघूपधानां च सार्वधातुकार्धधातुकयोर्गुणः स्यात् । क्नोपयति । क्नेपयति । क्नेपणम् । वर्द्धते । वर्त्तते । वर्त्तनम् । भेदयति । भेत्ता । भेदनम् । क्लेत्ता । कथं बिभित्सति । हलन्ताच्चेति (१।२।२०) किच्त्वात् । कथं लिखनं लिखिष्यति ? संज्ञापूर्वकत्वेन गुणस्यानित्यत्वात् । (36)

## ८७ । नाभ्यस्तस्याचि पिति सार्वधातुके ।

अभ्यस्तस्य गुणो न स्यादजादौ पिति सार्व्वधातुके । नेनिजानि । अनेनिजम् । अचि किम् ? नेनेक्ति । लङ् । अनेनेक् । लघूपधस्येत्येव । "जुहवानि चानले ।" सार्वधातुके विधानं यावत् सुपि चेति (७।३।१०२) ।

## ८८ । भूसुवो स्तिङि ।

गुणो नास्ति । अभूत् । अभूः । सुवै । सुवावहै । सुवामहै ।

## ८९ । उतो वृद्धिर्लुकि हलि ।

उकारान्तस्य वृद्धिः स्याल्लुकि सति हलादौ पिति परे । यौति । रौति । स्तौति । स्तौमि । हलि किम् ? स्तवानि ।

---

(36) एवञ्च न दृष्टः शैथिल्यं मिलन इति चेतो दहति म इत्यमरुशतके । तन्नीसंव्यस्तान्तः परिमिलन मप्राप्य हरित मिति रत्नावली । व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीर मिति गीतगोविन्दे प्रयोगः । नहि मिल श्लेषणे लिख अक्षरविन्यास इति कुटादौ । तत्पुरुषाश्रयणेनानयोः कुटादित्वमित्यपि हेयम् । अपाच्चतुष्पाच्छकुनिष्वालेखन इति (६।१।१४२) निर्देशात् । अन्ये तु मिलनशब्दस्थाने मिलितमिति भावे क्तान्तं पठन्ति । कथं विरहिनिकृन्तनकुन्तमुखाकृतिकेतकिदन्तुरिताशे इति जयदेवः ? निरङ्कुशाः कवयः । अत्र गुणस्य प्राप्त्या नुमप्राप्त्या निकृन्तनमिति हि क्षुटि स्यात् । उणादिषु वायं शब्दो द्रष्टव्यः ।

९० । ऊर्णोतेर्विभाषा ।

ऊर्णोतेरीड् वा स्यात् । प्रोर्णोति । प्रोर्णौति । हलीत्येव । प्रोर्णवानि ।

९१ । गुणोऽपृक्ते ।

ऊर्णोरपृक्ते गुणः स्यात् । वृद्धेर्बाधा । प्रौर्णोत् । प्रौर्णोः ।

९२ । तृणह इम् ।

तृहेः श्नमि तृणह इत्यस्य इमागमः स्याद् हलि पिति सार्वधातुके । तृणेढ़ि । तृणेक्षि । "तृणेढु रामः सह लक्ष्मणेन ।" अतृणेट् । हलीत्येव । तृणहानि ।

९३ । ब्रुव ईट ।

ब्रूञो हलि पिति ईट् स्यात् । ब्रवीति । ब्रवीतु । अब्रवीत् । हलि किम् ? ब्रवाणि ।

९४ । यङो वा ।

हलादेः पितः सार्वधातुकस्य यङोऽभावाद् यङ्लुगन्तादीड् वा स्यात् । बोभवीति बोभोति वा । लालपीति लालप्ति वा । वावदीति । यङ्लुक् छान्दस इति भागवृत्तिः । नेत्यन्ये । चन्द्रगोमी भाषासूत्रकारो यङो वेति सूत्रितवान् ।

९५ । तुरुस्तुशम्यमः सार्वधातुके ।

तुरुस्तुशम्यमइतिच्छान्दसम् । (37) ।

९६ । अस्तिसिचोऽपृक्ते ।

अपृक्तस्य आभ्यामीट् स्यात् । आसीत् । आसीः । सिच् । अकार्षीत् । अकार्षीः । अपृक्ते किम् ? अस्ति । अकार्ष्टाम् ।

(क) आहिभुवोरीटि स्थानिवद्भावप्रतिषेधः । आत्थ । अभूत् ।

---

(37) इदमंशतश्छान्दसमित्यन्ये । अयञ्च सूत्रार्थः । तुरुस्तुशम्यम इत्येभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड् वा स्यात् । तेन रौति रवीति वा । स्तौति स्तवीति वा । पूर्व्वसूत्राद्वेत्यनुवृत्तेः । हलादेः किम् ? रुवन्ति । तिङः किम् ? शाम्यति । सार्वधातुके किम् ? रूयात् । आशिषि लिङ् । विध्यादौ तु रुयात् रुवीयात् । सार्वधातुक ( ७।३।८७ ) इत्यनुवर्त्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम् । रुवीतः रुत । स्तुतः स्तुवीतः । स्तुते स्तुवीते । तुधातुः सौत्रो लुग्विकरणश्च गतिवृद्धिहिंसासु । तौति तवीति वा । शम्यमोश्छान्दसः प्रयोगः । पुरुषोत्तमेन तु रौति स्तौति स्तौमीत्युदाहरणानुरातो वृद्धिर्लुकि हलीत्यत्र (७।३।८९) ददताऽपिशलिमतानुसरणेनास्य संपूर्णं छान्दसत्वमुक्तम् ।

## ९७ । बहुलञ्छन्दसि ।

छान्दसम् ।

## ९८ । रुदश्च पञ्चभ्यः ।

एभ्योऽपृक्तस्य ईट् स्यात् । रुद इति सुव्व्यत्यये (३।१।८५) भ्यसो ङसिः । अरोदीत् । अश्वसीत् । अस्वपीत् । प्राणीत् । अजक्षीत् ।

## ९९ । अड् गार्ग्यगालवयोः ।

अनयोर्मतेनैभ्योऽट् स्यात् । अरोदत् । अश्वसत् । अस्वपत् ।

## १०० । अदः सर्वेषाम् ।

अदोऽपृक्ते सर्वेषामट् स्यात् । आदत् । आदः ।

## १०१ । अतो दीर्घो यञि ।

अदन्तस्य यञादौ सार्वधातुके दीर्घः स्यात् । पचामि । पच्यामि । अतः किम् ? चिनुमः । यञि किम् ? पचति । उक्तं सार्वधातुके ।

## १०२ । सुपि च ।

यञादौ अतः सुपि दीर्घः स्यात् । वृक्षाय । वृक्षाभ्याम् । यञीत्येव । वृक्षस्य ।

## १०३ । बहुवचने झल्येत् ।

अदन्तस्य झलादौ बहुवचने एत्वं स्यात् । वृक्षेभ्यः । वृक्षेषु । सर्वेषाम् । सुपीत्येव । पचध्वम् ।

## १०४ । ओसि च ।

अत्रादन्तस्य एत् स्यात् । वृक्षयोः । वनयोः ।

## १०५ । आङि चापः ।

आप एत्वं स्यादोसि चाङि परे । खट्वया । खट्वयोः । कथमतिखट्वे न ? ह्याब्ग्रहणेन दीर्घग्रहणमिति स्थानिवत्त्वनिषेधादित्येके । आ आप इति प्रश्लेषेण दीर्घग्रहणमिति भाष्यम् । आङिति तृतीयैकवचनस्य नाम ।

## १०६। संबुद्धौ च।

आप एत्वं स्यात्। हे खट्वे।

## १०७। अम्बार्थनद्योर्ह्रस्वः।

अम्बार्थानां नद्याश्च सम्बुद्धौ ह्रस्वः स्यात्। हे अम्ब। हे अक्क। हे कुमारि। हे धीवन्धु। हे वधु।

(क) डलकवतीनां प्रतिषेधश्च। हे अम्बाडे। हे अम्बाले। हे अम्बिके।

(ख) मातॄणां मातच् पुत्रार्थमर्हते। सम्बुद्धौ मातुर्मातच् पुत्रायार्हते। नद्यृतश्चेति (५।४।१५३) कपोऽपवादः। हे गार्गीमातः। हे वात्सीमातः। श्लाघ्योऽभिधीयते।

## १०८। ह्रस्वस्य गुणः।

सम्बुद्धौ ह्रस्वस्य गुणः स्यात्। हे अग्ने। हे निष्कौशाम्बे। हे विष्णो। हे वायो। हे बन्धो। कथं हे कर्त्तृ कुल ? नद्यपिच्चस्य ह्रस्वस्य ग्रहणात्।

## १०९। जसि च।

अङ्गस्य ह्रस्वस्य जसि गुणः स्यात्। मतयः। बन्धवः।

## ११०। ऋतो ङिसर्वनामस्थानयोः।

अङ्गस्य ऋदन्तस्य गुणः स्यात्। ङौ। मातरि। कर्त्तरि। सर्वनामस्थाने। मातरौ। मातरः। कर्त्तारः। हे कर्त्तरित्यत्र सम्बुद्धिलोपात् परत्वेन गुणे कृते रात्सस्येति (८।२।२४) सलोपः। कथं कर्त्तृणि कुलानि ? नुमः पूर्वविप्रतिषेधेनेष्टत्वात्।

## १११। घेर्ङिति।

घिनाम्नो ङिति गुणः स्यात्। अग्नये। वायवे। पटवे। धेनवे। सुधीत्येव। पट्वी।

## ११२। आण्नद्याः।

नद्याः परस्य ङितः स्यादाट्। कुमार्य्यै। कुमार्य्याः। धेन्वाः। धेन्वाम्। वध्वाः। वध्वाम्।

११३ । याडापः ।

आबन्तात् ङितो याट् स्यात् । खट्वायै । खट्वायाः । मालायाः । मालायाः ।

११४ । सर्वनाम्नः स्याड् ढ्रस्वश्च ।

आबन्तात् सर्वनाम्नो ङितः स्याड़ागमः स्यात् । आबन्तस्य ह्रस्वश्च । सर्वस्यै । एतस्यै । विश्वस्यै । विश्वस्याः । यस्याः । तस्याः । स्मैस्मातौ चात्र न प्राप्नुतः । स्याटा व्यवधानान् ङेङस्योरसर्वनाम्नः परत्वात् ।

११५ । विभाषा द्वितीयातृतीयाभ्याम् ।

ङित आभ्यां स्याड् वा स्यात् । द्वितीयस्यै द्वितीयायै वा । तृतीयस्यै तृतीयायै वा ।

११६ । ङेराम् नद्याम्नीभ्यः ।

एभ्यो ङेरामादिश्यते । नदी । कुमार्य्याम् । वध्वाम् । धेन्वाम् । ङिति ह्रस्वश्चेति (१।४।६) नदीपक्षे कृत्याम् । धेन्वाम् । आप् । खट्वायाम् । बहुराजायाम् । नी । सेनान्याम् । दिनप्रण्याम् ।

११७ । इदुद्भ्याम् ।

११८ । औत् ।

११९ । अच्च घेः ।

इदुद्भ्यां ङेरौत् स्यात् । सख्यौ । पत्यौ । अच्च घेः । अग्नौ । कृतौ । भूमौ । धेनौ ।

१२० । आङो नाऽस्त्रियाम् ।

घे स्तृतीयैकवचनस्य नाः स्यात् । अग्निना । हरिणा । वायुना । बन्धुना । अमुना । अस्त्रियां किम् ? मत्या । सूच्या । धेन्वा ।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
सप्तमाध्यायस्य तृतीयः पादः ॥ ७।३ ॥

समाप्तश्च देविकापादः ॥

---

अथ

# भाषावृत्तिः ।

---

## सप्तमोऽध्यायः । चतुर्थः पादः ।

### १ । णौ चङ्युपधाया ह्रस्वः ।

चङ्परे णावङ्गस्योपधाया ह्रस्वः स्यात् । अचीकरत् । अपीपचत् । मा भवानटिटत् । अत्र ह्रस्वत्वे कृते द्विरुक्तिरिष्टा । उपधायाः किम् ? अचकाङ्क्षत् । अववाङ्क्षत् ।

### २ । नाग्लोपिशास्वृदिताम् ।

उपधाया एषां णौ चङि ह्रस्वो नास्ति । अग्लोपिनाम् । मालामाख्यत् अममालत् । भोगिनमाख्यत् अबुभोगत् । ह्माभृतमाख्यत् अचह्माभृतत् । शासेः । अशशासत् । ऋदिताम् । बाधृ अबबाधत । याचृ अययाचत् । ढौकृ । अडुढौकत् ।

### ३ । भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।

एषां णौ चङि ह्रस्वो वा स्यात् । अबभ्राजत् । अबिभ्रजद्वा । अबभासत् । अबीभसद्वा । अबभाषत् । अबीभषद्वा । न्यमीमिलत् । न्यमिमीलद्वा । न्यमिमीलदब्जनयनं नलिनी । सवितेवोदमीमिलत् । अदीदिपत् । अदिदीपद्वा । अजीजिवत् । अजिजीवद्वा । अपीपिडत् । अपिपीडद्वा ।

(क) काण्यादीनाञ्च । अचकाणत् । अचीकणद्वा । कणरणवणभणः कणादयः ।

### ४ । लोपः पिबतेरीच्चाभ्यासस्य ।

णौ चङि पिबतेरुपधाया लोपः स्यादीच्चाभ्यासस्य । अपीप्यत् । "ते मुहूर्त्तमथमूर्त्तमपीप्यन्" ।

## ५ । तिष्ठतेरित् ।

चङ्युपधाया तिष्ठतेरित् स्यात् । अतिष्ठिपत् ।

## ६ । जिघ्रतेर्वा ।

चङि उपधाया इद्वा स्यात् । अजिघ्रिपत् । अजिघ्रपत् ।

## ७ । उर्ऋत् ।

चङि ऋवर्णस्योपधाया ऋद्वा स्यात् । इररारामपवादः । अचकीर्त्तत् अचीकृतद्वा । अववर्त्तत् । अवीवृतद्वा । अममार्जत् । अमीमृजद्वा ।

## ८ । नित्यञ्छन्दसि ।

छन्दः सूत्रमेकम् ।

## ९ । दयतेर्दिगि लिटि ।

देङो लिटि दिग्यादेशः स्यात् । अवदिग्येऽम्बरं नादः । द्विरुक्तिरत्र नेष्यते ।

## १० । ऋतश्च संयोगादेर्गुणः ।

ऋदन्तस्य संयोगादेर्गुणः स्याल्लिटि निषेधविषये । सस्मरतुः । सस्मरुः । सस्मारेति पूर्वविप्रतिषेधेन गुणाद्वृद्धिरिष्टा । संयोगादेः किम् ? चक्रतुश्चक्रुः ।

(क) संयोगोपधग्रहणं कर्त्तव्यम् । सञ्चस्करतुः । सञ्चस्करुः ।

## ११ । ऋच्छत्यृताम् ।

ऋच्छति ऋऋतां लिटि गुणः स्यात् । आनर्च्छतुः । आनर्च्छुः । आरतुः । आरुः । ऋताम् । निचकरतुः । निचकरुः । निजगरतुः । निजगरुः । तेरतुः । तेरुः ।

## १२ । शृदृप्रां ह्रस्वो वा ।

एषां पूर्वेण गुणे प्राप्ते लिटि ह्रस्वो वा स्यात् । विशशरतुः । विशश्रतुः । विददरतुः । विदद्रतुर्वा । पपरतुः । पप्रतुर्वा ।

## १३ । केऽणः ।

कप्रत्ययेऽणो ह्रस्वः स्यात् । ज्ञका । कुमारिका । वधुका । नैषादकर्षुकः । ग्रामणिका । अणः किम् ? गोका । नौका ।

## १४। न कपि।

कपि ह्रस्वो नास्ति। बहुकुमारीकः।

## १५। आपोऽन्यतरस्याम्।

आबन्तस्य कपि ह्रस्वो वा स्यात्। बहुमालाकः। बहुमालको वा।

## १६। ऋदृशोऽङि गुणः।

अनयोरङि गुणः स्यात्। असरत्। आरत्। अदर्शत्। अजरत्। जरा।

## १७। अस्यतेस्थुक्।

अस्यतेरङि थुगागमः स्यात्। निरास्थत्।

## १८। श्वयतेरः।

श्वयतेरः स्यादङि। अश्वत्। अश्वताम्। अश्वन्।

## १९। पतःपुम्।

अङि पतेः पुमागमः स्यात्। अपप्तत्। अपप्तताम्।

## २०। वचउम्।

वचेरुमागमः स्यादङि। अवोचत्। अवोचत। "यदवोचस्तदवैमि कैतवम्।"

## २१। शीङः सार्वधातुके गुणः।

शीङोऽत्र गुणः स्यात्। शेते। शयाते। शेरते।

## २२। अयङ् यि क्ङिति।

यकारादौ क्ङिति शीङोऽयङ् स्यात्। शय्यते। संशय्य। शय्या।

## २३। उपसर्गाद्ध्रस्व ऊहतेः।

सोपसर्गस्योहतेर् ह्रस्वः स्याद् यादौ क्ङिति। समुह्यते। समुह्यते। अण इत्येव। आजह्यते ओह्यते। प्रोह्यते। समोह्यते।

## २४। एतेर्लिङि।

उपसर्गादाशीर्लिङि यादौ क्ङिति एते ह्रस्वः स्यात्। उदियात्। समियात्। अण इत्येव। आद्ययात् एयात्। समेयात्। एतेः किम्। प्रक्षीयात्। सक्षीयात्।

२५। अकृत्सार्वधातुकयोर्दीर्घः।

अकृद्यकारेऽसार्वधातुकयकारे चाणो दीर्घः स्यात्। श्लेमायते। कण्डूयते। स्तूयते। असार्वधातुकयकारे चीयात्। चीयासुः। निषेधः किम्? विचित्य। प्रचित्य। चिनुयुः।

२६। च्वौ च।

च्वौ ह्रस्वो दीर्घः स्यात्। शुचीभवति। पटूकरोति।

२७। रीङ् ऋतः।

च्वौ अकृद्यकारेऽसार्वधातुकयकारे च ऋतां रीङादिश्यते। मात्रीभवति। चेक्रीयते। मात्रीयते। पित्र्यम्। तपरः किम्? चेकीर्य्यते। निजेगिल्यते।

२८। रिङ् शयग्लिङ्क्षु।

एषु ऋतां रिङादिश्यते। शः। आद्रियते। यक्। क्रियते। आशीर्लिङि क्रियात्। "क्रियादघानां मघवा विघातम्।" योत्येव। कृषीष्ट। असार्वधातुकइत्येव। बिभृयात्।

२९। गुणोऽर्त्तिसंयोगाद्योः।

अर्त्तेः संयोगादेश्च ऋतो यकि लिङि च गुणः स्यात्। अर्य्यते। स्मर्य्यते। ध्वर्य्यते। कथं संस्क्रियते? कात्पूर्वग्रहणेन (६।१।१३५) सुटोऽभक्तत्वज्ञापनादपरादित्वेनाङ्गस्यासंयोगादित्वात्। लिङि। अर्य्यात्। स्मर्य्यात्। ध्वर्य्यात्। योत्येव। स्मृषीष्ट। असार्वधातुकइत्येव। इयृयात्।

३०। यङि च।

यङि चार्त्तिसंयोगाद्योर्गुणः स्यात्। अरार्य्यते दिशःकोर्त्तिः। सास्मर्य्यते। दाध्वर्य्यते।

(क) हन्तेर् हिंसायां घ्नीभावो वक्तव्यः। जेघ्नीयते। हिंसायां किम्? जङ्घन्यते।

३१। ई घ्राध्मोः।

यङि घ्राध्मोरीकारः स्यात्। जेघ्रीयते। देध्मीयते।

## ३२। अस्य च्वौ।

अवर्णान्तस्य च्वावीकारः स्यात्। शुक्लीभवति। मालीभवति। अनव्ययस्येत्यभिधानाद् दिवाभूता रात्रिः। दोषाभूतमहः।

## ३३। क्यचि च।

अवर्णान्तस्य क्यचीकारः स्यात्। पुत्रीयति। भार्य्यीयति।

## ३४। अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु।

एषु निपात्यन्ते अमी क्यचि। अशनायति बुभुक्षुः। उदन्यति पिपासितः। धनायति गृध्नुः। अन्यत्र। अशनीयति। उदकीयति। धनीयति। इह छन्दःपञ्चसूत्री। (38)

## ४०। द्यतिस्यतिमास्थामित् ति किति।

एषामित् स्यात् तादौ किति। दो दितम्। षो अवसितम्। मा मितम्। स्था स्थितम्। स्थित्वा। स्थितिः।

## ४१। शाच्छोरन्यतरस्याम्।

तादौ किति शाच्छोरिद्वा स्यात्। शो निशितं निशातं वा। छो छितं छातं वा। व्यवस्थितविभाषया नित्यं संशितव्रतः।

## ४२। दधातेर्हिः।

तादौ किति धाञो हिः स्यात्। अभिहितम्। अभिहितवान्। हित्वा। विहितम्। अवहितम्। दधातेः किम्? धेट् धीतम्। धीत्वा।

## ४३। जहातेश्च क्त्वि।

हिः स्यात्। हित्वा। ओहाङस्तु हात्वा। क्त्वि किम्? हीनः। इह

## ४४। विभाषाच्छन्दसि।

## ४५। सुधितवसुधितनेमधितधिष्वधिषीय च।

सूत्रद्वयं छान्दसम्।

---

(38) ३५। न च्छन्दस्यपुत्रस्य। ३६। दुरस्युर्द्रविणस्युर्वृष्यति रिषण्यति। ३७। अश्वाघस्यात्। ३८। देवसुम्नयोर्यजुषि काठके। ३९। कव्यध्वरपृतनस्यर्चि लोपः।

### ४६ । दो दद् घोः ।

तादौ किति दास्थाने दत् स्यात् । दत्तः । दत्त्वा दत्तिः । दत्तवान् । कथं प्रदाय ? बहिरङ्गो ल्यबन्तरङ्गान् विधीन् बाधत इत्युक्तम् । घोः किम् ? दाप् । दातं धान्यम् । दैप् । अवदातं वस्त्रम् ।

### ४७ । अच उपसर्गात् तः ।

अजन्तादुपसर्गात् परस्य तादौ किति दाशब्दाकारस्य तकारादेशः स्यात् दाशब्दस्यैव द्वितकारादेश इत्यन्ये । प्रत्तम् । परीत्तम् । नीत्तम् । वीत्तम् । सूत्तम् । अचः किम् ? निर्दत्तम् । प्रादेः किम् ?

अवदत्तं निदत्तञ्च प्रदत्तञ्चादिकर्मणि ।
सुदत्त मनुदत्तञ्च विदत्तमिति चेष्यते ॥१॥

उपसर्गप्रतिरूपका इमे निपाताः । इह द्यतेरित्त्वं दितं निर्दित-मित्यादौ चरितार्थमनेन बाध्यते । अवत्तो मारः । (39)

### ४८ । अपो भिः ।

अपस्तकारादेशः स्याद् भादौ । अद्भिः । अद्भ्यः । भि किम् ? अप्सु ।

### ४९ । सः स्यार्द्धधातुके ।

सकारादार्धधातुके सस्य तः स्यात् । वत्स्यति । विवत्सति । अघ्वात्-सीत् । जिघत्सा । सि किम् ? प्रवासः । वासः ।

### ५० । तासस्त्योर्लोपः ।

तासेरस्तेश्च सलोपः स्यात् सादौ प्रत्यये । कर्त्तासि त्वम् । व्यतिसे । कर्त्तासे । असि ।

### ५१ । रि च ।

रेफादौ तासस्त्योः सलोपः स्यात् । कर्त्तारौ । कर्त्तारः ।

(39) "मारस्य उत्पातोऽवत्तः अवद्यात् खण्डित' इति कश्चित् ।

## ५२। ह एति।

एकारे तासस्थो हः स्यात्। अहं कर्त्ताहे। व्यतिहे। (40)

## ५३। यीवर्णयोर्दीधीवेव्योः।

दीधीवेव्यौ छान्दसौ।

## ५४। सनि मीमाघुरभलभशकपतपदामच इस्।

सनि एषामचः स्थाने इसादिश्यते। मीञो डुमिञश्च सनि कृतदीर्घस्य ग्रहणम्। मित्सति। माङ् मित्सते। मेङ् अपमित्सते। घु दित्सा। धित्सा। दित्सुः। धित्सुः। रभ आरिप्सते। आरिप्समानः। लभ आलिप्सते। आलिप्समानः। शक शिक्षते। पत पित्सति। पद प्रपित्सते। सीत्येव। पिपतिषति। सनि किम्? दास्यति।

(क) राधो हिंसायामच इस्। प्रतिरित्सति। हिंसायां किम्? आरिरात्सति।

## ५५। आप्ज्ञप्यृधामीत्।

आप्ज्ञपिऋधामच स्थाने ईत् स्यात् सनि। ईप्सति। ज्ञीप्सति नायं किञ्चित्। ईर्त्सति। सीत्येव। जिज्ञपयिषति। अर्दिधिषति।

## ५६। दम्भ इच।

दम्भेरच इत् स्यादीच सनि। धिप्सति। धीप्सति। सीत्येव दिदम्भिषति।

## ५७। मुचोऽकर्मकस्य गुणो वा।

मुचः सनि गुणो वा स्यात्। मोक्षते वत्सः स्वयमेव मुमुक्षते वा। अकर्मकस्य किम्? मुमुक्षति वत्सं गोपः। मुमुक्षति वत्सं देवदत्तः।

---

-(40) लिटि उत्तमैकवचने कर्त्तरि कर्मणि,—प्रथमैकवचने कर्तृकर्मभावेषु वा कथं भवितव्यम्? मत्तोऽहं त्वां प्रेक्षामाहे, त्वयाहं प्रेक्षामाहे सुप्त इति, चन्द्रं प्रेक्षामाहे बालः, बालेन वा चन्द्रः प्रेक्षामाहे, भवद्भिरेधामाहे इति तु भवत्येवेति केचित्। अन्ये तु तासिसाहचर्य्यात् तासे यं एकारः सम्भवति उत्तमैकवचने तवै वाक्येरपीति ब्रुवन्तः एशि हकारो न भवति। प्रेक्षामासे एधामासे इत्येव् भवतीति समर्थयन्ते। अपरे पुनरुत्तमैकवचने सार्वधातुके चेत्येव हकार इति वदन्ति। नान्यत्र। तेन मत्तोऽहं त्वां प्रेक्षामासे त्वयाहं प्रेक्षामासे सुप्तो बालः चन्द्रं प्रेक्षामासे, बालेन वा चन्द्रः प्रेक्षामासे भवद्भिरेधामासे इत्येव भवति। नतु हकारः। अत्र भट्टोजिः—"अस्तेस्तु भावकर्मणोर्लिङि एशि इटि च रूपे विप्रतिपद्यन्ते। तथाहि उभयत्रापि ह एतीति हादेशे कृते एधामाहे ईक्षामाहे इति केचित्। तासिसाहचर्यादिस्येव हत्वमित्यन्ये। साहचर्य्यादेव सार्वधातुक एव एति हत्वम्। न तूक्तद्वयेऽपि। एधामासे ईक्षामासे इत्येव रूपमित्यपरे।" इति।

५८ । अत्र लोपोऽभ्यासस्य ।

अत्र सनीत्यधिकारेऽभ्यासस्य लोपः स्यात् । तथैवोदाहृतम् । अभ्यासस्य विधानमा पादपरिसमाप्तेः ।

५९ । ह्रस्वः ।

अभ्यासस्य ह्रस्वः स्यात् । डुढौकिषते । तुतौकिषते ।

६० । हलादिः शेषः ।

अभ्यासस्यादिर्हल् शिष्यते । अनादिर्हल् लुप्यते । पपाच । चकार । बभार । जहार । जग्लौ । आर । आट । आश ।

६१ । शर्पूर्वाः खयः ।

शर्पूर्वाः खयो हलः शिष्यन्ते । चुश्चोतिषति । तिष्ठासति । पिस्पन्दिषते ।

(क) खर् पूर्वाः खय इति वक्तव्यम् । उचिच्छिषति ।

६२ । कुहोश्चुः ।

कवर्गहकारयोश्चवर्गः स्यात् । चक्रे । चखान । जग्लौ । जघास । जघान । जुहुवे । जुहाव । जहाति ।

६३ । न कवतेर्यङि ।

भौवादिकस्य कुङो यङि चुत्वं नास्ति । कोकूयते खरः । "अकोकूयिष्ट तत्सैन्यम् ।" इह

६४ । कृषेश्छन्दसि ।

६५ । दाधर्त्तिदर्धर्त्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदत्भरिभ्रद्दविध्वतोदविद्युततत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति ।

छान्दसं सूत्रद्वयम् ।

६६ । उरत् ।

ऋवर्णान्तस्याभ्यासस्याकारः स्यात् । ववृधे । चकार ।

६७। द्युतिस्वाप्योः संप्रसारणम्।

अनयो र्यण इक् स्यात्। विदिद्युते। विदिद्योतिषते। स्वापिर्ण्यन्तः। सुस्वापयिषति।

६८। व्यथो लिटि।

लिटि व्यथः संप्रसारणं स्यात्। विव्यथे। लिटि किम्? वाव्यथ्यते।

६९। दीर्घ इणः किति।

इणो दीर्घः स्याल्लिटि किति। ईयतुः। ईयुः। किति किम्? इयाय। इययिथ।

७०। अतः आदेः।

अभ्यासस्यादेरतो लिटि दीर्घं स्यात्। आट। आटतुः। आटुः।

७१। तस्मान्नुड् द्विहलः।

दीर्घीभूतात् परस्य द्विहलोऽङ्गस्य नुट् स्याल्लिटि परे। आनञ्ज। आनञ्जतुः। आनर्छ। आनर्छतुः। द्विहलः किम्? आट। आटतुः। कथमानृधतुः? साद्दश्यात्। द्विहल इत्यनेकहल उपलक्षणम्। तेनानर्छेति तुकि कृते गुणे च द्विहलोऽपीष्यते।

७२। अश्नोतेश्च।

लिटि दीर्घात् परस्य अस्य च नुट् स्यात्। अशू। व्यानशे दिशः कीर्त्तिः। आनशाते।

७३। भवतेरः।

भुवोऽभ्यासस्य लिट्यकारः स्यात्। बभूव। अनुबभूवे।

७४। ससूवेति निगमे।

अत्रच्छन्दःसूत्रमेकम्।

७५। निजां त्रयाणां गुणः श्लौ।

णिजिर्विजिर्विषां श्लौ गुणः स्यात्। नेनेक्ति। वेवेक्ति। वेवेष्टि।

### ७६ । भृञामित् ।

भृञ्ओहाङ्माङामित् स्यात् श्लौ । बिभर्त्ति । विजिहीते । मिमीते । मिमानः ।

### ७७ । अर्त्तिपिपर्त्त्योश्च ।

अनयोः श्लावित् स्यात् । इयर्त्ति । पिपर्त्ति ।

### ७८ । बहुलञ्छन्दसि ।

छान्दसम् ।

### ७९ । सन्यतः ।

सन्यभ्यासस्यादन्तस्य स्यादित् । पिपक्षति । पिपासति । जगदाख्यातुमिच्छति जिजगयिषति । अतः किम् ? लुलूषति । सुस्रूषते । सनि किम् ? पपाच ।

### ८० । ओः पुयण्जष्वपरे ।

सन्यभ्यासस्य उवर्णान्तस्य पवर्गे यणि जकारे चावर्णपरे स्यादित् । पूङ् पिपविषते । भू बिभावयिषति । यण् यियावयिषति । रु रिरावयिषति । लू लिलावयिषति । जकारे जिजावयिषति । जु सौत्रो धातुः । इह णौ कृतं स्थानिवद्भवतीति पूर्वरूपेण द्विरुक्तिः । अपरे किम् ? बुभूषति ।

### ८१ । स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।

एषामवर्णपरे यणि सनि स्यादिद्वा । सिस्रावयिषति सुस्रावयिषति वा । एवं शृणोत्यादौ । अपर इत्येव । सुस्रूषति जलम् ।

### ८२ । गुणो यङ्लुकोः ।

यङि यङ्लुकि चाभ्यासस्य गुणः स्यात् । लोलूयते । लोलवीति । लोलुवः । बोभूयते । बोभवीति । बोभूति । बोभुवः । यङ्लुकोर्विधानं यावत् सन्वल्लघुनीति (७।४।९३) ।

### ८३ । दीर्घोऽकितः ।

अकितोऽभ्यासस्य दीर्घः स्यात् । पापच्यते । पापचीति । पापठ्यते ।

पापठीति। पापठः। अकित किम्? यंयम्यते। रंरम्यते। नन्वत्र लुकैव दीर्घो बाधिष्यते। तद्धकित इत्येतज् ज्ञापयति अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्त इति।

## ८४। नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्।

एषामष्टानामभ्यासस्य नीक् स्यात्। वनीवच्यते। वनीवञ्चः। सनीस्रस्यते। दनीध्वस्यते। बनीभ्रस्यते। चनीकस्यते। पनीपत्यते। पनीपद्यते। पनीपदीति। चनीस्कद्यते। चनीस्कन्दीति।

## ८५। नुगतोऽनुनासिकान्तस्य।

अनुनासिकान्तस्याभ्यासस्य नुक् स्यात्।

(क) पदान्तवच्चेति वक्तव्यम्। नुगनुस्वारोपलक्षणार्थम्। यमिरम्योरझल्यपि यथा स्यात्। यंयम्यते यंयमीति। जङ्गम्यते जङ्गमीति जङ्गमः। एवं चमुतमुदमुप्रभृतयः। वा पदान्तस्येति (८।४।५९) परसवर्णः। तपरकरणं भूतपूर्वदीर्घस्य निवृत्त्यर्थम्। भाम क्रोधे बाभाम्यते।

## ८६। जपजभदहदशभञ्जपशाञ्च।

एषां नुक् स्यात्। जञ्जप्यते जञ्जपीति। एवं यावत् पंपश्यते पंपशीति। दशीति नलोपनिपातनं यङ्लुगर्थम्। दंदशः। पशिः सौत्रो धातुः।

## ८७। चरफलोश्च।

नुक् स्यात्। चञ्चूर्य्यते चञ्चुरः। पंफुल्यते। पंफुलः।

## ८८। उत्परस्यातः।

चरफलयोरभ्यासात् परस्यात उत् स्यात्। तथैवोदाहृतम्।

## ८९। ति च।

तादौ चरफलयोरत उत् स्यात्। चूर्त्तिः। प्रफुल्तम् पुष्पम्।

## ९०। रीगृदुपधस्य च।

ऋदुपधस्याभ्यासस्यातो रीक् स्यात्। नरीनृत्यते। नरीनृतः। दरीदृश्यते दरीदृशः।

(क) रीगृत्वत इति वक्तव्यम् । वरीवृश्च्यते । परीपृच्छ्यते । जरीगृभ्यते । जरीजृम्भः ।

### ९१ । रुग्रिकौ च लुकि ।

ऋदुपधस्य यङ्लुकि रुग्रिग्रीकः स्युः । नर्नर्त्ति नरिनर्त्ति नरीनर्त्ति ।

### ९२ । ऋतश्च । (41)

ऋदन्तस्य यङ्लुकि रुग्रिग्रीकः स्युः । चर्कर्त्ति । चरिकर्त्ति । चरीकर्त्ति । चर्क्रः । चरिक्रः । चरीक्रः । तपरः किम् ? किरतेश्चाकर्त्ति । चाकिरः । जागर्त्ति । जागिरः । (42)

### ९३ । सन्वल्लघुनि चङ्परेऽनग्लोपे ।

लघुनि धात्वक्षरे परे योऽभ्यासस्तस्य सन्वत् कार्यं स्याच्चङ्परे णौ । अपीपचत् । अचीकरत् । लघुनि किम् ? अररक्षत् । अजजागरत् । अनग्लोपे किम् ? अचकथत् । मालामाख्यदममालत् । अदद्दषत् ? इह कथं पटुमाख्यदपीपटदिति ? णिचि टिलोपात् परत्वेन वृद्धौ कृतायां सन्ध्यक्षरलोपोऽनग्लोप एवेति सन्वद्भावादित्त्वमित्येके । अनग्लोप इत्यगिति प्रत्याहारोपादानसामर्थ्यादकृतायामेव वृद्धौ टिलोपोऽग्लोप एवेति सन्वद्भावनिषेधादपपटदित्यपरे ।

---

(41) अत्रेदमाभाषणकं—

"किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः ॥ १ ॥"

इति । किरतिमिति ॠकारान्तोपलक्षणम् । चर्करीतं यङ्लुगित्यर्थः । पचतीति लट उपलक्षणम् । यः खलु ॠकारान्तान् धातून् यङ्लुगन्तान् लटि नयेत् नीतिपूर्वकं कुर्यात् यथाशास्त्रं प्रयोक्तुं शक्नुयादिति यावत् । तमहं प्राप्तिज्ञं रुग्रिगादीनां विषयविभागेन यः प्रयोगः तज्ज्ञं तत्र दक्षं मन्ये । तेन संग्रहः साधुशब्दसंग्रहः प्रारब्धः । स हि शब्दानुशासनशास्त्रविदित्यर्थः । अन्ये त्वत्र प्राप्तिज्ञमिष्टिज्ञं सूत्रकाराभिप्रायज्ञमिति यावत् । संग्रहः संग्रहग्रन्थ इत्यर्थं इत्याहुः । संग्रहकारी दाक्षायण एवादौ यङ्लुगन्तयोर् ऋकारान्तॠकारान्तयोर्लटि पृथग्रूपाणि चर्कर्त्ति चर्करीति चरिकर्त्ति चरिकर्त्तीति पचे चाकर्त्तीत्यादीनि सूत्रकारमताविष्कारेण प्रदर्शितवानिति तेषामाशयः । शोभना खलु दाक्षायणस्य संग्रहस्य कृतिरिति भाष्यकारस्योदाहरणम् । संग्रहकारी व्याडिराचार्य्य इति वदन्ति ।

(42) गॄ इत्यस्य यङ्लुग्रूपमिदम् । जागृ जागरण इत्यस्य यङेव नास्ति । अनेकाच्त्वात् ।

## ९४। दीर्घो लघोः।

पूर्वसूत्रविषये लघोरभ्यासस्य दीर्घः स्यात्। अपीपचत्। अचीकरत्। अलीलवत्। अचूचुरत्। लघोः किम्? अचिच्चणत्। अचिक्कणत्। लघुनी-त्येव। अररक्षत्।

## ९५। अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्।

समानामेषामभ्यासस्य चङ्परे णावत् स्यात्। असस्मरत्। अददरत्। अतत्वरत्। अपप्रथत्। अमम्रदत्। अतस्तरत्। अपस्पशत्। तपरकरणं दीर्घनिरासार्थम्। अददरत्।

## ९६। विभाषा वेष्टिचेष्ट्योः।

णौ चङ्परे अनयोरद्वा स्यात्। अववेष्टत्। अविवेष्टद्वा। अचचेष्टत् अचिचेष्टद्वा।

## ९७। ई च गणः।

चङ् परे गण ईः स्यादच्च। अजगणत्। अजीगणद्वा। अङ्गाधिकारोऽभ्या-साधिकारश्च पूर्णः।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
सप्तमाध्यायस्य चतुर्थः पादः ॥७।४॥
समाप्तश्च णोपादः॥

अथ

# भाषावृत्तिः ।

## अष्टमोऽध्यायः । प्रथमः पादः ।

### १ । सर्वस्य द्वे ।

अधिकारोऽयम् । सर्वस्य द्विरुक्तिर्वाच्या ।

### २ । तस्य परमाम्रेडितम् ।

द्विरुक्तस्य यत् परं तदाम्रेडितमुच्यते । यथा कानाम्रेडिते (८।३।१२) । कांस्कान् भोजयति ।

### ३ । अनुदात्तञ्च ।

छान्दसम् ।

### ४ । नित्यवीप्सयोः ।

नित्येऽर्थे वीप्सायाञ्च यःशब्दो वर्त्तते तस्य सर्वस्य द्वे स्याताम् । आभीक्ष्ण्यं नित्यता । सा च तिङव्ययकृत्सु । पचति पचति । प्रपचति प्रपचति । भुक्त्वा भुक्त्वा याति । नदीमवस्कन्दमवस्कन्दमुपस्पृशति । भोजं भोजं व्रजति । लुनीहि लुनीहीत्येवायं लुनाति । युगपद्व्याप्तुमिच्छा वीप्सा । साच सुप्सु । गृहे गृहेऽश्वाः । नदीं नदीमवस्कन्दमुपस्पृशति । ग्रामो ग्रामो रमणीयः । इहाढ्यतरमाढ्यतरमानयेति जातप्रकर्षप्रत्ययस्य द्विरुक्तिरिष्यते । तिङश्चेत्य-तसु (५।३।५६) परत्वात् द्विरुक्तिरेव प्राक् । ततः प्रकर्षप्रत्यय इत्येके । पचतिपचतितरामिति । इह क्वचिद् वृत्तावुक्तार्थत्वाद् द्विरुक्ति र्निवर्त्तते । द्वौ द्वौ पदौ ददाति द्विपदिकां ददाति । द्वौ द्वौ देहि द्विशो देहि । सप्त सप्त पर्णान्यस्य सप्तपर्णः । कुलं कुलमटति कुलटा । क्वचिदुक्तार्थस्यापि प्रयोगः एकैकशो देहि । अन्योन्यसहाया इति ।

### ५। परेर्वर्जने।

अस्यात्र द्वे स्याताम्।

(क) असमासे वेति वक्तव्यम्। परि परि त्रिगर्त्तेभ्यः वृष्टो देवः। परि त्रिगर्त्तेभ्यः वा। समासे न स्यात्। परित्रिगर्त्तम्। वर्जने किम्? वृक्षं परि सिञ्चति। त्रिगर्त्तान् परिषिञ्चति।

### ६। प्रसमुपोदः पादपूरणे।

इति छान्दसं सूत्रम्।

### ७। उपर्य्यध्यधसः सामीप्ये।

एषामत्र द्वे स्याताम्। उपर्य्युपरि ग्रामम्। अध्यधि कुलम्। अधोऽधो ग्रामम्। (1) सामीप्ये किम्? सर्व्वस्योपरि चन्द्रमाः।

### ८। वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु।

असूयादौ यद्वाक्यं तदादेरामन्त्रितस्य द्वे स्याताम्। भीम भीमरिक्तं तवाभिजात्यम्। सम्मतौ। अर्जुनार्जुन शोभनः खल्वसि। एवं कोपादौ। स्वरितमाम्रेड़ित इति (८।२।९५) प्लुतो नोदाक्रियते। भाषायामप्रचारात्।

### ९। एकं बहुव्रीहिवत्।

एकमित्येतद् द्विरुक्तं बहुव्रीहिवत् स्यात्। सुब्लुक् पुंवत् कार्य्यं स्यात्। एकैकः। एकैकशो विनिघ्नन्ति विषयाः। एकैकमक्षरं जपति। एकैकयाहुत्या जुहोति।

### १०। आबाधे च।

पीड़ायां द्वे स्यातां बहुव्रीहिवच्च। गतगता। नष्टनष्टा।

### ११। कर्मधारयवदुत्तरेषु।

उत्तरसूत्रेषु कर्मधारयवत् कार्य्यं स्यात्।

---

(1) नवानधोऽधो बृहतः पयोधरानिति माघः।

## १२ । प्रकारे गुणवचनस्य ।

सादृश्ये गुणवचनस्य द्वे स्याताम् । पटुपटुः । "मन्दमन्दमुदितः प्रययौ खम् ।" पटुपट्वी । पण्डितपण्डिता । कर्मधारयत्वात् प्रतिषेधविषयेऽपि पुंवत् । कालककालिका । इदञ्च द्विर्वचनं गुणविशिष्टद्रव्यवृत्तेर् गुणमात्रवृत्तेश्चेष्यते । शुक्लशुक्लः पटः । शुक्लशुक्लमस्य रूपम् । एवं वचनग्रहणाधिक्यात् क्रियाशब्दस्यापि भवति । "वसन्ते भीतभीतेन कोकिलेन वने रुतम् ।" (2) "भीतभीत इव शीतमयूखः ।" इतरेतरान्योन्यपरस्पराः कर्मव्यतीहारे क्लीवत्वविषया निपातनात् साधवःस्युः (3) । तेभ्यः स्त्रीनपुंसकयोः सुप आम् वेति स्मृतिः । इतरेतरां स्त्रियौ क्षत्रियकुले वा स्पर्धेते इतरेतरं वा । इतरेतरां स्त्रीभ्यां स्त्रीभिर्वा स्पर्द्धते इतरेतरेण वा । एवमन्योन्या मन्योन्यस्य वा (4) । परस्परां परस्परस्मिन् वा । तथैवमन्योन्यामन्योन्यं वा । परस्पराम् परस्परं वा । अन्योन्या मन्योन्यस्य वा । परस्परां परस्परस्मिन् वेति नपुंसकेऽपि । पुंसि तु इतरेतरं राजानौ युध्येते । अन्योन्यमसूयतः ।

(क) आनुपूर्व्ये द्वे । मूले मूले स्थूला दन्ताः । ज्येष्ठं ज्येष्ठं प्रवेशय ।

---

(2) "अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः" इत्यपरांशः सृष्टिधरधृतः ।

(3) वस्तुतस्त्वमानि वार्त्तिकानि—" (क) कर्मव्यतीहारे सर्व्वनाम्नः । (ख) समासवच्च बहुलम् । (ग) यदा न समासवत् प्रथमैकवचनं तदा पूर्व्वपदस्य । (घ) स्त्रीनपुंसकयो रुत्तरपदस्य वाम्भावः ।" इति । इतरेतरम् । उत्तरोत्तरम् । बहुलग्रहणादन्यपरयोर्न समासवद्भावः । अन्योन्यम् । परस्परम् । अन्यत्र च । यां यां प्रियः प्रैक्षत कातराक्षीं सा सा क्रिया नम्रमुखी बभूवेति माघः । सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा । नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपाल इति कालिदासस्य ।

(4) अत्र स्त्रीनपुंसकयोरपि सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पुंस्त्वम् । अतएव न टाप् । नाप्यद्ड्डादेशः । आमभावपक्षे यथायोगं सर्वाणि वचनानि । तथाच भट्टोजिः—"अत्र केचित् द्वितीयादीनामेवेदं स्वादेशविधानम् । अतएवोत्तरदलेऽपि द्वितीयादय एव नतु प्रथमा । तत्राप्येकवचनमेव नतु वचनान्तरमिति दुर्गपरिशिष्टकण्ठाभरणादिष्वर्व्वाचीनग्रन्थेषु स्पष्टम् । एतच्च सर्वमपाणिनीयम् । भाष्यादावनुक्तत्वात् । तथा चार्वाचीनमतं कवयोऽपि नानुरुध्यन्ते । अन्योन्येषां पुष्करैरामृशन्त इति माघः । क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैरिति भारविपद्ये प्रथमान्तेनैव विग्रह" इति । परस्परां विस्मयवन्ति लक्ष्मीमिति भट्टिः । व्यर्थीकृतं पत्ररथेन तेन तथावसाय व्यवसायमस्याः । परस्परामर्पित हस्ततालं तत्कालमालीभिरहस्यतालमिति नैषधीये ।

(ख) आधिक्ये च द्वे। अहो दर्शनीयाहो दर्शनीया। मह्यं रोचते मह्यं रोचते। दृश्यतायां रुचेश्चात्राधिक्यं द्विर्वचनात् प्रतीयते।

(ग) चापले द्वे यावद्बोधम्। अहिरहिरहि बुध्यस्व बुध्यस्व बुध्यस्व।

(घ) डाचि बहुलं द्वे। पटपटाकरोति। बहुलं किम्? मद्राकरोति।

(ङ) पूर्वप्रथमयोरतिशये। पूर्वं पूर्वं पुष्यन्ति। प्रथमं प्रथमं भुक्तम्। प्रथमं प्रथमं पठन्ते। आतिशायिकोऽपीष्टः। पूर्वतरं पूर्वतरं पुष्यन्ति।

## १३। अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्।

अकृच्छ्रार्थयोरनयोर्द्वे वा स्याताम्। प्रियप्रियेण सुखसुखेन ददाति प्रियेण सुखेन वा। अकृच्छ्रे किम्? प्रियः पुत्रः। सुखो रथः।

## १४। यथास्वे यथायथम्।

अत्रेदं निपात्यते। "यथायथं ताः सहिता नभश्चरैः।" यथास्वीयमित्यर्थः।

## १५। द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु।

एषु पञ्चसु द्वन्द्वं निपात्यते। द्वौ द्वौ भूत्वा द्वन्द्वं रहस्यं मन्त्रयन्ते। एवं यावदभिव्यक्तौ। द्वन्द्वं रामलक्ष्मणौ। द्वौ साहचर्येणाभिव्यक्तावित्यर्थः। इह योगविभागात् सुखदुःखयोर्द्वन्द्वं चार्थे द्वन्द्व (२।२।२९) इति दृश्यते।

## १६। पदस्य।

अधिकारोऽयं प्रागपदान्तस्य मूर्धन्यात् (८।३।५५)। वक्ष्यति संयोगान्तस्य लोपः (८।२।२३)। पठन्। पचन्। नलोपः (८।२।७)। राजभ्याम्। मो नो धातोः (८।२।६४)। प्रशान्। पदस्य किम्? पचन्तौ। राजानौ। प्रशामौ।

## १७। पदात्।

अधिकारोऽयं यावत् कुत्सने च सुप्यगोत्रादौ इति (८।१।६९)। वक्ष्यति बहुवचनस्य वस्नसौ (८।१।२१)। पातु वः। पातु नः। पदात् किम्? युष्मान् पातु। अस्मान् धिनोतु।

## १८। अनुदात्तं सर्वमपादादौ।

अनुदात्तमिति च्छान्दसम्। भाषायां स्वरस्याप्रचारात्। अपदादावित्येवमा पादपरिसमाप्तेरधिक्रियते। वक्ष्यति बहुवचनस्य वस्नसौ (८।१।२१)। ग्रामो वः। पुत्रो नः। अपादादौ किम्? श्लोकपादादौ मा भूत्।

युष्माकं पालकः शम्भुरस्माकं देशको जिनः।

(क) समानवाक्ये युष्मदस्मदोरादेशा वक्तव्याः। वाक्यभेदे मा भूवन्। ओदनं पच। तव भविष्यति। मम भविष्यति। किं पुनर्वाक्यम्? आख्यातं साव्ययं सकारकं सविशेषणं वाक्यं यथा साव्ययम्। उच्चैः पठति। सकारकम्। ग्रामं याति। सविशेषणम्। मृदु पचति। (5)

## १९। आमन्त्रितस्य च।

इति स्वरसूत्रम्।

## २०। युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ।

द्विवचनान्तयोः षष्ठ्याद्यन्तयोर्युष्मदस्मदोर्वान्नावौ इत्येतावादेशौ स्याताम्। ग्रामो वाम्। देशो नौ। ग्रामो वां दीयते। देशो नौ दीयते। शिवौ वां रक्षतु। बुद्धो नौ पातु। स्थग्रहणं किम्। अश्रूयमाणविभक्तेर् मा भूदिति। स युष्मत्पुत्रः। अस्मत्पुत्रोऽयम्।

## २१। बहुवचनस्य वस्नसौ।

षष्ठ्यादिबहुवचनान्तयोस्तयो र्वस्नसौ स्याताम्। ग्रामो वः। पुत्रो नः। इत्यादि।

## २२। तेमयावेकवचनस्य।

षष्ठ्याद्येकवचनान्तयो स्तयोस्तेमे स्याताम्। धनं ते। ग्रामस्ते। पुत्रो मे। इत्यादि।

## २३। त्वामौ द्वितीयायाः।

द्वितीयैकवचनान्तयो स्तयो स्त्वामौ स्याताम्। अहं त्वा पश्यामि। त्वं मा पश्य।

---

(5) एकतिङ् वाक्यमिति कात्यायनः। तथाच समर्थसूत्रे (२।१।१) वार्त्तिकानि—"(क) आख्यातं साव्ययकारकविशेषणं वाक्यम्। (ख) आख्यातं सविशेषणम्। (ग) एकतिङ्।" इति।

## २४ । न चवाहाहैवयुक्ते ।

च वा ह अह एव इत्येतैः पञ्चभिर्योगे वान्नावादयो न स्युः । ग्राम स्तव च स्वम् । ग्रामो मम च स्वम् । युक्तग्रहणमिह साक्षाद् योगार्थम् । युक्तयुक्ते मा भूत् । ग्रामश्च ते स्वमिति ।

## २५ । पश्यार्थैश्चानालोचने ।

दर्शनार्थैर्योगे वान्नावादयो न स्युः । विप्रस्तव ग्रामं समीक्ष्यागतः । विप्रो मम ग्रामं संदृश्य गतः । अनालोचने किम् ? चक्षुर्ज्ञाने मा भूत् । विप्रस्त्वा पश्यति । विप्रो मा पश्यति ।

## २६ । सपूर्वायाः प्रथमाया विभाषा ।

सपूर्वपदात् प्रथमान्तात् परयोस्तयोर्वान्नावादयो वा स्युः । ग्रामे कम्बलस्ते स्वम् । तव वा । एवं सर्वत्रोन्नेयम् ।

(क) इह सर्व एवामी वान्नावादयोऽनन्वादेशे विभाषा वाच्याः । ग्रामस्ते तव वा । ग्रामो मे मम वा । ग्रामस्ते दीयते तुभ्यं वा । शिवस्त्वा रक्षतु त्वां वा । जिष्णुर्मा रक्षतु मां वा । एवं पातु वः । पातु न इत्यादि वेदितव्यम् । अनन्वादेशे किम् ? अथो ते ग्रामः । अथो मे ग्रामः । न तर्हि वक्तव्यम् । सपूर्वायाः प्रथमाया विभाषेति वाच्यमन्वादेशार्थम् । अथो ग्रामे कम्बलस्ते स्वम् । पक्षे तव स्वम् । पदादिति निवृत्तम् । इह तिङो गोत्रादीनीत्यत आरभ्य (८।१।२७) पञ्चचत्वारिंशत् स्वरसूत्राणि । (6)

---

(6) तानि च यथा—

२७। तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः । २८। तिङ्ङतिङः । २९। न लुट् ।
३०। निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् । ३१। नह प्रत्यारम्भे । ३२। सत्यं प्रश्ने।
३३। अङ्गाप्रातिलोम्ये। ३४। हि च। ३५। छन्दस्यनेकमपि साकाङ्क्षम्।
३६। यावद्यथाभ्याम्। ३७। पूजायां नानन्तरम्। ३८। उपसर्गव्यपेतञ्च।
३९। तुपश्यपश्यताहैः पूजायाम्। ४०। अहो च। ४१। शेषे विभाषा।
४२। पुरा च परीप्सायाम्। ४३। नन्वित्यनुज्ञैषणायाम्। ४४। किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्
४५। लोपे विभाषा। ४६। एहिमन्ये प्रहासे लृट्। ४७। जात्वपूर्वम्।
४८। किंवृत्तञ्च चिदुत्तरम्। ४९। आहो उताहो चानन्तरम्। ५०। शेषे विभाषा।
५१। गत्यर्थलोटा लृण् न चेत् कारकं सर्वान्यत्। ५२। लोट् च।

## ७२। आमन्त्रितं पूर्वमविद्यमानवत्।

आमन्त्रितान्तं पूर्वमविद्यमानवत् स्यात्। तेन पदादुच्यमाना वान्नावादयो न स्युः। विप्र तव स्वम्। विप्र मम स्वम्। विप्रौ युवयोः स्वम्। विप्रा युष्माकं स्वम्। इत्यादि। एवं द्वितीयाचतुर्थ्योरपि। आमन्त्रितमिति किम्? कम्बलस्ते स्वम्।

## ७३। नामन्त्रिते समानाधिकरणे सामान्यवचनम्।

आमन्त्रितान्ते तुल्याधिकरणे परे पूर्वमामन्त्रितं सामान्यवचनमपि नाविद्यमानवत् स्यात्। ततो वान्नावादयः स्युरेव। छात्रौ गुणिनौ वां स्वम्। छात्र गुणिन् ते स्वम्। सामान्यवचनं किम्? देवदत्त जटिल तव स्वम्।

## ७४। विभाषितं विशेषवचने बहुवचनम्।

विशेषवचने तुल्याधिकरणे आमन्त्रिते परतो बहुवचनान्तमविद्यमानवद्वा स्यात्। छात्रा वैयाकरणा युष्माकं स्वम्। पक्षे वः स्वमित्यादि।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
अष्टमाध्यायस्य प्रथमः पादः ॥ ८।१ ॥
समाप्तश्च सर्वपादः।

---

५३। विभाषितं सोपसर्गमनुत्तमम्। ५४। हन्त च। ५५। आम एकान्तरमामन्त्रितमनन्तिके।
५६। यद्धितुपरं छन्दसि। ५७। चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः। ५८। चादिषु च।
५९। चवायोगे प्रथमा। ६०। हेति क्षियायाम्। ६१। अहेति विनियोगे च।
६२। चाहलोप एवेत्यवधारणम्। ६३। चादिलोपे विभाषा। ६४। वैवावेति च च्छन्दसि।
६५। एकान्याभ्यां समर्थाभ्याम्। ६६। यद्वृत्तान्नित्यम्।
६७। पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः। ६८। सगतिरपि तिङ्।
६९। कुत्सने च सुप्यगोत्रादौ। ७०। गतिर्गतौ। ७१। तिङि चोदात्तवति।

अथ

# भाषावृत्तिः ।



## अष्टमोऽध्यायः । द्वितीयः पादः ।

### १ । पूर्वत्रासिद्धम् ।

अधिकारोऽयम् । सपादसप्ताध्यायीविधौ कर्त्तव्ये वक्ष्यमाण स्त्रिपादी-विधिरसिद्धः स्यात् । त्रिपाद्याञ्च परः परो विधिरसिद्धः स्यात् पूर्वत्र कर्त्तव्ये । अस्मा उद्धर । द्वा आनय । व्योर्लोपस्यासिद्धत्वान्न सन्धिः । अमुष्य । अमुष्मै । अमुष्मात् । उत्वस्यासिद्धत्वात् स्मादयः स्युः ।

### २ । नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।

एष्वेव नलोपोऽसिद्धः स्यात् । सुब्विधौ । राजभ्याम् । राजभिः । राजसु । सुपि दीर्घत्वादि न भवति । स्वरो नोदाक्रियते । संज्ञाविधौ । पञ्च ब्राह्मण्यः । षट् संज्ञा भवति । ततो ङीबभावः । तुग्विधौ । वृत्रहभ्याम् । वृत्रहभिः । पिति कृति तुग् न भवति । कृति किम् ? वृत्रहच्छत्रम् । छे चेति (६।१।७३) तुग् भवत्येव । एष्वेवेति नियमः किम् ? राजीयति । राजायते । राजाश्वः । राजेन्द्रः ।

### ३ । न मु ने ।

मुभावो नाभावे कर्त्तव्ये नासिद्धः स्यात् । अमुना ।

(क) सिज्लोप एकादेशे सिद्धः । अलावीत् ।

(ख) निष्ठादेशः षत्वप्रत्ययविधीड्विधिषु सिद्धः । वृक्णः । झलीति (८।२।३६) षत्वं न भवति । क्षीविकः । नीद्दवक्षत्रिनिति (४।४।७) ठन्प्रत्ययो भवति । क्षीबः । तमात्रस्य लोपपक्षे इण् न भवति ।

(ग) स्तुत्वं धुटि सिद्धम् । रट् श्च्योतति । डः सि धुड़िति (८।३।२९) न भवति ।

(घ) अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्धम् । बभणतुः । दधि चिच्छित्सति । छिदेः सनि रूपम् ।

(ङ) द्विर्वचने परसवर्णत्वं सिद्धम् । सय्ँय्यन्ता । सवँव्वत्सरः । इह स्वरसूत्रत्रयम् । (7)

## ७ । नलोपः प्रातिपदिकान्तस्य ।

पदस्य प्रातिपदिकस्यान्तो नकारो लुप्यते । राजा । राजभ्याम् । राजपुत्रः । राजत्वम् । राजतमः ।

(क) अह्नो नलोपप्रतिषेधः । अहोभ्याम् । अहरत्र । अहन् (८।२।६८) रोऽसुपीति (८।२।६९) रुरेफयोरसिद्धत्वान्नलोपः प्राप्नोति ।

## ८ । न ङिसम्बुद्ध्योः ।

अनयोरत्र नलोपो नास्ति । ङौ । राजनीवाचरति राजन्यति गुरौ । अधिकरणाच्चेति (३।१।१०, वा) क्यच् । सम्बुद्धौ । हे राजन् । कथं चर्मणि तिला अस्येति चर्मतिलः । ङावनुत्तरपदे प्रतिषेधो वक्तव्यमिति भाष्यात् ।

(क) वा नपुंसकानामिति वक्तव्यम् । हे चर्मन् हे चर्म वा । हे दण्डिन् हे दण्डि वा ।

## ९ । मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।

मकारान्तादवर्णान्तान् मकारोपधादवर्णोपधाच्च मतोरादेर्वः स्यात् । किंवान् । वृक्षवान् । खट्वावान् । उपधायाश्च । लक्ष्मीवान् । पयस्वान् । यशस्वान् । भास्वान् । कंवान् शंवान् इतुत्रभयथापि सिध्यति । मादुपधायाः किम् ? मतिमान् । सर्पिष्मान् । आयुष्मान् । अयवादिभ्यः किम् ? यवमान् । यव भूमि कृमि ऊर्मि ककुद् गरुत् । आकृतिगणोऽयम् ।

## १० । झयः ।

झयः परस्य मतोर्वकारः स्यात् । अग्निचित्वान् । मरुत्वान् ।

---

(7) ४ । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य । ५ । एकादेश उदात्तेनोदात्तः । ६ । स्वरितो वाऽनुदात्ते पदादौ ।

## ११ । संज्ञायाम् ।

नाम्नि मतोर्वः स्यात् । अहीवती नदी । मणीवती । शरावती । नद्यां मतुप् ( ४।२।८५) । शरादीनाञ्चेति (६।२।१४०) दीर्घः ।

## १२ । आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ।

एते ग्रामप्राण्यङ्गस्वरर्षिशैलनदीनां नाम्नि निपात्यन्ते । अन्यत्रा-सनवान् । अस्थिमान् । चक्रवान् । कक्ष्यावान् । लवणवान् (8) । चर्म्मवती ।

## १३ । उदन्वानुदधौ च ।

अयमुदधौ च स्यात् । अन्यत्रोदकवान् । चकारादन्यत्रापि यथाभिधानम् । उदन्वान्नाम मुनिः ।

## १४ । राजन्वान् सौराज्ये ।

"सुराज्ञि देशे राजन्वान् स्यात् (9) । ततोऽन्यत्र राजवान् ।" इह

## १५ । छन्दसीरः ।

## १६ । अनो नुट् ।

## १७ । नाद् घस्य ।

छन्दः सूत्रत्रयम् ।

## १८ । कृपो रो लः ।

कृपो रेफस्य लः स्यात् । कल्प्ता । लुटि च कॢप इति (१।३।९३) निपातनादृकारस्यापि ऌकारः । कॢप्तः । चलीकॢप्यते । चकॢपे । चिकॢप्सति । कथं कृपा ? कृपिः संप्रसारणञ्चेति भिदादिपाठेन लाक्षणिकत्वान्न लत्वम् । कृपाणकृपणकृपीटकर्पटादयस्तूणादौ । बाहुलकात् ।

(क) बालमूललघ्वलमङ्गुलीनां वा लो रः । बारः बालः वा । मूलं मूरं वा । लघुः रघुः वा । अरम् अलं वा । अङ्गुलिरङ्गुरिः वा ।

---

(8) रुमा लवणाकर इति केचित् । तथाच्यसम्बद्धार्थवाक्योदाहरणे भोजः—"नरद्गवः कम्बल-पादुकाभ्यां द्वारि स्थितौ गायति मङ्गलानि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लवणस्य कोऽर्थः ॥१॥ इति सरस्वतीकण्ठाभरणे । लशुनस्य कोऽर्थः इति पाठान्तरम् ।

(9) राजन्वतीमाहुरनेन भूमिमिति रघुकाव्ये ।

(ख) कपिरकादीनां वा रस्य लः । कपिलका कपिरका वा । रोम लोम वा । पांशुरं पांशुलं वा । कर्म कल्म वा । भीरुःभीलुर्वा ।

(ग) रलयोरैकत्वस्मरणमित्येके ।

(घ) डलयोरित्यन्ये । विरोचनं विलोचनं वा । व्रीडा व्रीला वा । विडालः विरालः विलालो वा । चूड़ा चूला वा । वड़भी वलभी वेत्यादि । सर्वोऽयं वर्णविकारप्रपञ्चः ।

## १९ । उपसर्गस्यायतौ ।

अयतावुपसर्गरेफस्य लः स्यात् । प्लायते । पलायते । पल्ययते । प्रतेरनभिधानात् प्रत्ययते ।

## २० । ग्रो यङि ।

गिरतेर्यङि लत्वं स्यात् । निजेगिल्यते । यङि किम् ? निगीर्य्यते ।

## २१ । अचि विभाषा ।

गिरतेरचि लत्वं वा स्यात् । गिरति गिलति वा । निगरणं निगलनं वा । व्यवस्थितविभाषया प्राण्यङ्गे नित्यं गल एव । विषे तु गर एव । धातोः कार्य्यमुच्यमानं धातुप्रत्यय एव स्यात् । नेह । गिरौ गिरः ।

## २२ । परेश्च घाङ्कयोः ।

घेऽङ्के च परेर्लत्वं वा स्यात् । परिघः पलिघो वा । पर्य्यङ्कः पल्यङ्को वा ।

(क) योगे चेति वक्तव्यम् । परियोगः पलियोगो वा ।

## २३ । संयोगान्तस्य लोपः ।

पदस्य संयोगान्तस्य लोपः स्यात् । गोमान् । श्रेयान् । भवन् । पचन् । कृतवान् । इह दध्यत्र मध्वत्र काक्यर्थं वास्यर्थमिति संयोगान्तस्य स्कोरिति (८।२।२९) संयोगादेश्च लोपो न भवति । संहितानिमित्तस्य यण्लोपबहिरङ्गस्यासिद्धेः ।

## २४ । रात् सस्य ।

रेफात् परस्य संयोगान्तस्य सकारस्यैव लोपः स्यात् । पितुः । मातुः ।

हे पितः। कटचिकीः। भारजिहीः (10)। नान्यस्य। ऊर्जेः क्विप् ऊर्क्। मृजेर्लङि न्यमार्ट्। जकारयोर्लोपो न भवति।

## २५। धि च।

धकारे सलोपः स्यात्। असविध्वम्। अयाचिध्वम्। अपविध्वम्। अलविध्वम्। इह धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनमित्येके। (11) सामान्येनेति सर्वेषाम्। चकाधि। वसेरासेश्च निवध्वमाध्वम्। पदस्येत्येव। पयो धावति पयोधिस्तु व्यवस्थितविभाषानुवृत्तेः (12)। अतः परं तु सिचो लोपएवेष्यत इत्याहुः।

## २६। झलो झलि।

झल्परस्य सिचो लोपः स्याज्झलि। अभित्त। अभित्थाः। अबुद्ध। अबुद्धाः। झलि किम्? अभित्साताम्।

## २७। ह्रस्वादङ्गात्।

ह्रस्वात् परस्य सिचो लोपः स्यात्। अकृत। अकृथाः। अदित। अदिथाः। अङ्गात् किम्? अलविष्ट। झलीत्येव। अकृषाताम्। सिचोऽन्यस्य नेष्यते। द्विष्टराम्। द्विष्टमाम्। लिष्टमाम्।

## २८। इट ईटि।

इटः परस्य सिचो लोपः स्यादीटि परतः। अदेवीत्। असेवीत्। अग्रहीत्।

## २९। स्कोः संयोगाद्योरन्ते च।

झलि पदान्ते च यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात्। मस्जो मग्नः। साधुमक्। तक्षू तष्टव्यम्। तष्टः। काष्ठतट्। पदस्येत्येव। पृथक् स्याता।

---

(10) कृञः सन्। ततः क्विप्। चिकीः। कटस्य चिकीरिति षष्ठीसमासः। एवं हरतेः सन्। ततः क्विप्। जिहीः। षत्वस्यासिद्धत्वात् सलोपः। पूर्ववत् षष्ठीसमासः।

(11) अयमेतत्सूत्रस्यश्लोकवार्त्तिकांशः। श्लोकवार्त्तिकानि च बहूनि वार्त्तिकपाठाद् भाष्यकाशिकाभ्यां वावधार्य्याणि।

(12) इदं चिन्त्यम्। धादौ प्रत्यये परत एव सलोपः। नहि धात्वादिधकारपरे।

## ३० । चोः कुः ।

झलि पदान्ते च चवर्गस्य कवर्गः स्यात् । वक्ता । वक्तुम् । वक्तव्यम् । वाक् । लङि अवक् । रुजो रुग्णः । भृजेर्भ्रक्ष्यक् । कथमाञ्जीत् । परसवर्णासिद्धेः । कथं तर्हि । ओपधस्य क्रुञ्चेः क्विनि क्रुङ् क्रुञ्चौ क्रुञ्चः । युजि क्रुञ्चाञ्चेति (३।२।५९) निपातनात् ।

## ३१ । हो ढः ।

झलि पदान्ते च हस्य ढः स्यात् । सोढ़ा । लेढ़ा । मधुलिट् । अलेट् ।

## ३२ । दादेर्धातोर्घः ।

धातुपाठे दादेर्हस्य घः स्यात् तस्मिन् परतः । दोग्धा । गोधुक् । लङि अधोक् । दग्धा । ग्रामधक् । ढत्वे वत्वमिदं सिद्धम् । अपवादसामर्थ्यात् ।

## ३३ । वा द्रुहमुहष्णुहष्णिहाम् ।

एषां हस्य घो वा स्यात् । द्रोग्धा द्रोढ़ा वा । मित्रध्रुग् मित्रध्रुट् वा । मोग्धा मोढ़ा । स्नोग्धा स्नोढ़ा वा । स्निक् स्निट् वा । स्नेग्धा स्नेढ़ा वा ।

## ३४ । नहो धः ।

नहो हस्य धः स्यात् तस्मिन् परतः । नद्धम् । नद्धुम् । नद्धा । नद्धव्यः । उपानत् ।

## ३५ । आहस्थः ।

आहो हकारस्य थः स्याज्झलि । आत्थ । झलि किम् ? आहतुः । आहुः ।

## ३६ । व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।

एषामन्त्यस्य षः स्याज् झलि पदान्ते च । व्रष्टा । मूलवृट् । भ्रष्टा । भर्ष्टा । धान्यभृट् । स्रष्टा । रज्जुसृट् । मार्ष्टा स्थानमृट् । यष्टा । यष्टुम् । देवेट् । राष्ट्रम् । सम्राट् । भ्राष्ट्रम् । विभ्राट् । प्रष्टा । शब्दप्राट् । प्रवेष्टुम् । विट् ।

## ३७। एकाचो बशो भष् झषन्तस्य स्ध्वोः।

धातोरवयवो य एकाज् झषन्तस्तस्य बशां बगडदां स्थाने भषो भघढधो वर्गचतुर्थाः स्युः से ध्वे पदान्ते च। बुध भोत्स्यति। अभुद्ध्वम्। गुह घोक्ष्यति अघूढ्वम्। वर्णघुट्। दुह धोक्ष्यति अधुग्ध्वम्। गोधुक्। धात्ववयवाश्रयणं किम्? अभ्यपि कृते यथा स्यात्। अधोक् अधुग्ध्वम्। तथा गर्दभयतेर्डुण्डुभयतेश्च क्विप्। गर्धप्। डुण्ढुप्। (13) तुण्डिभयतेश्च तुण्ढिप्। एकाचः किम्? दामलिट्।

## ३८। दधस्तथोश्च।

दध इति कृतद्विर्वचनस्य दधातेर्बशो भष् स्यात् तथोः परतः सध्वोश्च। धत्तः। धत्थः। धत्से। धद्ध्वे। "पिधद्ध्वं पाणिभिर्दृशः।" झषन्तस्येत्येव। दधाति। दधासि।

## ३९। झलां जशोऽन्ते।

पदान्ते झलामन्तरतमा जशः स्युः। वागत्र। एकाजत्र। श्वलिड्त्र। अग्निचिदत्र। त्रिष्टुबत्र। वाग्भ्याम्। अभ्ययुग्गमनम्। श्वलिड्भ्याम्। भवद्ग्राम्। अन्ते किम्? झलि मा भूत्। वस्ता। इह संयोगान्तलोपे जश्त्वमसिद्धम्। श्रेयान्। जश्त्वे सोरुत्वं सिद्धम्। पयः। यशः। कुत एतत्? अपवादत्वात्।

## ४०। झषस्तथोर्धोऽधः।

झषः परयोस्तथोर्धः स्यात्। लब्धा। लब्धुम्। लब्धव्यम्। अलब्ध। अलब्धाः। अबुद्ध। अबुद्धाः। बोद्धा। लेढा। अलीढ। अलीढाः। दोग्धा। अदुग्ध। अदुग्धाः। अधः किम्? धाञो मा भूत्। धत्तः। धत्थः।

## ४१। षढोः कः सि।

षकारढकारयोः कः स्यात् सकारे परतः। पिष्ल् पेक्ष्यति। लिह लेक्ष्यति। लिलिक्षति। सीति किम्? पिनष्टि। लेढि।

---

(13) तुण्डिभयतेश्च क्विप्। गर्धप्। तुण्ढिबिति पाठान्तरम्। एतदेव सृष्टिधरेण व्याख्यातम्।

## ४२ । रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।

रदाभ्यां परस्य निष्ठातकारस्य नकारः स्यात् पूर्वस्य च दस्य नः । आस्तीर्णम् । अवगूर्णवान् । भिन्नं भिन्नवान् । छिन्नः छिन्नवान् । रदाभ्यां किम् ? कृतः कृतवान् । तइति किम् ? चरितम् । इह कृतस्यापत्यं कार्त्तिः । आ कृत आर्त्त इति नत्वं नास्ति । वृद्धेर्वहिरङ्गाया असिद्धत्वात् । यथा नृमत इदं नार्मतमिति मतोऽत्वं नास्ति ।

## ४३ । संयोगादेरातो धातोर्यण्वतः ।

संयोगादिरादन्तो यो धातुर्यण्युक्तस्तस्य निष्ठातकारस्य नः स्यात् । निद्राणः । निद्राणवान् । स्त्यानः । ग्लानः । म्लानः । संयोगादेः किम् ? यातः । धातोः किम् ? निर्यातः । आतः किम् ? च्युतः । यण्वतः किम् ? स्नातः । निष्णातः । आम्नातः ।

## ४४ । ल्वादिभ्यः ।

ल्वादेर्निष्ठातो नः स्यात् । लूनः । धूनः । जीनः । जीनवान् ।

(क) ॠकारल्वादिभ्यः क्तिन् निष्ठावत् । कीर्णिः । गीर्णिः । गीर्णिः । लूनिः । धूनिः ।

(ख) दुग्वोर्दीर्घश्च । दूनः । गूनः ।

(ग) पूञो विनाशे । पूना यवाः । विनाशे किम् ? पूतं धान्यम् ।

(घ) सिनोतेर्ग्रासकर्मकर्तृकस्य । सिनो ग्रासः स्वयमेव । नेह । सितो विप्रेण ग्रासः । षिञ् बन्धने ।

## ४५ । ओदितश्च ।

ओदितो निष्ठातो नत्वं स्यात् । ओनजी नग्नः । ओविजी उद्विग्नः । ओप्यायी पीनः । पीनवान् । स्वादय ओदितः । सूनः । दीनः । दीनवान् । उड्डीनः । उड्डीनवान् ।

## ४६ । क्षियो दीर्घात् ।

निष्ठातो नः स्यात् । क्षीणः क्षीणवान् । दीर्घात् किम् । क्षितमस्य जातम् ।

४७। श्योऽस्पर्शे।

श्येङो निष्ठातो नः स्यात्। शीनं। घृतम्। शीना वसा। अस्पर्शे किम्? शीतो वायुः।

४८। अञ्चोऽनपादाने।

अञ्चो निष्ठातो नः स्यात्। समक्नौ शकुनेः पादौ। पङ्के समक्नः। लग्नइत्यर्थः। अनपादाने किम्? उदक्तमुदकं कूपात्। कथं व्यक्तमिति? अञ्जधातोः।

४९। दिवोऽविजिगीषायाम्।

दिवो निष्ठातो नत्वं स्यात्। "आद्यून: स्यादौदरिकः"। अविजिगीषायां किम्? द्यूतं क्रीड़न्ति।

५०। निर्वाणोऽवाते।

स्यात्। निर्वाणोऽग्निः। निर्वाणं मुनीनाम्। वाते त्वभिधेये निर्वातो वातः।

५१। शुषःकः।

शुषो निष्ठातस्य कः स्यात्। शुष्कः। शुष्कवान्।

५२। पचो वः।

स्यात्। पक्वः। पक्ववान्।

५३। क्षायो मः।

क्षायो मकारः स्यात्। क्षै क्षामः। क्षामवान्।

५४। प्रस्त्योऽन्यतरस्याम्।

प्रस्त्यायतेर्निष्ठातो मो वा स्यात्। प्रस्तीतः प्रस्तीमो वा। प्रस्तीतवान् प्रस्तीमवान् वा। स्त्यः प्रपूर्वस्येति (६।१।२३) संप्रसारणम्।

५५। अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः।

एते निपात्यन्ते। अनुपसर्गात् किम्? त्रिफला विशरणे। प्रफुल्तं पद्मम्। क्षीबृ मदे। प्रक्षीबितः। प्रकृशितः। परिकृश इति प्रादिसमासः। लाघृ

प्रोल्लाघितः । क्तान्ते रूपनिर्देशात् फलितवान् । क्षीबितवान् । कृशितवान् । उल्लाघितवानित्येके । फुल्लवान् क्षीबवान् कृशवान् उल्लाघवानित्यपरे । फुल्तवान् इत्यन्ये ।

(क) उत्फुल्लसंफुल्लयोरुपसंख्यानम् ।

## ५६ । नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।

एभ्यो निष्ठातो नत्वं वा स्यात् । नुन्नं नुत्तं वा । विदेर्विचारणार्थस्य विन्नः वित्तो वा । उन्दी समुन्नं समुत्तो वा । त्राणः त्रातो वा । घ्राणः घ्रातो वा । ह्रीणः ह्रीतो वा ।

## ५७ । न ध्याख्यापॄमूर्छिमदाम् ।

एषां प्राप्तं नत्वं न स्यात् । ध्यातः । ख्यातः । पूर्त्तः । मूर्त्तः । मत्तः । पूरीधातोस्तु पूर्णः ।

## ५८ । वित्तो भोगप्रत्यययोः ।

विन्दतेर्धनप्रसिद्ध्योर्वित्तः स्यात् । वित्तमस्यास्ति । वित्तः पाण्डित्येन । अन्यत्र विन्नः ।

## ५९ । भित्तं शकलम् ।

भित्तं खण्डं स्यात् । अन्यत्र भिन्नम् ।

## ६० । ऋणमाधमर्ण्ये ।

इदमत्र निपात्यते । ऋणं गृह्णाति । अन्यत्र ऋतं सत्यं वदेत् ।

## ६१ । नसत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानिच्छन्दसि ।

छान्दसम् । उक्ता निष्ठादेशाः ।

## ६२ । क्विन्प्रत्ययस्य कुः ।

क्विन्प्रत्ययो यस्माद् विहितस्तस्य कुत्वं स्यात् । घृतस्पृक् । व्रश्चादिना (८।२।३६) षत्वं कृत्वा जश्त्वेन (८।२।३९) डकारे कृते कुत्वं गकारः । तस्य वावसाने इति (८।४।५६) चर्त्वम् । अन्ये तु कुत्वेन महाप्राणत्वात्खस्य खः । ततो जश्त्वं (८।२।३९) गकारः । तस्य चर्त्वमित्याहुः । एवमृत्विक् ।

दधृक्। सम्यङ्। प्राङ्। न्यङ्। क्रुङ्। क्रुङ्भ्याम्। क्विन्प्रत्ययस्य किम्? देवेट्। रज्जुसृट्। रज्जुसृड्भ्याम्। पदस्येत्येव। घृतस्पृशौ। इह क्विन् प्रत्ययो यस्माद् इष्ट (14) इति विज्ञानादन्यप्रत्ययान्तस्यापि पदान्ते क्वचित् कुत्वम्। तेन क्विपि दृग्भ्यां दृग्भिरित्याहुः।

## ६३। नशेर्वा।

नशेः पदान्तस्य कुत्वं वा स्यात्। भावे सम्पदादित्वात् क्विपि नक् नड् वा।

## ६४। मो नो धातोः।

पदस्य मान्तस्य धातोर्नः स्यात्। प्रशान् (15)। प्रतान्। धातोः किम्? इदम्। पदस्येत्येव। प्रशामौ। प्रतामौ।

## ६५। म्वोश्च।

मवयोः परयोर्धातोर्मस्य नः स्यात्। मकारे छान्दसमुदाहरणम्। वकारे जगन्वान्। जगन्वान्। येषां तु च्छन्दसि जगन्वान्। येषां तु च्छन्दसि क्वसुरिति मतं तेषां छन्दः-सूत्रमेतत्। (16)

## ६६। ससजुषो रुः।

सान्तस्य पदस्य सजुषश्च रुः स्यात्। अग्निरत्र। वायुरत्र। जुषेः क्विप्। सह जुषा वर्त्तत इति सजूस्तापसः।

---

(14) विहित इति पाठान्तरम्। अत्र क्विन् प्रत्ययो यस्मादिति क्विन्प्रत्यय इति बहुव्रीहिरित्याहुः। धातुरिति तदान्यपदार्थः। तथाचोक्तम्—

"क्विनः कुरिति सिद्धे यत् प्रत्ययग्रहणं कृतम्।
क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते ॥१॥"

इति। कथं तर्हि रज्जुसृड़िति? सृजिदृशो (६।१।५८) रिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात्। एवञ्च विश्वसृड् विधिरित्येव पठितव्यम्। विश्वसृगिति त्वपाणिनीयम्।

(15) स्त्रियामपि प्रशान् प्रतानिति। ऋन्नेभ्यो ङीबिति (४।१।५) तु न ङीप्। नकारस्यासिद्धत्वात्।

(16) चचण्वहे चचमिवहे चचण्महे चचमिमहे इति चमतेः, चचमिव चचण्व चचमिम चचण्मेति चाम्यतेश्च लिटि रूपार्थं नेदं केवलं छान्दसमित्याहुः। इदमपि नास्ति। ऊदितां लिटि न वेट्त्वम्। क्रादिनियमा-(७।२।१३)दित्यन्ये।

६७। अवयाःश्वेतवाःपुरोडाश्च।

इति च्छन्दःसूत्रम्।

६८। अहन्।

अहन्नित्येतस्य पदस्य रुः स्यात्। अहोभ्याम्। अहःसु। हे दीर्घाहो निदाघ। दीर्घाह्ना निदाघ इति रुत्वस्यासिद्धत्वात् सर्वनामस्थान इति (६।४।८) दीर्घः।

(क) रूपरात्रिरथन्तरेषूपसंख्यानम्। अहोरूपम्। गतमहो रात्रिरागता। एकदेशविकृतस्यानन्यत्वात्। अहोरात्रः। अहोरथन्तरम्। रोऽसुपीति (८।२।६९) प्राप्ते रुत्वमिदमुक्तार्थम्।

६९। रोऽसुपि।

अह्नो नकारस्यासुपि परे रेफः स्यात्। अहरत्र। अहरिह। अहर्ददाति। अहर्भागः। अहर्मूलम्। अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणनिषेधादसुप्परता। असुपि किम्? दीर्घाह्ना निदाघः। हे दीर्घाहः। अत्र लोपोऽयम्। न लुक्।

(क) अहरादीनां पत्यादिषूभयथा। रुर्वा रेफो वा। अहः पतिः। अह≍पतिः। अहर्पतिः वा। स्वःपतिः स्व≍पतिः स्वर्पतिः वा। कस्कादिपाठात् (८।३।४८) गीष्पतिः। (17) गी≍पतिः। गीर्पतिः वा। उषसि बुध्यते उषर्बुधः। व्यवस्थितविभाषया नित्यं रेफेण विसर्गं उत्वञ्च बाध्यते। इह

७०। अम्नरूधरवरित्युभयथा च्छन्दसि।

७१। भुवश्च महाव्याहृतेः।

छन्दः सूत्रद्वयम्।

७२। वसुस्रंसुध्वंस्वनडुहां दः।

एषां पदानां दः स्यात्। रुत्वढत्वयोर्बाधा। विद्वद्भ्याम्। उखास्रत्।

---

(17) माधवभट्टोजिप्रभृतीनां मते तु नास्य कस्कादित्वम्। भाष्ये गीर्पतिः। गी≍पतिः। गीः पतिरिति रेफोपध्मानीयविसर्जनीयानामेवोदाहरणात्। वस्तुतस्तु गीष्पतिरित्यपाणिनीयम्। भाष्यविरोधात्।

पर्णध्वत्। उपसेदिवद्भ्याम्। पर्णध्वद्भ्याम्। पर्णध्वद्भिः। अनडुद्भ्याम्। अनडुद्भिः। स इत्येव। विद्वान्। पदस्येत्येव। विद्वांसौ।

## ७३। तिप्यनस्तेः।

तिपि सकारान्तस्य पदस्य दः स्यात्। अचकाद् भवान् अन्वशाद् भवान्। स इत्येव। अजागर्भवान्। तिपि किम्? चकास्तेः क्विप्। सुचकास्तीति सुचकाः। पदस्येत्येव। चकास्ति। अनस्तेरितिच्छन्दोभागः।

## ७४। सिपि धातो रुर्वा।

सिपि सान्तस्य पदस्य रुर्वा दकारो वा स्यात्। अचकास्त्वम्। अचकात् त्वं वा। अन्वशात् त्वम्। अन्वशास्त्वं वा। पदस्येत्येव। चकास्सि। शास्सि।

## ७५। दश्च।

सिपि दान्तस्य पदस्य रुर्वा दकारो वा स्यात्। अभिनस्त्वम्। अभिनत् त्वं वा। पदस्येत्येव। भिनत्सि।

## ७६। र्वोरुपधाया दीर्घ इकः।

रेफवकारान्तस्य धातोरुपधाया इको दीर्घः स्यात्। गीः। गीर्भ्याम्। आशीः। पूः। धूः। वग्रहणमुत्तरार्थम्। उपधाया इति किम्? अविभर्भवान्। धातोः किम्? अग्निः। पदस्येत्येव। गिरौ। गिरः।

## ७७। हलि च।

हलि रेफवकारान्तस्य धातोस्तथा स्यात्। विस्तीर्णम्। दीव्यति। प्रतिदीवा। धातोरित्येव। दिवमिच्छति दिव्यति। अपदान्तार्थोऽयं योगः।

## ७८। उपधायाञ्च।

धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घः स्यात्। मूर्च्छति। मूर्च्छिता। कथं चतुर इच्छति चतुर्यतीति? तर्हि व्याख्यातमेतद् भाष्ये असुपीति वर्त्तते। तच्चेह षष्ठ्या विपरिणम्यते। ततो सुब्धातोर्न भवति। गीर्भ्यां गीर्भिरित्यत्र च सुप्यपि परतो भवत्येव।

इह तु रीधातोर्लिटि रिय्यतुः रिय्युरिति यणादेशस्य स्थानिवत्वेऽहल्परत्वान्न भवति ।

## ७९ । न भकुर्छुराम् ।

एषामुक्तो दीर्घो नास्ति । भस्य । धुर्य्यः । कुर् । कुर्य्यात् । छुर च्छेदने । आशिषि छुर्य्यात् । कथं प्रतिदीव्ना ? हलि रेफवकारान्तस्य भस्येत्याश्रयणात् ।

## ८० । अदसोऽसेर्दादु दो मः ।

अःसेर्यस्य सोऽयमसिः । सकारे इकार उच्चारणार्थः । असेः कृतात्वस्यादसो दात् परस्यान्तरतम उवर्णः स्यात् । दस्य च मः । अमुम् । अमू । अमून् । अमुना । असेः किम् ? त्यदाद्यत्वाभावे मा भूत् । अदः कुलम् । अदइच्छति अदस्यति । अदोऽञ्चतीति—

> "अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् । (18)
> केचिदन्त्यसदेशस्य नेत्येके सेर्हि दृश्यते ॥१॥"

अमुमुयङ् । अमुमुयञ्चौ । केचिदन्त्यसदेशस्य । अदमुयङ् । यत्र सकारस्य त्यदाद्यत्वं (७।२।१०२) तत्रेदं मुत्वं दृश्यते । नेत्येकेऽसेर्हि दृश्यते । अदद्र्यङ् । इह समासान्तर्वर्त्तिन्या विभक्तेर्लुकि न लुमताङ्गस्येति ( १।१।६३ ) प्रतिषेधात् त्यदाद्यत्वाभावः । (19) द्रादिति किम् ? अलोऽन्त्यस्य ( १।१।५२ ) मा भूत् । अमुया । अमुयोः ।

## ८१ । एत ईद्बहुवचने ।

बह्वर्थस्यादसो दात्परस्य एत ईत् स्यात् । दस्य च मः । अमी ।

---

(18) केचिदिच्छन्ति लत्ववदिति । यथा चलीक्लृप्यत इत्यत्र धातावभ्यासे चोभयत्र लत्वं तथामुमुयङित्यत्रापि मुत्वद्वयम् ।

(19) अत "अदसः केचिदिच्छन्ति केचिदिच्छन्ति नादसः । उभयोः केचिदिच्छन्ति केचिदिच्छन्ति नोभयोः ॥ १ ॥" इति क्वचिदधिकः पाठः । केचिदिच्छन्ति नादस इति मते त्वमुद्र्यङिति स्यात् । स चापाणिनीयत्वेनापभ्रंश एव । भाष्यवार्त्तिकविरोधात् ।

अमीभिः। अमीषाम्। अमीषु। बहुवचने किम्? अमू कुले। इह वाक्यस्य टेरित्यादीनि स्वरसूत्राणि सप्तविंशतिः। (20)

## १०८। तयोर्य्वावचि संहितायाम्।

संहितायामित्याऽध्यायपरिसमाप्तेरधिक्रियते।

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया ॥१॥

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ
अष्टमाध्यायस्य द्वितीयः पादः ॥८।२॥
समाप्तश्च सुप्सिद्धपादः ॥

---

(20) यथा—

८२। वाक्यस्य टेः प्लुत उदात्तः। ८३। प्रत्यभिवादेऽशूद्रे। ८४। दूराद्धूते च।
८५। हैहेप्रयोगे हैहयोः। ८६। गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्। ८७। ओमभ्यादाने।
८८। ये यज्ञकर्मणि। ८९। प्रणवष्टेः। ९०। याज्यान्तः। ९१। ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः।
९२। अग्नीत्प्रेषणे परस्य च। ९३। विभाषा पृष्टप्रतिवचने हेः। ९४। निगृह्यानुयोगे च।
९५। आम्रेडितं भर्त्सने। ९६। अङ्गयुक्तं तिङाकाङ्क्षम्। ९७। विचार्य्यमाणानाम्।
९८। पूर्वं तु भाषायाम्। ९९। प्रतिश्रवणे च। १००। अनुदात्तं प्रश्नान्ताभिपूजितयोः।
१०१। चिदिति चोपमार्थे प्रयुज्यमाने। १०२। उपरिस्विदासीदिति च।
१०३। स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु। १०४। क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्।
१०५। अनन्त्यस्यापि प्रश्नाख्यानयोः। १०६। प्लुतावैच इदुतौ।
१०७। एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ।

अथ

# भाषावृत्तिः ।

## अष्टमोऽध्यायः । तृतीयः पादः ।

### १ । मतुवसो रु सम्बुद्धौ छन्दसि ।

रुःसम्बुद्धावित्यधिक्रियते । शेषश्छान्दसः ।

(क) विभाषा भवद्भगवदघवतामोच्चावस्य । एषां सम्बुद्धौ रुर्वा स्यादवशब्दस्य चौकारः । हे भोः हे भवन् वा । हे भगोः हे भगवन् वा । हे अघोः हे अघवन् वा । भोःशब्दोऽप्यव्ययमस्ति । भो विप्र । भो विप्रौ । भो विप्राः । स्त्रियाञ्च । भो ब्राह्मणि ।

### २ । अत्रानुनासिकः पूर्वस्य तु वा ।

यस्य रुत्वं कृतं तत्पूर्वस्यानुनासिको वा स्यादित्यधिक्रियते ।

### ३ । आतोऽटि नित्यम् ।

छान्दसम् ।

### ४ । अनुनासिकात् परोऽनुस्वारः ।

अन्यशब्दोऽत्राध्याहार्यः । अनुनासिकादन्यस्य रोः पूर्वस्यानुनासिकाभावे परोऽनुस्वारागमो वेदितव्यः । तद्यथा—

### ५ । समः सुटि ।

समो रुः स्यात् सुटि परे । सँस्स्कर्त्ता संस्स्कर्त्ता वा । सँस्स्करोति संस्स्करोति वा । इह समो मलोप इति भाष्यम् । लोपपक्षेऽप्यनुनासिकानुस्वाराविष्येते । सँस्कर्त्ता संस्कर्त्ता वा । किञ्चात्र संपुंकानां सो वक्तव्य इति भाष्यम् । सँस्स्कर्त्ता संस्स्कर्त्ता वा । पुँस्कामा पुंस्कामा वा । कांस्कान् काँस्कान् वा । रुत्वपक्षे वा शरीति (८।३।३६) विसर्गः कुप्वोः+क⌣पौ

चेति (८।३।३०) वा स्याताम्। वा शरीति (८।३।३६) व्यवस्थितविभाषया न भवतीति वामनवृत्तिः। अत्र च संस्करोतेः कैयटश्रुतपालयोर्मतभेदात् षोड़श रूपाणि ग्रन्थविस्तरभयान्न दर्शितानि। (21)

## ६। पुमः खय्यम्परे।

पुमो रुः स्यादम्परे खयि परतः। पुँस्कली पुंस्कली वा। पुँस्कोकिलः पुंस्कोकिलो वा। पुँस्कामा पुंस्कामा वा। पुँस्त्वम् पुंस्त्वं वा। अम्परे किम्? पुंक्षीरम्। खयि किम्? पुंगवः। पुंदासः।

## ७। नश्छव्यप्रशान्।

नान्तस्य पदस्य रुःस्याच्छवि। भवांश्चिनोति भवाँश्चिनोति वा। भवांश्छादयति भवाँश्छादयति वा। भवांष्टीकते भवाँष्टीकते वा। भवांष्ठकारः भवाँष्ठकारः वा। भवांस्तरति भवाँस्तरति वा। छवि किम्? भवान् करोति। अप्रशान् किम्? प्रशाञ्चिनोति। अम्पर इत्येव। भवान् त्सरुकः। पदस्येव। भवन्तौ। पचन्तौ। संहितायामित्येव। भवान् चिनोति। भवान् छादयति। कथं त्वन्तरसीति? अत्र न भवति। परसवर्णासिद्धेः। इह

## ८। उभयथर्क्षु।

## ९। दीर्घादटि समानपादे।

छन्दःसूत्रद्वयम्।

## १०। नॄन् पे।

नॄनित्यस्य रुः स्यात् पवर्गे। नॄँःपाहि नॄंःपाहि वा। नॄँःप्रीणीहि नॄंःप्रीणीहि वा। पे किम्? नॄन् भोजयति। संहितायामित्येव। नॄन् पाहि। (22)

---

(21) अत्र "समुंपुंकानां सत्व"मिति वार्त्तिकम् (8. 3. 12)। "समो वा लोपमेके" इति भाष्यम्। तेन संस्स्कर्त्ता संस्स्कर्त्ता संस्कर्त्ता सँस्कर्त्तेति रूपचतुष्टयम्। ततोऽनचि चेति (८।४।४७) सकारद्वित्वम्। अनुस्वारस्याच्त्वात्। एतेनाष्टौ रूपाणि। ततः शरः खय इति (८।४।४७, वा) कद्वित्वे षोड़श। अन्ये पुनरनुस्वारस्य पक्षे हल्त्वात् तस्य च द्वित्वं कुर्वन्ति। अत्र केचिदाहुः समो यदा लोपः सत्वं वा, तदा रुत्वाभावेऽनुस्वारानुनासिकत्वे अपि न। तेन सस्कर्त्ता सस्स्कर्त्तेति। अनयोरपि सकारककारयोर्द्वित्वेऽष्टौ रूपाणीति। तन्न। सत्वलोपयोराष्टमिकत्वेन रुत्वप्रकरणस्थत्वेनानुस्वारानुनासिकयोर्दुर्वारत्वात्।

(22) अत्र कुप्वोः ≍क≍पौ चेति (८।३।३७) पक्षे उपध्मानीये नॄँ≍पाहि नॄं≍पाहीत्यपि स्याताम्। चाद् विसर्गः। न तु सत्वम्। इत्थं रूपपञ्चकम्।

## ११ । स्वतवान् पायौ ।

इति च्छान्दसः ।

## १२ । कानाम्रेड़िते ।

कान्नकारस्याम्रेड़िते परे रुः स्यात् । कांस्कान् काँस्कान् वा भोजयति । उक्तो रुः ।

## १३ । ढो ढे लोपः ।

ढे परे ढस्य लोपः स्यात् । ऊढ़म् । निर्व्यूढ़िः । लीढ़म् । लीढ़वान् । लीढ्वा । ष्टुत्वमिद्धाश्रयणात् सिद्धम् ।

## १४ । रो रि ।

रेफे परे रेफस्य लोपः स्यात् । स्वाराट् । पुनारक्तम् । पुनारमते । इन्दूराजते । हे कर्त्ता राजसे । अहारम्यम् । नीरक्तम् । अग्नीरथः । कथं मनोरथः ? रो रिलोपस्यासिद्धत्वाद् घञि (६।१।११४) चेत्युत्वम् । (23)

## १५ । खरवसानयोर्विसर्जनीयः ।

रेफान्तपदस्य विसर्जनीयः स्यात् खरि अवसाने च । विप्रः कर्त्ता । विप्रः साधुः । अवसाने । वृक्षः । प्रातः । नृपतेरपत्यं नार्पत्यमिति वृद्धग्रसिद्धत्वात् ।

## १६ । रोः सुपि ।

सप्तमीबहुवचने परतो रोरेव विसर्जनीयः स्यात् । पयःसु । सर्पिःषु । न रेफस्य । गीर्षु । चतुर्षु । धूर्षु ।

## १७ । भोभगोअघोअपूर्वस्य योऽशि ।

एतत्पूर्वस्य रो यँकारः स्यादशि परे । भो अत्र भोयत्र । भो आत्मन् भोयात्मन् । भगो अत्र भगोयत्र । अघो अत्र अघोयत्र । भो ददासि । अवर्णपूर्वस्य । क आस्ते कयास्ते । कइह कयिह । नरा आसते नरायासते ।

---

(23) अत्र कैश्चवृत्तौ संग्रहश्लोकः—"अपास्याः पदमध्येऽपि न चैकस्मिन् पुनारविः । तस्माद्रोरीति सूत्रेऽस्मिन् पदस्येति न बध्यते ॥" इति सृष्टिधरधृतः ।

एतत्पूर्वस्य किम्? वायुरत्र। रोः किम्? प्रातरत्र। प्रियचत्वारसौ। वार्भ्याम्। अश्ग्रहणमुत्तरार्थम्।

## १८। व्योर्लघुप्रयत्नतरः शाकटायनस्य।

भोःशब्दादिपूर्वयोः पदान्तयोर्व्योरीषत्पृष्टतरो वा स्यादशि परे। भोयत्र। भोयिह। भोयिदम्। वृक्षयिह। विप्रायासते। अस्मायुद्धर। करवाया-नुष्टुभम्। वटवात्थ। द्वावानय। पक्षे ईषत्पृष्ट एव। लोपश्च वक्ष्यत इति त्रीणि रूपाणि। ओतो नित्यं लोप इति। तत्र लघुप्रयत्नतरलोपाभ्यां रूपद्वयं सेत्स्यति।

## १९। लोपः शाकल्यस्य।

तयोर्व्योः शाकल्यस्य मतेन लोपः स्यात्। क आस्ते। यस्मा उद्धर। कस्मा उद्धर। द्वा आनय। विप्रा आसते। पट आस्ते।

## २०। ओतो गार्ग्यस्य।

ओतः परस्य यकारस्य लोपः स्यात्। नित्यार्थं वचनम्। (24) भो अत्र। अघो इदम्।

## २१। उञि च पदे।

उञि निपाते पदान्तयोर्व्योर्लोपः स्यात्। स उ पश्यति। द्वा उ पश्यतः। लघुप्रयत्नतरपक्षे सयु पश्यति। द्वावु पश्यत इति रूपद्वयम्।

## २२। हलि सर्वेषाम्।

भो भगो अघो अवर्णपूर्वयोः पदान्तयोर्व्योर्हलि परे लोपः स्यात् सर्व-सम्मतः। भो हससि। भगो ददाति। अघो यासि। विप्रा हसन्ति। वकारस्य। वृक्षं वृश्चतीति वृक्षवृट्। तमाचष्टे णिच्। ततो विच्। वृक्षव्। वृक्ष गच्छति। अशीत्येव। वृक्षव् करोति। पदान्तयोः किम्? शय्या। शङ्कव्यम्।

---

(24) ओतः परयोस्तयोर्व्योर्लोपः स्यात्। नित्यार्थं वचनमिति केषुचित् पुस्तकेषु पाठान्तरम्। तत्र वकारस्यासम्भवात् व्योर्ग्रहणं चिन्त्यम्। प्रकरणाद् भोभगोअघो इत्येवओदन्ताः। गो इष्टिरित्यादौ त्ववङभावे ग इष्टि गविष्टिरिति पूर्वेणैव (८।३।१९) सिद्धम्।

## २३ । मोऽनुस्वारः ।

हलि मस्यानुस्वारः स्यात् । कुण्डं हन्ति । वनं याति । पुंभ्याम् । पुंसु । पदस्येत्येव । रम्यते । गम्यते ।

## २४ । नश्चापदान्तस्य झलि ।

झलि अपदान्तस्य नस्य मस्य चानुस्वारः स्यात् । पयांसि यशांसि । मस्य । आक्रंस्यते । झलि किम् ? हन्यते । गम्यते ।

## २५ । मो राजि समः क्वौ ।

क्वौ परे समो मकारस्य मकार एव स्याद् राजि परे । सम्राट् । साम्राज्यम् । राजि किम् ? संयत् । समः किम् ? स्वयंराट् । क्वौ किम् ? संराजिता ।

## २६ । हे मपरे वा ।

मपरे हकारे मस्य मो वा स्यात् । किम् ह्मलयति किं ह्मलयति वा ।

(क) यवलपरे यवला वा । सानुनासिका एते स्युः । किय्ँ ह्यः किं ह्यः वा । किं ह्वलयति किव्ँ ह्वलयति वा । किल्ँ ह्लादयति किं ह्लादयति वा ।

## २७ । नपरे नः ।

नपरे हकारे मस्य नः स्याद्वा । किन् ह्नुते किं ह्नुते वा ।

## २८ । ङ्णोः कुक्टुक् शरि ।

पदान्तयो ङ्णोः कुक्टुकौ वा स्यातां शरि । "अध्यङ्क् शस्त्रभृतां रामः ।" "अध्यङ् शस्त्रभृतां रामः" वा । प्राङ् षष्ठे प्राङ् च्षष्ठे वा । वणतेर्विच् वण् । वण्शेते वण्ट्शेते वण्ट्छेते वा । वण्षण्डे वण्ट्षण्डे वा ।

## २९ । डः सि धुट् ।

डान्तात् सकारे धुड् वा स्यात् । श्वलिट्त्साये श्वलिट्साये वा ।

## ३० । नश्च ।

नान्तात् पदात् सकारस्य धुड् वा स्यात् । भवान्त्साधुः । भवान् साधुः वा ।

## ३१। शि तुक्।

नान्तस्य शकारे तुग्वा स्यात्। भवाञ्च्शेते भवाञ्च्छेते भवाञ्छेते भवाञ् शेते वा। महाञ्छेते महाञ्च्शेते महाञ्च्छेते महाञ्शेते वा (25)। संहितायामित्येव। कुर्वन् शेते।

## ३२। ङमो ह्रस्वादचि ङमुण् नित्यम्।

ह्रस्वात् परस्य पदान्तस्य ङणनां ङुण्णुन्नुटः स्युरचि। उदङ्ङास्ते। सुगण्णिह। यण्णिह। कुर्वन्नत्र। ह्रस्वात् किम्? प्राङास्ते। महानयम्। पदान्ताश्रयणान्नेह। भणति। दण्डिना। तिङन्तोणादिसनाद्यन्तादयस्तु निपातनात्। (26)।

## ३३। मय उञो वो वा।

मयः परस्याचि उञो वो वा स्यात्। निपात एकाजनाङिति (१।१।१४) प्रगृह्यत्वेन प्रकृतिभावस्य बाधा। किमु अयं किम्वयं वा।

## ३४। विसर्जनीयस्य सः।

स्यात्। पटुस्छात्रः। वृक्षष्षण्डे। विप्रस्साधुः। मण्डूकप्लुत्या खरीतीव। वृक्षः।

## ३५। शर्परे विसर्जनीयः।

शर्परे खरि विसर्जनीय एव स्यान्न विकारः। रम्यःत्सरुकः। विप्रैः ष्मातम्। वासः क्षौमम्।

## ३६। वा शरि।

शरि विसर्गस्य सो वा स्यात्। वृक्षश्शेते वृक्षः शेते वा। वृक्षष्षण्डे वृक्षःषण्डे वा। वृक्षस्साधुः वृक्षः साधुः वा। विप्रस्साधुः विप्रः साधुः वा।

---

(25) अत्र शश्छोऽटीति (८।४।६३) शकारस्य पक्षे छत्वम्। तेन चातूरूप्यम्।

(26) विधिरयं न नित्यः। सनाद्यन्ता धातव (३।१।३२) उणादयो बहुल (३।३।१) मित्यादिसूत्रकारप्रयोगात्। सन्नन्तान्न सनिष्यत ( ३।१।७ ) इति सुप्तिङुपग्रहलिङ्गनाराणामिति च ( ३।१।८५ ) भाष्यप्रयोगात्।

(क) खर्परे शरि वा लोपो विसर्गस्य । नराःस्थूलाः । नरा स्थूलाः । नरास् स्थूलाः वा । स्वस्थः स्वःस्थः स्वस्स्थः वा । निस्पृहः । निःस्पृहो वा ।

## ३७ । कुप्वोः ≍क≍पौ च ।

कुप्वोः खरि विसर्गस्य ≍क≍पौ वा स्याताम् । चकारात् विसर्जनीयश्च । कपावुच्चारणार्थौ । कखयोर्डमरुत्वम् । पफयोर्गजकुम्भत्वम् (27) । विप्रः कर्त्ता । विप्र≍कर्त्ता वा । रम्यः खड्गः । रम्य≍खड्गो वा । विप्रः पचति विप्र≍पचति वा । शूद्रः पिबति शूद्र≍पिबति वा । वृक्षः फलति वृक्ष≍फलति वा । कपयोर्बाधामाह ।

## ३८ । सोऽपदादौ ।

अपदादौ कुप्वोः खरि परतो विसर्गस्य सः स्यात् । पाशकल्पककाम्येषु सम्भवः । "रक्षसाशांस्तमस्कल्पान् ।" अयस्कल्पम् । यशस्काम्यति ।

(क) अनव्ययस्येति वक्तव्यम् । प्रातः कल्पम् । पुनः काम्यति ।

(ख) रोरेव काम्ये । नान्यस्येति वक्तव्यम् । यशस्काम्यति । इह मा भूत् । गीःकाम्यति । धूःकाम्यति । काम्ये नियमादिह स्यादेव । अहस्कल्पमिति ।

## ३९ । इणः षः ।

कुप्वोरिणः परस्यापदादौ विसर्गस्य षः स्यात् । ज्योतिष्काम्यति । सर्पिष्कल्पम् । धनुष्पाशम् । धानुष्कः । दोर्भ्यां तरति दौष्कः । अपदादौ किम् ? अग्निः करोति । अग्निः कर्त्ता । कुप्वोरित्येव । तेन वित्तः (५।२।२६) । सर्पिश्चणः । अतः परं विसर्गस्य सः । इणः परस्य तु षः । खरि कुप्वोरिति चानुवर्त्तते ।

---

(27) ≍क इति जिह्वामूलीयचिह्नम् । ≍प इत्युपध्मानीयचिह्नम् । प्रथमं डमरुरूपवत् । द्वितीयं गजकुम्भवदिति तात्कालिकलेखनव्यवहारः ।

## ४० । नमस्पुरसोर्गत्योः ।

गतिसंज्ञयोर्नमस्पुरसोर्विसर्गस्य सः स्यात् । नमस्कर्त्ता । नमस्कारः । नमस्करोति । पुरस्कर्त्तुम् । पुरस्करोति । (28)

## ४१ । इदुदुपधस्य चाप्रत्ययस्य ।

इदुदुपधस्याप्रत्ययस्य विसर्गस्य षः स्यात् कुप्वोः परतः । निर्दुर्बहिः-प्रादुराविश्चतुरां सम्भवः । निष्कुलानि । निष्क्रीणाति । निष्क्रियः । दुष्प्रीतिः । दुष्पुत्रः । दुष्प्रीतम् । दुष्कृतम् । बहिष्कृतम् । बहिष्पचति । बहिष्करोति । प्रादुष्कृतम् । आविष्करोति । चतुष्पानम् । चतुष्कपालम् । चतुष्पार्श्वम् । "चतुष्काण्डं क्षिपन् रामः ।" इदुदुपधस्य किम् ? दोः करोति । कथं नैष्कुल्यम् ? दौष्कुल्यम् ? वृद्धेर्बहिरङ्गाया असिद्धत्वात् । अप्रत्ययस्य किम् ? अग्निः करोति । वायुःपाति । कथं मातुःकरोति । पितुःकरोतीति ? कस्कादिषु षत्वार्थं भ्रातुष्पुत्रशब्दस्य पाठादेकादेशनिमित्तादिणः परस्य विसर्गस्य षत्वं नास्तीति भाष्यम् ।

(क) पुंमुहुसोः प्रतिषेधः । पुंस्कामा । मुहुः करोति । मुहुःकाम्यति ।

## ४२ । तिरसोऽन्यतरस्याम् ।

अन्तर्धौ गतिसंज्ञकस्य तिरसो विसर्गस्य सः स्याद्वा । तिरस्कर्त्ता तिरः-कर्त्ता वा । केचिद् गतिग्रहणमिह नानुवर्त्तयन्ति । अन्तर्धेरन्यत्रापि तिरस्कारः परिभव इति यथा स्यात् ।

## ४३ । द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ।

एषां कृत्वसुजर्थवृत्तीनां षत्वं वा स्यात् । द्विष्करोति । त्रिष्पचति । चतुष्कुर्वन् । पक्षे द्विः करोति । त्रिः पचति । चतुः कुर्वन् । कृत्वोऽर्थे किम् ? चतुष्काण्डम् । चतुष्कण्टकम् ।

---

(28) पुरोऽव्ययमिति (१।४।६८) पुर इत्यस्य गतित्वे न कथममुं पुरः पश्यसि देवदारुमिति तस्य स्थिला कथमपि पुरः कौतुकाधानहेतोरिति च कालिदासः ? पुरो रामस्य जुहवाञ्चकार ज्वलने वपुरिति भट्टिश्च ? सत्वाभाव स्वत क्रियान्तरं प्रति पुरसो गतित्वात् ।

## ४४। इसुसोःसामर्थ्ये।

इसुसो र्व्यपेक्षायां षत्वं वा स्यात्। ज्योतिष्करोति ज्योतिः करोति वा। सर्पिष्पिबति सर्पिः पिबति वा। यजुष्कुरु यजुः कुरु वा। सामर्थ्ये किम्। तिष्ठतु सर्पिः पिब त्वमुदकम्। इह पदाधिकारेऽपि व्यपेक्षालक्षणं सामर्थ्यं न लभ्यत इति सामर्थ्यग्रहणम्। तेन पश्य वृक्षांस्तव नदीमित्यादि सिध्यति।

## ४५। नित्यं समासेऽनुत्तरपदस्थस्य।

इसुसोः समासे नित्यं षत्वं स्यात्। सर्पिष्कुण्डिका। ज्योतिष्करः। धनुष्कोटी। अरुष्करः। अनुत्तरपदस्थस्य किम्? परमसर्पिःकुण्डिका।

## ४६। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य।

ह्रस्वाकारात् विसर्गस्य सः स्यात् कृादिषु परतः। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्कुम्भी। अयस्पात्रम्। अयस्पात्री। अयस्कुशा। अयस्कर्णी। अनव्ययस्य किम्? अन्तःकरणम्। स्वःकामः। पुरःकामः। पुनःकामः। समास इत्येव। यशः कामयते। अनुत्तरपदस्थस्येत्येव। परमायःकारः (29)। अतः किम्? गीः कारः। तपरः किम्? भाः करणम्।

## ४७। अधःशिरसी पदे।

अनयोर्विसर्गस्य पदे सः स्यात्। अधस्पदं यस्य निरस्तभूपतेः शिरस्पदं तस्य नतेऽङ्घ्रिपीठकमिति व्योषः।

## ४८। कस्कादिषु च।

एषु यथायोगं सषौ स्याताम्। कस्कःशृणोति (30)। कौतस्कुतः। यशस्काण्डम्। अयस्काण्डम्। मेदस्पिण्डः। तमस्काण्डम्। भास्करः।

---

(29) कथं तर्हि वर्ष्यासु कामार्थयशस्करीष्विति भट्टिः? कामार्थयोर्यशस्करीष्विति विग्रहात्। द्वन्द्वे तु कामार्थयशःकरीष्वित्येव। तथाच भाष्योदाहरणं (२।४।१०) नचायस्कारमिति। कुड्मुखस्करोपचारा इति (१।१।४१ वा) वार्त्तिकप्रत्याख्यानावसरे चाचायःशब्दस्य भाष्ये उत्तरपदस्थत्वं द्रढीकृतम्।

(30) कथं नाटकादौ कः कोऽत्र भो इति। कः कः कुत्र लब्धुर्गुरायितपुरो घोरो घुरेच्छूकर इति च? (दृष्टिपरष्टतम्)। चकाराद् यथासम्भवं जिह्वामूलीयादिकमपि।

शुनस्कर्णः। सद्यस्कारः। गीष्पतिः। वहिष्कुलम्। भ्रातुष्पुत्र इत्यादि। कुप्वोः खरीति निवृत्तम्। इह च्छन्दःषट्सूत्री (31)। पूर्णः पदाधिकारः।

## ५५। अपदान्तस्य मूर्धन्यः।

अधिकारोऽयमा पादपरिसमाप्तेः।

## ५६। सहेः साडः सः।

सहेः साड्भूतस्य सस्य मूर्धन्यः स्यात्। तुराषाट्। तुराषाड्भ्याम्। साडः किम्? तुरासाहौ। "तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः।" छान्दसोऽयं प्रयोगः। छन्दसि सह (३।२।६३) इति ण्वि विधानात्। कथं तर्हि पृतनाषाड् द्विषो धूर्ष्विति भट्टिः? छान्दसैरपि संज्ञाशब्दैः कवीनां प्रचारात्।

## ५७। इण्कोः।

इणः कवर्गाच्च परस्य सस्य मूर्धन्यः स्यात्।

## ५८। नुम्विसर्जनीयशर्व्यवायेऽपि।

नुमादिव्यवायेऽपि मूर्धन्यः स्यात्।

## ५९। आदेशप्रत्यययोः।

आदेशो यः सकारः प्रत्ययावयवश्च तस्य मूर्धन्यः स्यात्। आदेशस्य। सिषेच। सुष्वाप। प्रत्ययस्य। अग्निषु। वायुषु। भूषु। कर्त्तृषु। केषाम्। गोषु। नौषु। गीर्षु। धूर्षु। कवर्गात्। अपाक्षीत्। धोक्ष्यति। लिङ्क्षु। नुमादिव्यवायेऽपि। सर्पींषि। सर्पिःषु। प्रत्येकव्यवायेऽभ्युपगमान्नेह। निंस्से।

---

(31) यथा—

४९। छन्दसि वाऽप्राम्रेडितयोः। ५०। कःकरत्करतिकृधिकृतेष्वनदितेः।

५१। पञ्चम्याः परावध्यर्थे। ५२। पातौ च बहुलम्।

५३। षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु। ५४। इडाया वा।

नुमा च नुम्स्थानिकानुस्वारोपलक्षणान्नेह । पुंसु । अपदान्तस्येत्येव । अग्नि-स्तल । इण्कोरित्येव । दास्यति । श्रेयांसि । पयःसु ।

## ६० । शासिवसिघसीनाञ्च ।

इण्कोरुत्तरस्य एषां सस्य मूर्धन्यः स्यात् । शिष्टः । अन्वशिषत् । उषितः । जक्षतुः । इण्कोरित्येव । शास्ति । वसति । जघास ।

## ६१ । स्तौतिण्योरेव षण्यभ्यासात् ।

स्तौतेर्ण्यन्तानाञ्च षत्वभूते सनि परतोऽभ्यासादिणः परस्य मूर्धन्यः स्यात् । तुष्टूषति । ण्यन्तानाम् । सिषञ्जयिषति । सिषेचयिषति । नियमः किम् ? सिसिक्षति । सुसूषति । षणीति निर्देशः किम् ? इह नियमो मा भूत् । सुषुप्सति । तिष्ठासति । अभ्यासात् किम् ? प्रतीषिषति ।

## ६२ । सः स्विदिस्वदिसहीनाञ्च ।

एषां ण्यन्तानां मूर्धन्यापवादः सः स्यात् । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ।

## ६३ । प्राक् सितादड्व्यवायेऽपि ।

सितशब्दात् (८।३।७०) प्रागड्व्यवायेऽपि मूर्धन्यः स्यात् । अभिषुणोति । अभ्यषुणोत् ।

## ६४ । स्थादिष्वभ्यासेन चाभ्यासस्य ।

स्थासेनयादिषु (८।३।७५) प्राक् सितादभ्यासेनापि (८।३।७०) व्यवाये मूर्धन्यः स्यात् । अभ्यासस्य च । अभितष्ठौ । अभिषिषेणयिषति । परि-षिषिक्षति ।

## ६५ । उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्था-सेनयसेधसिचसञ्जस्वञ्जाम् ।

प्रादिस्थनिमित्तादिणः परेषां सुनोत्यादीनामेकादशानां सस्य मूर्धन्य स्यात् । अभिषुणोति । अभ्यषुणोत् । अभिषुवति । अभ्यषुवत् । अधिष्ठा स्यति । अध्यष्ठात् । परितष्ठौ । अभिषिञ्चति । व्यतिषजति । परिष्वजते ।

इण्कोरित्येव। प्रस्तौति। प्रसिद्धति। सेधतेः शपा निर्देशान्नेह। अभि-सिध्यति। कथं सुस्थो दुःस्थ इति ? उपसर्गप्रतिरूपकाभ्याम्।

६६। सदिरप्रतेः।

उपसर्गात् सदिः षत्वं भजते। निषीदति। निषादः। अप्रतेः किम् ? प्रतिसीदति।

६७। स्तन्भेः।

स्तम्भेः सस्य षत्वं स्यात्। अभिष्टभ्नाति। अभ्यष्टभ्नात्। व्यष्टभ्नात्।

६८। अवाच्चालम्बनाविदूर्य्ययोः।

अनयोरवात् स्तम्भेः षत्वं स्यात्। आलम्बने। अवष्टभ्य दण्डं स्थितः। आविदूर्य्ये। अवष्टब्धो हृतस्य विनाशः। आलम्बनाविदूर्य्ययोः किम् ? अवस्तब्धो वृषलः शीतेन।

६९। वेश्च स्वनो भोजने।

अत्र वेरवाच्च स्वनः षत्वं स्यात्। विष्वणति नरः। क्रीष्टा डिम्बं व्यष्वणत्। विषष्वाण। अवष्वणति। विष्वणः। सगन्धभोजनादन्यत्र विस्वनति ढक्का। अवस्वनति ढक्का।

७०। परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्।

परिनिविभ्यः सेवादीनां षत्वं स्यात्। परिषेवते। परिषेवणम्। निषेवणम्। व्यषेवत। परिषिषेविषते। गताः प्राक्सितीयाः। परिषितः। विषयः। परिषीव्यति। परिषहते। परिष्करोति। परिष्कारः। स्तुस्वञ्जी चोत्तरार्थौ।

७१। सिवादीनां वाड्व्यवायेऽपि।

उक्तानां सिवुसहादीनामड्व्यवायेऽपि सस्य षत्वं वा स्यात्। पर्य्यषीव्यत् पर्य्यसीव्यत् वा। व्यषहत व्यसहत वा। पर्य्यषहत पर्य्यसहत वा। पर्य्यष्करोत् पर्य्यस्करोत् वा। न्यष्टौत् न्यस्तौत् वा। व्यष्टौत् व्यस्तौत् वा। पर्य्यष्वजत पर्य्यस्वजत वा।

## ७२ । अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु ।

एभ्यःस्यन्दतेः षत्वं वा स्यादप्राणिषु । विष्यन्दते विस्यन्दते वा तैलम् । अप्राणिषु किम् ? अनुस्यन्दते मत्स्य उदके ।

## ७३ । वेः स्कन्देरनिष्ठायाम् ।

वेःस्कन्देः षत्वं वा स्यात् । विष्कन्ता विस्कन्ता वा । अनिष्ठायां किम् ? विस्कन्नः । विस्कन्नवान् ।

## ७४ । परेश्च ।

परेः स्कन्देः षत्वं वा स्यात् । निष्ठार्थोऽयं योगः । परिष्कन्ता परिस्कन्ता वा । परिष्कण्णः परिस्कन्नः वा ।

## ७५ । परिस्कन्दः प्राच्यभरतेषु ।

मूर्धन्याभावो निपात्यते पचाद्यचि ।

## ७६ । स्फुरतिस्फुलत्योर्निर्निविभ्यः ।

एभ्यः स्फुरतिस्फुलत्योः षत्वं वा स्यात् । निःस्फुरति निःस्फुरति वा । निष्फुलति निस्फुलति वा । विष्फुलः विस्फुलः वा ।

## ७७ । वेः स्कभ्नातेर्नित्यम् ।

अस्य नित्यं षत्वं स्यात् । विष्कभ्नाति । विष्कम्भितुम् । विष्कम्भः ।

## ७८ । इणः षीध्वंलुङ्लिटांऽधोऽङ्गात् ।

इणन्तादङ्गात् षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । च्योषीढ्वम् । क्षषीढ्वम् । अच्योढ्वम् । चकृढ्वे । ववृढ्वे । इण्कोरित्यनुवृत्ताविण्ग्रहणं कोर्निवृत्त्यर्थम् । यक्षीध्वम् । पक्षीध्वम् । अङ्गात् किम् ? परिवेविषीध्वम् । एषां किम् ? अस्तुध्वम् ।

## ७९ । विभाषेटः ।

अनन्तरो विधिरिटः परेषां तेषां वा स्यात् । लविषीध्वं लविषीढ्वं वा । चिण्वदिटोऽपि । कारिषीध्वं कारिषीढ्वं वा । लुङ् । अग्रहीध्वम् । अग्रहीढ्वं

वा। अलविध्वम्। अलविढ्वं वा। लिट्। जग्टहिध्वे जग्टहिढ्वे वा। अङ्गादिति निवृत्तम्। तेनेहापि स्यात्। दीङो युड़चि (६।४।६३)। उपदिदीयिध्वे। उपदिदीयिढ्वे वा। इण इत्येव। शोभिषीध्वम्। अशोभिध्वम्। शुशुभिध्वे।

## ८०। समासेऽङ्गुलेः सङ्गः।

अङ्गुलेः सङ्गो मूर्धन्यं भजते। अङ्गुलिषङ्गा यवागूः। वाक्ये तु। अङ्गुलेः सङ्गं पश्य। समासे विधिरितः सप्तसूत्राम्।

## ८१। भीरोः स्थानम्।

भीरोः परस्य स्थानस्य षत्वं स्यात्। भीरुष्ठानम्।

## ८२। अग्नेः स्तुत्स्तोमसोमाः।

अग्नेः परेषां स्तुदादीनां षत्वं स्यात्। अग्निष्टुत्। अग्निष्टोमः। "अग्नीषोमच्छायया त्वं परीतस्तापाह्लादौ शत्रुमित्रेषु कुर्वन्।" दीर्घादेवेष्यते। इह तु न भवति। अग्निसोमौ माणवकौ।

## ८३। ज्योतिरायुषः स्तोमः।

ज्योतिरायुर्भ्यां स्तोमस्य षत्वं स्यात्। ज्योतिष्टोमः। आयुष्टोमः।

## ८४। मातृपितृभ्यां स्वसा।

आभ्यां स्वसुः षत्वं स्यात्। मातृष्वसा। पितृष्वसा।

## ८५। मातुः पितुर्भ्यामन्यतरस्याम्।

आभ्यां स्वसुः षत्वं वा स्यात्। मातुःष्वसा मातुःस्वसा वा। पितुःष्वसा पितुःस्वसा वा। अलुक्समासोऽयम्। वाक्ये तु मातुः स्वसेत्येव।

## ८६। अभिनिसस्तनः शब्दसंज्ञायाम्।

अभिनिसः स्तनतेः षत्वं स्यात्। अभिनिष्टानः। विसर्जनीयस्य संज्ञा। अन्यत्र। अभिनिस्तनति मृदङ्गः। समास इति निवृत्तम्।

## ८७। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः।

आभ्यां परस्यास्तिसकारस्य षत्वं स्याद् यकारपरस्याच्परस्य च।

अभिष्यात्। प्रादुःष्यात्। अभिषन्ति। प्रादुःषन्ति। यच्परस्य किम्? अभिस्तः।

## ८८। सुविनिर्दुर्भ्यः सुपिसूतिसमाः।

एभ्यः सुप्यादीनां सस्य षत्वं स्यात्। सुषुप्तः। दुःषुप्तः। सुषूतिः। विषूतिः। दुःषूतिः। "तस्य चानियदुःषूतिः"। सुषमम्। निःषमम्। विषमम्। एभ्यः किम्? अभिसुप्तः। सुपीति निर्देशः किम्? सुस्वपिति।

## ८९। निनदीभ्यां स्नातेः कौशले।

आभ्यां स्नातेः कौशलगतौ षत्वं स्यात्। निष्णातः शास्त्रे। नदीष्णः। नदीज्ञ इत्यर्थः। कौशले किम्। नदीस्नातः।

## ९०। सूत्रं प्रतिष्णातम्।

प्रतिस्नातमन्यत्।

## ९१। कपिष्ठलो गोत्रे।

कपिस्थलमन्यत्। गोत्रमिहादिपुरुषः।

## ९२। प्रष्ठोऽग्रगामिनि।

प्रस्थोऽन्यत्।

## ९३। वृक्षासनयोर्विष्टरः।

विस्तरोऽन्यत्।

## ९४। छन्दोनाम्नि च।

छन्दोनाम्नि विस्तृणातेः षत्वं स्यात्। घञ्। विष्टारपङ्क्ति नाम छन्दः।

## ९५। गवियुधिभ्यां स्थिरः।

आभ्यां स्थिरस्य षत्वं स्यात्। गविष्ठिरः। युधिष्ठिरः। अतएव निपातनात् सप्तम्यलुक्।

## ९६। विकुशमिपरिभ्यः स्थलम्।

एभ्यः स्थलस्य षत्वं स्यात्। विष्ठलम्। कुष्ठलम्। "प्रयानां कुष्ठले"।

गमिष्ठलम्। गमीति ङ्याणोः संज्ञाच्छन्दसोर्बहुलमिति (६।३।६३) ह्रस्वः। परिष्ठलम्।

**९७। अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कुङ्गुमञ्जिपुञ्जि परमेबर्हिर्दिव्यग्निभ्यः स्थः।**

एभ्यः परस्य स्थस्य षत्वं स्यात्। अम्बष्ठः। आम्बष्ठः। गोष्ठः। भूमिष्ठः। सव्यष्ठः। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः। स्थ इति स्वरूपग्रहणान्नेह। गोस्थानम्। कथं सव्येष्ठा सव्येष्ठरौ परमेष्ठीति? औणादिका एते सुषामादिषु विज्ञेयाः।

**९८। सुषामादिषु च।**

एषु षत्वं स्यात्। सुषामा। "सुषाम्नी सर्वतेजःसु।" निःषामा। सुषेधः। निषेधः। सुषन्धिः। अषसु। सुषु। दुषु। उपष्टम्भ इत्येके।

**९९। एति संज्ञायामगात्।**

हरिषेणः। एकारे किम्? हरिसिंहः। संज्ञायां किम्? पृथुसेनो राजा। अगः किम्? विष्वक्सेनः। कुणकोरित्येव। सर्वसेनः।

**१००। नक्षत्राद्वा। (32)**

संज्ञायां नक्षत्रात् परस्य सस्य षत्वं वा स्यात्। रोहिणिषेणः। रोहिणिसेनो वा। एवं यथादर्शनं सुषामादयः।

**१०१। ह्रस्वात् तादौ तद्धिते।**

ह्रस्वात् परस्य सस्य षत्वं स्यात् तादौ तद्धिते। सर्पिष्टरम्। सर्पिष्टमम्। यजुष्टमम्। वपुष्टमम्। दीर्घायुष्कम्। चतुष्टयम्। सर्पिष्टा। तादौ किम्? सर्पिस्सात् भवति। ह्रस्वात् किम्? गीस्तराम्।

(क) तिङन्तस्य प्रतिषेधो वक्तव्यः। भिन्द्युस्तराम्।

---

(32) In some MSS. the reading is इदन्तात् नक्षत्रात् परस्य सस्य षत्वं स्यात्। इतः किम्? पुनर्वसुसेनः।

## १०२ । निसस्तपतावनासेवने ।

तपतौ निसः षत्वं स्यात् सकृत् करणे । निष्टपति । निष्टापः । निष्टपनम् । सकृत् करणे किम् ? निस्तपति सुवर्णं सुवर्णकारः । पुनः पुनरग्निं स्पर्शयतीत्यर्थः । इहाष्टौ सूत्राणि च्छान्दसानि । (33)

## १११ । सात्पदाद्योः ।

नेत्येव । अनयोः षत्वं नास्ति । अग्निसात् । मधुसात् । साधुसात् । पदादेः । दधि सिञ्चति । मधु सिञ्चति । व्यतिसे । विस्फोटः ।

## ११२ । सिचो यङि ।

यङि सिचः षत्वं नास्ति । सेसिच्यते । उपसर्गात् सुनोतीत्याद्यपि (८।३।६५) यङि बाध्यते । "कुर्वाणां परिसेसिचाम् ।" यङि किम् ? अभिषिषिञ्चति ।

## ११३ । सेधतेर्गतौ ।

अस्मात् षत्वं नास्ति । अभिसेधति । गतौ किम् ? प्रतिषेधति ।

## ११४ । प्रतिस्तब्धनिस्तब्धौ च ।

इमौ निपात्येते । प्रतिस्तब्धो विक्रान्तः । निस्तब्धः । निरपूर्वस्य तु । निष्टब्धश्चालः ।

## ११५ । सोढः ।

सोढरूपस्य परिनिविभ्यः षत्वं नास्ति । परिसोढुम् । परिसोढः । परिसोढा । निसोढव्यः । निसोढः । विसोढा । सोढ इति निर्देशः किम् ? विषहते ।

---

(33) यथा—

१०३ । युष्मत्तत्ततक्षुःष्वन्तःपादम् । १०४ । यजुष्येकेषाम् । १०५ । स्तुतस्तोमयोश्छन्दसि ।
१०६ । पूर्वपदात् । १०७ । सुञः । १०८ । सनोतेरनः । १०९ । सहेः पृतनर्ताभ्यां च ।
११० । न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।

## ११६। स्तम्भुसिवुसहाञ्चङि।

एषाञ्चङि षत्वं नास्ति। पर्य्यतस्तम्भत्। पर्य्यसीषिवत्। पर्य्यसीषहत्। व्यसीषहत्। कथं परस्य षत्वम्? उपसर्गादिति वक्तव्यम्। तेनोपसर्गादिति प्राप्तिर्निषिध्यते। नाभ्यासात्।

## ११७। सुनोतेः स्यसनोः।

सुनोतेः स्ये सनि च षत्वं नास्ति। परिसोष्यति। सन्नन्तात् क्विप्। अभिसुसूः। स्यसनोः किम्? अभिसुषाव। परिसुषाव।

## ११८। सदिस्वञ्जोः परस्य लिटि।

अनयोर्लिटि परस्य सकारस्य षत्वं नास्ति। विषसाद। परिषस्वञ्जे। संयोगादपि लिटो विभाषा कित्त्वमिच्छन्तीति वामनवृत्तिः। तेन पक्षेऽनुषङ्ग-लोपात् परिषस्वजे इति (34) सिद्धम्।

## ११९। निव्यभिभ्योऽड्व्यवाये वा छन्दसि।

छान्दसम्।

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्तौ

अष्टमाध्यायस्य तृतीयः पादः॥८।३॥

समाप्तश्च मतुप्पादः॥

---

(34) अत्र सदेः परस्य लिटीत्येवार्षं सूत्रम्। ततः स्वञ्जे रुपसंख्यानमिति वार्त्तिकम्। परिषस्वजे इति भाष्योदाहरणात् स्वञ्जेर्लिटि वा कित्त्वञ्च। एवञ्च सस्वजे प्रियमुरो निपीड़्तेति कालिदासस्य। सस्वजे दयितया हृदयेश इति भारवेः। वलिभयात्तिभयादिव सस्वजे इति माघस्य। आलिङ्गितालीकपरस्परान्त-स्तथ्यं मिथस्तौ परिषस्वजाते इति नैषधे च प्रयोगः। तमिन्दुः परिषस्वजे इति च।

अथ

# भाषावृत्तिः ।

अष्टमोऽध्यायः । चतुर्थः पादः ।

## १ । रषाभ्यां नो णः समानपदे ।

रषाभ्यां परस्य नस्य णत्वं स्यात् समानपदे । विस्तीर्णम् । पुष्णाति । कुष्णाति । समानपदे किम् ? वार्निधिः । पितृनाम ।

(क) ऋवर्णाच्च । तिसृणाम् । चतसृणाम् । मातॄणाम् । पितॄणाम् ।

## २ । अट्कुप्वाङ्नुम्व्यवायेऽपि ।

समानपदेऽड़ादिव्यवायेऽपि रषऋभ्यो नस्य णत्वं स्यात् । करणम् । हरणम् । उरःकेण । गृह्णाति । हक्णः । रोषणः । भूषणम् । ब्रह्मेण । मूर्खेण । शृङ्गेण । दर्पेण । गर्भेण । आङ् । पर्य्याणयति । नुमनुस्वारोपलक्षणार्थम् । बृंहणम् । बृंहणीयम् । दृंहणम् । दृंहणीयम् । अड़ादिव्यवाये किम् ? चुटुतुलशर्व्यवाये मा भूत् । रोचनम् । दर्शनम् । कपर्दकेन । एकपद इत्येव । अग्निरानीयताम् । अड़ादिव्यवायो यावत्सत्व मनुवर्त्तते ।

## ३ । पूर्व्वपदात् संज्ञायामगः ।

पूर्वपदस्थरषऋभ्यः परस्य नस्य णत्वं स्यात् संज्ञा चेत् । खरणसः । शूर्पणखा । नारायणः । संज्ञायां किम् ? दीर्घनयना स्त्री । कथमग्रणीः ? ग्रामणि कुलमिति ? अग्रग्रामाभ्याञ्चेत्युपसंख्यानात् । अगः किम् ? (35) ऋगयनम् । अड़ादिव्यवाय इत्येव । अर्हनसः । अतःपरं पूर्वपदस्थरषऋभ्यो विधिः ।

---

(35) अग इति पूर्वपदादित्यस्य विशेषणम् । पूर्वपदस्थेन गकारेण तत्स्थनिमित्तस्य चेन्न व्यवधानमित्यर्थः । तेन प्राङ्गणं ज्योतिरिङ्गण इत्यादौ णत्वं भवत्येव । ऋगयनं मृगनेत्रा रात्रय इत्यादौ तु न ।

४। वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः।

एभ्यो वननकारस्य संज्ञायां णत्वं स्यात्। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। शारिकावणम्। कोटरावणम्। अग्रेवणम्। पूर्वेण सिद्धौ नियमान्नेह। इन्द्रवनम्।

५। प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि।

एभ्यो वनस्य संज्ञायामसंज्ञायामपि नस्य णः स्यात्। प्रकृष्टं वनं प्रवणम्। निर्गतो वनान्निर्वणम्। अन्तर्वणम्। शरवणम्। इक्षुवणम्। प्लक्षवणम्। आम्रवणम्। कार्ष्यवणम्। खदिरवणम्। पीयूक्षावणम्।

६। विभाषौषधिवनस्पतिभ्यः।

एभ्यो वनस्य णत्वं वा स्यात्। ओषधेः। दूर्वावणं दूर्वावनं वा। वनस्पतिरिह वृक्षमात्रं गृह्यते। व्याप्तेः। शिरीषवणं शिरीषवनं वा। गम्भारीवणम्। गम्भारीवनं वा। व्यवस्थितविभाषया नेह। इरिकावनम्। तिमिरावनम्। द्व्यक्षरत्र्यक्षरेभ्योऽभिधानान्नेह। देवदारुवनम्। सहकारवनम्। अड़ादिव्यवाय इत्येव। न्यग्रोधवनम्।

७। अह्नोऽदन्तात्।

अदन्तादह्नो नस्य णत्वं स्यात् (36)। पूर्वाह्णः। अपराह्णः। अदन्तात् किम्? निरह्नः।

८। वाहनमाहितात्।

वोढ़व्याद्वाहनस्य नो णः स्यात्। दर्भवाहणो बटुः। इक्षुवाहणो गौः।

---

(36) अत्राप्यदन्तपूर्वपदस्थाभ्यां रषाभ्यामेवाह्नो नस्य णत्वम्। त्र्याह्णः। त्रये अहःसु भव इति विग्रहे कालाट् ठञ् (४।३।११)। द्विगोर्लुगनपत्य इति (४।१।८७) ठञो लुक्। त्र्याह्णप्रियः। तद्धितार्थेत्यादिना १(२।५१) समासः। त्रयम् अहानि जातस्य यस्य स त्र्याह्णजातः। कालाः परिमाणिनेति (२।२।५) समासः। उत्तरपदेन परिमाणिना द्विगोः समासवचनमित्युपसंख्यानात् (२।१।५१, वार्त्तिक) त्रिपदे तत्पुरुषः। तपरकरणादिह च न। परागत मह्नः पराह्नः। यदा तु परशब्देन समास स्तदा पराह्णः। दीर्घाह्नी प्रावृड़ित्यत्र तु क्षुभ्नादित्वान्न णत्वमित्याहुः।

तार्क्ष्यवाहणः। आहितात् किम्? गर्गसम्बन्धि वाहनं गर्गवाहनम्। यदा तु गर्ग एव वोढ़व्यस्तदा गर्गवाहणमिति। (37)

## ९। पानं देशे।

पूर्वपदस्थेभ्यो रषऋभ्यः परस्य पाननकारस्य णत्वं स्याद् देशे। पीयत इति पानम्। सुरापाणाः प्राच्याः। "असृक्पाणाधिपं तूर्णम्।" देशे किम्? सुरापानो मनुष्यः।

## १०। वा भावकरणयोः।

भावे करणे च पाननकारस्य णत्वं वा स्यात्। पीयूषपाणं पीयूषपानं वा। कषायपाणं कषायपानं वा। सुरापाणं वर्त्तते सुरापानं वा। करणे चीरपाणः कंसः चीरपानो वा। कथं निष्पानं दुष्पानमिति? षात् पदान्तादिति (८।४।३५) निषेधात्।

(क) गिरिनद्यादीनामुपसंख्यानम्। गिरिणदी गिरिनदी वा। स्वर्णदी स्वर्नदी वा।

## ११। प्रातिपदिकान्तनुम्विभक्तिषु च।

एषु नस्य णत्वं वा स्यात्। प्रातिपदिकान्ते। माषवापिणौ माषवापिनौ वा। व्रीहिवापिणौ व्रीहिवापिनौ वा। नुम्। माषवापाणि माषवापानि वा। व्रीहिवापाणि व्रीहिवापानि वा। विभक्तौ। परमाहिणा परमाहिना वा। कथं प्रपक्वानि? चत्रिययूनेति? चुभ्नादित्वात् (38)। अड़ादिव्यवाय इत्येव। गर्द्दभवाहिनौ।

## १२। एकाजुत्तरपदे णः।

एकाजुत्तरपदेषु तेषु नो नित्यं णः स्यात्। वृत्रहणौ। चीरपाणि। चीरपेण। अड़ादिव्यवाय इत्येव। व्रीहिजानि। णग्रहणं नित्यार्थम्।

---

(37) कुथेन नागेन्द्रमिवेन्द्रवाहणमिति माघः। पचे घनरवा नरवाहनसम्पद इति रघुकाव्ये। नरवाहनः कुवेरः।

(38) अत्र—"युवादीनां प्रतिषेधः।" इति वार्त्तिकं च वर्त्तते।

## १३ । कुमति च ।

कवर्गवदुत्तरपदे तेषु नो नित्यं णः स्यात् । नगरवर्कीण । नगरकाकीण । दत्तमखेण । दत्तसुखेण । वृकमुखेण । युजाक्रीड़ेति (३।२।१४२) विनुण् । वस्त्रयोगिणी । पुष्पयोगिणः । पुष्पयुगाणि । वृषभयुगाणि । सर्वाङ्गाणि । वृत्तयुगेण । वर्षभोग्येण । मूर्खौघेण । अड़ादिव्यवाये किम् ? व्रीहित्यागिनः । कथं शास्त्रवाक्यानि कुरुमुख्यानाम् प्रष्ठोऽग्रगामिनि छात्रगामिना चन्द्रगोमिनेति ? क्षुभ्नादित्वात् (८।४।३९) । (39)

## १४ । उपसर्गादसमासेऽपि णोपदेशस्य ।

असमासे समासे च प्रादिस्थरषऋभ्यो धातोर्नस्य णत्वं स्यात् । प्रणमति । प्रणिनीषति । प्रणायकः । निर्णयः । णोपदेशस्य किम् ? प्रनर्दति । कथं दुर्नयः ? क्षुभ्नादित्वात् । (40) अतःपरमुपसर्गस्थरषऋभ्यो विधिः ।

---

(39) "प्रष्ठोऽग्रगामिनीति (८।१।९२) सूत्रनिर्देशादेव कुमति चेत्यनित्य"मिति केशवः । एवञ्च जगाम कुरुमुख्यानां नगरं नागसाह्वयमिति भारतप्रयोगे ते णत्वं निवर्त्तयन्ति इति सृष्टिधरः । The author holds here छात्रगामिना as with the dental न, but the काशिकाकार gives वृषगामिणा with the cerebral. So what is the guarantee that the classical authors are all of one view regarding the णत्व in such words as शास्त्रवाक्यानि &ce ? As to the णत्व in अग्रगामिनि, we quote here our remarks made in our edition of the न्यास viz :— "There is some controversy regarding णत्व in the word अग्रगामिनि। काशिका gives वृषगामिणी as an illustration of कुमति च (8. 4. 13). My MSS.—(the Bengali one is of 1715 saka)—also spell अग्रगामिणि here with the cerebral ण। In the MSS. of the प्रक्रियाकौमुदी about 500 years old, the cerebral ण is found in the word. On the other hand मैत्रेय रक्षित asserts that प्रष्ठोऽग्रगामिनि had been given with the dental न by the सूत्रकार. In annotating the वार्त्तिक, युवादीनां प्रतिषेधः, says he in his तन्त्रप्रदीप on the Rule प्रातिपदिकान्तनुम्विभक्तिषु च ( 8. 4. 11 ), that युवादीनां प्रतिषेधो वक्तव्य इत्येवंणत्व-प्रतिषेधे प्रष्ठोऽग्रगामिनीत्येवमादयो निर्देशाः प्रमाणम् ।' So there is at least one classical पाणिनीय grammarian who vouches for the dental न in the word अग्रगामिनि। But others maintain नावाशोक्तिरस्तीति and therefore they allow the Rule कुमति च ( 8. 4. 13 ) to prevail". So all such words as शास्त्रवाक्याणि, कुरुमुख्याणाम्, अग्रगामिणि, छात्रगामिणा, चन्द्रगोमिणा, &ce. have the cerebral ण according to this view.

(40) दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य ( १।४।६०, वा ) इत्यनेनैवात्र णत्वनिरास इत्यन्ये ।

## १५ । हिनुमीना ।

अनयोर्नस्य णत्वं स्यात् । प्रहिणोति । प्रहिणुतः । प्रमीणाति । प्रमीणीतः ।

## १६ । आनि लोट् ।

लोडानिनकारस्य णत्वं स्यात् । प्रवपाणि । परिवपाणि । अड़ादिव्यवाय इत्येव । प्रददानि । आनीति किम् ? प्रवपन्तु । लोटः किम् ? प्रवपाणि मांसानि ।

## १७ । नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।

एषु नेर्णत्वं स्यात् । प्रणिगदति । अड़ादिव्यवाय इत्येव । प्रण्यगदत् । घु । प्रणिदाता । प्रणिधाता । मेति माङ्मेङोर्ग्रहणम् । प्रणिमिमीते । प्रणिमयते । एवं यावत् प्रणिदेग्धि ।

## १८ । शेषे विभाषाऽकखादावषान्त उपदेशे ।

धातुपाठे अकखादौ धातौ अषान्ते च ने र्णो वा स्यात् । प्रणिपक्ता प्रनिपक्ता वा । प्रणिजानाति प्रनिजानाति वा । शेषे किम् ? गदादिषु मा भूत् । प्रणिगदति । प्रणिगदनम् । अकखादौ किम् ? प्रनिकर्त्ता । प्रनिखादति । अषान्ते किम् ? प्रनिपिनष्टि । प्रनिपेक्ष्यति । उपदेशे किम् ? प्रणिवेष्टा प्रनिवेष्टा वा । इह मा भूत् । प्रनिचकार । प्रनिचखाद । प्रनिपेक्ष्यति ।

## १९ । अनितेः ।

अनितेर्नस्य णत्वं स्यात् । प्राणिति ।

## २० । अन्तः ।

अनितेरन्तभूतस्यापि नस्य णत्वं स्यात् । क्विप् । हे प्राण् । केशवहन्तौ तु विकल्प उक्तः । हे प्रान् हे प्राण् वा ।

## २१ । उभौ साभ्यासस्य ।

साभ्यासस्यानितेरुभौ नकारौ णौ स्याताम् । प्राणिणिषति ।

## २२। हन्तेरत्पूर्वस्य।

हन्तेर्नो णत्वं स्यात्। प्रहण्यते। परिहण्यते। प्रहणनम्। अत्पूर्वस्य किम्? प्रघ्नन्ति। तपरः किम्? प्राघानि।

## २३। वमोर्वा।

वमयोः परतो हन्तेर्नकारस्य णत्वं वा स्यात्। प्रहण्वः प्रहन्वो वा। प्रहण्मः प्रहन्मः वा।

## २४। अन्तरदेशे।

अदेशे अन्तःशब्दाद्धन्तेर्नकारस्य णत्वं स्यात्। अन्तर्हणनम्। अन्तर्हण्यते। कथमन्तर्हन्ता? णत्वेऽनुस्वारपरसवर्णस्यासिद्धत्वात् कुर्वन्तिवत्। अदेशे किम्? अन्तर्हननो देशः।

## २५। अयनञ्च।

अन्तःशब्दादुत्तरस्यादेशेऽयनस्य नो णत्वं स्यात्। अन्तरयणं वर्त्तते। अदेशे किम्? अन्तरयनो देशः। इह।

## २६। छन्दस्यृदवग्रहात्।

## २७। नश्च धातुस्थोरुषुभ्यः।

छन्दःसूत्रद्वयम्।

## २८। उपसर्गाद् बहुलम्।

उपसर्गात् परस्य नःशब्दस्य नो णत्वं स्यात्। प्रणसम् मुखम्। परिणसम् मुखम्। बहुलग्रहणं छन्दोभागार्थम्।

## २९। कृत्यचः।

उपसर्गस्थान्निमित्तात् कृत्स्थस्याचः परस्य नस्य णत्वं स्यात्। अनमानानीयानीनिनिनिष्ठादेशेषु सम्भवः। प्रयाणम्। प्रमाणम्। प्रयायमाणम्। प्रयाणीयम्। अप्रयाणिः। प्रयायिणी। प्रहाणिः। परिहाणिः। प्रहीणः। निर्वाणम्। कथं प्रख्यानम् पर्य्याख्यानम्? कार्य्योऽत्र यत्नः। अथवा क्षुभ्नादि-

त्वात् (41)। अचः किम्? प्रमग्नः। उपसर्गादित्येव। नरयानम्। अड़ादि-व्यवाय इत्येव। प्रयोजनम्। प्रतियानम्। प्रदानम्। प्रधानम्। प्रेन्वनम्। कथं निर्विण्ण इति? उपसंख्यानात्।

### ३०। णेर्विभाषा।

ण्यन्तात् कृत्यच इति (८।४।२९) प्राप्तिर्वा स्यात्। प्रयापणं प्रयापनं वा। प्रह्वापणीयं प्रह्वापनीयं वा।

### ३१। हलश्चेजुपधात्।

हलादेरिजुपधाद् विहितस्य कृत्यच इति (८।४।२९) प्राप्ति र्वा स्यात्। प्रगोपणं प्रगोपनं वा। निगूंहणं निगूंहनं वा।

### ३२। इजादेः सनुमः।

कृत्यच इति (८।४।२९) णत्वं सनुमो हलन्ताद् यदि स्यात् तदिजादेरेव। प्रेङ्खणम्। परीङ्खणम्। प्रेङ्गणम्। नुमोऽनुस्वारमात्रोपलक्षणात् प्रोम्भणम्। इजादेः किम्? प्रमङ्गनम्।

### ३३। वा निंसनिक्षनिन्दाम्।

प्रादिस्थनिमित्तादेषां नो णत्वं स्याद्वा। णोपदेशप्राप्तेर्विकल्पः। प्रणिंस्ते प्रनिंस्ते वा। प्रणिक्षकः प्रनिक्षकः वा। प्रणिन्दति प्रनिन्दति वा। (42)

### ३४। न भाभूपूकमिगमिप्यायिवेपाम्।

प्रादिस्थनिमित्तादेषां कृत्यच (८।४।२९) इति णत्वं नास्ति। प्रभानम्। प्रभानीयम्। प्रभवनम्। प्रपवनम् (43)। प्रकमनम्। प्रगमनम्। प्रप्यायनम्। प्रवेपनम्।

---

(41) यत्नस्तु कात्यायनेनैव कृतः। तथाहि चक्षिङः ख्याञित्यत्र (२।४।५४) वार्त्तिकेषु असिद्धे शस्य यवचनं विभाषितं णत्वं पर्य्याख्यान इति द्वे वार्त्तिके। एवं हि तदर्थः। असिद्धकाण्डे णत्वप्रकरणानन्तरं चक्षाञः शस्य यो वेति वचनं कर्त्तव्यम्। तेन यत्वस्यासिद्धतया शत्वे सति शकारव्यवधानान्न णत्वम्। विस्तरस्तु शब्दकौस्तुभाद् बोध्यः।

(42) अत्र माधवभट्टोजिप्रभृतयस्तु कृत्येवायं विकल्प इति मन्यन्ते। तिङि तु नित्यं णत्वम्।

(43) अत्र "भादिषु पूञ् ग्रहण"मिति वार्त्तिकम्। तेन पूञो न। पूङस्तु स्यादेव णत्वम्। प्रपवणीयः सोमः। प्रपवणं सोमस्य।

(क) ण्यन्तानां भादीनाञ्चोपसंख्यानं कर्त्तव्यम्। प्रभापनम्। प्रभापनीयम्। कृत्यच इति (८।४।२९) प्राप्तेर्निषेधान्नेह। प्रभवाणि। प्रभाणि। आनि लोडिति (८।४।१६) णत्वम्। उक्तमुपसर्गात्।

## ३५। षात् पदान्तात्।

नस्य पदान्तात् षकाराण्णत्वं नास्ति। सर्पिष्पानम्। यजुष्पानम्। दुष्पानम्। दुष्पीयमानम्। निष्पीयमानम्। दुष्वेन। षादिति किम्? निर्णयः। दुर्नयः। (44)

## ३६। नशेः षान्तस्य।

णत्वं नास्ति। प्रनष्टः। प्रनङ्क्ष्यति। षान्तस्य किम्? प्रणश्यति। प्रणाशः।

## ३७। पदान्तस्य।

नकारस्य णत्वं नास्ति। वृक्षान्। गिरीन्। व्रीहिवापान्। खरमुखान्। हे करिष्यन्।

## ३८। पदव्यवायेऽपि।

पदेन व्यवाये णत्वं नास्ति। व्रीहिकुम्भवापेन। रोषभीममुखेन प्रविपानम्। (45)

(क) अतद्धित इति वक्तव्यम्। आर्द्रगोमयेण। शुष्कगोमयेण। कुमति चेति (८।४।१३) णत्वम्।

## ३९। क्षुभ्नादिषु च।

एषु णत्वं नास्ति। क्षुभ्नाति। क्षुभ्नीतः। नरीनृत्यते। नरीनर्त्ति। नृनमनो नाम कश्चित्। तृप्नोति। परिनर्त्तनम्। वार्तघ्नः। पुनर्नवा। दीर्घाग्निेयः। हरिनन्दी। ब्रह्मघ्नः। दुर्नयः। दुर्नाम। आकृतिगणोऽयम्। उक्तं णत्वम्।

---

(44) इदं चिन्त्यम्। क्षुभ्नादिलस्याश्रयणात्। नचात्र दुर्नय इति प्रत्युदाहरणं लेखकप्रमादात्। दुर्घटवृत्तावप्येतत् पुरुषोत्तममीदाहृतमित्युक्तेः।

(45) एवञ्च प्राङ्मुखेन पराङ्मुखाणामित्यादिष्वपि न णत्वम्।

## ४०। स्तोः श्चुना श्चुः।

सस्य श स्तवर्गस्य चवर्गः स्यात्। कदा? श्चुभ्यां योगे। कश्श्चूयते। कश्चिनोति। कश्शेते। कश्छात्रः। अग्निचिच्छेते। भवाञ्छेते। झलां जश्त्वे कृते श्चुत्वम्। ततः खरि चेति (८।४।५४) चर्त्वम्। तच्चिनोति। तच्छिनत्ति। तज्जयति। प्रश्नाच्चिनोति। प्रश्नाञ्भुङ्क्ते। श्चुनेति तृतीया निर्देशात् पूर्वेणापि योगे श्चुत्वम्। यज्ञः। याच्ञा। मस्जो मज्जति। लस्जो लज्जते। इह झशि जश्त्वस्यासिद्धत्वात् सस्य श्चुत्वेन शः। तस्य जश्त्वेन जकारः। संहितायामित्येव। कः चिनोति। अग्निचित् शेते। तत् चिनोति। तत् जयति। पदस्येत्यधिकारो (८।१।१६) मण्डूकप्लुत्या क्वचिदेवोपयुज्यते। इह स्तोरिति श्चुरिति च समाहारेऽप्यनपुंसकत्वम्। सौत्रत्वात्।

## ४१। ष्टुना ष्टुः।

सस्य ष स्तवर्गस्य टवर्गः स्यात्। कदा? ष्टुभ्यां योगे। कष्षण्डे। कष्टीकते। पष्टा। पेष्टा। अप्लोष्ट। अचोष्ट। यष्टा। ईष्टे। ईट्टे। उड्डीनम्। तट् टीकते। तड्ढौकते। भवाण्डीनः। अवादयण्ढक्काम्। लिखण्णकारः। तण्णकारः। लीढम्। गूढम्।

## ४२। न पदान्ताट्टोरनाम्।

(क) अनामिति नाम्नवतिनगरीणामिति वाच्यम्। पदान्तात् टवर्गात् स्तोः ष्टुत्वं नास्ति। श्वलिट् साधुः। श्वलिट् तरति। मधुलिट् साधुः। मधुलिट् तरति। नेह। षण्णाम्। षण्णवतिः। षण्णगरी।

## ४३। तोः षि।

तवर्गस्य षकारे ष्टुत्वं नास्ति। अग्निचित् षण्डे। महान् षण्डे।

## ४४। शात्।

शकारात् तोः श्चुत्वं नास्ति। प्रश्नः। विश्नः। जश्त्वम्। अश्नाति।

## ४५। यरोऽनुनासिकेऽनुनासिको वा।

यरः पदान्तस्य अनुनासिके परेऽनुनासिको वा स्यात्। वाग्नेता वाङ्नेता वा। त्वञ् ञकारः त्वज्ञकारः वा। ककुम्नाथः ककुब्नाथः

वा। श्वलिण्नयति श्वलिड् नयति वा। तन्मात्रा तद्मात्रा वा। पदान्तानुवृत्तिः किम्? वेद्मि।

(क) प्रत्यये नित्यवचनम्। वाङ्मयम्। षण्णाम्। मधुलिण्मात्रम्। श्वलिण्मात्रम्। तन्मात्रम् (46)।

## ४६। अचो रहाभ्यां द्वे।

अचः परौ यौ रहौ ताभ्यां परस्य यरो द्वे स्यातां वा। अर्क्कः अर्कः वा। मूर्क्खः मूर्खः वा। स्वर्ग्गः स्वर्गः वा। अर्ग्घ्यः अर्घ्यः वा। निर्झ्झरः निर्झरः वा। अर्त्थः अर्थः वा। आर्द्रः आर्द्द्रः वा। वर्धनं वर्द्धनं वा। बर्हिर्न्नयति बर्हिर्नयति वा। दर्प्पः दर्पः वा। निर्भरः निर्ब्भरः वा। दर्ब्भः दर्भः वा। धर्म्मः धर्मः वा। शर्म्म शर्म वा। कार्य्यं कार्यं वा। ब्रह्मा ब्रह्म्मा वा। अपह्न्नुते अपह्नुते वा। अचः किम्? ह्नुते।

## ४७। अनचि च।

अचः परस्य यरोऽचि द्वे स्यातां वा। उग्ग्रः उग्रः वा। विग्घ्नः विघ्नः वा। मत्स्यः मत्त्स्यः वा। पुत्रः पुत्त्रः वा। युद्ध्यते युध्यते वा। बुध्यते बुद्ध्यते वा। सिध्यति सिद्ध्यति वा। दद्ध्यत्र दध्यत्र वा। मध्वत्र मद्ध्वत्र वा। वद्ध्यः वध्यः वा। इन्द्रः इन्न्द्रः वा। ऋष्यः ऋष्ष्यः वा। शिष्यः शिष्ष्यः वा। शस्यं शस्स्यं वा। अस्थि अस्स्थि वा। अच इति किम्? स्मितम्। अनचीति किम्? दधि तिष्ठति।

(क) यणो मयः।

(1) द्वे वा भवतः। उल्का उल्क्का वा।

(2) मयश्च यण इत्येके। दध्यत्र दध्य्यत्र वा। शक्यः शक्य्यः वा। मध्वत्र मध्व्वत्र वा। शुक्लः शुक्ल्लः वा।

(ख) शरः खयः।

(1) द्वे वा स्याताम्। स्थाली स्थ्थाली वा। स्थानम् स्थ्थानं वा।

---

(46) तन्मात्रतन्मात्रादिष्वनुनासिकस्यासिद्धत्वेन दकारत्वाज्जगन्नाथादिषु च तकारत्वान्नलोपः प्रातिपदिकान्तस्येति (८।२।७) नकारलोपो नास्ति।

(2) खयश्च शर इत्येके। वत्सः वत्स्सः वा। चीरम्। क्ष्षीरं वा। अप्सराः अप्स्सराः वा।

(ग) अवसाने द्वे वा भवतः। वाक् वाक्क् वा। षट् षट्ट् वा। यर इत्येव। दधि।

(घ) चयो द्वितीयाः शरि पौष्करसादेः।

(1) चयःस्थाने द्वितीया वर्णा आदिश्यन्ते शरि वा। वाक्शेते वाख्शेते वा। अप्सराः अफ्सराः वा। अप्सु अफ्सु वा। चीरं ख्षीरं वा। रुक्षः रुख्षः वा। मधुलिट्सु मधुलिठ्सु वा। श्वलिठ्सु श्वलिट्सु वा। वत्सः वथ्सः वा। भवत्सु भवथ्सु वा।

(2) चयः परे द्वितीया वर्णा आगमरूपा भवन्तीत्यन्ये। क्ख्षीरं चीरं वा। वत्सः वत्थ्सः वा। मधुलिट्ठ्सु मधुलिट्सु वा। भवत्थ्सु भवत्सु वा। अप्फ्सराः अप्सराः वा।

(3) चयो द्वितीया द्विरुच्यन्त इत्यपरे। चीरं क्ख्ख्षीरं वा। अप्सराः अप्फ्फ्सराः वा। भवत्सु भवत्थ्थ्सु वा।

## ४८। नादिन्याक्रोशे पुत्रस्य।

आदिनी परे आक्रोशे गम्यमाने पुत्रस्य द्वित्वं नास्ति। पुत्रादिनी। आक्रोशे किम्? पुत्त्रादिनी शिशुमारी।

(क) तत्परे चेति वक्तव्यम्। पुत्रपुत्रादिनी।

(ख) हतजग्धयोश्च वा। पुत्रजग्धी पुत्त्रजग्धी वा। पुत्रहती पुत्त्रहती वा।

## ४९। शरोऽचि।

शषसामचि द्वे न स्याताम्। आदर्शः। कर्षः। वर्षा। कार्सरम्। अचि किम्? दर्शते दर्श्शते वा। ईर्ष्यते ईर्ष्ष्यते वा। ईर्ष्या ईर्ष्ष्या वा।

## ५०। त्रिप्रभृतिषु शाकटायनस्य।

एतन्मतेन त्रिप्रभृतिषु द्वे न स्याताम्। इन्द्रः। राष्ट्रम्।

## ५१। सर्वत्र शाकल्यस्य।

शाकल्यमतेन सर्वत्र द्वित्वमसम्मतम्। अर्कः। ब्रह्मा। दध्यत्र। युध्यते। सिध्यतीति उदाहृतमेव। आचार्य्योपादानं पूजार्थम्। वेत्यनुवृत्त्या सिद्धेः।

## ५२। दीर्घादाचार्य्याणाम्।

आचार्य्याणां मतेन द्वित्वं न स्याद् दीर्घात् परस्य। पात्रम्। दात्रम्। सूत्रम्। गोत्रम्।

## ५३। झलाञ्जश् झशि।

झशि परे झलां जशः स्युः। लब्धा। दोग्धा। मज्जति। वोढा।

## ५४। अभ्यासे चर्च्च।

अभ्यासे झलाञ्चरः स्यु र्जशश्च। चिखनिषति। तिष्ठासति। पिफणिषति। प्रकृतिचरां प्रकृतिचरः। चचार। पिपासति। जशः खल्वपि। जिघत्सति। बिभर्त्ति। डुढौके। प्रकृतिजशां प्रकृतिजशः स्युः। ददौ। बुबुधे।

## ५५। खरि च।

खरि परे झलाञ्चरः स्युः। भेत्ता। छेत्ता। युयुत्सुः। आरिप्सते। तच्चिनोति। बुभुत्सते। बिभित्सति।

## ५६। वावसाने।

विरामे झलाञ्चरः स्युर्वा। वाक् वाग् वा। श्वलिट् श्वलिड् वा। वृक्षात् वृक्षाद् वा। ककुप् ककुब् वा।

## ५७। अणोऽप्रगृह्यस्यानुनासिकः।

अवसानेऽणोऽनुनासिकः स्याद्वा। कर्म वा कर्मँ। खट्वा वा खट्वाँ। दधि वा दधिँ। भवति वा भवतिँ। कुमारी वा कुमारीँ। अप्रगृह्यस्य किम्? अग्नी। वायू। अण इति किम्? कर्त्तृ। हर्त्तृ।

## ५८। अनुस्वारस्य ययि परसवर्णः।

स्यात्। शङ्किता। उञ्छिता। कुण्डिता। कुर्वन्ति। कम्पिता। ययि किम्? आक्रंस्यते।

## ५९ । वा पदान्तस्य ।

पदान्तस्यानुस्वारस्य ययि परसवर्णः स्याद्वा । त्वं कथं नयसि । त्वङ् कथन्नयसि वा । इहान्तःस्था यवला द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च । तेषामनुस्वारस्य ययि परसवर्णोऽन्तरतमः सानुनासिकः स्यात् । किंयुक्तः । कियँ युक्तः । पुंयत्नः । पुयँ यत्नः । पुंलिङ्गः । पुलँ लिङ्गः । धान्यं लुनाति । धान्यलँ लुनाति । संवत्सरः । सवँ वत्सरः । ग्रामं वहति । ग्रामवँ वहति । गां वहति गावँ वहति ।

## ६० । तोर्लि ।

तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लुनाति । तल्लिखति । भवाल्लुँनाति । भवाल्लिँखति ।

## ६१ । उदः स्थास्तम्भोः पूर्वस्य ।

उदः परयोरनयोरादेरलः स्थाने पूर्वसवर्णः स्यात् । उत्थाता । उत्थितः । उत्तम्भिता । उत्तम्भितुम् । (74)

(क) स्कन्देः रोगे चेति वक्तव्यम् । उत्कन्दको नाम रोगः ।

## ६२ । झयो होऽन्यतरस्याम् ।

झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । वाग्घसति वाग्हसति वा । अज्झलौ अज्हलौ वा । तद्धितम् । तद्हितं वा ।

## ६३ । शश्छोऽटि ।

(क) अमीति वक्तव्यम् । झयः परस्य शस्य छो वा स्यात् । अटीत्यत्रा-मीति वक्तव्यम् । वाक्छेते वाक्शेते वा । वाक्छोकेन वाक्शोकेन वा । तच्छेते तच्शेते वा । भवाञ्छूरः भवाञ्शूरः वा । ञि तुक् (८।३।३१) पक्षे भवाञ्च्छूरः भवाञ्च्शूरो वा । तच्छ्लोकेन तच्श्लोकेन वा । तच्छ्मशानम् । तच्श्मशानं वा । अमीति किम् ? तत्श्चोतति । वाक्श्चोतति ।

---

(47) उत्तम्भितो डुभिरलीवततरां शिरोभिरिति माघः ।

**६४। हलो यमां यमि लोपः।**

हलः परेषां यमां यमि वा लोपः स्यात्। यथासंख्यमेव। आस्ये भवमास्य्यम् आस्यं वा। यमि किम्? कुमार्य्यः।

**६५। झरो झरि सवर्णे।**

हलः परस्य झरो झरि सवर्णे वा लोपः स्यात्। प्रत्तम् प्रत्त्तं वा। यथासंख्यमत्र नास्ति। सवर्णमात्र एव लोपः। शिण्ड्ढि शिण्ढि वा। पिण्ड्ढि पिण्ढि वा। रुन्द्धि रुन्धि वा। बन्द्धुम् बन्धुं(48)वा। सवर्णे किम्? तर्प्ता। इह

**६६। उदात्तादनुदात्तस्य स्वरितः।**

**६७। नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्।**

छन्दः सूत्रे द्वे।

**६८। अ अ इति।**

अकारस्य शास्त्रे विवृतोपदेशः प्रतिज्ञातः। स प्रयोगे संवृतो भवति। वृक्षः। सिद्धिः। इति।

काशिकाभागवृत्त्योश्चेत् सिद्धान्तं बोद्धुमस्ति धीः।
तदा विचिन्त्यतां भ्रातर्भाषावृत्तिरियं मम ॥ १ ॥ (49)

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृतायां भाषावृत्ता-
वष्टमाध्यायस्य चतुर्थः पादः ॥८। ॥

---

समाप्तश्च रेफपादोऽष्टमोऽध्यायश्च ॥

इति महामहोपाध्यायश्रीपुरुषोत्तमदेवकृता भाषावृत्तिः समाप्ता ॥

---

(48) ऊर्ग्ंगीयते ऊर्गींयते वा। ऊर्ग्घाल्यते ऊर्घाल्यते वा। अमाड्ंडीनः अमाडींनः वा। भिन्त्त्तः भिन्त्तः वा। अभिन्त्थाः अभिन्थाः वा। अत्तिंः अत्तं्तिः वा। झरः किम्? शार्ङ्गलिकः। शार्ङ्गम्। झरि किम्? सक्थ्ना। प्रियपञ्च्ञः। हलः परस्य किम्? वाग्ग्मी। भित्ता। राज्ञा। लिड्ढौकते। सवर्णे किम्? तर्प्ता। ईर्त्ंस्यति। मर्त्ंसनम्।

(49) काशिकाभागवृत्त्योश्चेद् व्याख्यातुं मतमस्ति धीः।
तदा विलोक्यतां भ्रातर् भाषावृत्तिरियं मम ॥ १ ॥ इति पाठान्तरम्।

THE APPENDIX.

# (१) अथ गणपाठः ।

## प्रथमोऽध्यायः ।

सर्वादिः ।१।१।२७॥ सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । (1) पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । (2) स्वमज्ञातिधनाख्यायाम् । (3) अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ १ ॥

स्वरादिः ।१।१।३७॥ स्वर् अन्तर् प्रातर् । अन्तोदात्ताः । पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् । पृथक् । आद्युदात्ताः । ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् जोषम् तूष्णीम् बहिस् अधस् अवस् समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ इद्धा अद्धा सामि । अन्तोदात्ताः । वत् [ ५।१।११५ ] ब्राह्मणवत् क्षत्रियवत् । सना सनत् सनात् उपधा तिरस् । आद्युदात्ताः । अन्तरा । अन्तोदात्तः । अन्तरेण ज्योक् कम् शम् सहसा अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्ट्या वृथा मिथ्या । (1) क्त्वातोसुन्कसुनः । (2) कृन्मकारसंध्यक्षरान्तोऽव्ययीभावश्च । पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकम् सार्धम् समम् नमस् हिरुक् । (3) तसिलादयस्तद्धिता एधाच्पर्यन्ताः [ ५।३।७—४६ ] शस्तसी कृत्वसुच् सुच् आस्थालौ । (4) च्व्यर्थाश्च । अम् अथ आम् प्रताम् प्रशान् । आकृतिगणोऽयम् । तेनान्येऽपि । तथाहि । माङ् श्रत् कामम् प्रकामम् भूयस् परम् साक्षात् साचि सत्यम् मंक्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम् संततम् ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अथो मिथु विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्नस् अम्नर् स्थाने वरम् दुष्ठु बलात् अर्वाक् सुदि वदि इत्यादि । तसिलादयः प्राक् पाशपः [ ६।३।३६ ] । शस्प्रभृतयः प्राक् समासान्तेभ्यः [ ५।४।४३—६८ ] मान्तः कृत्वोर्थः । तसिवती । नानाञाविति ॥ २ ॥

चादिः । १ । ४ । ५७ ॥ च वा ह अह एव एवम् न नूनम् शश्वत् युगपत् भूयस् सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम् माकीम् माकिर् नकिम् नकीम् नकिर् आकीम् माङ् नञ् तावत् यावत् त्वा त्वै द्वै रै श्रौषट् वौषट् स्वाहा स्वधा ओम् तथा तथाहि खलु किल अथ सुष्ठु स्म अ इ उ ऋ ऌ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा धिक् हाहा हेहे पाट् प्याट् आहो उताहो हो अहो नो अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन् बत् सम् वशम् सनुकम् छंवट् शङ्के शुकम् खम् सनात् सनतर् नहिकम् सत्यम् ऋतम्

अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुवी कुत अव अनु हा हे है आहोस्वित् शम् कम् दिष्ट्या पशु वट् सह अङ्ग फट् ताजक् भाजक् अये अरे वाट् कुम् खुम् घुम् अम् ईम् सीम् सिम् वै । (१) उपसर्ग-विभक्तिस्वरप्रतिरूपकाश्च निपाताः । आकृतिगणोऽयम् ॥ ३ ॥

प्रादिः ।१।४।५४ ॥ प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप ॥ ४ ॥

ऊर्यादिः १।४।६१ ॥ ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संसकला ध्वंसकला भ्रंसकला गुलगुधा सजूस् फल फली विक्ली आलोष्ठी केवाली केवासी सेवासी पर्याली शेवाली वर्षाली अत्यूमशा वश्मसा मस्मसा मसमसा श्रौषट् वौषट् श्रौषट् वषट् स्वाहा स्वधा पांपी प्रादुस् श्रत् आविस् ॥ ५ ॥

साक्षात्प्रभृतिः ।१।४।७४ ॥ साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे कविसने विहसने प्रतपने प्रादुस् नमस् । आकृतिगणोऽयम् ॥ ६ ॥

---

# द्वितीयोऽध्यायः ।

तिष्ठद्ग्वादिः ।२।१।१७ ॥ तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम् दुःषमम् निःषमम् अपसमम् आयतीसमम् पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् अपरदक्षिणम् संप्रति असंप्रति । (१) इच्प्रत्ययः समासान्तः । [५।४।१२७॥५। ४।१२८] ॥१॥

शौण्डादिः ।२।१।४० ॥ शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण ॥ २ ॥

पात्रेसमितादिः ।२।१।४८ ॥ पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः उदुम्बरकृमिः कूपकच्छपः अवट-कच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरि-शूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकबकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरु-चुरा । आकृतिगणोऽयम् ॥ ३ ॥

व्याघ्रादिः । २।१।५६ ॥ व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक वृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव ॥ आकृतिगणोऽयम् । तेन मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्रः इत्यादिः ॥ ४ ॥

श्रेण्यादिः कृतादिः । २।१।५० ॥ श्रेणि एक पूग मुकुन्द राशि निचय विषय निधान पर इन्द्र देव मुण्ड भूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय पटु पण्डित कुशल चपल निपुण कृपण ॥ १ ॥

कृत मित मत भूत उक्त समाज्ञात समाम्नात समाख्यात संभावित अवधारित अवकल्पित निराकृत उपकृत उपाकृत कलित दलित उदाहृत विश्रुत उदित । २ । आकृतिगणोऽयम् ॥ ६ ॥

शाकपार्थिवादिः । २।१।६० ॥ (A) शाकपार्थिव कुतपसौश्रुत अजातौल्वलि ॥ आकृतिगणोऽयम् । कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका मानोन्मानिका ॥ ७ ॥

श्रमणादिः । ३।१।७० ॥ श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण ॥ ८ ॥

मयूरव्यंसकादिः २।१।७२ ॥ मयूरव्यंसक छात्रव्यंसक काम्बोजमुण्ड यवनमुण्ड । (1) छन्दसि हस्तेगृह्य हस्तगृह्य पादेगृह्य पादगृह्य लाङ्गूलेगृह्य लाङ्गूलगृह्य पुनर्दाय । (2) एहीडादयोऽन्यपदार्थे । एहीडं कर्म एहिपचम् एहिवाणिजा क्रिया अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा उद्धरचूडा आहरचेला आहरवसना आहरसेना आहरवनिता कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् नखप्रचम् निश्चप्रचम् अकिंचन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया । (3) जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति । जहिजोडः ( जहिजोडम् ) जहिस्तम्बम् ( जहिस्तम्बः ) ( उज्जहिस्तम्बम् ) । (4) आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता पचतभृज्जता खादतमोदता खादतवमता खादताचमता आहरनिवपा आहरनिष्किरा आवपनिष्किरा उत्पचविपचा भिन्धिलवणा कृन्धिविचक्षणा पचलवणा पचप्रकूटा ॥ आकृतिगणोऽयम् ॥ तेन अकुतोभयः कान्दिशीकः कान्देशीकः आहोपुरुषिका अहमहमिका यदृच्छा एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् अवश्यकार्यम् ॥ ९ ॥

याजकादिः २।२।९ ॥ याजक पूजक परिचारक परिवेषक परिषेचक स्नापक अध्यापक उत्सादक उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक ॥ १० ॥

राजदन्तादिः २।२।३१ ॥ राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोप्तम् उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरग्वायनि आरग्वायन-बन्धकि चित्ररथवाह्लीकम् अवन्त्यश्मकम् शूद्रार्यम् स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतम् गाजवाजम् गोजवाजम् गोपालिधानपूलासम् गोपालधानीपूलासम् पूलासकारण्डम् पूलासककुरण्डम् स्थूलपूलासम् उशीरबीजम् सिञ्जास्थम् सिञ्जाश्वत्थम् चित्रास्वाती भार्यापती दंपती जंपती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरोबीजम् शिरोजानु सर्पिर्मधुनी मधुसर्पिषी आद्यन्तौ अन्तादी गुणवृद्धी वृद्धिगुणौ ॥ ११ ॥

आहिताग्न्यादिः २।२।३७ ॥ आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत मद्यपीत ऊढभार्य गतार्थ ॥ आकृतिगणोऽयम् ॥ तेन गडुकण्ठ अस्युद्यत दण्डपाणिप्रभृतयोऽपि ॥ १२॥

---

(A) "वार्तिकोक्तो गण आकृतिगण" इति भाष्यप्रदीपोद्योते नागेशभट्टः ।

काडारादिः २।२।३८ ॥ कडार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गल पिङ्गल तनु तनु जठर बधिर मठर कञ्ज बर्बर ॥ १३ ॥

नावादिः २।२।१७ ॥ नौ काक अन्न शुक शृगाल ॥ १४ ॥

प्रकृत्यादिः २।३।१८ ॥ प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र ॥ १५ ॥

गवाश्वादिः २।४।११ ॥ गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवामनम् कुब्ज-किरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोलपम् तृणोपलम् दासीदासम् कुटीकुटम् भागवतीभागवतम् ॥ १६ ॥

दधिपयआदिः २।४।१४ ॥ दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राजककौशिकौ परिव्राट्कौशिकौ प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी श्रद्धातपसी मेधातपसी अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे ॥१७॥

अर्धर्चादिः २।४।३१ ॥ अर्धर्च गोमय कषाय कार्षापण कुतप कुलप कुणप कपाट शूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूप अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन षष्टिक वारबाण वारवारण प्रोथ कपित्थ शाल शील शुल्क शीधु कवच रूण कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस चीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक कर्पट शिखर कल्क वल्कल नटमक नाटमस्तक वलय कुसुम तृण पङ्क कुण्डल किरीट अर्बुद अङ्कुश तिमिर आश्रय भूषण इष्वास मुकुल वसन्त तटाक तडाग पिटक विटङ्क पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास चषाल खण्ड दर विटप रण मृगाल हस्त आर्द्र हल सूत्र ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल छल पुर राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल ककुद खण्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख वल्मीक वर्ष वस्त्र वसु देह उद्यान क्षेह स्तेन स्तन स्वर संगम निष्क क्षेम शूक चत्र पवित्र यौवन कलह मालक पालक मूषिक मण्डल वल्कल कुञ्ज कुञ्ज विहार लोहित विषाण भवन अरण्य पुलिन आसन ऐरावत शूर्प तीर्थ लोमश तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल ॥१८॥

पैलादिः २।४।५९ ॥ पैल शालङ्कि सात्यकि सात्यकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदव्रजि औदमज्जि औदभज्जि दैवस्थानि पैङ्गलोदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्गाहमानि औज्जिहानि औदशुद्धि । तद्राजाच्चाणः ( तद्राज ) ॥ आकृतिगणोऽयम् ॥१९॥

तौल्वल्यादिः २।४।६१ ॥ तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति नैवकि दैवमिति दैमति दैवयज्ञि चाफट्टकि वैल्कि वैकि वैङ्कि आनुहारति आनुराहति पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरि नैमिषि आसिबन्धकि पौष्पिकारेणुपालि वैकर्णि वैरकि वैहति ॥ २० ॥

यस्कादिः २।४।६३ ॥ यस्क लह्य दुह्य अयस्थूण तृणकर्ण सदामत्त कम्बलहार बहिर्योग कर्णाटक पर्णाटक पिण्डीजङ्घ वकसक्थ वकसक्थ विश्रि कुद्रि अजवस्ति मित्रयु रक्षोमुख जङ्घारथ उत्काम कटुक मथक मन्थक पुष्कार पुष्कारसद विषपुट उपरिमेखल क्रोष्टुकमान क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्षुक भलन्दन भडिल भण्डिल ॥२१॥

गोपवनादिः २।४।६७॥ गोपवन शिग्रु बिन्दु भाजन अश्वावतान श्यामाक श्यामक श्यापर्ण ॥ विदाद्यन्तर्गणोऽयम् (४।१।१०४) ॥२२॥

तिककितवादिः २।४।६८॥ तिककितवाः वङ्खरभण्डीरथाः उपकलमकाः पफकनरकाः वकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भाष्ट्रककपिष्ठलाः अग्निवेशदशेरकाः ॥२३॥

उपकादिः २।४।६९ ॥ उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक काशकृत्स्न काशकृत्स्न निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिलक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम जपजन्ध प्रतान अनभिहित कमक वराटक लेखाभ्र कमन्दक पिञ्जूल वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत दामकण्ठ ॥२४॥

---

# तृतीयोऽध्यायः ।

भृशादिः ३।१।१२ ॥ भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संसत् शश्वत् भमत् वेहत् शुचिवर्चस् अण्डर वर्चस् ओजस् सुरजस् अरजस् ॥१॥

लोहितादिः ३।१।१३॥ लोहित चरित नील फेन मद्र हरित दास मन्द ॥२॥

सुखादिः ३।१।१८ ॥ सुख दुःख तृप्त कृच्छ्र अस्र अलीक प्रतीप करुण कृपण सोढ ॥३॥

कण्ड्वादिः ३।१।२७ ॥ कण्डूञ् मन्तु हृणीङ् वल्गु असु महीङ् लाट् लेट् इरस् इरज् इरञ् दुवस् उषस् वेट् मेधा कुषुभ मगध तन्तस् पम्पस् सुख दुःख सपर अरर भिषज् भिष्णज् इषुध वरण चुरण तुरण भुरण गद्गद एला केला खेला लिट् लोट् रेखा द्रवस् तिरस् अगद उरस् तरण पयस् संभूयस् सम्बर ॥ आकृतिगणोऽयम् ॥४॥

नन्द्यादिः ३।१।१३४ ॥ (१) नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्। नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः। (2) सहितपिदमः संज्ञायाम्। सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः ॥५॥

ग्रहादिः (2) ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी। (1) रक्षश्रुवपशां नौ। निरक्षी निश्रावी निवापी निशायी। (2) याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम्। अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी। (3) अचामचित्तकर्तृकाणाम्। अकारी अहारी अविनायी विशायी विषायी (4) विशयी विषयी देशे। विशयी विषयी देशः। (5) अभिभावी भूते। अपराधी उपरोधी परिभवी परिभावी ॥६॥

पचादिः (3) पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् नर मर चम सेव कोप मेघ मर्त व्रण दर्भ सर्प दम्भ दर्प जारभर श्वपच ॥ आकृतिगणः ॥७॥

मूलविभुजादिः॥ ३।२।५ मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिध्र ॥ आकृतिगणोऽयम् ॥८॥

पार्श्वादिः ३।२।१५ ॥ पार्श्व उदर पृष्ठ उत्तान अवमूर्धन् ॥९॥

गम्यादिः ३।३।३ ॥ गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतियोगी ॥१०॥

संपदादिः ३।३।९४ ॥ संपद् विपद् आपद् प्रतिपद् परिषद् ॥११॥

भिदादिः ३।३।१०४ ॥ (1) भिदा विदारणे। (2) छिदा द्वैधीकरणे। विदा। क्षिपा। (3) गुहा गिर्योषध्योः। श्रद्धा मेधा गोधा। (4) आरा शस्त्र्याम्। हारा। (5) कारा बन्धने। क्षिया। (6) तारा ज्योतिषि। (7) धारा प्रपातने। रेखा चूडा पीडा वपा वसा मृजा। (8) कृपेः संप्रसारणं च। कृपा ॥१२॥

भीमादिः ३।४।७४॥ भीम भीष्म भयानक प्रस्कन्द प्रपतन प्रतपन समुद्र स्रुव स्रुक् वृष्टि रक्षः मूर्ख खलति ॥ आकृतिगणोऽयम् ॥१३॥

---

# चतुर्थोऽध्यायः ।

अजादिः ४।१।४ ॥ अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापहाणा अपरापहाणा। (1) संभस्त्राजिनशणपिण्डेभ्यः फलात्। (2) सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्। (3) शूद्रा चामहत्पूर्वा जातिः। क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा। (4) मध्यमा पुंयोगेऽपि। (5) मूलान्नञः। दंष्ट्रा ॥१॥

स्वस्रादिः ४।१।१० ॥ स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ ॥२॥

सपत्न्यादिः ४।१।२८ ॥ समान एक वीर पिण्ड श्व भ्रातृ भद्र पुत्र (1) दासाच्छन्दसि ॥३॥

गौरादिः ४।१।४१ ॥ गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य द्रुण द्रोण हरिण कोकण कारण पटर उणक आमलक कुवल बिम्ब बदर फर्कर कर्करक तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल षाण्डश आढक आनन्द आश्वत्थ सृपाट आखक शष्कुल सूर्य शूर्प सूच यूष यूथ सूप मेथ वल्लक धातक सल्लक मालक मालत साल्वक वेतस वृस अतस भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् (1) अनडुही अनड्वाही। (2) एषणः करणे। देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि गौतम गोतम अयःस्थूण भौरिकि भौलिकि भौलिङ्गि यान मेथ आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन पातन पाठन आस्तरण अधिकरण अधिकार अग्रहायणी (आग्रहायणी) प्रत्यवरोहिणी (3) सुमङ्गलात् संज्ञायाम्। अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड षण्ड उर्द गुर्द शम सूद औड ह्रद भाण्ड कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् सोम सौधर्म। (4) रोहिणी नक्षत्रे। (5) रेवती नक्षत्रे। विकल निष्फल पुष्कल। (6) कटाच्छ्रोणिवचने। (7) पिप्पल्यादयश्च। पिप्पली हरितकी हरीतकी कोशातकी शमी वरी शरी पृथिवी। क्रोष्टृ मातामह पितामह ॥४॥

बह्वादिः ४।१।४५ ॥ बहु पद्धति अञ्चति अङ्कति अंहति शकटि शकति। (1) शक्तिः शस्त्रे। शारि वारि राति। अहि कपि यष्टि मुनि। (2) इतः प्राण्यङ्गात्। (3) कृदिकारादक्तिनः। (4) सर्वतोऽक्तिन्नर्थादित्येके। चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज (5) चन्द्रभागान्नद्याम् ( चन्द्रभागा नद्याम् ) कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद ॥ आकृतिगणोऽयम्। तेन भग गल राग इत्यादि ॥ ५ ॥

शार्ङ्गरवादिः ४।१।७३ ॥ शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय आनिचेय आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काप्य काव्य शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड (2) भोगवद्गौरिमतोः संज्ञायां घादिषु [६।३।४३] नित्यं ह्रस्वार्थम्। (2) नृनरयोर्वृद्धिश्च ॥६॥

क्रौड्यादिः ४।१।८० ॥ क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौठयत चैपयत सैकयत वैल्वयत सौधातकि। (1) सूत युवत्याम्। (2) भोज क्षत्रिये। यौतकि भौरिकि भौलिकि शाल्मलि शालास्थलि कापिष्ठलि गौकक्ष्य ॥७॥

अश्वपत्यादिः ४।१।८४ ॥ अश्वपति शतपति धनपति गणपति स्थानपति यज्ञपति राष्ट्रपति कुलपति गृहपति पशुपति धान्यपति धन्वपति सभापति प्राणपति क्षेत्रपति ॥८॥

उत्सादिः ४।१।८६ ॥ उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन। (1) वष्कयासे। पृथिवी धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलु कुण। (2) उदस्थान देशे। पृषदंश भल्लकीय रथंतर मध्यंदिन बृहत् महत् सत्त्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव (3) ग्रीष्मादच्छन्दसि ॥९॥

बाह्वादिः ४।१।९६ ॥ बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपनिन्दु उपबिन्दु वृषली वृकला चूडा बलाका मूषिका कुशला भगला छगला ध्रुवका धुवका सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्मन् अग्निशर्मन् भद्रशर्मन् सुशर्मन् कुनामन् सुनामन् पञ्चन् सप्तन् अष्टन्। (1) अमितौजसः सलोपश्च। सुधावत् उदञ्चु शिरस् माष शराविन् मरीची क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त कृष्ण युधिष्ठिर अर्जुन साम्ब गद प्रद्युम्न राम उदङ्क। (२) उदकः संज्ञायाम्। (3) संभूयोऽम्भसोः सलोपश्च ॥ आकृतिगणोऽयम् ॥ तेन। सात्त्विकिः जाङ्घिः ऐन्दशर्मिः आजधेनविः इत्यादि ॥१०॥

कुञ्जादिः ४।१।९८ ॥ कुञ्ज ब्रध्न शङ्ख भस्मन् गण लोमन् शठ शाक शुण्डा शुभ विपाश् स्कन्द स्तम्भ ॥११॥

नडादिः ४।१।९९ ॥ नड चर बक मुञ्ज इतिक इतिश उपक लमक। (1) शलङ्कु शलङ्कं च। सप्तल वाजप्य तिक। (2) अग्निशर्मन् वृषगणे। प्राण नर सायक दास मित्र द्वीप पिङ्गर पिङ्गल किङ्कर किङ्कल कातर कातल काश्यप कुश्यप काश्य काल्य काव्य अज अमुष अमुष्य (3) कृष्णरणौ ब्राह्मणवासिष्ठे। अमित्र लिगु चित्र कुमार। (4) क्रोष्टु क्रोष्टं च। लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलंधर युगंधर हंसक दण्डिन् हस्तिन् पिण्ड पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक बदर अश्वल खरप लङ्क इन्ध अस्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप ॥१२॥

बिदादिः ४।१।१०४ ॥ बिद उर्व कश्यप कुशिक भरद्वाज उपमन्यु किलात कन्दर्प विश्वानर ऋषिषेण ऋष्टिषेण ऋतभाग हर्यश्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनक धेनु गोपवन शिग्रु बिन्दु भाजन अश्वावतान

श्यामाक श्यामक श्यावलि श्यापर्ण हरित किंदास वह्यस्क अर्कलूष अर्कलूष बध्योग विष्णुवृद्ध प्रतिबोध रचित रथीतर रथन्तर गविष्ठिर निषाद शबर अलस मठर सूपाक मृदु पुनर्भु पुत्र दुहितृ ननान्दृ। (1) परस्त्री परशुं च ॥१३॥

गर्गादिः ४।१।१०५ ॥ गर्ग वत्स। (1) वाजासे। संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग अगस्ति पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनंजय वृक्ष विश्वावसु जरमाण लोहित शंसित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्कु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष तृक्ष वृक्ष तनु तरुक्ष तलुक्ष तण्ड वतण्ड कपिकत कपि कत कुरुकत अनडुह् कण्व शकल गोकक्ष अगस्त्य कुण्डिनी यज्ञवल्क्य पर्णवल्क अभयजात विरोहित वृषगण रहूगण शण्डिल वर्णक चणक चुलुक मुद्गल मुसल जमदग्नि पराशर जतूकर्ण महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अदरक अररक एलाक पिङ्गल कृष्ण गोलन्द उलूक तितिक्ष भिषज भिषज् भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलु पिप्पलु वृहदग्नि सुलोहिन् सुलाभिन् उक्थ कुटीगु ॥१४॥

अश्वादिः ४।१।११० ॥ अश्व अश्मन् शङ्ख शूद्रक विद पुट रोहिण खर्जूर पिञ्जूल भडिल भण्डिल भडित भण्डित प्रकृत रामोद क्षान्त काश तीक्ष्ण गोलाङ्क अर्क स्वर स्फुट चक्र श्रविष्ठ पविन्द पवित्र गोमिन् श्याम धूम धूम्र वाग्मिन् विश्वानर कुट। (1) शप आत्रेये। जन जड खड ग्रीष्म अर्ह कित विशंप विशाल गिरि चपल चुप दासक वैल्य बैल्व प्राच्य धर्म आनडुह्य। (2) पुंसि जाते। अर्जुन प्रहृत सुमनस् दुर्मनस् मनस् प्रान्त ध्वन आत्रेय। (3) भरद्वाज आत्रेये। उत्स आतव कितव वद धन्य पाद शिव खदिर ॥१५॥

शिवादिः ४।१।११२ ॥ शिव प्रोष्ठ प्रोष्ठिक चण्ड जम्भ भूरि दण्ड कुठार ककुभ अनभिम्लान कोहित सुख संधि मुनि ककुत्स्थ कहोड कोहड कहूय कहय रोध कपिञ्जल कुपिञ्जल खञ्जन वतण्ड तृणकर्ण क्षीरह्रद जलह्रद परिल पथिक पिष्ट हैहय गोपिका कपिलिका जटिलिका बधिरिका मञ्जीरक वृष्णिक खञ्जास खञ्जाह कर्मार रेख लेख आलेखन विश्रवण रवण वर्तनाक्ष ग्रीवाक्ष पिठक विटक पिटाक तृक्षाक नभाक ऊर्णनाभ जरत्कारु पृथा उत्क्षेप पुरोहितिका सुरोहितिका सुरोहिका आर्यश्वेत अर्यश्वेत सुपिष्ट मसुरकर्ण मयूरकर्ण खर्जुरकर्ण कदूरक तक्षन् ऋष्टिषेण गङ्गा विपाश यस्क लह्य द्रुह्य अयस्थूण तृणकर्ण तृण कर्ण पर्ण भलन्द विरूपाक्ष भूमि इला सपत्नी। (1) द्व्यचो नद्याः। (2) त्रिवेणी त्रिवर्णं च (1) आकृतिगणः ॥१६॥

शुभ्रादिः ४।१।१२३ ॥ शुभ्र विष्ट पुर विष्टपुर ब्रह्मकृत शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू लेखाभ्र विकंसा विकास रोहिणी रुक्मिणी धर्मिणी दिश् शालूक अजबस्ति शकंधि विमातृ विधवा शुक विश देवतर शकुनि शुक्र उग्र शातल शतल बन्धकी मृकण्डु विसि अतिथि गोदन्त कुशाम्ब मकष्ट शाताहर पवष्टुरिक सुनामन्। (1) लक्षणश्यामयोर्वासिष्ठे। गोधा कृकलास अणीव प्रवाहण भरत भारत भरम मृकण्डु कर्पूर इतर अन्यतर आलीढ सुदन्त सुदक्ष सुवचस् सुदामन् कद्रुतुद अकशाय कुमारिका कुठारिका किशोरिका अम्बिका जिह्माशिन् परिधि वायुदत्त शकल शलाका खडूर कुबेरिका अशोका गन्धपिङ्गला खडोन्मत्ता अनुदृष्टिन् अनुदृष्टि जरतिन् बलीवर्दिन् विग्र बीज जीव श्वन् अश्मन् अश्व अजिर ॥ आकृतिगणः ॥१७॥

कल्याण्यादिः ४।१।१२६ ॥ कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृति अनुसृष्टि जरती बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री ॥१८॥

गृष्ट्यादिः ४।१।१३६ ॥ गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजबस्ति मित्रयु ॥१९॥

रेवत्यादिः ४।१।१४६ ॥ रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाच ककुदाच चामग्राह ॥२०॥

कुर्वादिः ४।१।१५१ ॥ कुरु गर्गर मङ्गुष अजमार रथकार वावदूक। (1) सम्राजः चत्रिये। कवि मति विमति कापिञ्जलादि वाक् वामरथ पितृमत् इन्द्रजाली एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शालाका शलाका सुर पुर एड्का शुभ्र अभ्र दर्भ केशिनी। (2) वेनाच्छन्दसि। शूर्पणाय श्यावनाय श्यावरथ श्यावपुत्र सत्यंकार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाक शालिन् शालीन कर्तृ हर्तृ इन पिण्डी तक्षन् (3) वामरथस्य कण्वादिवत् स्वरवर्जम् ॥२१॥

तिकादिः ४।१।१५४ ॥ तिक कितव संज्ञावालशिख संज्ञा वाला शिखा उरस् शाट्य सैन्धव यमुन्द रूप्य ग्राम्य नील अमित्र गौकक्ष कुरु देवरथ तैतिल औरस कौरव्य भौरिकि चौपयत शौकयत वाजवत चन्द्रमस् शुभ गङ्गा वरेण्य सुयामन् आरब्ध वाह्यक खल्यक वृष लोमक उदन्य यज्ञ ॥३२

वाकिनादिः ४।१।१५८ ॥ वाकिन गौधेर कार्कश काक लङ्का। (1) चर्मिवर्मिणोर्नलोपश्च ॥२३॥

काम्बोजादिः ३।१।१७५ ॥ काम्बोज चोल केरल शक यवन ॥२४॥

भर्गादिः ४।१।१७८ ॥ १ भर्ग करूश केकय कश्मीर साल्व सुस्थाल उरस् कौरव्य ॥२५॥

२ यौधेयादिः ॥ यौधेय शौक्रेय शौभ्रेय ज्यावाणेय धौर्तेय धार्तेय त्रिगर्त भरत उशीनर ॥२६॥

भिक्षादिः ॥४।२।३८ ॥ भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मिन् धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा भरत विषय श्रोत्र ॥२७॥

खण्डिकादिः ४।२।४५ ॥ खण्डिका वडवा। (1) क्षुद्रकमालवात् सेनासंज्ञायाम्। भिक्षुक शुक उलूक श्वन् अहन् युगवरत्रा हलबन्धा ॥२८॥

पाशादिः ४।२।४९ ॥ पाश तृण धूम वात अङ्गार पाटल पोटगल पिटक पिटाक हल नट वन ॥२९॥

खलादिः ४।२।५१ ॥ खल डाक कुटुम्ब शाक कुण्डलिनी ॥ ३० ॥

राजन्यादिः ४।३।५३ ॥ राजन्य आनृत बाभ्रव्य शालङ्कायन दैवयातव देवयात अव्रीड वरत्रा जालंधरायण राजायन तेलु आत्मकामेय अम्बरीषपुत्र वसाति बैल्वन शैलूष उदुम्बर तीव्र बैल्वल आर्जुनायन संप्रिय दाक्षिकर्णनाभ ३१ ॥

भौरिक्यादिः ४।२।५४ ॥ १ भौरिकी मौलिकी चौपयत चौपटत चैटयत काणेय वाणिजक वाणिकाज्य वालिकाज्य सैकयत वैकयत ॥ ३२ ॥

ऐषुकार्यादिः। ऐषुकारि सारस्यायन सारसायन चान्द्रायण द्व्याचायण त्र्याचायण औडायन जौलायन खाडायन दासमित्रि दासमित्रायण शौद्रायण दाक्षायण शापण्डायन शायण्डायन तार्क्ष्यायण शौभायण सौवीर सोवीरायण शपण्ड शयण्ड शौण्ड शयाण्डि शयाण्ड वैश्वमानव वैश्वधेनव वैश्वधेनव नड तुण्ड देव विश्वदेव सापिण्डि ॥ ३३ ॥

उक्थादिः ४।२।६० ॥ उक्थ लोकायत न्यास न्याय पुनरुक्त निरुक्त निमित्त द्विपदा ज्योतिष अनुपद अनुकल्प यज्ञ धर्म चर्चा क्रमेतर श्लक्ष्ण संहिता पदक्रम संघट संघट्ट वृत्ति परिषद् संग्रह गण गुण आयुर्वेद आयुर्वेद ॥ ३४ ॥

क्रमादिः ४।२।६१ ॥ क्रम पद शिक्षा मीमांसा सामन् ॥ ३५ ॥

वसन्तादिः ४।२।६३ ॥ वसन्त ग्रीष्म वर्षा शरद् हेमन्त शिशिर प्रथम गुण चरम अनुगुण अथर्वन् आथर्वण ॥ ३६ ॥

संकलादिः ४।२।७५ ॥ संकल पुष्कल उत्तम उडुप उद्वेष उत्पुट कुम्भ निधान सुदक्ष सुदत्त सुभूत सुपूत सुनव सुमङ्गल सुपिङ्गल सूत सिकत पूतिका पूतिक पूलास कूलात निवेश गवेश गम्भीर इतर अन् अहन् लोमन् वेमन् चरण वरुण बहुल अभिषिक्त गोभृत् राजभृत् भल्ल मल्ल माल ॥ ३७ ॥

सुवास्त्वादिः ४।२।७७ ॥ सुवास्तु सुवस्तु वर्णु भण्डु खण्डु सेवालिन् कर्पूरिन् शिखण्डिन् गर्त कर्कश शकटीकर्ण कृष्णकर्ण कर्क कर्कन्धुमती गोह अहिसक्थ ॥ ३८ ॥

अरीहणादिः ४।२।८० ॥ अरीहण अह्वीरण द्रुघण द्रुहण भलग भगल उलन्द किरण सांपरायण कौष्ठायण औष्ठायण त्रैगर्तायन मैत्रायण भास्त्रायण वैमतायण वैमतायन गौमतायन सौमतायन सौसायन धौमतायन सौमायन ऐन्द्रायण कौन्द्रायन कौद्रायण खाडायन शाण्डिल्यायन रायस्पोष विपथ विपाश उद्दण्ड उदञ्चन खाण्डवीरण वीरण काशकृत्स्न जाम्बवत शिंशपा रैवत रैवतविल्व सुयज्ञ शिरीष बधिर जम्बु खदिर सुशर्मन् सशर्मन् भलन्दन कलन यज्ञदत्त ॥ ३९ ॥

कृशाश्वादिः । कृशाश्व अरिष्ट अरिश्म वेश्मन् विशाल लोमश रोमश रोमक लोमक शबल कूट वर्चल सुवर्चल सुकर सूकर प्रातर् प्रतर सदृश पुरग पुराग सुख धूम अजिन विनत अवनत कुविद्या पराशर अरुस् अयस् ॥ ४० ॥

ऋश्यादिः । ऋश्य न्यग्रोध शर निलीन निवास नियात निधान निबन्धन निबन्ध विबद्ध परिगूढ उपगूढ असनि सित मत वेश्मन् उत्तराश्मन् अश्मन् स्थूलबाहु खदिर शर्करा अनडुह अनडुह् अरडु परिवंश वेणु वीरण खण्ड दण्ड परिवृत्त कर्दम अंशु ॥ ४१ ॥

कुमुदादिः । कुमुद शर्करा न्यग्रोध इक्कट संकट कङ्कट गर्त बीज परिवाप निर्यास शकट कच मधु शिरीष अश्व अश्वत्थ बल्वज यवास कूप विकङ्कट दशग्राम ॥ ४२ ॥

काशादिः । काश पाश अश्वत्थ पलाश पीयूक्षा चरण वास नड वन कर्दम कच्छूल कङ्कट गुह बिस तृण कर्पूर बर्बर मधुर ग्रह कपित्थ जतु सीपाल ॥ ४३ ॥

तृणादिः । तृण नड मूल वन पर्ण वर्ण वरण बिल पुल फल अर्जुन अर्ण सुवर्ण बल चरण बुस ॥ ४४ ॥

प्रेक्षादिः । प्रेक्षा फलका हलका बन्धुका ध्रुवका क्षिपका न्यग्रोध बक्कट कङ्कट संकट कट कूप बुक पुक पुट मह परिवाप यवास धुवका गर्त कूपक हिरण्य ॥ ४५ ॥

अश्मादिः । अश्मन् यूथ ऊष मीन दर्भ वृन्द गुद खण्ड नग शिखा कोट पाम कन्द कान्द कुल गह गुड कुण्डल पीन गुह ॥ ४६ ॥

सख्यादिः । सखि अग्निदत्त वायुदत्त सखिदत्त भल्लपाल भल्ल पाल चक्र चक्रवाक छगल अशोक करवीर वासव चीर पूर वज्र कुशीरक शीहर सीहर सपक सरस समप समल सुरस रोह तमाल कदल सप्तल ॥ ४७ ॥

संकाशादिः । संकाश कपिल कश्मीर समीर सूरसेन सरक सूर । (I) सुपथिन् पन्थ च । यूप यूथ

अंश अङ्क नासा पलित अनुनाश अश्मन् कूट मलिन दश कुम्भ शीर्ष चिरन्तन विरत समल सीर पञ्जर मन्थ नल रोमन् लोमन् पुलिन सुपरि कटिप सकर्णक वृष्टि तीर्थ अगस्ति विकर नासिका ॥४८॥

बलादिः। बल चुल नल दल बट लकुल उरल पुख पुल मूल उलडुल उल डुल वन कुल ॥ ४९ ॥

पक्षादिः। पक्ष तुक्ष तुष कुण्ड अण्ड कम्बलिका बलिक चित्र अस्ति। (1) पथः पन्थ च। कुम्भ सीरक सरक सकल सरस समल अतिश्वन् रोमन् लोमन् हस्तिन् मकर लोमक शीर्ष निवात पाक सहक अङ्कुश सुवर्णक हंस हिंसक कुत्स बिल खिल यमल हस्त कला सकर्णक ॥ ५० ॥

कर्णादि। कर्ण वसिष्ठ अर्क अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिग् (स्फिज्) कुम्भी कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत् आण्डीवत जैव जैत्र आकन आनक ॥ ५१ ॥

सुतंगमादिः। सुतंगम मुनिचित विप्रचित्त महाचित्त महापुत्र स्वन श्वेत गडिक खडिक शुक्र विग्र बीजवापिन् अर्जुन श्वन् अजिर जीव खड्गण्डत कर्ण विग्रह ॥ ५२ ॥

प्रगद्यादिः। प्रगदिन् मगदिन् मददिन् कविल खण्डित गदिल चूड़ार भडार मन्दार कोविदार ॥५३॥

वराहादिः। वराह पलाश पलाश शिरीष शिरीष विनद्ध निबद्ध बलाहक स्थूल विदग्ध विजग्ध निमग्न निभग्न बाहु खदिर शर्करा ॥ ५४ ॥

कुमुदादिः। कुमुद गोमय रथकार दशग्राम अश्वत्थ शाल्मलि शिरीष मुनिस्थल कुण्डल कूट मधुकर्ण घासकुन्द शुचिकर्ण ॥ ५५ ॥

वरणादिः ४।२।८२ ॥ वरणा शृङ्गी शाल्मलि शुण्डी शयाण्डी पर्णी ताम्रपर्णी गोद आलिङ्ग्यायन जालपदी जानपदी जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयिनी गया मथुरा तक्षशिला उरसा गोमती बलभी ॥ ५६ ॥

मध्वादिः ४।२।८६ ॥ मधु बिस स्थाणु वेणु कर्कन्धु समी करीर हिम किशरा शर्याण मरुत् वार्दाली शर इष्टका आसुति शक्ति आसन्दी शकल शलाका आमिषी इक्षु रोमन् रुष्टि रुष्य तक्षशिला कड वट वेट ॥ ५७ ॥

उत्करादिः ४।२।९० ॥ उत्कर संफल शफर पिप्पल पिप्पलीमूल अश्मन् सुवर्ण खलाजिन तिक कितव अणक त्रैवण पिचुक अश्वत्थ काश क्षुद्र भस्त्रा शाल जन्या अजिर चर्मन् उत्क्रोश शान्त खदिर शूर्पणाय श्यावनाय नैवाकव तृण वृक्ष शाक पलाश विजिगीषा अनेक आतप फल संपर अर्क गर्त अग्नि वैराणक इडा अरण्य निशान्त पर्ण नीचायक शंकर अवरोहित क्षार विशाल वेत्र अरीहण खण्ड वातागार मन्त्रणार्ह इन्द्र-वृक्ष नितान्तवृक्ष आर्द्रवृक्ष ॥ ५८ ॥

नड़ादिः ४।२।९१ ॥ नड़ प्लक्ष बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण। (1) क्रुञ्चा ह्रस्वत्वं च। (2) तक्षन्नलोपश्च ॥ ५९ ॥

कत्र्यादिः ४।२।९५ ॥ कत्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्मती उख्या ग्राम ॥ कुड्याया यलोपश्च ॥ ६० ॥

नद्यादिः ४।२।९७ ॥ नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफारी काशफरी खादिरी पूर्वनगरी पाठा माया शाल्वदार्वा सेतकी। (1) वाड़वाया वृषे ॥ ६१ ॥

पलद्यादिः ४।२।११० ॥ पलदी परिषद् रोमक वाह्लीक कलकीट बहुकीट जालकीट कमलकीट कमल-कीकर कमलभिदा गोष्ठी नैकती परिखा शूरसेन गोमती पटच्चर उदपान यकृल्लोम ॥ ६२ ॥

काश्यादिः ४।२।११६ ॥ काशि चेदि वेदि सांयाति संवाह अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भारङ्गी अरिंदम अरित्र देवदत्त दशग्राम शौवावतान उपराज युवराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र साधुमित्र। (1) आपदादिपूर्वपदात्कालान्तात्। आपद ऊर्ध्वं तत् ॥ ६३ ॥

धूमादिः ४।२।१२७ ॥ धूम खण्ड शशादन अर्जुनाव माहकस्थली आणकस्थली माहिषस्थली मानस्थली अट्टस्थली मद्रकस्थली समुद्रस्थली दाण्डायनस्थली राजस्थली विदेह राजगृह सात्रासाह शष्प मित्रवर्ध्र मित्रवर्ध भक्षाली मद्रकूल आजीकूल द्व्याहाव त्र्याहाव संस्फाय बर्बर वर्च्य गर्त आनर्त माठर पाथेय घोष पल्ली आराज्ञी धार्तराज्ञी आवय तीर्थ। (1) कूलात्सौवीरेषु। (2) समुद्रान्नावि मनुष्ये च। कुक्षि अन्तरीप द्वीप अरुण उज्जयनी पट्टार दक्षिणापथ साकेत ॥ ६४ ॥

कच्छादिः ४।२।१३३ ॥ कच्छ सिन्धु वर्णु गन्धार मधुमत् कम्बोज कश्मीर साल्व कुरु अनुषण्ड द्वीप अनूप अजवाह विजापक कलूतर रङ्कु ॥ ६५ ॥

गहादिः ४।२।१३८ ॥ गह अन्तस्थ सम विषम मध्य। (1) मध्यंदिन चरणे। उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ खाडायन काठेरणि लावेरणि सौमित्रि शैशिरि दैवशर्मि श्रौति आहिंसि आमित्रि व्याडि वैजि आध्यश्वि आनृशंसि शौङ्गि आग्निशर्मि भौजि वाराटकि वाल्मिकि वाल्मीकि क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐकबिन्दवि दन्ताग्र हंस तत्वग्र तन्त्वग्र उत्तर अन्तर अनन्तर (2) मुखपार्श्वतसोर्लोपः। (3) जनपरयोः कुक् च। (4) देवस्य च। (5) वेणुकादिभ्यश्छण्। आकृतिगणः ॥६६॥

संधिवेलादिः ४।३।१६ ॥ संधिवेला संध्या अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रतिपत्। (1) संवत्सरात् फलपर्वणोः ॥६७॥

दिगादिः ४।३।५४ ॥ दिश् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेघ यूथ। (1) उदकात्संज्ञायाम्। न्याय वंश वेश काल आकाश ॥६८॥

परिमुखादिः ४.३।५९ ॥ परिमुख परिहनु पर्योष्ठ पर्युलूखल परिसीर उपसीर उपस्थूण उपकलाप अनुपथ अनुपद अनुगङ्ग अनुतिल अनुसीत अनुसाय अनुसीर अनुमाष अनुयव अनुयूप अनुवंश प्रतिशाख ॥२१॥

अध्यात्मादिः ४।३।६० ॥ अध्यात्म अधिदैव अधिभूत इहलोक परलोक ॥ आकृतिगणः ॥ ॥७० ॥

ऋगयनादिः ४।३।७३ ॥ ऋगयन पदव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति न्याय पुनरुक्त निरुक्त व्याकरण निगम वास्तुविद्या क्षत्रविद्या अङ्गविद्या विद्या उत्पात उत्पाद उद्याव संवत्सर मुहूर्त उपनिषद् निमित्त शिक्षा भिक्षा ॥७१॥

शुण्डिकादिः ४।३।७६ ॥ शुण्डिक कृकण कृपण स्थण्डिल उदपान उपल तीर्थ भूमि तृण पर्ण ॥७२॥

शण्डिकादिः ४।३।९२ ॥ शण्डिक सर्वसेन सर्वकेश शक शट रक शङ्ख बोध ॥७३॥

सिन्ध्वादिः ४।३।९३ ॥ १ सिन्धु वर्णु मधु कम्बोज साल्व कश्मीर गन्धार किष्किन्धा उरसा दरद (दरद) गन्दिका ॥७४॥

तक्षशिलादिः। तक्षशिला वत्सोद्धरण कौमेदुर ग्रामणी छगल क्रोष्टुकर्ण सिंहकर्ण संकुचित किंनर काण्डधार पर्वत अवसान बर्बर कंस ॥७५॥

शौनकादिः ४।३।१०६ ॥ शौनक वाजसनेय शार्ङ्गरव शापेय शाष्पेय खाडायन स्तम्भ स्कन्ध देवदर्शन रज्जुभार रज्जुकण्ठ कठशाट कषाय तल तण्ड पुरुषांसक अश्वपेज ॥७६॥

कुलालादिः ४।३।११८ ॥ कुलाल वरुड चाण्डाल निषाद कर्मार सेना सिरिन्ध्र सिरिन्ध्रि देवराज परिषत् ( पर्षत् ) वधू मधु रुरु रुद्र अनडुह ब्रह्मन् कुम्भकार श्वपाक ॥७७॥

रैवतिकादिः ४।३।१३१ ॥ रैवतिक स्वापिशि क्षैमवृद्धि गौरग्रीव औदमेघि औदवापि बैजवापि ॥७८॥

बिल्वादिः ४।३।१३६ ॥ बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु वेणु गवेधुका कर्पासी पाटली कर्कन्धू कुटीर ॥७९॥

पलाशादिः ४।३।१४१ ॥ पलाश खदिर शिंशपा स्पन्दन पुलाक करीर शिरीष यवास विकङ्कत ॥८०॥

शरादिः ४।३।१४४ ॥ शर दर्भ मृद कुटी तृण सोम बल्वज ॥ ८१ ॥

तालादिः ४।३।१५२ ॥ (I) तालाद्धनुषि । बार्हिण इन्द्रालिश इन्द्रादृश इन्द्रायुध चय श्यामाक पीयूक्षा ॥ ८२ ॥

रजतादिः ४।३।१५४ ॥ रजत सीस लोह उदुम्बर नीप दारु रोहितक बिभीतक पीतदारु त्रिकण्टक कण्टकार ॥८३॥

प्लक्षादिः ४।३।१६४ ॥ प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु रुरु कक्षतु बृहती ॥८४॥

हरीतक्यादिः ४।३।१६७ ॥ हरीतकी कोशातकी नखरजनी शष्कण्डी दाडी दोडी श्वेतपाकी अर्जुनपाकी द्राक्षा काला ध्वाक्षा गर्भीका कण्टकारिका पिप्पली चिञ्चा शेफालिका ॥८५॥

माशब्दादिः ४।४।१ ॥ माशब्दः नित्यशब्दः कार्यशब्दः ॥८६॥

प्रभूतादिः ४।४।१ ॥ प्रभूत पर्याप्त ॥८७॥

सुस्नातादिः ४।४।१ ॥ सुस्नात सुखरात्रि सुखशयन ॥८८॥

परदारादिः ४।४।१ ॥ परदार गुरुतल्प ॥८९॥

पर्पादिः ४।४।१० ॥ पर्प अश्व अश्वत्थ रथ जाल न्यास व्याल । (I) पाद, पञ्च ॥९०॥

वेतनादिः ४।४।१२ ॥ वेतन वाहन अर्धवाह धनुर्दण्ड जाल वेश उपवेश प्रेषण उपवस्ति सुख शय्या शक्ति उपनिषद् उपदेश स्फिज् ( स्फिज ) पाद उपस्थ उपस्थान उपहस्त ॥९१॥

उत्सङ्गादिः ४।४।१५ ॥ उत्सङ्ग उडुप उत्पुत उत्पन्न उत्पुट पिटक पिटाक ॥९२॥

भस्त्रादिः ४।४।१६ ॥ भस्त्रा भरट भरण शीर्षभार शीर्षेभार अंसभार अंसेभार ॥९३॥

अक्षद्यूतादिः ४।४।१९ ॥ अक्षद्यूत जानुप्रहृत जङ्घाप्रहृत जङ्घाप्रहत पादस्वेदन कण्टकमर्दन गतानुगत गतागत यातायात अनुगत ॥ ९४ ॥

महिष्यादिः ४।४।४८ ॥ महिषी प्रजापति प्रजावती प्रलेपिका विलेपिका अनुलेपिका पुरोहित मणिपाली अनुवारक अनुचारक होतृ यजमान ॥ ९५ ॥

किसरादिः ४।४।५३ ॥ किसर नरद नलद स्थागल तगर गुग्गुलु उशीर हरिद्रा हरिद्रु पर्णी ॥ ९६ ॥

छत्रादिः ४।४।६२ ॥ छत्र शिक्षा प्ररोह स्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा विशिका भक्षा उदस्थान पुरोडा विक्षा मन्द्र ॥ ९७ ॥

प्रतिजनादिः ४।४।९९ ॥ प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्वजन विश्वजन महाजन पञ्चजन ॥ ९८ ॥

कथादिः ४।४ १०२ ॥ कथा विकथा विश्वकथा संकथा वितण्डा कुष्ठवित् जनवाद जनेवाद वृत्ति संग्रह गुण गण आयुर्वेद ॥ ९९ ॥

गुडादिः ४।४।१०३ ॥ गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु सङ्ग्राम संघात संक्राम संवाह प्रवास निवास उपवास ॥ १०० ॥

---

# पञ्चमोऽध्यायः ।

गवादिः ५।१।२ ॥ गो हविस् अक्षर विष बर्हिस् अष्टका स्खदा युग मेधा स्रुच् । (1) नाभि नभं च । (2) शुनः संप्रसारणं वा च दीर्घत्वं तत्संनियोगेन चान्तोदात्तत्वम् । (3) ऊधसोऽनङ् च । कूप खद दर खर असुर अध्वन् वेद बीज दीप्त ॥ १ ॥

अपूपादिः ५ १।४ ॥ अपूप तण्डुल अभ्युष अभ्योष अवोष अभ्येष पृथुक ओदन सूप पूप किण्व प्रदीप मुसल कटक कर्णवेष्टक अर्गल । (1) अन्नविकारेभ्यश्च । यूप स्थूणा दीप अश्व पत्त्र ॥ २ ॥

निष्कादिः ५।१।२०॥ निष्क पण पाद माष वाह द्रोण षष्टि ॥ ३ ॥

अश्वादिः ५।१।३९ ॥ अश्व अश्मन् गण ऊर्णा उमा भङ्गा वर्ण गङ्गा वर्षा वसु ॥ ४ ॥

वंशादिः ५।१।५० ॥ वंश कुटज बल्वज मूल स्थूणा स्थूण अक्ष अश्मन् अश्व श्लक्ष्ण मूल इक्षु खट्वा ॥ ५ ॥

छेदादिः ५।१।६४ ॥ छेद भेद द्रोह दोह नर्त कर्ष तीर्थ संप्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण संप्रश्न विप्रश्न विकर्ष प्रकर्ष । (1) विराग विरङ्गं च ॥ ६ ॥

दण्डादिः ५।१।६६ ॥ दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग ॥ ७ ॥

महानाम्न्यादिः ५।१।९४ ॥ महानाम्नी आदित्यव्रत गोदान ॥ ८ ॥

अवान्तरदीक्षादिः ५।१।९४ ॥ अवान्तरदीक्षा तिलव्रत देवव्रत ॥ ९ ॥

व्युष्टादिः ५।१।९७ ॥ व्युष्ट नित्य निष्क्रमण प्रवेशन उपसंक्रमण तीर्थ आस्तरण सङ्ग्राम संघात अग्निपद पीलुमूल पीलु मूल प्रवास उपवास ॥ १० ॥

संतापादिः ५।१।१०१ ॥ संताप संनाह संग्राम संयोग संपराय संवेशन संपेष निष्पेष सर्ग निसर्ग विसर्ग उपसर्ग प्रवास उपवास संघात संवेष संवास संमोदन सक्तु । (1) मांसौदनाद्विगृहीतादपि ॥ ११ ॥

उपवस्त्रादिः ५।१।१०५ ॥ उपवस्त्र प्राशित चूडा श्रद्धा ॥ १२ ॥

अनुप्रवचनादिः ५।१।१११ ॥ अनुप्रवचन उत्थापन उपस्थापन संवेशन प्रवेशन अनुप्रवेशन अनुवासन अनुवचन अनुवाचन अन्वारोहण प्रारम्भण आरम्भण आरोहण ॥ १३ ॥

स्वर्गादिः ५।१।१११ ॥ स्वर्ग यशस् आयुस् काम धन ॥ १४ ॥

पुण्याहवाचनादिः ५।१।१११ ॥ पुण्याहवाचन स्वस्तिवाचन शान्तिवाचन ॥ १५ ॥

पृथ्वादिः ५।१।१२२॥ पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिंचन बाल होड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु॥ १६॥

दृढादिः ५।१।१२३॥ दृढ वृढ परिवृढ भृश कृश वक्र शुक्र आम्र कष्ट लवण ताम्र शीत उष्ण जड बधिर मधुर मूर्ख मूक स्थिर (1) वेर्यातलाभमतिमनःशारदानाम्। (2) समो मतिमनसोः। जवन॥ १७॥

ब्राह्मणादिः ५।१।१२४॥ ब्राह्मण वाडव माणव। (1) अर्हतो नुम् च। चोर धूर्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ विश्न बालिश अलस दुष्पुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात। (1) सर्ववेदादिभ्यः स्वार्थे। (2) चतुर्वेदस्योभयपदवृद्धिश्च। शौटीर। आकृतिगणोऽयम्॥१८।

चतुर्वर्णादिः ५।१।१२४॥ चतुर्वर्ण चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर संनिधि समीप उपमा सुख तदर्थ इतिह मणिक॥१९॥

पुरोहितादिः ५।२।१२८॥ पुरोहित। (1) राजासे। ग्रामिक पिण्डिक सुहित बालमन्द बाल मन्द खण्डिक दण्डिक वर्मिक कर्मिक धर्मिक शीलिक सूतिक मूलिक तिलक अञ्जलिक रूपिक ऋषिक पुत्रिक अविक छत्रिक पथिक प्रतिक सारथि आस्तिक सूचिक संरक्ष सूचक संरक्षसूचक नास्तिक अजानिक नागर चूडिक॥२०॥

उद्गात्रादिः ५।१।१२९॥ उद्गातृ उन्नेतृ प्रतिहर्तृ प्रशास्तृ होतृ पोतृ हर्तृ रथगणक पत्तिगणक सुष्ठु दुष्ठु अध्वर्यु वधू सुभग मन्त्र॥२१॥

युवादिः ५।१।१३०॥ युवन् स्थविर होतृ यजमान (1) पुरुषासे। भ्रातृ कुतुक श्रमण कटुक कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय सुहृद दुर्हृद सुभ्रातृ दुर्भ्रातृ वृषल परिव्राजक सब्रह्मचारिन् अनृशंस। (2) हृदयासे। कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ। (3) श्रोत्रियस्य यलोपश्च॥२२॥

मनोज्ञादिः ५।१।१३३॥ मनोज्ञ प्रियरूप अभिरूप कल्याण मेधाविन् आढ्य कुलपुत्र छान्दस छात्र श्रोत्रिय चोर धूर्त विश्वदेव युवन् कुपुत्र ग्रामपुत्र ग्रामकुलाल ग्रामषण्ड ग्रामकुमार सुकुमार बहुल अवश्यपुत्र अमुष्यपुत्र अमुष्यकुल सारपुत्र शतपुत्र॥ २२॥

पील्वादिः ५।२।२४ पीलु कर्कन्धु कर्कन्धु शमी करीर बल कुवल बदर अश्वत्थ खदिर॥ २४॥

कर्णादिः। कर्ण अक्षि नख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ॥ २५॥

तारकादिः ५।२।३६॥ तारका पुष्प कर्णक मञ्जरी ऋजीष क्षण सूत्र मूत्र निष्क्रमण पुरीष उच्चार प्रचार विचार कुड्मल कण्टक मुसल मुकुल कुसुम कुतूहल स्तवक किसलय पल्लव खण्ड वेग निद्रा मुद्रा बुभुक्षा धेनुष्या पिपासा श्रद्धा अभ्र पुलक अङ्गारक वर्णक द्रोह सुख दुःख उत्कण्ठा भर व्याधि वर्मन् व्रण गौरव शास्त्र तरङ्ग तिलक चन्द्रक अन्धकार गर्व मुकुर हर्ष उत्कर्ष रण कुवलय गर्ध क्षुध् सीमन्त ज्वर गर रोग रोमाञ्च पण्ड कज्जल तृष् कोरक कल्लोल स्थपुट फल कञ्चुक शृङ्गार अङ्कुर शैवल बकुल श्वभ्र आराल कलङ्क कर्दम कन्दल मूर्च्छा अङ्गार हस्तक प्रतिबिम्ब विघ्नतन्त्र प्रत्यय दीक्षा गर्ज। (1) गर्भादप्राणिनि॥ आकृतिगणः॥ २६॥

विमुक्तादिः ५।२।६१॥ विमुक्त देवासुर रक्षोसुर उपसद सुवर्ण परिसारक सदसत् वसु मरुत् पत्नीवत्

वसुसत् सत्वत बर्हवत् दशार्ण दशार्ह वयस् हविर्धान पतत्रिन् महिवी अस्यहत्य सोमापूषन् इडा अग्राविष्णू उर्वशी वृत्रहन् ॥ २७ ॥

गोषदादिः ५।२।६२॥ गोषद इषेत्वा मातरिश्वन् देवस्यत्वा देवीरापः कृष्णोस्याखरेष्ठः देवींधिया देवींधीय रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूर्त कृशानु कृशाकु ॥ २८ ॥

आकर्षादिः ५।२।६४ ॥ आकर्ष (आकष) त्सरु पिशाच पिचण्ड अशनि अश्मन् निचय जय चय विजय अचय नय पाद दीप ह्रद ह्राद ह्लाद गद्गद शकुनि ॥ २९ ॥

इष्टादिः ५।२।८८ ॥ इष्ट पूर्त उपासादित निगदित परिगदित परिवादित निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवहित आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित ॥ ३२ ॥

रसादिः ५।२।९५ ॥ रस रूप वर्ण गन्ध स्पर्श शब्द स्नेह भाव। (1) गुणात् एकाचः ॥३१॥

सिध्मादिः ५।२।९७ ॥ सिध्म गडु मणि नाभि बीज वीणा कृष्ण निष्पाव पांसु पार्श्व पर्शु हनु सक्तु मांस (1) पार्ष्णिधमन्योर्दीर्घश्च। (2) वातदन्तबलललाटानामूङ् च। (3) जटाघटाकालाः क्षेपे। पर्ण उदक प्रज्ञा सक्थ कर्ण स्नेह शीत श्याम पिङ्ग पित्त पुष्क पृथु मृदु मण्ड पत्र चटु कपि गण्डु ग्रन्थि श्री कुश धारा वर्ष्मन् पक्ष्मन् श्लेष्मन् पेश कुण्ड। (4) क्षुद्रजन्तूपतापयोश्च ॥ ३२ ॥

लोमादिः ५।२।१०० ॥ लोमन् रोमन् बभ्रु हरि गिरि कर्क कपि मुनि तरु ॥ ३३ ॥

पामादिः। पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रू वलि सामन् ऊष्मन् कृमि। (1) अङ्गात्कल्याणे। (2) शाकीपलालीदद्रूणां ह्रस्वत्वं च। (3) विष्वगित्युत्तरपदलोपश्चाकृतसंधेः। (4) लक्ष्म्या अच्च ॥३४॥

पिच्छादिः। पिच्छा उरस् ध्रुवका ध्रुवक। (1) जटाघटाकालाः क्षेपे। वर्ण उदक पङ्क प्रज्ञा॥ ३५ ॥

ज्योत्स्नादिः ५।२।१०३ ॥ ज्योत्स्ना तमिस्रा कुण्डल कुतप विसर्प विपादिका ॥ ३६ ॥

व्रीह्यादिः ५।२।११६॥ व्रीहि माया शाला शिखा माला मेखल केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी वीणा बलाका यव खद नौ कुमारी। (1) शीर्षान्नञः ॥ ३७॥

तुन्दादिः ५।२।११७॥ तुन्द उदर पिचण्ड यव व्रीहि। (1) स्वाङ्गाद्विवृद्धौ ॥ ३८ ॥

अर्शआदिः ५।२।१२७॥ अर्शस् उरस् तुन्द चतुर पलित जटा घाटा अभ्र अघ कर्दम अम्ल लवण। (1) स्वाङ्गाद्धीनात्। (2) वर्णात्। आकृतिगणः ॥ ३९ ॥

सुखादिः ५।२।१२१ ॥ सुख दुःख तृप्र कृच्छ्र अस्र आस्र अलीक कठिन सोढ प्रतीप शील हल। (1) माला क्षेपे। कृपण प्रणाय प्रणय दल कक्ष ॥ ४० ॥

पुष्करादिः ५।२।१३५ ॥ पुष्कर पद्म उत्पल तमाल कुमुद नड कपित्थ बिस मृणाल कर्दम शालूक विगर्ह करीष शिरीष यवास प्रवाह हिरण्य कैरव कल्लोल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल कल्लोल पयस् ॥ ४१ ॥

बलादिः ५।२।१३६ ॥ बल उत्साह उद्भास उद्वास शिखा कुल चूडा शूल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह युद्ध ॥ ४२ ॥

भवदादिः ५।३।१४ ॥ भवान् दीर्घायुः देवानांप्रियः आयुष्मान् ॥ ४३ ॥

दिवपथादिः ५।३।१०० ॥ दिवपथ हंसपथ वारिपथ रथपथ स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धगति उष्ट्रग्रीव वामरज्जु हस्त इन्द्र दण्ड पुष्प मत्स्य ॥४४॥

शाखादिः ५।३।१०३ ॥ शाखा मुख जघन शृङ्ग मेघ अभ्र चरण स्कन्ध स्कन्द उरस् शिरस् अग्र शरण ॥ ४५ ॥

शर्करादिः ५।३।१०७ ॥ शर्करा कपालिका कपाटिका कपिष्ठिका कनिष्ठिका पुण्डरीक शतपत्र गोलोमन् लोमन् गोपुच्छ नकुल सिकता ॥ ४६ ॥

अङ्गुल्यादिः ५।३।१०८ ॥ अङ्गुली भरुज बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि कपि मुनि रुह खल उदश्वित् गोणी उरस् कुलिश ॥ ४७ ॥

दामन्यादिः ५।३।११६ ॥ दामनि औलपि बैजवापि औदकि औदङ्कि अच्युतन्ति आच्युतन्ति अच्युतदन्ति आच्युतदन्ति शाकुन्तकि आकिदन्ति औड़वि काकदन्तकि शाकुंतपि सार्वसेनि बिन्दु बैन्दवि तुलभ मौञ्जायनि काकन्दि सावित्री ॥ ४८ ॥

पर्श्वादिः ५।३।११७ ॥ पर्शु असुर रक्षस् बाल्हीक वयस् वसु मरुत् सत्वत् दशार्ह पिशाच अशनि कार्षापण ॥ ४९ ॥

यौधेयादिः । यौधेय कौशेय शौक्रेय शौभ्रेय धौर्तेय धार्तेय ज्यावाणेय त्रिगर्त भरत उशीनर ॥ ५० ॥

स्थूलादि ५।४।३ ॥ स्थूल अणु माषेषु माष इषु (1) कृष्ण तिलेषु । (2) यव व्रीहिषु । इक्षु तिल पाद्य (3) कालावदात सुरायाम् । (4) गोमूत्र आच्छादने । (5) सुरा अहौ । (6) जीर्ण शालिषु । (7) पत्रमूल समस्तो व्यस्तश्च । कुमारीपुत्र कुमारीश्वशुर मणि ॥ ५१ ॥

यावादिः ५।४।२९ ॥ याव मणि अस्थि तालु जानु सान्द्र पीत स्तम्ब । (1) ऋतावुष्णशीते । (2) पशौ लूनवियाते । (3) अणु निपुणे । (7) पुत्र कृत्रिमे । (5) स्नात वेदसमाप्तौ । (6) शून्य रिक्ते । (7) दान कुत्सिते । (8) तनु सूत्रे । (9) ईयसश्च । ज्ञात अज्ञात । कुमारीक्रीडनकानि च कुमारक्रीड़नकानि च ॥ ५२ ॥

विनयादिः ५।४।३४ ॥ विनय समय । (1) उपाय ह्रस्वत्वं च । संप्रति संगति कथंचित् अकस्मात् समाचार उपचार समय समयाचार व्यवहार संप्रदान समुत्कर्ष समूह विशेष अत्यय ॥ ५३ ॥

प्रज्ञादिः ५।४।३८ ॥ प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष विद्वस् विदत् षोडन् विद्या मनस् । (1) श्रोत्र शरीरे । जुह्वत् । (2) कृष्ण मृगे । चिकीर्षत् । चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कार्षापण देवता बन्धु ॥ ५४ ॥

आद्यादिः ५।४।४४ ॥ आदि मध्य अन्त पृष्ठ पार्श्व । आकृतिगणः ॥ ५५ ॥

शरदादिः ५।४।१०७ ॥ शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव हिमवत् हिरुक् विद् सद् दिश् दृश् विश् चतुर् त्यद् तद् यद् कियत् (1) जराया जरस् च (2) प्रतिपरसमनुभ्योऽक्ष्णः । पथिन् ॥ ५६ ॥

द्विदण्डादिः ५।४।१२९ ॥ द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाहस्ति उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभयापाणि उभाबाहु उभयाबाहु एकपदि प्रोष्ठपदि आढ्यपदि आढ्यपदि सपदि निकुच्यकर्णि संहतपुच्छि अन्तेवासि ॥ ५७ ॥

हस्त्यादिः ५।४।१३८ ॥ हस्तिन् कुद्दाल अश्व कशिक कुरुत कटोल कटोलक गण्डोल गण्डोलक अज जाल गण्ड महेला दासी गणिका कुसूल ॥ ५८ ॥

कुम्भपद्यादिः ५।४।१४।१३९ ॥ कुम्भपदी एकपदी जालपदी शूलपदी मुनिपदी गुणपदी शतपदी सूत्रपदी गोधापदी कलशीपदी विपदी तृणपदी द्विपदी त्रिपदी षट्पदी दासीपदी शितपदी विष्णुपदी सुपदी निष्पदी आर्द्रपदी कुणिपदी कृष्णपदी शुचिपदी द्रोणीपदी द्रोणपदी द्रुपदी सूकरपदी शकृत्पदी अष्टापदी स्थूणापदी अपदी सूचीपदी ॥ ५९ ॥

उरःप्रभृतिः ५।४।१५१ ॥ उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शाली शालिः । (1) अर्थान्नञः ॥ ६० ॥

---

# षष्ठोऽध्यायः ।

शकन्ध्वादिः ६।१।९४ ॥ शकन्धुः कर्कन्धुः कुलटा । (1) सीमन्तः केशवेशे । हलीषा मनीषा लाङ्गलीषा पतञ्जलिः । (2) सारङ्गः पशुपक्षिणोः ॥ १ ॥

पारस्करादिः ६।१।१५७ ॥ (1) पारस्करो देशः । (2) कारस्करो वृक्षः । (3) रथस्पा नदी । (4) किष्कुः प्रमाणम् । (5) किष्किन्धा गुहा । (6) तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । (7) प्रात् तुम्पतौ गवि कर्तरि ॥ २ ॥

उञ्छादिः ६।१।१६० ॥ उञ्छ म्लेच्छ जञ्ज जल्प जप वध । (1) युग कालविशेषे रथाद्युपकरणे च । (2) गरो दूष्ये । (3) वेदवेगवेष्टबन्धाः करणे । (4) स्तुयुद्रुवश्छन्दसि । (5) वर्तनि स्तोत्रे । (6) श्वभ्रे दरः । (7) साम्बतापौ भावगर्हायाम् । (8) उत्तमशश्वत्तमौ सर्वत्र । (9) भक्ष मन्थभोगमन्थाः ॥ ३ ॥

वृषादिः ६।१।२०३ ॥ वृषः जनः ज्वरः ग्रहः हयः नयः चयः श्रमः वेदः सूदः अंशः गुहा । (1) शमरणौ संज्ञायां संमतौ भावकर्मणोः । मन्त्रः शान्तिः कामः यामः आरा धारा कारा वहः कल्पः पाद इति वृषादिराकृतिगणः ॥ अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम् ॥ ४ ॥

विस्पष्टादिः ६।२।२४ ॥ विस्पष्ट विचित्र विचित्त व्यक्त संपन्न पटु पण्डित कुशल चपल निपुण ॥ ५ ॥

कार्तकौजपादिः ६।२।३७ ॥ कार्तकौजपौ सावर्णिमाण्डूकेयौ सावर्णिमाण्डूकेयौ अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवाधूलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठकौथुमाः कौथुमलौकाक्षाः स्त्रीकुमारम् मौदपैप्पलादाः वत्सजरन्तः सौश्रुतपार्थिवाः जरामृत्यू याज्यानुवाक्ये ॥ ६ ॥

दासीभारादिः ६।२।४२ ॥ दासीभारः देवहूतिः देवभीतिः देवलातिः वसुनीतिः वसुभूतिः औषधिः चन्द्रमाः । आकृतिगणः ॥ ७ ॥

युक्तारोह्यादिः ६।२।८१ ॥ युक्तारोही आगतरोही आगतयोधी आगतवञ्ची आगतनन्दी आगतप्रहारी आगतमत्स्यः क्षीरहोता भगिनीभर्ता ग्रामगोधुक् अश्वत्रिरात्र गर्गत्रिरात्रः व्युष्टित्रिरात्रः गणपादः एकाशीतिपाद । पात्रेसमितादयश्च (1) आकृतिगणः ॥ ८ ॥

घोषादिः ६।२।८५ ॥ घोष घट कट वल्लभ ह्रद बदरी पिङ्गल पिङ्गली पिशङ्ग माला रक्षा शाला कूट कूटशाल्मली अश्वत्थ तृण शिल्पी मुनि प्रेक्षाक प्रेक्षा ॥ ९ ॥

छात्र्यादिः ६।२।८६ ॥ छात्रि पैलि भाण्डि व्याडि आखण्डि आषाटि गोमि ॥ १० ॥

कर्क्यादिः ६।२।८७ ॥ कर्कि मघी मकरी कर्कन्धू शमी करीरि करीर कन्दुक कुवल कवल बदरी ॥११॥

मालादिः ६।२।८८ ॥ माला शाला शोणा शोण द्राक्षा क्षामा काञ्ची एक काम दिवोदास वभ्रश्च। आकृतिगणः ॥ १२ ॥

ऋत्वादिः ६।२।११८ ॥ ऋतु दृशीक प्रतीक प्रतूर्ति हव्य भव्य भग ॥ १३ ॥

चिहणादिः ६।२।१२५ ॥ चिहण मदुर मद्गुर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण ॥ १४ ॥

वर्ग्यादिः ६।२।१३१ ॥ दिगादिषु वर्गादय एव क्षतयदन्ता वर्ग्यादयः ॥

चूर्णादिः ६।२।१३४ ॥ चूर्ण करिष करीष शाकिन शाकट द्राक्षा तूस्त कुन्दम दलप चमसी चक्कन चौल ॥ १५ ॥

वनस्पत्यादिः ६।२।१४० ॥ वनस्पतिः बृहस्पतिः शचीपतिः तनूनपात् नराशंसः शुनःशेपः शण्डामर्कौ तृष्णावरूत्री लम्बाविश्ववयसौ मर्मृत्युः ॥ १६ ॥

आचितादिः ६।२।१४६ ॥ आचित पर्याचित आस्थापित परिगृहीत निरुक्त प्रतिपन्न अपश्लिष्ट प्रश्लिष्ट उपहित उपस्थित संहितागवि ॥ १७ ॥

प्रवृद्धादिः ६।२।१४७ ॥ प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुता सूष्णवः । आकर्षे अवहितः । अवहितो भोगेषु । खट्वारूढः । कविशस्तः ॥ १८ ॥ आकृतिगणोऽयम् ॥ तेन प्रवृद्धो वृषकृतौ रथ इत्यादि ॥

चार्वादिः ६।२।१६० ॥ चारु साधु यौधिक यौधकि अनङ्गमेजय वदान्य अकस्मात् । (१) वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम् । (२) विकारसदृशे व्यस्तसमस्ते । गृहपति गृहपतिक । (३) राजाह्नोश्छन्दसि ॥ १९ ॥

गुणादिः ६।२।१७६ ॥ गुण अक्षर अध्याय सूक्त छन्दोमान ॥ आकृतिगणः ॥ २० ॥

निरुदकादिः ६।२।१८४ ॥ निरुदक निरुपल निर्मक्षिक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीप निस्तरीक निरजिन उदजिन उपाजिन । (१) परेर्हस्तपादकेशकर्षाः (२) आकृतिगणः ॥२१॥

अंशादिः ६।२।१८३ ॥ अंश जन राजन् उष्ट्र खेटक अजिर आर्द्रा श्रवण कृत्तिका अर्धपुर ॥ २२ ॥

गौरादिः ६।२।१९४ ॥ गौर तैष तैल लेट लोट जिह्वा कृष्णा कन्या गुध कल्प पाद ॥ २३ ॥

विचक्षादिः ६।२।१९९ ॥ विचक्ष विहत् विवङ्कर । आकृतिगणः ॥ २४ ॥

प्रियादिः ६।३।३४ ॥ प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता क्षान्ता चपला दुहिता वामा अबला तनया ॥ २५ ॥

तसिलादिः ६।३।३५ ॥ तसिल् त्रल् तरप् तमप् चरट् जातीयर् कल्पप् देश्य देशीयर् रूपप् पाशप् थल् थाल् दार्हिल् तिल् थ्यन् ॥ २६ ॥

कुक्कुट्यादिः ६।३।४२ । कुक्कुटी मृगी काकी ॥

अण्डादिः । अण्ड पद शाव भ्रकुंस भ्रकुटी ॥ २७ । २८ ॥

पृषोदरादिः ६।३।१०९ ॥ पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच बृसी मयूर । आकृतिगणः ॥ २९ ॥

कोटरादिः ६।३।११७ ॥ कोटर मिश्रक सिध्रक पुरग सारिक शारिक इति कोटरादिः ॥ ३० ॥

किंशुलुकादिः । किंशुलुक शाल्व नड अञ्जन भञ्जन लोहित कुक्कुट ॥ ३१ ॥

अजिरादिः ६।३।११९ ॥ अजिर खदिर पुलिन हंसक कारण्ड चक्रवाक ॥ ३२ ॥

शरादिः ॥ ६।३।१२० ॥ शर वंश धूम अहि कपि मणि मुनि शुचि हनु ॥ ३३ ॥

पील्वादिः ६।३।१२१ ॥ पीलु दारु रुचि चारु ॥ ३४ ॥

बिल्वकादिः ६।४।१५३ ॥ छविधानार्थं नडादयो यदा छसन्नियोगे कृतकुगागमास्तदा बिल्वकादयः ॥ ३५ ॥

---

# सप्तमोऽध्यायः ।

स्वाल्यादिः ७।१।४९ स्वाली पीली । आकृतिगणः ॥ १ ॥

द्वारादिः ७।३।४ ॥ द्वार स्वर स्वाध्याय व्यल्कश स्वस्ति स्वर स्फाकृत स्वादु मृदु श्वस् श्वन् स्व ॥ २ ॥

स्वागतादिः ७।३।७ ॥ स्वागत स्वध्वर स्वङ्ग व्यङ्ग व्यड व्यवहार स्वपति ॥ ३ ॥

अनुशतिकादिः ७।३।२० ॥ अनुशतिक अनुहोड अनुसंवरण अनुसंचरण अनुसंवत्सर अङ्गारवेणु असिहत्य अस्यहत्य अस्यहेति वध्योग पुष्करसद् अनुहरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि प्रयोग परस्त्री । (ग) राजपुरुषात् ष्यञि । सूत्रनड । आकृतिगणोऽयम् ॥ ४ ॥ तेन । अभिगम अधिभूत अधिदेव चतुर्विद्या । इत्यादि ।

क्षिपकादिः ७।३।४५ ॥ क्षिपका ध्रुवका चटका सेवका करका कटका अवका लहका अलका कन्यका ध्रुवका एडका । आकृतिगणः ॥ ५ ॥

न्यङ्क्वादिः ७।३।५३ ॥ न्यङ्कु मद्गु भृगु दूरेपाक फलेपाक क्षणेपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र वक्र चक्र व्यतिषङ्ग अनुषङ्ग अवसर्ग उपसर्ग श्वपाक मांसपाक मांसपाक मूलपाक कपोतपाक उलूकपाक । (ग) संज्ञायां मेघनिदाघावदाघार्घाः । न्यग्रोध वीरुत् ॥ ६ ॥

कणादिः ७।४।३ ॥ कण रण भण श्रण लुप हेठ ह्वायि वाणि लोटि (लोठि) लोपि ॥ ७ ॥

---

# अष्टमोऽध्यायः ।

गोत्रादिः ८।१।२७ ॥ गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्ययन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ ॥ १ ॥

काष्ठादिः ८।१।२७ ॥ काष्ठ दारुण अमात्यपुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत अनुक्त भृश घोर सुख परम सु अति ॥ २ ॥

यवादिः ८।२।९ ॥ यव दल्मि ऊर्मि भूमि कृमि कुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि ध्रजि ध्वजि हरित् ककुत् मरुत् इक्षु द्रुम मधु । आकृतिगणः ॥ ३ ॥

अहरादिः ८।२।७० ॥ अहर् गिर् धुर् पुर् ॥ ४ ॥

पत्यादिः । पति गण पुत्र ॥ ५ ॥

कस्कादिः ८।३।४८ ॥ कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्कः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बर्हिष्पलम् बर्हिष्पूलम् यजुष्पात्रम् तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः । आकृतिगणः ॥ ६ ॥

सुषामादिः ८।३।९८ ॥ सुषामा निषामा दुःषामा सुषेधः निषेधः दुःषेधः सुषन्धिः निःषन्धिः दुःषन्धिः सुष्ठु दुष्ठु । (१) गौरिषक्थः संज्ञायाम् । प्रतिष्णिका जलाषाहम् जालाषाढम् नौषेचनम् दुन्दुभिषेवणम् (२) एति संज्ञायामगात् । (३) नक्षत्राद्वा । हरिषेणः रोहिणीषेणः । आकृतिगणः ॥ ७ ॥

सवनादिः ८।३।११० ॥ सवने सवने । सूते सूते । सोमे सोमे । सवनमुखे सवनमुखे । किंसं किंसम् । किंसः किंसः । अनुसवनमनुसवनम् । गोसनिं गोसनिम् । अश्वसनिमश्वसनिम् ॥

( पाठान्तरम् ॥ ) सवने सवने । सवनमुखे सवनमुखे । अनुसवनमनुसवनम् ॥ संज्ञायां बृहस्पतिसवः । शकुनिसवनम् । सोमे सोमे । सुते सुते । संवत्सरे संवत्सरे । बिसं बिसम् । किंसम् किंसम् । मुसलं मुसलम् । गोसनिम् । अश्वसनिम् ॥ ८ ॥

इरिकादिः ८।४।६ ॥ इरिका मिरिका तिमिरा । आकृतिगणः ॥ ९ ॥

गिरिनद्यादिः ८।४।१० ॥ गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्यमान माषोन आर्गयन । आकृतिगणः ॥ १० ॥

क्षुभ्नादिः ८।४।३९ ॥ क्षुभ्ना नृनमन नन्दिन् नन्दन नगर । (१) एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी हरिनन्दनः गिरिनगरम् । (२) नृतिर्यङि प्रयोजयन्ति । नरीनृत्यते । नर्तन गहन नन्दन निवेश निवास अग्नि अनूप । (३) एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः । (४) आचार्यादणत्वं च । आकृतिगणोऽयम् ॥

( पाठान्तरम् ॥ ) क्षुभ्ना तृप्नु नृनमन नरनगर नन्दन । (१) नृतिर्यङि । गिरिनदी गृहनमन निवेश निवास अग्नि अनूप आचार्यभोगीन चतुर्हायन । (२) इरिकादीनि वनोत्तरपदानि संज्ञायाम् । इरिका तिमिर समीर कुबेर हरि कर्मार । आकृतिगणः ॥ ११ ॥

॥ इति गणपाठः समाप्तः ॥

# (२) अथ धातुपाठः।

## अथ भ्वादयः ॥ १ ॥

१ भू सत्तायाम् ॥ उदात्तः परस्मैभाषः ॥ २ एध वृद्धौ। ३ स्पर्ध संघर्षे। ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च। ५ बाधृ लोडने। ६ नाथृ ७ नाधृ याच्ञोपतापैश्वर्याशीःषु। ८ दध धारणे। ९ स्कुदि आप्रवणे। १० श्विदि श्वैत्ये। ११ वदि अभिवादनस्तुत्योः। १२ भदि कल्याणे सुखे च। १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। १४ स्पदि किञ्चिच्चलने। १५ क्लिदि परिदेवने। १६ मुद हर्षे। १७ दद दाने। १८ ष्वद १९ स्वर्द आस्वादने। २० उर्द माने क्रीडायां च। २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव। २५ षूद क्षरणे। २६ ह्राद अव्यक्ते शब्दे। २७ ह्लादी सुखे च। २८ स्वाद आस्वादने। २९ पर्द कुत्सिते शब्दे। ३० यती प्रयत्ने। ३१ युतृ ३२ जुतृ भासने। ३३ विथृ ३४ वेथृ याचने। ३५ श्रथि शैथिल्ये। ३६ ग्रथि कौटिल्ये। ३७ कत्थ श्लाघायाम् ॥ एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ३८ अत सातत्यगमने। ३९ चिती संज्ञाने। ४० च्युतिर् आसेचने। ४१ श्चुतिर् क्षरणे। ४२ मन्थ विलोडने। ४३ कुथि ४४ पुथि ४५ लुथि ४६ मथि हिंसासंक्लेशनयोः। ४७ षिध गत्याम्। ४८ षिधू शास्त्रे माङ्गल्ये च। ४९ खादृ भक्षणे। ५० खद स्थैर्ये हिंसायां च। ५१ बद स्थैर्ये। ५२ गद व्यक्तायां वाचि। ५३ रद विलेखने। ५४ णद अव्यक्ते शब्दे। ५५ अर्द गतौ याचने च। ५६ नर्द ५७ गर्द शब्दे। ५८ तर्द हिंसायाम्। ५९ कर्द कुत्सिते शब्दे। ६० खर्द दन्दशूके। ६१ अति ६२ अदि बन्धने। ६३ इदि परमैश्वर्ये। ६४ बिदि अवयवे ॥ भिदि इत्येके ॥ ६५ गडि वदनैकदेशे। ६६ णिदि कुत्सायाम्। ६७ टुनदि समृद्धौ। ६८ चदि आह्लादे। ६९ त्रदि चेष्टायाम्। ७० कदि ७१ क्रदि ७२ क्लदि आह्वाने रोदने च। ७३ क्लिदि परिदेवने। ७४ शुन्ध शुद्धौ ॥ अतादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ ७५ शीकृ सेचने। ७६ लोकृ दर्शने। ७७ श्लोकृ संघाते। ७८ द्रेकृ ७९ ध्रेकृ शब्दोत्साहयोः। ८० रेकृ शङ्कायाम्। ८१ सेकृ ८२ स्रेकृ ८३ स्रकि ८४ श्रकि ८५ श्लकि गतौ। ८६ शकि शङ्कायाम्। ८७ अकि लक्षणे। ८८ वकि कौटिल्ये। ८९ मकि मण्डने। ९० कक लौल्ये। ९१ कुक ९२ वृक आदाने। ९३ चक तृप्तौ प्रतिघाते च। ९४ ककि ९५ वकि ९६ श्वकि ९७ त्रकि ९८ ढौकृ ९९ त्रौकृ १०० ष्वष्क १०१ वस्क १०२ मस्क १०३ टिकृ १०४ टीकृ १०५ तिकृ १०६ तीकृ १०७ रघि १०८ लघि गत्यर्थाः ॥ तृतीयो दन्त्यादिरित्येके। लघि भोजननिवृत्तावपि। १०९ अघि ११० वघि १११ मघि गत्याक्षेपे। मघि कैतवे च। ११२ राघृ ११३ लाघृ ११४ द्राघृ सामर्थ्ये ॥ ध्राघृ इत्यपि केचित्। द्राघृ आयामे च। ११५ श्लाघृ कत्थने ॥ शीकादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ११६ फक्क नीचैर्गतौ। ११७ तक हसने। ११८ तकि कृच्छ्रजीवने। ११९ बुक्क भषणे। १२० कख हसने। १२१ ओखृ १२२ राखृ १२३ लाखृ १२४ द्राखृ १२५ ध्राखृ शोषणालमर्थयोः। १२६ शाखृ १२७ श्लाखृ व्याप्तौ। १२८ उख १२९ उखि १३० वख १३१ वखि १३२ मख १३३ मखि १३४ णख १३५ णखि १३६ रख १३७ रखि १३८ लख १३९ लखि १४० इख १४१ इखि १४२ ईखि १४३ वल्ग १४४ रगि १४५ लगि १४६ अगि १४७ वगि १४८ मगि १४९ तगि १५० त्वगि १५१ श्रगि १५२ श्लगि १५३ इगि १५४ रिगि १५५ लिगि गत्यर्थाः। रिख त्रख त्रिखि शिखि इत्यपि केचित्। त्वगि कम्पने च। १५६ युगि १५७ जुगि १५८ बुगि वर्जने। १५९ घघ हसने। १६० मघि मण्डने। १६१ शिघि आघ्राणे।

फक्कादय उदात्ता उदात्तेतः परस्मैभाषाः। १६२ वर्च दीप्तौ। १६३ षच सेचने सेवने च। १६४ लोचृ दर्शने। १६५ शच व्यक्तायां वाचि। १६६ श्वच १६७ श्वचि गतौ। १६८ कच बन्धने। १६९ कचि १७० काचि दीप्तिबन्धनयोः। १७१ मच १७२ मुचि कल्कने। कथनमित्यन्ये। १७३ मचि धारणोच्छ्राय-पूजनेषु। १७४ पचि व्यक्तीकरणे। १७५ ष्टुच प्रसादे। १७६ ऋज गतिस्थानार्जनोपार्जनेषु। १७७ ऋजि १७८ भृजी भर्जने। १७९ एजृ १८० भेजृ १८१ भ्राजृ दीप्तौ। १८२ ईज गतिकुत्सनयोः। वर्चादय उदात्ता अनुदात्तेत आत्मनेभाषाः। १८३ शुच शोके। १८४ कुच शब्दे तारे। १८५ कुञ्च १८६ क्रुञ्च कौटिल्याल्पीभावयोः। १८७ लुञ्च अपनयने। १८८ अञ्चु गतिपूजनयोः। १८९ वञ्चु १९० चञ्चु १९१ तञ्चु १९२ त्वञ्चु १९३ म्रुञ्चु १९४ म्लुञ्चु १९५ मुचु १९६ ग्लुचु गत्यर्थाः। १९७ ग्रुचु १९८ ग्लुचु १९९ कुजु २०० खुजु स्तेयकरणे। २०१ ग्लुञ्चु २०२ षस्ज गतौ। २०३ गुजि अव्यक्ते शब्दे। २०४ अर्च पूजायाम्। २०५ म्लेच्छ अव्यक्ते शब्दे। २०६ लछ २०७ लाछि लक्षणे। २०८ वाछि इच्छायाम्। २०९ आछि आयामे। २१० ह्रीछ लज्जायाम्। २११ हुर्छा कौटिल्ये। २१२ मुर्छा मोहसमुच्छ्राययोः। २१३ स्फुर्छा विस्तृतौ। २१४ युछ प्रमादे। २१५ उछि उञ्छे २१६ उछी विवासे। २१७ ध्रज २१८ ध्रजि २१९ ध्रृज २२० ध्रृजि २२१ ध्वज २२२ ध्वजि गतौ। २२३ कूज अव्यक्ते शब्दे। २२४ अर्ज २२५ षर्ज अर्जने। २२६ गर्ज शब्दे। २२७ तर्ज भर्त्सने। २२८ कर्ज व्यथने। २२९ खर्ज पूजने च। २३० अज गतिक्षेपणयोः २३१ तेज पालने। २३२ खज मन्थे। २३३ खजि गतिवैकल्ये। २३४ एजृ कम्पने। २३५ टुओस्फूर्जा वज्रनिर्घोषे। २३६ क्षि क्षये। २३७ क्षीज अव्यक्ते शब्दे। २३८ लज २३९ लजि भर्त्सने। २४० लाज २४१ लाजि भर्त्सने च। २४२ जज २४३ जजि युद्धे। २४४ तुज हिंसायाम्। २४५ तुजि पालने। २४६ गज २४७ गजि २४८ गृज २४९ गृजि २५० मुज २५१ मुजि शब्दार्थाः। २५२ गज मदने च। २५३ वज २५४ व्रज गतौ॥ शुचादय उदात्ता क्षिवर्जमुदात्तेतः परस्मैभाषाः॥ २५५ अट्ट अतिक्रमणहिंसनयोः। २५६ वेष्ट वेष्टने। २५७ चेष्ट चेष्टायाम्। २५८ गोष्ट २५९ लोष्ट संघाते। २६० घट्ट चलने २६१ स्फुट विकसने। २६२ अठि गतौ। २६३ वठि एकचर्यायाम्। २६४ मठि २६५ कठि शोके। २६६ मुठि पालने। २६७ हेठ विबाधायाम्। २६८ एठ च। २६९ हिडि गत्यनादरयोः। २७० हुडि संघाते। २७१ कुडि दाहे। २७२ वडि विभाजने। २७३ मडि च। २७४ भडि परि-भाषणे। २७५ पिडि संघाते। २७६ मुडि मार्जने। २७७ तुडि तोडने। २७८ हुड़ि वरणे॥ हरणे इत्येके। २७९ चड़ि कोपे। २८० शड़ि रुजायां संघाते च। २८१ तड़ि ताड़ने। २८२ पड़ि गतौ। २८३ कडि मदे। २८४ खड़ि मन्थे। २८५ हेडृ २८६ होडृ अनादरे। २८७ वाडृ आप्लाव्ये। २८८ द्राडृ २८९ ध्राडृ विशरणे। २९० शाडृ श्लाघायाम्॥ अट्टादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥ २९१ शौटृ गर्वे। २९२ यौटृ बन्धे। २९३ मेटृ २९४ म्रेडृ उन्मादे। २९५ कटे वर्षावरणयोः॥ चटे इत्येके। २९६ अट २९७ पट गतौ। २९८ रट परिभाषणे॥ २९९ लट बाल्ये। ३०० शट रुजाविशरणगत्य-वसादनेषु। ३०१ वट वेष्टने। ३०२ किट ३०३ खिट त्रासे। ३०४ शिट ३०५ षिट अनादरे। ३०६ जट ३०७ झट संघाते। ३०८ भट भृतौ। ३०९ तट उच्छ्राये। ३१० खट काङ्क्षायाम्। ३११ नट नृत्तौ। ३१२ पिट संघातयोः। ३१३ हट दीप्तौ। ३१४ षट अवयवे। ३१५ लुट विलोडने॥ डान्तो ऽयमित्येके॥ ३१६ चिट परप्रैष्ये ३१७ विट शब्दे। ३१८ बिट आक्रोशे॥ हिट इत्येके॥ ३१९ इट

३२० किट ३२१ कटी गतौ। ३२२ मड़ि भूषायाम्। ३२३ कुड़ि वैकल्ये। ३२४ मुट मर्दने। ३२५ चुडि अल्पीभावे। ३२६ मुडि खण्डने॥ पुडि चेत्येके॥ ३२७ रुटि ३२८ लुठि स्तेये॥ ३२९ स्फुटिर् विशरणे॥ स्फुटि इत्यपि केचित्॥ ३३० पठ व्यक्तायां वाचि। ३३१ वठ स्थौल्ये। ३३२ मठ मदनिवासयोः। ३३३ कठ कृच्छ्रजीवने। ३३४ रट परिभाषणे॥ रठ इत्येके॥ ३३५ हठ प्लुतिशठत्वयोः॥ बलात्कारे इत्यन्ये॥ ३३६ रुठ ३३७ लुठ ३३८ उठ उपघाते॥ ऊठ इत्येके॥ ३३९ पिठ हिंसासंक्लेशनयोः। ३४० शठ कैतवे च। ३४१ शुठ प्रतिघाते॥ ३४२ कुठि च। ३४३ लुठि आलस्ये प्रतिघाते च। ३४४ शुठि शोषणे। ३४५ रुठि ३४६ लुठि गतौ। ३४७ चुड्ड भावकरणे। ३४८ अड्ड अभियोगे। ३४९ कड्ड कार्कश्ये॥ चुड्डादयस्त्रयो दोपधाः॥ ३५० क्रीडृ विहारे॥ ३५१ तुडृ तोडने॥ तूडृ इत्येके॥ ३५२ हुडृ ३५३ हूडृ ३५४ होडृ गतौ। ३५५ रौडृ अनादरे। ३५६ रोडृ ३५७ लोडृ उन्मादे। ३५८ अड उद्यमे॥ ३५९ लड विलासे। लल इत्येके॥ ३६० कड मदे॥ कडि इत्येके॥ ३६१ गडि वदनैकदेशे॥ शौट्रादय उदात्ता उदात्तेतः परस्मैभाषाः॥ ३६२ तिपृ ३६३ तेपृ ३६४ ष्टिपृ ३६५ ष्टेपृ क्षरणार्थाः। तुपृ कम्पने च॥ ३६६ ग्लेपृ दैन्ये। ३६७ टुवेपृ कम्पने ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च। ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ। ३७४ त्रपूष् लज्जायाम्। ३७५ कपि चलने। ३७६ रबि ३७७ लबि ३७८ अबि शब्दे। ३७९ लबि अवस्रंसने च। ३८० कबृ वर्णे। ३८१ क्लीबृ अधार्ष्ट्ये। ३८२ क्षीबृ मदे। ३८३ शीभृ कत्थने। ३८४ चीभृ च। ३८५ रेभृ शब्दे॥ अभिरभी क्वचित् पठ्येते॥ ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे। ३८८ जभि ३८९ जृभी गात्रविनामे। ३९० शल्भ कत्थने। ३९१ वल्भ भोजने। ३९२ गल्भ धार्ष्ट्ये। ३९३ श्रम्भु प्रमादे॥ दन्त्यादिश्च॥ ३९४ ष्टुभु स्तम्भे॥ तिप्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥ तिपिस्त्वनुदात्तः॥ ३९५ गुपू रक्षणे। ३९६ धूप संतापे। ३९७ जप ३९८ जल्प व्यक्तायां वाचि। ३९९ जप मानसे च। ४०० चप सान्त्वने। ४०१ षप समवाये। ४०२ रप ४०३ लप व्यक्तायां वाचि। ४०४ चुप मन्दायां गतौ। ४०५ तुप ४०६ तुम्प ४०७ त्रुप ४०८ त्रुम्प ४०९ तुफ ४१० तुम्फ ४११ त्रुफ ४१२ त्रुम्फ हिंसार्थाः। ४१३ पर्प ४१४ रफ ४१५ रफि ४१६ अर्ब ४१७ पर्ब ४१८ लर्ब ४१९ बर्ब ४२० मर्ब ४२१ कर्ब ४२२ खर्ब ४२३ गर्ब ४२४ शर्ब ४२५ षर्ब ४२६ चर्ब गतौ। ४२७ कुबि आच्छादने। ४२८ लुबि ४२९ तुबि अर्दने। ४३० चुबि वक्त्रसंयोगे। ४३१ षृभु ४३२ षृम्भु हिंसार्थौ॥ षिभु षिम्भु इत्येके॥ ४३३ शुभ ४३४ शुम्भ भाषणे॥ भासन इत्येके। हिंसायामित्यन्ये॥ गुपादय उदात्ता उदात्तेतः परस्मैभाषाः॥ ४३५ घिणि ४३६ घुणि ४३७ घृणि ग्रहणे। ४३८ घुण ४३९ घूर्ण भ्रमणे। ४४० पण व्यवहारे स्तुतौ च। ४४१ पन च। ४४२ भाम क्रोधे। ४४३ क्षमूष् सहने। ४४४ कमु कान्तौ॥ घिण्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥ ४४५ अण ४४६ रण ४४७ वण ४४८ भण ४४९ मण ४५० कण ४५१ क्वण ४५२ व्रण ४५३ भ्रण ४५४ ध्वण शब्दार्थाः। धण इत्यपि केचित्॥ ४५५ ओणृ अपनयने। ४५६ शोणृ वर्णगत्योः। ४५७ श्रोणृ संघाते। ४५८ श्लोणृ च। ४५९ पैणृ गतिप्रेरणश्लेषणेषु। ४६० ध्रण शब्दे॥ द्रण इत्यपि केचित्॥ ४६१ कनी दीप्तिकान्तिगतिषु। ४६२ ष्टन ४६३ वन शब्दे। ४६४ वन ४६५ षण संभक्तौ। ४६६ अम गत्यादिषु। ४६७ द्रम ४६८ हम्म ४६९ मीमृ गतौ। ४७० चमु ४७१ छमु ४७२ जमु ४७३ झमु अदने। ४७४ क्रमु पादविक्षेपे॥ अणादय उदात्ता

उदात्तेतः परस्मैभाषाः॥ ४७५ अय ४७६ वय ४७७ पय ४७८ मय ४७९ चय ४८० तय ४८१ णय गतौ। ४८२ दय दानगतिरक्षणहिंसादानेषु। ४८३ रय गतौ। ४८४ ऊयी तन्तुसंताने। ४८५ पूयी विशरणे दुर्गन्धे च। ४८६ क्नूयी शब्दे उन्दे च। ४८७ क्ष्मायी विधूनने। ४८८ स्फायी ४८९ ओप्यायी वृद्धौ। ४९० तायृ संतानपालनयोः। ४९१ शल चलनसंवरणयोः। ४९२ वल ४९३ वल्ल संवरणे संचरणे च। ४९४ मल ४९५ मल्ल धारणे। ४९६ भल ४९७ भल्ल परिभाषणहिंसादानेषु। ४९८ कल शब्दसंख्यानयोः। ४९९ कल्ल अव्यक्ते शब्दे॥ ५०० तेवृ ५०१ देवृ देवने। ५०२ षेवृ ५०३ गेवृ ५०४ ग्लेवृ ५०५ पेवृ ५०६ मेवृ ५०७ म्लेवृ सेवने॥ शेवृ खेवृ क्लेवृ इत्येके॥ ५०८ रेवृ प्लवगतौ॥ अयादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥ ५०९ मव्य बन्धने। ५१० सूर्क्ष्यं ५११ ईर्क्ष्यं ५१२ ईर्ष्यं ईर्ष्यार्थाः। ५१३ हय गतौ। ५१४ शुच्य अभिषवे। चुच्य इत्येके॥ ५१५ हर्य गतिकान्त्योः ५१६ अल भूषणपर्याप्तिवारणेषु॥ अयं स्वरितेदित्येके॥ ५१७ ञिफला विशरणे। ५१८ मील ५१९ श्मील ५२० स्मील ५२१ क्ष्मील निमेषणे। ५२२ पील प्रतिष्टम्भे। ५२३ णील वर्णे। ५२४ शील समाधौ। ५२५ कील बन्धने। ५२६ कूल आवरणे। ५२७ शूल रुजायां संघोषे च। ५२८ तूल निष्कर्षे। ५२९ पूल संघाते। ५३० मूल प्रतिष्ठायाम्। ५३१ फल निष्पत्तौ। ५३२ चुल्ल भावकरणे। ५३३ फुल्ल विकसने। ५३४ चिल्ल शैथिल्ये भावकरणे च। ५३५ तिल गतौ॥ तिल्ल इत्येके॥ ५३६ वेल्ल ५३७ चेल्ल ५३८ केल्ल ५३९ खेल्ल ५४० क्ष्वेल्ल ५४१ वेल्ल चलने। ५४२ पेल्ल ५४३ फेल्ल ५४४ शेल्ल गतौ। षेल्ल इत्येके। ५४५ स्खल संचलने। ५४६ खल संचये। ५४७ गल अदने। ५४८ षल गतौ। ५४९ दल विशरणे। ५५० श्वल ५५१ श्वल्ल आशुगमने। ५५२ खोल्ल ५५३ खोर्ऋं गतिप्रतिघाते। ५५४ धोर्ऋं गतिचातुर्ये। ५५५ त्सर छद्मगतौ। ५५६ क्मर हूर्च्छने। ५५७ अभ्र ५५८ वभ्र ५५९ मभ्र ५६० चर गत्यर्थाः॥ चरतिर्भक्षणेऽपि॥ ५६१ ष्ठिवु निरसने। ५६२ जि जये। ५६३ जीव प्राणधारणे। ५६४ पीव ५६५ मीव ५६६ तीव ५६७ णीव स्थौल्ये। ५६८ क्षीवु ५६९ क्षेवु निरसने। ५७० उर्वी ५७१ तुर्वी ५७२ थुर्वी ५७३ दुर्वी ५७४ धुर्वी हिंसार्थाः। ५७५ गुर्वी उद्यमने। ५७६ मुर्वी बन्धने। ५७७ पुर्वं ५७८ पर्वं ५७९ मर्वं पूरणे। ५८० चर्वं अदने। ५८१ भर्वं हिंसायाम्। ५८२ कर्वं ५८३ खर्वं ५८४ गर्वं दर्पे। ५८५ अर्वं ५८६ शर्वं ५८७ षर्वं हिंसायाम्। ५८८ इवि व्याप्तौ। ५८९ पिवि ५९० मिवि ५९१ णिवि सेचने॥ सेवन इत्येके॥ ५९२ हिवि ५९३ दिवि ५९४ धिवि ५९५ जिवि प्रीणनार्थाः। ५९६ रिवि ५९७ रवि ५९८ धवि गत्यर्थाः। ५९९ कृवि हिंसाकरणयोश्च। ६०० मव बन्धने। ६०१ अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु॥ मव्यादय उदात्ता उदात्तेतः परस्मैभाषाः। जिस्त्वनुदात्तः॥ ६०२ धावु गतिशुद्ध्योः उदात्तः स्वरितेदुभयतोभाषः॥ ६०३ धुक्ष ६०४ धिक्ष संदीपनक्लेशनजीवनेषु। ६०५ वृक्ष वरणे। ६०६ शिक्ष विद्योपादाने। ६०७ भिक्ष भिक्षायामलाभे लाभे च॥ ६०८ क्लेश अव्यक्तायां वाचि॥ ६०९ दक्ष वृद्धौ शीघ्रार्थे च। ६१० दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु। ६११ ईक्ष ६१२ ईष गतिहिंसादर्शनेषु। ६१३ भाष व्यक्तायां वाचि। ६१४ वर्ष स्नेहने। ६१५ गेषृ अन्विच्छायाम्॥ ग्लेषृ इत्येके॥ ६१६ पेषृ प्रयत्ने। ६१७ जेषृ ६१८ णेषृ ६१९ एषृ ६२० प्रेषृ गतौ ६२१ रेषृ ६२२ हेषृ ६२३ ह्रेषृ अव्यक्ते शब्दे। ६२४ कासृ शब्दकुत्सायाम्। ६२५ भासृ दीप्तौ ६२६ णासृ ६२७ रासृ शब्दे।

६२८ णस कौटिल्ये । ६२९ भ्यस भये । ६३० आङः शसि इच्छायाम् ६३१ ग्रसु ६३२ ग्लसु अदने । ६३३ ईह चेष्टायाम् । ६३४ बहि ६३५ महि वृद्धौ । ६३६ अहि गतौ । ६३७ गर्ह ६३८ गल्ह कुत्सायाम् । ६३९ बर्ह ६४० बल्ह प्राधान्ये । ६४१ बर्ह ६४२ बल्ह परिभाषणहिंसाच्छादनेषु । ६४३ प्लिह गतौ । ६४४ वेहृ ६४५ जेहृ ६४६ बाहृ प्रयत्ने ॥ जेहृ गतावपि ॥ ६४७ द्राहृ निद्राक्षये ॥ निक्षेपे इत्येके ॥ ६४८ काशृ दीप्तौ । ६४९ ऊहृ वितर्के । ६५० गाहू विलोडने । ६५१ ग्लहू ग्रहणे । ६५२ ग्लहू च । ५५३ घुषि कान्तिकरणे ॥ घष इति केचित् ॥ घुषादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ६५४ घुषिर् अविशब्दने । ६५५ अक्षू व्याप्तौ । ६५६ तक्षू ६५७ त्वक्षू तनूकरणे । ६५८ उक्ष सेचने । ६५९ रक्ष पालने । ६६० णिक्ष चुम्बने । ६६१ त्रक्ष ६६२ स्त्रक्ष ६६३ णक्ष गतौ । ६६४ वक्ष रोषे ॥ संघाते इत्येके ॥ ६६५ मृक्ष संघाते ॥ म्रक्ष इत्येके ॥ ६६६ तक्ष त्वचने । ६६७ सूर्क्ष आदरे । ६६८ काक्षि ६६९ वाक्षि ६७० माक्षि काङ्क्षायाम् । ६७१ द्राक्षि ६७२ ध्राक्षि ६७३ ध्वाक्षि घोरवासिते च । ६७४ चूष पाने । ६७५ तूष तुष्टौ । ५७६ पूष वृद्धौ । ६७७ मूष स्तेये । ६७८ लूष ६७९ रूष भूषायाम् । ६८० शूष प्रसवे । ६८१ यूष हिंसायाम् । ६८२ जूष च । ६८३ भूष अलंकारे । ६८४ ऊष रुजायाम् । ६८५ ईष उञ्छे । ६८६ कष ६८७ खष ६८८ शिष ६८९ जष ६९० झष ६९१ शष ३९२ वष ६९३ मष ६९४ रुष ६९५ रिष हिंसार्थाः । ६९६ भष भर्त्सने । ६९७ उष दाहे । ६९८ जिषु ६९९ विषु ७०० मिषु सेचने । ७०१ पुष पुष्टौ । ७०२ श्रिषु ७०३ श्लिषु ७०४ प्रुषु ७०५ प्लुषु दाहे । ७०६ पृषु ७०७ वृषु ७०८ मृषु सेचने ॥ मृषु सहने च ॥ इतरौ हिंसासंक्लेशनयोश्च ॥ ७०९ घृषु संघर्षे । ७१० हृषु अलीके । ७११ तुस ७१२ ह्रस ७१३ ह्लस ७१४ रस शब्दे । ७१५ लस श्लेषणक्रीडनयोः । ७१६ घस्लृ अदने । ७१७ जर्ज ७१८ चर्च ७१९ झर्झ परिभाषणहिंसातर्जनेषु । ७२० पिसृ ७२१ पेसृ गतौ । ७२२ हसे हसने ७२३ णिश समाधौ । ७२४ मिश ७२५ मश शब्दे रोषकृते च । ७२६ शव गतौ । ७२७ शश प्लुतगतौ । ७२८ शसु हिंसायाम् । ७२९ शंसु स्तुतौ ॥ ७३० चह परिकल्कने । ७३१ मह पूजायाम् । ७३२ रह त्यागे । ७३३ रहि गतौ । ७३४ दृह ७३५ दृहि ७३६ बृह ७३७ बृहि वृद्धौ ॥ बृहि शब्दे च । बृहिर् इत्येके ॥ ७३८ तुहिर् ७३९ दुहिर् ७४० उहिर् अर्दने । ७४१ अर्ह पूजायाम् ॥ घुषिरादय उदात्ता उदात्तेतः परस्मैभाषाः । घसिस्त्वनुदात्तः ॥ ७४२ द्युत दीप्तौ । ७४३ श्विता वर्णे । ७४४ ञिमिदा स्नेहने । ७४५ ञिष्विदा स्नेहनमोचनयोः ॥ ञिक्ष्विदा चेत्येके ॥ ७४६ रुच दीप्तावभिप्रीतौ च । ७४७ घुट परिवर्तने । ७४८ लुट ७४९ रुट ७५० लुठ प्रतिघाते । ७५१ शुभ दीप्तौ । ७५२ क्षुभ संचलने । ७५३ णभ ७५४ तुभ हिंसायाम् ॥ ७५५ स्रंसु ७५६ ध्वंसु ७५७ भ्रंसु अवस्रंसने ॥ ध्वंसु गतौ च । भ्रंशु इत्यपि केचित् ॥ ७५८ स्रम्भु विश्वासे । ७५९ वृतु वर्तने । ७६० वृधु वृद्धौ ॥ ७६१ शृधु शब्दकुत्सायाम् । ७६२ स्यन्दू प्रस्रवणे । ७६३ कृपू सामर्थ्ये ॥ द्युतादय उदात्ता अनुदात्तेत आत्मनेभाषाः । वृत् ॥ ७६४ घट चेष्टायाम् । ७६५ व्यथ भयचलनयोः । ७६६ प्रथ प्रख्याने । ७६७ प्रस विस्तारे । ७६८ म्रद मर्दने । ७६९ स्खद स्खदने । ७७० क्षजि गतिदानयोः । ७७१ दक्ष गतिहिंसनयोः । ७७२ क्रप कृपायां गतौ च । ७७३ कदि ८७४ क्रदि ७७५ क्लदि वैक्लव्ये । वैकल्ये इत्येके । ७७६ ञित्वरा संभ्रमे ॥ घटादयः षितः उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ७७७ ज्वर रोगे । ७७८ गड सेचने । ७७९ हेड वेष्टने । ७८० वट ७८१ भट परिभाषणे । ७८२ नट नृत्तौ ॥ गतावित्यन्ये ॥ ७८३ ष्टक प्रतिघाते । ७८४ चक

त्वरी। ७८५ कखे हसने। ७८६ रगे शङ्कायाम्। ७८७ लगे सङ्गे। ७८८ ह्रगे ७८९ ह्लगे ७९० षगे ७९१ ष्टगे संवरणे। ७९२ कगे नोच्यते। ७९३ अक ७९४ अग कुटिलायां गतौ। ७९५ कण ७९६ रण गतौ। ७९७ चण ७९८ शण ७९९ श्रण दाने च॥ ८०० श्रथ ८०१ श्लथ ८०२ क्रथ ८०३ क्लथ हिंसार्थाः। ८०४ वन च। ८०५ वनु नोच्यते। ८०६ ज्वल दीप्तौ। ८०७ ह्वल ८०८ ह्मल चलने। ८०९ स्मृ आध्याने। ८१० दॄ भये। ८११ नॄ नये ८१२ श्रा पाके। मारणतोषणनिशामनेषु ८१३ ज्ञा। कम्पने ८१४ चलिः। ८१५ छदिर् ऊर्जने। जिह्वोन्मथने ८१६ लडिः। ८१७ मदी हर्षग्लेपनयोः। ८१८ ध्वन शब्दे। ८१९ दलि ८२० वलि ८२१ स्खलि ८२२ रणि ८२३ ध्वनि ८२४ त्रपि ८२५ क्षपि च ८२६ स्वन अवतंसने॥ घटादयो मितः॥ ८२७ (1) जनी ८२८ जॄष् ८२९ क्नसु ८३० रञ्जो ८३१ ऽमन्तास्च। ८३२ (2) ज्वल ८३३ ह्वल ८३४ ह्मल ८३५ नमामनुपसर्गाद्वा। (3) ८३६ ग्ला। ८३७ स्ना ८३८ वनु ८३९ वमां च। (4) न ८४० कम्य ८४१ मि ८४२ चमाम्। (5) ८४३ शमोऽदर्शने। ८४४ (6) यमोऽपरिवेषणे। ८४५ (7) स्खदिर् अवपरिभ्यां च। ८४६ फण गतौ॥ घटादयः फणान्ता मितः। वृत्। ज्वरादय उदात्ता उदात्तेतः परस्मैभाषाः॥ ८४७ राजृ दीप्तौ॥ उदात्तः स्वरितेदु-भयतोभाषः॥ ८४८ टुभ्राजृ ७४९ टुभ्राशृ ८५० टुभ्लाशृ दीप्तौ॥ उदात्ता अनुदात्तेत आत्मनेभाषाः॥ ८५१ स्यमु ८५२ स्वन ८५३ ध्वन शब्दे। ८६४ षम ८५५ ष्टम अवैकल्ये॥ वृत्॥ ८५६ ज्वल दीप्तौ। ८५७ चल कम्पने। ८५८ जल घातने। ८५९ टल ८६० ट्वल वैक्लव्ये। ८६१ ष्ठल स्थाने। ८६२ हल विलेखने। ८६३ णल गन्धे॥ बन्धने इत्येके॥ ८६४ पल गतौ। ८६५ बल प्राणने धान्यावरोधने च। ८६६ पुल महत्त्वे। ५६७ कुल संस्त्याने ८६८ शल ७६९ हुल ८७० पत्लृ गतौ। ८७१ क्वथे निष्पाके। ८७२ पथे गतौ। ८७३ मथे विलोडने। ८७४ टुवम उद्गिरणे। ८७५ भ्रमु चलने। ८७६ क्षर संचलने॥ स्यमादय उदात्ता उदात्तेतः परस्मैभाषाः॥ ८७७ षह मर्षणे॥ उदात्तोऽनुदात्तेदात्मने-भाषः॥ ८७८ रमु क्रीडायाम्॥ अनुदात्तोऽनुदात्तेदात्मनेभाषः॥ ८७९ षद्लृ विशरणगत्यवसादनेषु। ८८० शद्लृ शातने। ८८१ क्रुश आह्वाने रोदने च॥ षदादयस्त्रयोऽनुदात्ता उदात्तेतः परस्मैभाषाः॥ ८८२ कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। ८८३ बुध अवगमने। ८८४ रुह बीजजन्मनि प्रादुर्भावे च। ८८५ कस गतौ॥ वृत्। कुचादय उदात्ता उदात्तेतः परस्मैभाषाः। रुहिस्त्वनुदात्तः॥ ८८६ हिक्क अव्यक्ते शब्दे। ८८७ अञ्चु गतौ याचने च॥ अचु इत्येके। अचि इत्यपरे॥ ८८८ टुयाचृ याच्ञायाम्। ८८९ रेटृ परिभाषणे। ८९० चते ८९१ चदे याचने। ८९२ प्रोथृ पर्याप्तौ। ८९३ मिदृ ८९४ मेदृ मेधाहिंसनयोः। एतौ धान्तावित्यन्ये ८९५ मेधृ संगमे च। ८९६ णिदृ ८९७ णेदृ कुत्सासंनिकर्षणयोः। ८९८ शृधु ८९९ मृधु उन्दने। ९०० बुधिर् बोधने। ९०१ उबुन्दिर् निशामने। ९०२ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु॥ नान्तोऽप्ययम्॥ ९०३ खनु अवदारणे। ९०४ चीवृ आदानसंवरणयोः। ९०५ चायृ पूजानिशामनयोः। ९०६ व्यय गतौ। ९०७ दाशृ दाने ९०८ भेषृ भये॥ गतावित्येके॥ ९०९ भ्रेषृ ९१० भ्लेषृ गतौ। ९११ अस गतिदीप्त्यादानेषु॥ अष इत्येके॥ ९१२ स्पश बाधनस्पर्शनयोः। ९१३ लष कान्तौ। ९१४ चष भक्षणे। ९१५ छष हिंसायाम्। ९१६ झष आदानसंवरणयोः। ९१७ भ्रक्ष ९१८ भ्लक्ष अदने। ९१९ दासृ दाने। ९२० माहृ माने। ९२१ गुहू संवरणे॥ हिक्कादय उदात्ताः स्वरितेत उभयतोभाषाः॥ ९२२ श्रिञ् सेवायाम्॥ उदात्त उभयतोभाषः। ९२३ भृञ्

